# पिङ्गलच्छन्दःसूत्रम् ।

## पिङ्गलाचार्य्यकृतम् ।

---

श्रीहलायुधभट्टकृतमृतसञ्जीवन्याख्यवृत्तिसहितम् ।

---

पण्डितकुलपतिना, बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण विरचितया

तदात्मजाभ्यां

पण्डित-श्रीमदाशुबोधविद्याभूषण-पण्डित-श्रीमन्नित्यबोध-

विद्यारत्नाभ्यां प्रतिसंस्कृतया च सुखबोधिन्याख्यया

टीकया समलङ्कृतं प्रकाशितञ्च ।

प्रथम संस्करणम् ।

---

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितम् ।

---

१९२८ ।

## प्रमादनिरसनम् ।

४२८ तथा ४३१ पत्रयोः "अष्टमोऽध्यायः" इत्यत्र "परिशिष्टम्" इति भाव्यम् ।

---

# पिङ्गलच्छन्दःसूत्रम्।

हलायुधवृत्तिसहितम्।

## प्रथमोऽध्यायः।

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे।
त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥ १ ॥

या सर्वंसर्वाऽपि च शुक्लवर्णिनी शुक्लाऽपि या कृष्णमुपाश्रिता सदा।
सती च या मङ्गलं दधत्यपि सा शाश्वती मे स्फुरतात् सरस्वती ॥ १ ॥

श्रिया पिङ्गलनागेन छन्दःशास्त्रं मनोहरम्।
वेदाङ्गं विविधं प्रोक्तं वैदिकं लौकिकञ्च यत् ॥ २ ॥
श्रीहलायुधभट्टेन विख्यातेन महात्मना।
विवृतिर्विहिता तस्य मृतसञ्जीवनीति या ॥ ३ ॥
तयोश्च सुखबोधाय नाम्नीयं सुखबोधिनी।
विधीयते स्फुटा व्याख्या श्रीजीवानन्दशर्मणा ॥ ४ ॥

इह खलु प्राचीनतमैर्यङ्कु-कौष्टुक-यास्क-शाकटायनप्रभृतिभिः पण्डिताग्रेसरैर्महर्षिभिः प्रणीतेऽपि बहुले छन्दःशास्त्रे तेषामत्यन्तदुरूहत्वेन निखिलजगतामुपकारं विधातुमिच्छन् शास्त्रचक्षुषो भगवान् नागलोककल्पतरुसंचार्यः पिङ्गलाचार्य्यः विविधमात्राभ्याससमन्वितं वैदिकलौकिकच्छन्दोबहुलं पिङ्गलच्छन्दःसूत्रमिति स्वनाम्ना चिह्नितं छन्दोग्रन्थमिमं प्रणिनाय। तस्यापि वृत्तिमन्तरेण सुकुमारमतीनां प्रेक्षावतामतीव दुरवगाहतामाकलय्य महात्मा श्रीमद्भट्टनारायणवंशावतंसः निखिलविद्यापारावारपारकृतः पण्डितशिरोमणिः ख्यातनामा श्रीहलायुधभट्टपादः भगवत्पिङ्गलाचार्य्यविरचितं छन्दःशास्त्रसारभूतमिदं सूत्रजातं व्याख्यातुमारभमाणः वृत्तिग्रन्थपरिसमाप्तिप्रतिबन्धक-

श्रीमत्पिङ्गलनागोक्तच्छन्दःशास्त्रमहोदधौ ।
वृत्तानि मौक्तिकानीव कानिचिद्विचिनोम्यहम् ॥ २ ॥
वेदानां प्रथमाङ्गस्य कवीनां नयनस्य च ।
पिङ्गलाचार्य्यसूत्रस्य मया वृत्तिर्विधास्यते ॥ ३ ॥

---

प्रत्यूहव्यूहविध्वंसपटीयसीम् अविगीतशिष्टाचारपरिप्राप्तां "ज्ञानञ्च शङ्करादिच्छेत्" इत्यनेन शङ्करस्य ज्ञानप्रदत्वमनुस्मृत्य च शिवस्तुतिमेव प्रस्तौति, नम इति ।—तुङ्गम् अत्युच्चम्, अतीवोन्नतमित्यर्थः, यत् शिरः स्वमस्तकं, तत् चुम्बति यः चन्द्रः सोमः, स एव चामरः चमरपुच्छकृतव्यजनविशेषः, तेन चारुः मनोहरः तस्मै, यथा हि शोभार्थं सन्निवेशितैः शुभ्रचामरविशेषैः सुधाशुभ्रीकृतानाम् आधारस्तम्भानां महती शोभा विवर्द्धते, एवमेव मौक्तिकधवलैः शशधरकिरणजालैः स्वभावशुभ्रशिवस्येति भावः; त्रैलोक्यं त्रिभुवनमेव, नगरं पुरं, तस्य आरम्भे निर्म्माणव्यापारे, मूलीभूतः यः स्तम्भः सुदृढ़ः स्थूणाविशेषः, तत्स्वरूपाय निखिलजगदाधारभूतायेत्यर्थः; एतेन जगद्धारयितुरीशस्याश्रयेनेन स्वाभिप्रेतसिद्धिरचिरेणैव कालेन भविष्यतीति ध्वन्यते; शम्भवे शङ्कराय, नमः प्रणतिरस्तु इत्यर्थः। ["नमः स्वस्तिस्वधा" (२।३।१६ पा०) इत्यादिना शम्भवे इत्यत्र चतुर्थी]। अत्र भगवति शिवे मूलस्तम्भस्य तादात्म्येनाभेदारोपात् तस्य त्रैलोक्ये नगरत्वारोपणे चन्द्रे च चामरत्वारोपणे हेतुतया निर्देशात् परम्परितरूपकालङ्कारः ॥ १ ॥

इदानीं शिष्याणां समवधानाय पिङ्गलनागकृतच्छन्दोग्रन्थस्य सर्वोत्कर्षत्वं व्यवस्थापयन् स्वकृतव्याख्यानस्यावश्यकत्वं सारवत्त्वञ्च प्रतिपादयति, श्रीमदिति ।—श्रीमता श्रीयुक्तेन, षड़ैश्वर्य्यशालिनेत्यर्थः, पिङ्गलनागेन भुजगपतिकरप्रीतिविवर्द्धनेन नागवंशोद्भवेन भगवता पिङ्गलाचार्य्येण, उक्तं कथितं, यत् छन्दोमयं शास्त्रं ग्रन्थविशेषः, स महोदधिरिव महासमुद्र इव, तत्र स्थितानि यानि मौक्तिकानि मुक्ताफलानि, तानीव वृत्तानि छन्दांसि, कानिचित् कतिपयानि, न तु सर्वाणीत्याशयः; एतेनात्मनः किञ्चिज्ज्ञत्वप्रदर्शनादतीव विनयित्वं प्रकटीकृतम्; विचिनोमि एकत्रीकरोमि, अहं वृत्तिकार इति शेषः। अत्र छन्दःशास्त्रस्य महोदधिसादृश्यात् वृत्तानां मौक्तिकसाम्याच्च उपमानामालङ्कारः। तेन च यथाऽतिदुरवगाहे रत्नकुम्भीरादिसङ्कुले महासागरे संस्थितानि निखिललोकवाञ्छितानि मौक्तिकानि निपुण एव कश्चित् सङ्ग्रहीतुं शक्नोति, तथाऽहमपि पिङ्गलच्छन्दःसारभूतानि इति व्यज्यते ॥ २ ॥

साम्प्रतं छन्दसां वेदाङ्गत्वेन कविमानसविकाशकत्वेन च वृत्तिप्रणेतृगौरवमुपादेय-

क्षीराब्धेरमृतं यद्वदुद्धृतं देवदानवैः ।
छन्दोऽब्धेः पिङ्गलाचार्य्यैश्छन्दोऽमृतं तथोद्धृतम् ॥ ४ ॥
मयरसतजभनलगसम्मितं भ्रमति वाङ्मयं जगति यस्य ।
स जयति पिङ्गलनागः शिवप्रसादाद्विशुद्धमतिः ॥ ५ ॥

स्वरूपं प्रतिपादयितुमाह, वेदानामिति ।—वेदानामतीवमहतामृगादिवेदचतुष्टयानां, प्रथमाङ्गस्य प्रथमं प्रधानभूतं यदङ्गं तत्स्वरूपस्य, तथा चोक्तं,—"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः। ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु ॥" इति ; कवीनां काव्यप्रणेतॄणां, नयनस्य नेत्रकल्पस्य, छन्दोज्ञानाहृतं काव्यरचनाया अशक्यत्वादेव तज्ज्ञानस्य नेत्रस्वरूपत्वकीर्त्तनमिति भावः ; पिङ्गलाचार्य्यसूत्रस्य पिङ्गलाचार्य्यविरचितसूत्रजातस्य, वृत्तिः व्याख्यानग्रन्थविशेषः, मया हलायुधभट्टेन, विधास्यते करिष्यते । अस्य वेदाङ्गभूतत्वेनावश्यपठनीयत्वात् तज्ज्ञानरहितानामन्ध-प्रायत्वादेव सर्वैरेवानुपेक्षणीयमेतादृति हेतोः मम एतावान् प्रयास इति वृत्तिकार-स्याभिप्रायः। अत्र रूपकालङ्कारः ॥ ३ ॥

इदानीं व्याख्येयवस्तुनः सर्वोत्कृष्टत्वप्रतिपादनमुखेन तत्र प्रेक्षावतामत्यधिकां प्रीतिं जनयितुं ग्रन्थकर्त्तुः उपादेयत्वं दर्शयति, क्षीराब्धेरिति ।—देवैः अदिति-नन्दनैः, दानवैः दितिसुतैश्च, यद्वत् यथा परस्परं मिलित्वा इत्यर्थः, क्षीराब्धेः क्षीरसमुद्रात्, अमृतं पीयूषम्, उद्धृतं सङ्गृहीतं, महता श्रमेण अगाधादब्धेः यथा असारभूतं वस्तु परिहृत्य सारभूतमेवामृतं समुत्तोलितमित्यर्थः, तथा छन्दोऽब्धेः पारावारसम्मितात् छन्दःसमूहात्, छन्दोऽमृतम् अमृतकल्पं छन्दोनिवहं, पिङ्गलाचार्य्यैः भगवता ग्रन्थकृता, ( पूजार्थे बहुवचनम् ) उद्धृतं सारभूतं यत्तदेव एकत्र सङ्गृहीकृतम्, असारांशपरित्यागेन सारभूतमेव वस्तु अत्र विनिवेशितमित्यर्थः, अत एवास्य पठनादेव प्रेक्षकाणां महानुपकारः अवश्यमेव भविष्यतीति भावः। अत्र "छन्दोऽब्धेः" "छन्दोऽमृतम्" इत्युभयत्रापि सागरत्वामृतत्वयोरभेदारोपणाद्रूपका-लङ्कारः, तथा छन्दोऽमृतस्य क्षीराब्धिसमुद्धृतामृतसाम्यकथनादुपमा, तदुभयोरङ्गाङ्गि-भावेन सङ्करः ॥ ४ ॥

अथाभिनवच्छन्दःशास्त्रप्रवर्त्तनेन सङ्क्षिप्त-मादिगणैः स्वग्रन्थपरिसमापनेन च जगतो महतो हितकरकार्य्यस्यानुष्ठानात् ग्रन्थकृत्सङ्केतितसङ्क्षिप्तवर्णसमूहं प्रकाशयन् ग्रन्थकृतं जयशब्दकीर्त्तनेनाभिनन्दयति, म-य-र-सेत्यादि ।—यस्य ग्रन्थकृतः, म-य-र-स-त-ज-भ-न-ल-ग-सम्मितं मगण-यगण-रगण-सगणादिभिः सदृशं, ग्रन्थकृता स्वग्रन्थं

त्रिगुरुं विद्धि मकारं लघ्वादिसमन्वितं यकाराख्यम्।
लघुमध्यमञ्च रेफं सकारमन्ते गुरुनिबद्धम्॥ ६॥
लघ्वन्त्यं हि तकारं जकारमुभयोर्लघुं विजानीयात्।
आदिगुरुञ्च भकारं नकारमिह पैङ्गले त्रिलघुम्॥ ७॥
दीर्घं संयोगपरं तथा प्लुतं व्यञ्जनान्तमूष्मान्तम्।
सानुस्वारञ्च गुरुं क्वचिदवसानेऽपि लघ्वन्त्यम्॥ ८॥

---

सङ्क्षेपेण परिसमापयितुं परिभाषया सङ्केतितमित्यर्थः, वाङ्मयं वागात्मकं छन्दःशास्त्रमित्यर्थः, जगति अस्मिन् लोके, भ्रमति प्रचरति, विदुषां प्रीतिं समुत्पादयतीत्यर्थः, शिवप्रसादात् ज्ञानदातुः शङ्करस्यानुग्रहात्, "ज्ञानमिच्छेत् शङ्करात्" इत्युक्तेरिति भावः, विशुद्धा मोहकालुष्यापगमात् निर्म्मला, मतिः ज्ञानं यस्य तादृशः, सः सर्वलोकप्रसिद्धः, पिङ्गलनागः नागवंशावतंसः महामतिः पिङ्गलपादः, जयति सर्वोत्कर्षेण वर्त्तताम्; एतेन भगवता यद्यदुक्तं तत् सर्वमेव भ्रान्तिलेशरहितमतः सुधीभिः सादरमेवैतत् ग्रहीतव्यमिति सूचितम्॥ ५॥

इदानीं ग्रन्थकारकृतपरिभाषायाः प्रस्तुतग्रन्थोपयोगित्वं प्रदर्शयितुं सूत्रसमूहेन सन्निवेशितं सङ्केतजातं विदुषां सुखावबोधार्थं श्लोकनिबद्धेन निबध्नाति, त्रिगुरुमित्यादि।—इह अस्मिन्, पैङ्गले पिङ्गलनागविरचितग्रन्थे, म-कारं मवर्णस्वरूपं सङ्केतविशेषं, त्रिगुरुं गुरुस्वरत्रयस्वरूपं, विद्धि जानीहि, सर्वे सङ्केतिता वर्णाश्चात्र ग्रन्थे प्रत्येकं स्वरत्रयसमन्विताः व्यञ्जनत्रयसङ्घातस्वरूपाः वेदितव्याः, तथा य-काराख्यं य-कारनामकसङ्केतविशेषं, लघ्वादिसमन्वितं लघुः ह्रस्वस्वरः आदिः आदिमः यस्य तेन समन्वितं युक्तम्, आदिलघु-चरमगुरुद्वयात्मकमित्यर्थः, विद्धीति पूर्वेणान्वयः; रेफं र-सङ्केतं, लघुमध्यमं ह्रस्वमध्यमम्, आद्यन्तगुरु-मध्यलघुस्वरूपमित्यर्थः; स-कारं स-सङ्केतञ्च, अन्ते अवसाने, गुरुनिबद्धं दीर्घतया निरूपितं, प्रथमलघुद्वय-चरमैकगुरुकमित्यर्थः, विद्धीति पूर्वेणान्वयः; त-कारं त-सङ्केतञ्च, लघ्वन्त्यं लघुः ह्रस्वस्वरः अन्त्यः अन्तिमः यस्य तथोक्तम्, आदिमवर्णद्वयगुरु-चरमैकलघुकमित्यर्थः; ज-कारं ज-सङ्केतम्, उभयोः आद्यन्तयोः, लघुं ह्रस्वं, प्रथमचरमलघुक-मध्यमदीर्घात्मकमित्यर्थः; तथा भ-कारं भ-सङ्केतम्, आदिगुरुं प्रथमवर्णगुर्वात्मकं द्वितीयतृतीयवर्णलघुकमित्यर्थः; न-कारं न-सङ्केतं, त्रिलघुं त्रयो वर्णाः लघवः ह्रस्वस्वराः यत्र तादृशं दीर्घाभावरूपं गणं, विजानीयात् अवगच्छेत्॥ ६॥ ७॥

इह दीर्घस्वराणां सार्व्वत्रिकगुरुत्वं ह्रस्वस्वराणामपि क्वचित् गुरुत्वं परिभाषया परिगृहीतमिति दर्शयति, दीर्घमिति।—दीर्घं दीर्घस्वरं, संयोगः संयुक्तवर्णः परः परवर्त्ती यस्य तथाविधं, तथा प्लुतं त्रिमात्राकालेन उच्चार्य्यमाणवर्णं, तथा च कारिका,—"एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते। त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनञ्चार्द्ध-मात्रकम्॥" इति, "दूराद्धूते च" (८।२।८४ पा०) इत्यादिसूत्रेण भगवता पाणिनिना यस्य प्लुतसंज्ञा कृता तमेवेत्यभिप्रायः; व्यञ्जनान्तं व्यञ्जनमन्ते यस्य स व्यञ्जनान्तः तादृशं, यथा,—दडाङ् इत्यादि; एषाञ्च द्विमात्राकालात्मकत्वेन गुरुत्वमन्यैरप्यङ्गीकृतं, तथा च यजुःप्रातिशाख्यं,—"संयोगपूर्व्वव्यञ्जनान्तावसानगताः स्वराः द्विमात्राः।" (४अ० १०७सू०) अस्यार्थः,—संयोगात् पूर्व्वः संयोगपूर्व्वः, यथा,—अग्निः विष्णुना। व्यञ्जनमन्ते यस्य सः, यथा,—दडाङ्। अवसानं प्राप्तः अवसानगतः, यथा,—पाहि एव, एते स्वराः द्विमात्राः कालाः भवन्ति, न तु दीर्घा गुरव एते भवन्ति" इति उव्वटभाष्यम्। संयोगपरस्य क्वचिदपवादोऽपि दृश्यते, तेन पादादिसंयोगेन पुरःस्थितेन क्वचिदपेक्षितविषये संयोगपरत्वाद्गुरोरपि लघुता स्यात्, यथा,—"अल्पव्ययेन सुन्दरि। ग्राम्यजनो मिष्टमश्नाति।" अत्र सुन्दरीत्यस्य संयोगपरत्वाद्गुरुत्वे सति तृतीये पादे त्रयोदशमात्रा भवेत्, अतोऽत्र लघुत्वं प्रतिज्ञायते,तेन च द्वादश-मात्रात्वं सिद्धम्। उक्तञ्च वृत्तरत्नाकरे,—"पादादाविह वर्णस्य संयोगः क्रमसंज्ञकः। पुरःस्थितेन तेन स्याल्लघुताऽपि क्वचिद्गुरोः॥" इति। किञ्च, "अवसाने यरो द्विश्च" इति काशिकोक्तेः अवसानस्थानां हलानां द्विर्भावत्वकथनात् तत्पूर्व्वस्थानां ह्रस्वानामपि गुरुत्वमित्यभिप्रायो वा। तथा ऊष्मान्तम् ऊष्मवर्णाः शषसहाः अन्ते अवसाने यस्य तं तादृशम्; व्यञ्जनान्तमित्यनेनैव ऊष्मान्तस्य लाभात ऊष्मशब्देनात्र विसर्ज्जनीय-जिह्वामूलीयोपध्मानीयानां ग्रहणं विदितव्यम्। "ह्रादिपरः" (पि० सू० १अ० ११सू०) इति सूत्रे तथैव व्याख्यातवान् वृत्तिकारः। च किञ्च, सानुस्वारम् अनुस्वार-युक्तं, तथा अवसाने पादान्ते, क्वचित् कुत्रचित, न तु सर्व्वत्र इत्याशयः, लघ्वन्त्यमपि ह्रस्वस्वरात्मकमन्तिमं वर्णमपि, गुरुं, विजानीयात् इति पूर्व्वेणान्वयः। एवमेवाह दर्पणकारः,—"यत् पादान्ते लघोरपि गुरुभावः उक्तः तत् सर्व्वत्र द्वितीयचतुर्थ-पादविषयं, प्रथमतृतीयपादविषयन्तु वसन्ततिलकादेरेव" इति; अत एवोक्तं क्वचिदिति। तथा चोक्तमाग्नेयच्छन्दःसारे,—

"ह्रस्वो गुरुर्वा पादान्ते अनुस्वाराद्विसर्गतः।
पूर्व्वो योगात् व्यञ्जनात् स्यात् जिह्वामूलीयतस्तथा।
उपध्मानीयतो दीर्घो गुरुर्ल्लौ च गलाविव॥" इति॥ ८॥

आदिमध्यावसानेषु य-र-ता यान्ति लाघवम् ।
भ-ज-सा गौरवं यान्ति म-नौ तु गुरुलाघवम् ॥ ९ ॥
त्रिविरामं दशवर्णं षण्मात्रमुवाच पिङ्गलः सूत्रम् ।
छन्दोवर्गपदार्थप्रत्ययहेतोश्च शास्त्रादौ ॥ १० ॥
इह हि त्रैवर्णिकानां साङ्गवेदाध्ययनमाम्नायते । अर्थाव-

इदानीं सुखावबोधार्थं सङ्केतसमूहं सङ्क्षेपतः प्रदर्शयन्नाह, आदीति ।—य-र-ता यगण-रगण-तगणाः, आदिमध्यावसानेषु आदौ मध्ये अन्ते च, यथासङ्ख्यं लाघवं लघुतां, यान्ति प्राप्नुवन्ति । भ-ज-साः भगण-जगण-सगणाश्च, आदौ मध्ये अन्ते च क्रमात् गौरवं दीर्घतां, यान्ति । म-नौ तु केवलं मगणः नगणश्च, सर्वावयवावच्छेदेन गुरुत्वं लघुत्वञ्च क्रमात्, यात इति शेषः, मगणश्च केवलं वर्णत्रयावच्छेदेन गुरुतां नगणश्च तथैव लघुतां याति इत्यर्थः ॥ ९ ॥

अथ ग्रन्थकृता स्वयमेवाभिहितस्य सङ्केतविशेषस्यावतारणार्थमिदानीं "धी श्री स्त्री म्" (पि० सू० १अ० १सू०) इति तदीयप्रथमसूत्रस्य सम्यक् परिचयं प्रदातुमिच्छन्नाह, त्रिविराममिति ।—पिङ्गलः नागाचार्यः, शास्त्रादौ स्वविरचितग्रन्थस्य प्रथमतः एव, छन्दोवर्गपदार्थप्रत्ययहेतोश्च छन्दसां वृत्तानां ये वर्गाः समूहाः, तत्र स्थिता ये पदार्थाः स्वरादयः, तेषां प्रत्ययहेतोश्च अभिज्ञानार्थमेव, त्रिविरामं त्रयो विरामाः विच्छेदाः, पदविरतय इत्यर्थः, यत्र सूत्रे तथाविधं, दशवर्णं दश वर्णाः ध्-र्-ई श्-र्-ई स-त-र्-ई म्-स्वरूपाः यत्र तत्, तथा षट् मात्राः दीर्घस्वरत्रयरूपा यत्र तत् तथाविधं, सूत्रम् उवाच ; अत्र चकार एवार्थे, छन्दसां परिज्ञानार्थमेव धी श्री स्त्री-रूपोदाहरणसहितं मगणाख्यं सङ्केतं ग्रन्थादौ उवाच इत्यर्थः ॥ १० ॥

(क) "स्वाध्यायोऽध्येतव्यः" इत्याद्यध्ययनविधिबोधितस्य विधिवदुपनीतानां वर्णत्रयाणामवश्यमध्येतुमुचितस्य शिक्षादिषडङ्गसमन्वितस्यातीव महतः ऋगादिवेदस्याङ्गभूतमेतदवेत्य, तथा "छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनञ्चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥ शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् । तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते ॥" इत्यादिप्रमाणात् यथाविध्यध्ययनेन ब्रह्मलोकावाप्तिमूलकत्वमवधार्य च भगवान् पिङ्गलाचार्यः प्राचीनतमैः कृतेऽपि बहुले छन्दोग्रन्थे सुकुमारमतीनां प्रेक्षावतां सुखतश्छन्दःपरिज्ञानार्थं सङ्क्षिप्तमतिसुकुमारमिदं छन्दःसूत्रं प्रणीतवान् । हलायुधभट्टोऽपि "ज्ञातार्थं ज्ञातसम्बन्धम्" इत्यादिकं चरम् प्रयोजनादिकं प्रतिपादयति, इहेति ।—इह अत्र लोके, हि निश्चितं,

बोधपर्य्यन्तस्वाध्ययनविधिः। (क) वेदाङ्गञ्च छन्दः। तत-

त्रैवर्णिकानां त्रयो वर्णाः ब्रह्मचर्य्यविष्टरूपाः तेषां ब्रह्मचर्य्यविशामित्यर्थः। (स्वार्थे ठञ्) साङ्गवेदाध्ययनम् षडङ्गषट्कसमन्वितस्य वेदस्य विद्यते ज्ञायते लभ्यते वा अनेन धर्मादिपुरुषार्थचतुष्टयम् इति वेदः तस्य, अलौकिकपदार्थबोधनार्थं प्रवृत्तस्य शास्त्रस्य ; अत्र वेदलक्षणमाह ऋग्वेदभाष्ये माधवाचार्य्यः,—"अनधिगता-बाधितार्थबोधकः शब्दो वेदः" इति। तथा तत्रभाष्यधृतस्मृतिवाक्यं यथा,— "प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। एतं विदन्ति वेदेन तस्माद्वेदस्य वेदता॥" इति ; शब्दचिन्तामणिकारोऽप्याह,—"शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्य-विषयकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्यप्रमाणशब्दत्वम्" इत्याद्युक्तलक्षणात्मक-स्येत्यर्थः, अध्ययनं यथाविधि पाठः, "उपनीतन्तमध्यापयीत" इत्यादि श्रुत्या, "उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्। वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्॥" इति स्मृतेः ; "वेदानेव सदाऽभ्यस्येत्तपस्तप्स्यन् द्विजोत्तमः। वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते॥ इहैव स नखाग्रेभ्यः परमं तप्यते तपः। यः स्रग्वी हि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्॥ योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्। स जीव-न्नेव शूद्रत्वमाशु गच्छति सान्वयम्॥" इति मनूक्त्या, तथा—"यज्ञानां तपसाञ्चैव शुभानाञ्चैव कर्मणाम्। वेद एव द्विजातीनां सुनिःश्रेयस्करः परः॥" इति योगियाज्ञ-वल्क्योक्त्या ; "धर्मजिज्ञासमानानां वेदादन्यदिहेष्यते। धर्मस्य कारणं शुद्धं मिश्रमन्यत् प्रकीर्त्तितम्। अतः स परमो धर्मः यो वेदादवगम्यते॥" इति व्यासोक्त्या ; "ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येतव्यः" इति श्रुतिवाक्यतश्च त्रैवर्णिकानामेव वेदाध्ययनं विहितं, विशेषतश्च ब्राह्मणानामिति बोध्यम् ; तथा "गर्भाष्टमेऽष्टमे वाऽब्दे ब्राह्मणस्योप-नायनम्। राज्ञामेकादशे सैके विशामेके यथाकुलम्॥" इति मनूक्त्या च ; तथा "वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्" इति कमलाकरधृत-श्रुत्या च त्रैवर्णिकानामेव उपनीतत्वावगमात् यथाविहितकालेषु विधिवदुपनीतानां ब्रह्मचर्य्यविशां तत्, आम्नायते कथ्यते, कर्त्तव्यतयोपदिश्यते इत्यर्थः। कियत्काल-मध्येतव्यमित्याह, अर्थेत्यादि।—अर्थावबोधपर्य्यन्तः अर्थस्य प्रतिपाद्यवस्तुनः यः अवबोधः सम्यक् परिज्ञानं स एव पर्य्यन्तः अवधिः यस्य सः तथोक्तः, अध्ययनविधिः अध्ययनस्य साङ्गवेदपाठस्य विधिः "स्वाध्यायोऽध्येतव्यः" इत्यादिरूपविधानं, तात्पर्य्यार्थस्य सम्यगवधारणमेवाध्ययनफलमित्यर्थः। अर्थज्ञानसहितस्य वेदाध्ययन-स्यावश्यकर्त्तव्यत्वे प्रमाणम् ऋग्वेदभाष्ये मन्त्रद्वयं यथा,—"स्थाणुरयं भारहरः

स्तदध्ययनं विधिबोधितत्वादनुष्ठेयम् । ( ख ) अथ अनुष्टुभा

किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ एव सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥" "यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥" इति । एतयोर्माधवाचार्य्यकृता व्याख्या यथा,—"यस्तु वेदमधीत्य अर्थं न विजानाति सोऽयं पुमान् भारमेव हरति धारयति । स्थाणुरिति दृष्टान्तः, छिन्नशाखं शुष्कं वृक्षमूलं स्थाणुशब्देनोच्यते, स च यथा इन्धनार्थमेवोपयुज्यते न तु पुष्पफलार्थं, तथा केवलपाठकस्य ब्राह्मणत्वं न भवतीत्येतावदेव, न त्वनुष्ठानं स्वर्गादिसिद्धिर्वाऽस्ति । किलेत्यनेन लोकप्रसिद्धिर्द्योत्यते ; लोकेऽपि पाठकस्य यावती धनादिपूजा ततोऽप्यधिका विदुषि दृश्यते । किञ्च यत् वेदवाक्यमाचार्य्यात् गृहीत-मर्थज्ञानरहितं पाठरूपेणैव पुनः पुनः उच्चार्य्यते तत् कदाचिदपि न ज्वलति न प्रकाशयति, यथा अग्निरहितप्रदेशे प्रक्षिप्तं शुष्ककाष्ठं न ज्वलति तद्वत् ; तथा सति तस्य वाक्यस्य वेदत्वमेव मुख्यं न स्यात्" इति । तथा व्यासोऽप्याह,—"वेदस्याध्ययनं कार्य्यं धर्मशास्त्रस्य वाऽपि यत् । अजानताऽर्थं तत् सर्वं तुषाणां कण्डनं यथा ॥ यथा पशुर्भारवाही न तस्य भजते फलम् । द्विजस्तथाऽर्थानभिज्ञो न वेदफलमश्नुते ॥" इति । मनुरपि,—"वेदशास्त्रार्थतत्त्वज्ञो यत्र कुत्राश्रमे वसन् । इहैव लोके तिष्ठन् स ब्रह्म-भूयाय कल्पते ॥" इत्यादिभिः शास्त्रैः अर्थज्ञानसहितवेदाध्ययनं द्विजातीनां परमश्रेयस्करमित्यवगतम् ।

( ख ) कथं छन्दोऽध्येतव्यमित्याह, वेदेति ।—छन्दः गायत्र्यादिकं, छादयति पुरुषस्य पापमस्मन्नं निवारयतीति छन्दः, तथा च सायनभाष्ये,—"पुरुषस्य पापसम्बन्धं वारयितुमाच्छादकत्वाच्छन्द उच्यते, तच्च आरण्यकाण्डे समाम्नायते 'छादयन्ति ह वा एनं छन्दांसि पापकर्मणः' यद्वा,—'अौयमानाग्नि-सन्तापस्याच्छादकत्वाच्च छन्दः' इति" ( ऋ०१म० ) वेदाङ्गं वेदानाम् ऋगादीनाम् अङ्गम् अवयवीभूतं, शिक्षादिषट्केष्वेवान्तर्भूतमित्यर्थः ; तथा चोक्तं,—"शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः । ज्योतिषामयनञ्चैव वेदाङ्गानि षडेव तु ॥" इति । तत्र शिक्षा स्वरवर्णोच्चारणोपदेशकं शास्त्रं, कल्पः वेदविहितानां कर्मणामानु-पूर्व्येण कल्पनाशास्त्रं, व्याकरणं शब्दार्थव्युत्पत्तिकरं शास्त्रं, निरुक्तं पदविभाग-मन्त्रार्थ-देवतानिरूपणार्थशास्त्रं, छन्दः गायत्रीप्रभृतिच्छन्दोज्ञानशास्त्रं, ज्योतिषं काल-परिमाणज्ञापनार्थं शास्त्रम् । ततः अत एव, अस्य वेदाङ्गभूतत्वादेव इत्यर्थः, तदध्ययनं तेषां गायत्र्यादिच्छन्दसां सम्यगुपदेशविधायकानां शास्त्राणाम् अध्ययनं

यजति, बृहत्या गायति, गायत्र्या स्तौतीत्येवमादिश्रवणादर्थान्वयायातमनुष्टुबादिज्ञानम्। किञ्च, छन्दसामपरिज्ञानात् प्रत्युत प्रत्यवायः श्रूयते। यथा,—"यो ह वा अविदितार्षेयच्छन्दोदैवतविनियोगेन ब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा, स स्थाणुं वर्च्छति, गर्त्तं वा पद्यते, प्रमीयते, वा पापीयान् भवति, यातयामान्यस्य छन्दांसि भवन्ति" इति छन्दोमब्राह्मणम्। तस्माच्छन्दःपरिज्ञानं कर्त्तव्यम्। तदर्थमिदं शास्त्रमारभ्यते। तत्र लघुनोपायेन शास्त्राववोधसिद्ध्यर्थं संज्ञाः परिभाषते सूत्रकारः। (ग)

---

यथाविधि गुरोः सकाशात् पठनं, विधिबोधितत्वात् मोक्षविध्युपदिष्टत्वात्, अनुष्ठेयम् अवश्यमेव अनुष्ठातुमुचितमित्यर्थः, छन्दःशास्त्राध्ययनमन्तरेण साङ्गवेदाध्ययनविधिरनुष्ठितो न भवतीति भावः।

(ग) छन्दसामवश्यज्ञातव्यत्वे प्रमाणमुपन्यस्यति, अथेति।—अनुष्टुभा अनुष्टुप्छन्दोनिबद्धया ऋचा, यजति देवानर्च्चयति। बृहत्या बृहतीच्छन्दोमय्या ऋचा, गायति देवान् प्रीणयति। एवं गायत्र्या गायत्रीच्छन्दोमयेन मन्त्रेण, स्तौति देवानां स्तुतिवादं करोति। इत्येवमादिश्रवणात् वेदेषु छन्दसां परिज्ञानस्य एवंविधावश्यकत्वश्रुतेः, अनुष्टुबादिज्ञानम् अनुष्टुप्प्रभृतिच्छन्दसां ज्ञानप्रयोजनमित्यर्थः, अर्थान्वयायातम् अर्थानां प्रतिपाद्यवस्तूनाम् अन्वयेन तात्पर्य्यार्थपर्य्यालोचनयैव आयातं प्राप्तं, फलबलात्लभ्यमित्यर्थः। किञ्च अपरञ्च, प्रत्युत वैपरीत्येन, छन्दसामपरिज्ञानात् छन्दोज्ञानराहित्ये सति, प्रत्यवायः अनिष्टोत्पादः, श्रूयते आम्नायते, वक्ष्यमाणेन वेदभागेनेतनेति शेषः। तदेव दर्शयति, यथेति। —यो द्विजः, ह किल, वा एवार्थे, अविदितार्षेयच्छन्दोदैवतविनियोगेन ऋषयः अतीतानागतवर्त्तमानार्थवेदिनः मन्त्रद्रष्टारः, तेषां समूहाः आर्षेयाः, तथा च सायनभाष्ये,—"अतीन्द्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतो दर्शनात् ऋषित्वम्। 'ऋषी गतौ' इति धातोः इन्प्रत्ययेन सिद्धम्। तथा च,—"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥" इति। तथा योगियाज्ञवल्क्यः,—"येन यदृषिणा दृष्टं सिद्धिः प्राप्ता च येन च। मन्त्रेण तस्य तत् प्रोक्तमृषिभावः तदात्मकः॥" इति च। छन्दांसि गायत्र्यादीनि,

"छादनाच्छन्द इत्युक्तं वाससी वाथ वा कृते । आत्मा तु च्छादितो देवैर्मृत्योर्भीतैस्तु वै पुरा ॥ आदित्यैर्वसुभी रुद्रैस्तेन च्छन्द इतीरितम् ॥" इति याज्ञवल्क्योक्तलक्षणा-न्यक्षराणीत्यर्थः, दैवतानि मन्त्रान्तर्भूता अग्न्यादिका हविर्भाजः स्तुतिभाजो वा ; उक्तञ्च याज्ञवल्क्येन,—"यस्य यस्य च मन्त्रस्य उद्दिष्टा या च देवता । तदाकारं भवेत्तस्य दैवतं दैवतोच्यते ॥" इति । देवताशब्दात् स्वार्थे अण् । तदुक्तं निरुक्ते,—"देवतशब्दात् स्वार्थे अण् ; दैवतं पुंनपुंसकम्" इति । तथा विनियोगः यत्कर्मार्थं ये मन्त्राः समुत्पन्नाः तत्कर्मणि तेषां प्रयोगः, यदुक्तं तेनैव,—"पुरा कल्पे समुत्पन्ना मन्त्राः कर्मार्थमेव च । अनेनैव तु कर्त्तव्यं विनियोगः स उच्यते ॥" इत्युक्तलक्षणः इत्यर्थः । एते अविदिताः अज्ञाता यत्र तथाविधेन, मन्त्रेण वाचकेन, ब्राह्मणेन मन्त्रेतरवेदभागरूपेण, "निरुक्तं यस्य मन्त्रस्य समुत्पत्तिः प्रयोजनम् । प्रतिष्ठानं स्तुतिश्चैव ब्राह्मणस्याभिधीयते ॥" इति याज्ञवल्क्योक्तमन्त्रार्थस्तुत्यादिलक्षणरूपेण सह इत्यर्थः ; ब्राह्मणेन इत्यत्र सहार्थे तृतीया, न तु कर्त्तरि, एवञ्च ब्राह्मणेन सह आर्षादि-चतुष्टयम्, अर्थात् ब्राह्मणादिपञ्चकम् इत्यर्थः ; अविदित्वा यो याजयति अध्यापयति वा ; उक्तञ्च याज्ञवल्क्येन,—"आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च । वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥ यस्तु जानाति तत्त्वेन आर्षं छन्दश्च दैवतम् । विनियोगं ब्राह्मणञ्च मन्त्रार्थज्ञानकर्म च ॥" तथा "एवं पञ्चविधं प्रोक्तं जप्यकालेष्वनुस्मरेत् । होमे वा मार्ज्जने यागे स्वाध्याये याजने तथा ॥" इति, अत्र पञ्चविध-मित्युक्त्या च ब्राह्मणसहितानामेवार्षादीनां चतुर्णां जपकाले स्मरणं सूचितम् । स याजकः गुरुश्च, स्थाणुं वृक्षादियोनिम्, ऋच्छति प्राप्नोति, वा अथवा, गर्त्तं नरकं, पद्यते प्राप्नोति, प्रमीयते वा वेदोक्तमायुर्न लभते, पापीयान् पापयुक्तो भवति, अस्य याजकस्य, छन्दांसि यातयामानि यातः प्राप्तः यामः फलप्राप्तिविषये औदासीन्यं येषां तानि वीर्य्यहीनानि इत्यर्थः ; तथा च यजुर्वेददीपधृतकात्यायनवाक्यं,—"द्रष्टार ऋषयः, स्मर्त्तारः परमेष्ठ्यादयः देवता मन्त्रान्तर्भूता अग्न्यादिका हविर्भाजः स्तुतिभाजो वा, छन्दांसि गायत्र्यादीनि, एतानि अविदित्वा योऽधीते अनुब्रूते जपति जुहोति यजते याजयति वा तस्य ब्रह्म निर्वीर्य्यं यातयामं भवति अन्तराऽश्वगर्त्तं वा पद्यते स्थाणुं वर्च्छति प्रमीयते वा पापीयान् भवति" इति । तथा याज्ञवल्क्योऽप्याह,—"अविदित्वा तु यः कुर्य्यात् याजनाध्यापनं जपम् । होममन्तर्जलादीनि तस्य चाल्पफलं लभेत् ॥" इति । एतच्छ्रुतिमूलकं प्रमाणान्तरमपि दृश्यते, यथा सायन-भाष्यधृतम्,—"अविदित्वा ऋषिं छन्दो दैवतं योगमेव च । योऽध्यापयेत् जपेद्वापि पापीयान् जायते तु सः ॥ ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वराद्यपि । अविदित्वा

## धी श्री स्त्री म् ॥ १ ॥

धी श्री स्त्री इत्यनेन गुरुत्रयं संज्ञित्वेनोपलक्षयति, मकारञ्च संज्ञात्वेन। ततश्चायमर्थः,—सर्वगुरोस्त्रिकस्य मसंज्ञा परिभाष्यते। ध्यादीनामुपादानप्रयोजनमुपरिष्टात् वक्ष्यामः। मप्रदेशाः "विद्युन्माला मौ गौ" (पि० सू० ६अ० ११सू०) इत्येवमादयः। (घ)

---

प्रयुञ्जानो मन्त्रकण्टक उच्यते ॥ इति। तथा वेदनविधिरपि स्मर्य्यते, यथा,—"स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च। मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे ॥" इति। तस्मात् अनिष्टोत्पादादिश्रुतेः तथा वेदनविधानाच्चेत्यर्थः, छन्दःपरिज्ञानं कर्त्तव्यम् अवश्यमेव कर्त्तुमुचितम्। तदर्थं छन्दःपरिज्ञानार्थम्, इदं शास्त्रं छन्दःशास्त्रमेतत्, आरभ्यते प्रस्तूयते। तत्र अस्मिन् आरब्धव्ये छन्दःशास्त्रे, सूत्रकारः भगवान् पिङ्गलाचार्य्यः, लघुना अल्पेन, उपायेन सङ्क्षेपतः शास्त्रस्य परिसमाप्तये परिगृहीतेन कौशलवि[illegible]षेण इत्यर्थः, शास्त्रावबोधसिद्ध्यर्थम् अस्मिन् छन्दःशास्त्रे सम्यक् ज्ञानलाभार्थं, संज्ञाः सङ्केतविशेषान्, परिभाषते प्रस्तौति।

(घ) [illegible]त्रेऽस्मिन् संज्ञिसंज्ञारूपमंशद्वयमस्ति, धी श्री स्त्री इत्यनेन यत् गुरुत्रयं प्रदर्शितं तत् संज्ञित्वेन, सूत्रस्यावसानेऽवतिष्ठमानं स्वरविरहितं मकारञ्च सङ्केतितसंज्ञात्वेन, तदेव दर्शयति, धीत्यादि।—तत्रभवान् महर्षिराचार्य्यः स्वग्रन्थादौ ग्रन्थस्य निखिलकुशलप्रतिपादनार्थं माङ्गलिकं मगणं धीशब्दञ्च उपन्यस्तवान्। भूमिदैवतस्य मगणस्य माङ्गलिकत्वे प्रमाणं यथा,—"क्षेमं सर्वगुरुर्धत्ते मगणो भूमिदैवतः" इति। अन्यत्र,—"मो भूमिः श्रियमातनोति य जलं वृद्धिं र वह्निर्मृतिम्। सो वायुः परदेशदूरगमनं त व्योम शून्यं फलम् ॥ जः सूर्य्यो रुजमादधाति विपुलां भेन्दुर्यशो निर्म्मलम्। नो नाकश्च सुखप्रदः फलमिदं प्राहुर्गणानां बुधाः ॥" इति। किञ्च,—"पृथ्वी जलशिखिवायुगगनं सूर्य्यचन्द्रमा नाकः। मकारक्रमवशतो देवा ज्ञेया यथासङ्ख्यम् ॥" इति। एवमन्येषाञ्च गणानां दैवतादिकं अग्रे दर्शयिष्यमाणगणचक्रे द्रष्टव्यम्। वाणीभूषणेऽपि,—"मः सम्पदं वितनुते नगणो यशांसि श्रेयः करोति भगणो यगणो जयञ्च। देशाद्विवासयति सो रगणो निहन्ति राष्ट्रं विनाशयति जगणोऽर्थहन्ता ॥" इति। गणशुद्धिप्रसङ्गात् वर्णशुद्धिप्रयोजनमपि उच्यते,—"अक्षरे परिशुद्धे तु नायको भूतिमृच्छति" इति। तदुक्तं

## वरा सा य् ॥ २ ॥

वरा सा इत्यनेनादिलघोस्त्रिकस्य यसंज्ञा परिभाष्यते ।

---

भामहेन,—"अवर्णात् सम्पत्तिर्भवति मुदिवर्णात् धनशता-न्युवर्णादख्याति: सुरमस-मवर्णात् व-रहितात् । तथा ह्येष: सौख्यं ङ-ञ-ण-न-म-विहीनाक्षरगणात् पदादौ विन्यासाद्दरवहलपूर्वैर्विरहितात् ॥" "क: खो गो घश्च लक्ष्मीं वितरति सुयशो ङस्तथा च: सुखं छ:, प्रीतिं जो मित्रलाभं भयमरणकरौ झ-ञौ ट-ठौ खेद-दु:खे । ड: शोभां ढो विशोभां भ्रमणमथ च ण: सुखं थश्च युद्धं, दो ध: सौख्यं मुदं न: सुखभयमरणक्लेशदु:खं पवर्ग: ॥ यो लक्ष्मीं रश्च दाहं व्यसनमथ ल-वौ श: सुखं षश्च खेदं, स: सौख्यं हश्च खेदं विलयमपि च ल: क्ष: समृद्धिं करोति । संयुक्तं चेह न स्यात् सुखमरणपटुर्वर्णविन्यासयोग:, पद्यादौ गद्यवक्त्रे वचसि च सकले प्राकृतादौ समोऽयम् ॥" इति । अनुस्वारविसर्गयो: फलं शुभमेव ज्ञेयम् । लृकारस्य च विदेशगमनं धनहानिश्चेति बोद्धव्यम् । एवं दु:खदारिद्र्यवाचका: शब्दाश्चादौ न प्रयोज्या: । देवतावाचकशब्दे तु गणविचारे अक्षरविचारे दोषाभाव: । यदुक्तं भामहेन,—"देवतावाचका: शब्दा ये च भद्रादिवाचका: । ते सर्वे नैव निन्द्या: स्युर्लिपितो गणतोऽपि च ॥" इति । प्रमाणैरेतै: वर्णगणविचारेऽत्र मङ्गलपूर्वकसम्पत्तिसुखावाप्ति: सिद्धेति सुधीभिर्विचार्यम् । आदौ श्री-शब्दस्य मगणस्य च निर्देशादेतत् प्रयोजनान्तरमपि दर्शितम् । श्रीत्यादिसूत्रेण सर्वगुरुर्मगण इति प्रतिपादयति, मत इति ।—सर्वगुरो: दीर्घात्मकस्य, त्रिकस्य वर्णत्रयस्य, मसंज्ञा मरूपसङ्केतविशेष:, परिभाष्यते स्वीक्रियते, सूत्रेऽस्मिन् ग्रन्थकृता इति शेष: । शास्त्रेऽस्मिन् गणानां वर्णमात्राभेदतया द्वैविध्यमभिहितं, "ल: समुद्रा गण:" ( पि० सू० ४अ० १२सू० ) इत्यादिवक्ष्यमाणसूत्रेषु गणानामभिधास्यमानत्वादेतेषां सूत्राणां वर्णगणप्रत्यायकत्वमवगन्तव्यम् । वर्णगणाश्च सरल-वक्ररेखात्मकत्वेन ( - ⌣ ) वर्णानां ह्रस्वदीर्घत्वमाविष्कुर्वाणा: वर्तन्ते । श्री श्री स्त्रीत्यनेन किं गुरुत्रयप्रदर्शनमेव फलमथवा अर्थबोधादिरूपप्रयोजनान्तरमप्यस्तीति दर्शयन्नाह, श्यादीनामित्यादि ।—उपरिष्टात् "अष्टौ वसव:" ( पि० सू० १अ० १५सू० ) इति सूत्रस्य व्याख्यानान्तरमित्यर्थ: । अत एकस्मिन्नेव सूत्रे सूत्रकार: सोदाहरणं सङ्केतमभिहितवानिति बोद्धव्यम् । एवमुत्तरसूत्रेष्वपि । दीर्घात्मकत्रिवर्णस्य मसंज्ञाविधानप्रयोजनं प्रतिपादयति, मेति ।—विद्युन्मालायां मगणोल्लेखादित्यभिप्राय: । एवं भुजङ्गप्रयातादौ यगणादीनामुल्लेखात् तानि तानि छन्दांसि तेषां प्रदेशोऽवगन्तव्य: ।

यप्रदेशाः "भुजङ्गप्रयातं यः" ( पि० सू० ६ अ० ४२ सू०) इत्येवमादयः। (ङ)

## का गुहा र्॥ ३ ॥

का गुहा इत्यनेन मध्यलघोस्त्रिकस्य रसंज्ञा परिभाष्यते। रप्रदेशाः "स्रग्विणी रः" ( पि० सू० ६ अ० ४४सू० ) इत्येवमादयः।

## वसुधा स्॥ ४ ॥

वसुधा इत्यनेनान्तगुरोस्त्रिकस्य ससंज्ञा परिभाष्यते। सप्रदेशाः "तोटकं सः" ( पि० सू० ६ अ० ३७सू० ) इत्येवमादयः।

## सा ते क्व त्॥५ ॥

सा ते क्व इत्यनेनान्तलघोस्त्रिकस्य तसंज्ञा परिभाष्यते। तप्रदेशाः "तनुमध्या त्यौ" ( पि० सू० ६ अ० ७सू० ) इत्येवमादयः।

## कदा स ज्॥ ६ ॥

कदा स इत्यनेन मध्यगुरोस्त्रिकस्य जसंज्ञा परिभाष्यते। जप्रदेशाः "कुमारललिता ज्सौ ग्" ( पि० सू० ६ अ० ८सू० ) इत्येवमादयः।

## किं वद भ्॥ ७ ॥

किं वद इत्यनेनादिगुरोस्त्रिकस्य भसंज्ञा परिभाष्यते। भप्रदेशाः "चित्रपदा भौ गौ" ( पि० सू० ६ अ० १०सू०) इत्येवमादयः।

(ङ) शास्त्रादौ मगणस्वरूपमभिधाय प्रस्तारक्रमेण गणान्निर्दिशन् यगणस्वरूपं दर्शयितुं सूत्रान्तरमवतारयति, वर्तते।—अत्रापि पूर्वसूत्रवत् वय

## न ह्रस न् ॥ ८ ॥

न ह्रस इत्यनेन सर्वलघोस्त्रिकस्य नसंज्ञा परिभाष्यते। नप्रदेशाः "दण्डको नौ रः" ( पि० सू० ७अ० ३३सू० ) इत्येवमादयः। (च)

## ग्ल ॥ ९ ॥

ग्ल-ग्रहणं ह्रस्वैकाक्षरोपलक्षणार्थम्। तस्य लकारसंज्ञा भवति। ल-शब्दश्च लघुवाचकः। तेन ह्रस्वमक्षरं लघुसंज्ञ

एव वर्णाः। एवमुत्तरसूत्रेष्वपि बोद्धव्यम्। आद्यो लघुः अनन्तरं द्वौ च गुरू इत्येवं वर्णत्रितयस्य यगण इति संज्ञा इति निष्कर्षः।

(च) इदानीं रगणादीनां स्वरूपं दर्शयति, कीत्यादि।—एतत्सूत्रमारभ्य "न ह्रसन्" इत्यन्तसूत्रं पूर्वोक्तसूत्रद्वयरीत्या व्याख्येयं, वृत्तिकृताऽपि स्फुटमेव लिखितम्। तथा हि "का गुहा र्" इत्यनेन आद्यन्तौ गुरू मध्यश्च लघु एवं-त्रिकस्य रगण इति संज्ञा। "वसुधा स्" इत्यनेन च लघुद्वयात् परं गुरुरेकश्चेद्भवति तदा सगणः। "सा ते क्व त्" इत्यनेन च गुरुद्वयात् परं लघुरेकः स्याच्चेत्तदा तगणः। "कदा स ज्" इत्यनेन आद्यन्तौ लघू मध्यश्च गुरु एवं-त्रिकेण जगणः। "किं वद भ्" इत्यनेन एकगुरोरनन्तरं लघुद्वयञ्चेत् भगणः। "न ह्रस न्" इत्यनेन सर्वलघोस्त्रिकस्य नगण इति संज्ञा व्यवस्थिता इत्यभिप्रायः। "धी श्री स्त्री म्" इत्युपक्रम्य "न ह्रस न्" इत्यन्तानामुदाहरणत्वेन दर्शितानां त्रिकाणां त्रिकाणामर्थांस्तु "अष्टौ वसव."( पि० सू० १अ० १५सू० ) इति वक्ष्यमाणसूत्रे दर्शयिष्यन्ते। प्रस्तारक्रमः वक्ष्यते, गणानां स्वरूपादिकञ्च गणचक्रे ज्ञातव्यम्। तथा हि त्र्यक्षरवृत्तस्य भेदाः कति किंस्वरूपा वा ते इति परिज्ञानार्थं प्रथमं गुरुत्रयं ( ⏑ ⏑ ⏑ ) विन्यस्य यावत् सर्वलघुः गणो भवेत् तावत् प्रथमगुरोरधः लघुं न्यस्य परत्र गुरुद्वयाधः गुरुद्वयं विन्यसेत्, तेन चैवं ( - ⏑ ⏑ ) यगण इति सिद्धम्। एवं चक्रप्रदर्शितदिशा रगणादीनामपि पुनः पुनः गुरुलघुविन्यासं कुर्यात्। ततश्च प्रस्तारविधिना निष्पन्नायामेवमष्टकोष्ठायामष्टसङ्ख्यात्वेन त्र्यक्षरं वृत्तमष्टविधमिति सिद्धम्। तेषां लघुगुरुपरिज्ञानञ्च गणदर्शनादवगन्तव्यम्।

भवतीत्यर्थः सम्पद्यते। लप्रदेशाः "लः समुद्रा गणः"( पि० सू० ४अ० १३सू० ) इत्येवमादयः। ( क )

गणचक्रम्।

| गणनाम | गणस्वरूपम् | गणदेवता | गणफलम् |
|---|---|---|---|
| मगणः | ⏑ ⏑ ⏑ | भूमिः | श्रीः |
| यगणः | - ⏑ ⏑ | जलम् | वृद्धिः |
| रगणः | ⏑ - ⏑ | वह्निः | मृतिः |
| सगणः | - - ⏑ | वायुः | दूरगमनम् |
| तगणः | ⏑ ⏑ - | व्योम | शून्यम् |
| जगणः | - ⏑ - | सूर्यः | रोगः |
| भगणः | ⏑ - - | चन्द्रः | यशः |
| नगणः | - - - | नाकः | सुखम् |

( क ) एवं पूर्वोक्तसूत्रसमूहेन महर्षिः "धसवास्त्रिकाः" ( पि० सू० ८अ० २३सू० ) इति वक्ष्यमाणसूत्रनिर्दिष्टं गणाष्टकं निर्दिश्य लघुपरिज्ञानार्थं सूत्रान्तरमवतारयति,—ग्ट लेति। पूर्वसूत्रेषु गणानां त्रिकरूपत्वात् अत्र ग्ट इत्येकाक्षरं ह्रस्वैकाक्षरस्योपलक्षणमित्याह, ग्ट-ग्रहणमिति।—ग्ट इत्यनेनोपलक्षितं ह्रस्वमक्षरं ल-पदसिद्धं लघुसंज्ञं भवतीत्यर्थः। "ग्ट इत्यनेनोपलक्षितस्य ह्रस्वस्य लसंज्ञा परिभाष्यते" इति पुस्तकान्तरे पाठो दृश्यते। ह्रस्ववर्णस्य लघुसंज्ञा तु महर्षिणा पाणिनिनाऽपि "ह्रस्वं लघु" ( १।४।१० पा०) इति सूत्रं विधाय अङ्गीकृता। लसंज्ञाप्रयोजनमभिधत्ते, ल-प्रदेशा इति।—"लः समुद्रा गणः" इत्यादिसूत्रोक्ता एव विषया लपरिभाषाया इत्यर्थः। तत्र हि आर्यालक्षणसिद्ध्यर्थं गणसंज्ञा कृता। अस्यार्थस्तु तत्रैव द्रष्टव्यः।

## गन्ते ॥ १० ॥

ग-ग्रहणमनुवर्त्तते। ग-शब्दोपलक्षितस्य ह्रस्वाक्षरस्य पादान्ते वर्त्तमानस्य गुरुसंज्ञाऽतिदिश्यते। ग् इति प्रथमाक्षर-प्रतीकेन गुरुशब्दस्य ग्रहणम्। ननु समानीगीत्यार्य्यादीनां पादान्ते वर्त्तमानस्य ह्रस्वस्य गुरुत्वं न दृश्यते? नैष दोषः। सर्वत्र पादान्ते वर्त्तमानस्य ह्रस्वस्य गुरुत्वमुत्सर्गसिद्धम्। तच्च लकारश्रुत्याऽपवादेन बाध्यते। यथा,—"ग्लिति समानी" (पि० सू० ५अ० ६सू०) "गीत्यार्य्या लः" (पि० सू० ४अ० ४८सू०) इत्यादौ; सामान्यस्य विशेषेण बाधः कस्य न सम्मतः? तस्मात् अचोद्यमेतत्। केचिदिदं सूत्रं व्यवस्थित-विभाषया व्याचक्षते, प्रमाण्यादीनामन्ते गुरुत्वमेव, समान्या-दीनामन्ते लघुत्वमेव, शेषाणामिच्छया गुरुत्वं लघुत्वञ्चेति; तदनुपपन्नम्; विकल्पस्याप्रस्तुतत्वात् कस्य व्यवस्थेति न विद्मः। (ज) ननु केनाप्युक्तं,—"वा पादान्ते गुरु इति

(ज) पादान्तस्थितस्य लघोरपि गुरुसंज्ञामतिदिशति, गन्ते इति।—ग-ग्रहणमनुवर्त्तते, "ग ल" इति सूत्रात् इति शेषः, "सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्त्तनीयं सर्वत्र" इति नियमादिति भावः। ग-शब्दोपलक्षितस्य ग-रूपोदा-हरणेन परिचायितस्य, पादान्ते श्लोकचतुर्भागान्यतरभागस्यावसाने वर्त्तमानस्य स्थितस्य, ह्रस्वाक्षरस्य गुरुसंज्ञा अतिदिश्यते विधीयते। ग् इति प्रथमाक्षरप्रतीकेन गरु इति शब्दस्य गात्मकप्रथमाक्षररूपावयवेन, गुरुशब्दस्य गुरुसङ्केतस्य ग्रहणं, गशब्दो गुरुत्वबोधक इति भावः। पादान्तलघोः सर्वत्र गुरुत्वादर्शनात् कथमेतादृशो नियम इत्याह, नन्विति।—समानी-गीत्यार्य्यादीनां समान्याः "ग्लिति समानी" इति लक्षणलक्षितस्य केवलगकारलकाराभ्यां समासस्य अष्टाक्षर-वृत्तभेदस्य, तथा गीत्यार्य्यायाः "गीत्यार्य्या लः" इति लक्षणलक्षितस्य षोडश-लकारनिबद्धस्य जातिभेदस्य च, तथा एवंविधानामन्येषाञ्च वृत्तानामित्यर्थः, पादान्तस्थस्य ह्रस्वस्य गुरुसंज्ञा न दृश्यते, उभयत्रापि पादान्तवर्णानां तत्तल्लक्षणेन लघुत्व-नियमनादित्यभिप्रायः। सूत्रे पादान्तस्थह्रस्वस्य गुरुत्वबद्धावोक्तेः कथं समान्यादिषु

गुरुत्वम्।" सत्यमुक्तं, दुरुक्तं हि तत्; "वाऽन्ते गुरु इति प्रोक्तं येस्तु श्वेतपटादिभिः। उत्सर्गस्यापवादेन बाधस्तैर्नावधारितः॥" इत्युक्तेः इच्छया गुरुत्वं लघुत्वञ्च नोपपद्यते। कस्येच्छया? किं शास्त्रकारस्य कवेर्वा? न तावदाद्यः पक्षः, सूत्रेष्वदर्शनात्। नापि द्वितीयः, कवेरपीच्छायां व्यवस्थाऽभावात्; को जानाति कस्य कीदृशीच्छेति। (भ) अन्ये त्वाहुः,—

---

पादान्तस्थस्य लघुत्वमित्यत आह, नैष इति।—एषः पूर्वोक्तरूपः गुरुत्वाभावः दोषः न, सम्भवतीति शेषः। कथमेतन्न सम्भवति तदेवाह, सर्वत्रेति।—सर्वत्र सर्वस्मिन् स्थले, पादान्ते वर्त्तमानस्य ह्रस्वस्य गुरुत्वम् उत्सर्गसिद्धं सामान्यतया प्राप्तं, तच्च गुरुत्वञ्च लकारस्तुत्या "ग्लिति समानी" "गौल्यार्थ्यां लः" इत्यादिसूत्रे ल-कारस्य विशेषोपदेशवशादेवेत्यर्थः, अपवादेन प्रोक्तसूत्रे ल-कारस्य विशेषवचनेन, बाध्यते निराक्रियते। सामान्यस्य सामान्यशास्त्रस्य, विशेषेण विशेषशास्त्रेण, बाधः सर्वगतत्वहानिः, कस्य न सम्मतः अपि तु सर्वस्यैवेत्यर्थः, "सामान्यकार्य्येभ्यो विशेषकविधिर्बली" इति वचनात् तस्य तु विशेषशास्त्रेतरपरत्वमिति भावः। बाधश्चात्र यत्र यदवगाहित्वं तत्र तदभावावगाहित्वरूपः, न तु समानप्रकारकताया अत्र निवेश इति बोध्यम्। एवञ्च पादान्तस्थह्रस्वस्य गुरुत्वं बाधकं विना भाव्यं बाधकसत्त्वे तु न इति तात्पर्य्यार्थः। तस्मात् अत एव एतत् अचोद्यं कथयितुमशक्यमित्यर्थः। "कुचोद्यम्" "अनोद्यम्" इति पाठेऽपि तथैवार्थः। केचित् पण्डिताः व्यवस्थितविभाषया विकल्पव्यवस्थया इदं गन्ते इति सूत्रं व्याचक्षते व्याख्यां कुर्वन्ति। कीदृशी व्यवस्था तामेवाह, प्रमाण्यादीनामिति।—प्रमाण्यादीनां "ग्लाति प्रमाणी" (पि० सू० ५अ० ७सू०) इत्युक्तलक्षणकवृत्तविशेषाणाम् अन्ते गुरुत्वं पादान्ते गुरुत्वमेव, तथा समान्यादीनाम् अन्ते सर्वदैव लघुत्वमेव, भवतीति शेषः, तत्र गुरुत्वनियमाभावादिति भावः। शेषाणां तद्व्यतिरिक्तानां वृत्तानाम् इच्छया काव्यरचयितुरभिप्रायानुसारेण गुरुत्वं लघुत्वञ्च भवति। तदनुपपन्नम् एवंविधव्याख्यानमयुक्तम्। कथं तदनुपपन्नं तदेव स्फुटयति, विकल्पस्येति।—विकल्पस्य विभाषाविधानस्य, अप्रस्तुतत्वात् अप्रस्तावितत्वात् कस्य विकल्पस्य व्यवस्था विधानम्; विकल्पस्याप्राकरणिकत्वादेव तद्व्यवस्था अत्र न युक्ता, सर्वत्र हि प्रकरणलब्धानामेव व्यवस्था दृश्यते इह तु न तथेति भावः।

(भ) 'इदानीं मतान्तरमाह, तन्विति।—केनापि जैनविशेषेण, पादान्ते अनु-

वर्त्तमानः लघुः, गुरुः वा, भवेदिति शेषः, लघ्वपेक्षिते लघुकार्य्यं गुरावपेक्षिते गुरुकार्य्यं करोतीत्यर्थः। इति छन्दोनियमेन गुरुत्वं, पादान्तस्येति शेषः। मतमिदं दूषयति, सत्यमिति।—पादान्ते गुरु इति यदुक्तं तत् सत्यम्; किन्तु द्वक्तं वा इति पदं दृष्टमुक्तं, नैतत् पाक्षिकं, किन्तु अपवादविषयादितरत्र इति बोध्यम्; सर्वत्रैव पाक्षिकत्वाभिप्रायेण तैर्यदेतदुक्तं तदसमीचीनमेव इत्यभिप्रायः। तदेवोपपादयति, वान्ते इति।—यैस्तु श्वेतपटादिभिः जैनविशेषैः, अन्ते पादान्ते, वा विकल्पेन, गुरुः, भवति सर्वत्रेति शेषः, इति प्रोक्तं कथितं, तैस्तु उत्सर्गस्य सामान्यशास्त्रस्य, अपवादेन विशेषशास्त्रेण, बाधः सर्वगतत्वह्रासः, तस्य विशेषशास्त्रात् व्यतिरिक्तविषयकत्वम् इति यावत्, न अवधारितः न निश्चितः, प्रणिधानेन तैर्न दृष्ट इत्यर्थः। श्वेतपटादिभिः इत्यत्र आदिशब्दात् प्राकृतपिङ्गलश्रुतबोधवृत्तरत्नाकरकारादीनां ग्रहणम्। तथा च प्राकृतपिङ्गले,—"दीर्घः संयुक्तपरः बिन्दुयुतः पातितश्च चरणान्ते। स गुरुर्वक्रो द्विमात्रोऽन्यो लघुर्भवति शुद्ध एककलः॥" इति। व्याख्यातञ्च—चरणान्ते पादान्ते पातितः वा गुरुरिति। अत्र विकल्पार्थे चकारः। एवं श्रुतबोधेऽपि,—"विसर्गमक्षरं गुरु पादान्तस्थं विकल्पेन" इति। तथा केदारभट्टेनापि,—"सानुस्वारो विसर्गान्तो दीर्घो युक्तपरश्च यः। वा पादान्ते त्वसौ ग्वक्रो ज्ञेयोऽन्यो मात्रिको लृजुः॥" इति। अस्यार्थः नारायणभट्टसम्मतो यथा,—"असौ वर्णः ग् गुरुर्ज्ञेयः। कोऽसावित्यपेक्षायामाह, सानुस्वारः इति।—अनुस्वारेण युक्तः अं कम इत्यादिः, विसर्गान्तः अः कः इत्यादिः, दीर्घः आकार इत्यादिः, इदं प्लुतस्याप्युपलक्षणम्। युक्तपरः युक्तः संयुक्तः परः यस्य सः संयोगे परभूते यः पूर्वः सोऽपि गुरुरित्यर्थः। यथा विष्णुरित्यादौ विशब्दादिः। पादान्ते श्लोकचरणान्ते अनुवर्त्तमानो लघुर्गुरुर्वा भवति, लघ्वपेक्षिते लघुकार्य्यं गुरावपेक्षिते गुरुकार्य्यं करोतीत्यर्थः। अयञ्च व्यवस्थितविकल्पः, तेन "अथ वासवस्य वचनेन" इत्यादौ उद्गतादिपादान्तस्य लघुतैव। "तस्याः खुरन्यासपवित्रपांशुम्" इत्यादौ च गुरुतैव। अन्यः पूर्वोक्तेभ्यः सानुस्वारादिभ्यः अन्यः ल् लघुः। कोऽसावन्यः? मात्रिकः मात्रारूपः, एतेन गुरोर्द्विमात्रत्वमुक्तं भवति" इति। स च गुरुः वक्रः प्रस्ताररेखाऽङ्कनसमये नागदन्तसमाकारः वक्ररेखः ( ⌣ ) लेख्यः; लघुश्च ऋजुः सरलरेखाकारः ( — ) कार्य्यः। तथा चोक्तं वाणीभूषणे,—"गुरुस्तु द्विकलः प्रोक्तः नागदन्तसमाकृतिः। लघुस्तदन्यः शुद्धोऽसावेकमात्रः प्रकीर्त्तितः॥" इति। पादान्तलघोर्वैकल्पिकगुरुत्वविधाने दोषं प्रदर्श्य शेषाणामिच्छया इति यदुक्तं तदप्यनुपपन्नमिति दर्शयति, इत्युक्तेरिति।—इत्युक्ते. एवंविधवचनस्य सत्त्वात् इच्छया

"ननु पादान्ते वर्त्तमानस्य ह्रस्वस्य पाणिनिना गुरुसंज्ञा न कृता। तेनोक्तं,—"संयोगे गुरु" (१।४।११ पा०) "दीर्घञ्च" (१।४।१२ पा०) इति। नायं संयोगादिर्न च दीर्घः। तस्मात् 'गन्ते' इति सूत्रमयुक्तम्।" अत्रोच्यते,—पाणिनिना स्वशास्त्रप्रयोजनार्थं गुरुसंज्ञा कृता। "गुरोश्च हलः" (३।३।१०३ पा०) इत्यकारप्रत्ययो यथा स्यात् कुण्डा हुण्डेत्यादौ; ईहाञ्चक्रे ऊहाञ्चक्रे इत्येवमादिषु "इजादेश्च गुरुमतोऽनृच्छः" (३।१।३६ पा०) इति सूत्रेणाम्-प्रत्ययश्च। पादान्ते वर्त्तमानस्य लघोर्गुरुत्वातिदेशे पाणिनेः प्रयोजनमेव नास्ति। किञ्च, अनुस्वारादिपूर्वस्य वर्णस्य वनं घटः सम्पदित्यादौ स्थितस्य गुरुसंज्ञा पाणिनिना न कृता; किमेतावताऽन्यैरपि न कर्त्तव्या? तस्मात् सूत्रमिदं "गन्ते" इति। गप्रदेशाः "गावन्त आपीड़ः" (पि० सू० ५अ० २१ सू०) इत्येवमादयः। (ञ)

गुरुत्व लघुत्वञ्च नोपपद्यते, कस्येच्छा इति निर्णेतुमशक्यत्वात् इति भावः। एतेन पादान्तलघोर्गुरुत्वम् उत्सर्गसिद्धम अपवादविषयादितरञ्च, न तु वैकल्पिकमिति वृत्तिकाराभिप्रायः, परन्तु मतमेतत् नारायणभट्टादिभिः दूषितं न सर्वसम्मतञ्च इति। द्वितीयचतुर्थपादविषयं ह्येतत्, वसन्ततिलकादौ दीर्घे छन्दसि तु केवलं प्रथमतृतीय-पादविषयमिति आलङ्कारिकाः।

(ञ) इदानीं मतान्तरमुपन्यस्यति,—अन्ये त्विति। किमिति तदेवाह,—नन्विति। तेन कस्य गुरुसंज्ञा कृता? इत्याह, तेनेति।—"संयोगे गुरु" "दीर्घञ्च" इति सूत्रद्वयम्। अनयोरर्थः,—संयोगे परे ह्रस्वमक्षरं गुरुसंज्ञं भवति, यथा—कुण्डा शिक्षा इत्यादि। दीर्घञ्चाक्षरं गुरुसंज्ञं भवति, यथा—ईहाञ्चक्रे ईक्षाञ्चक्रे इत्यादि। अयं पादान्तस्थह्रस्वः। तस्मात् पाणिनिमतविरुद्धत्वात्। अत्रोच्यते दूषण-स्यैतस्य उद्धारः क्रियते। पाणिनिना स्वशास्त्रप्रयोजनार्थं व्याकरणस्योद्देश्यसाध-नाय, स्वप्रयोजनानुसारेण तेन गुरुसंज्ञा विहिता, एतद्व्यतिरिक्तस्थले गुरुसंज्ञा न भवति इति तु नोक्तमिति भावः। तत्प्रयोजनमेव दर्शयति, गुरोश्चेति।—"गुरोश्च हलः" इति सूत्रे हलन्तो यो धातुर्गुरुमान्, ततः स्त्रियामकार-प्रत्ययो भवति, इत्यनेन कुण्डा हुण्डा इत्यादौ अ-प्रत्ययविधानार्थं, तथा "इजादेश्च

## प्रादिपरः ॥ ११ ॥

प्र इति व्यञ्जनसंयोगस्योपलक्षणम्। प्र आदिर्येषां ते प्रादयः। आदिपदेन विसर्ज्जनीयानुस्वारजिह्वामूलीयोपध्मानीयानां ग्रहणम्। प्रादयः परे यस्मात् स प्रादिपरः। ततश्चायं सूत्रार्थः,—व्यञ्जनसंयोगात् पूर्वस्य ह्रस्वस्यानुस्वारविसर्ज्जनीयजिह्वामूलीयोपध्मानीयेभ्यश्च गुरुसंज्ञाऽतिदिश्यते। (ट)

## हे ॥ १२ ॥

ग इत्यनुवर्त्तते। हे इति द्विमात्रोपलक्षणार्थम्। ततश्चायं सूत्रार्थः,—द्विमात्रस्य दीर्घस्य गसंज्ञा क्रियते। (ठ)

---

गुरुमतोऽनृच्छः" इत्यादिर्यो धातुर्गुरुमान् ऋच्छतिवर्जितः तस्मात् लिटि परे आम्-प्रत्ययो भवति, ईहाञ्चक्रे ऊहाञ्चक्रे इत्यादौ "ईह चेष्टायाम्" "ऊह वितर्के" इति धातोः लिटि आम्-विधानार्थमेव पाणिनिना गुरुसंज्ञा कृता इति बोद्धव्यम्। प्रयोजनाभावात् पाणिनिना लघोर्गुरुत्वविधानं न कृतमित्याह, पादान्ते इति।—प्रयोजनमेव नास्ति, लघन्यस्य श्लोकरूपत्वाभावात् इत्याशयः। पक्षान्तरं दर्शयितुमाह, किञ्चेति।—अनुस्वारादिपूर्वस्य अनुस्वारविसर्ज्जनीयप्रभृतीनां प्राग्वर्त्तिनः वर्णस्य; आदिपदात् विसर्ज्जनीय-इत्यादेर्ग्रहणम्। किमित्यादि।—एतावता कारणेन किमन्यैरपि स्वप्रयोजनानुसारतः गुरुसंज्ञा न कर्त्तुं शक्यते इति तात्पर्य्यम्। तस्मात् स्वप्रयोजनानुसारेण परिभाषायाः कर्त्तुं शक्यत्वादेव इत्यर्थः। इदानीं गसंज्ञायाः प्रयोजनं प्रदर्श्यते, गप्रदेशा इति।—गावन्त आपीड़ इत्येवमादयः आपीड़नामके वृत्तभेदे अवसाने गद्वयस्य विधानात। अत्र पदचतुरूर्द्ध्वरूपवृत्त-भेदान्तर्निहितस्य आपीड़स्य प्रतिपादमेव अवसानवर्णद्वयव्यतिरिक्तानां वर्णानां ह्रस्व-स्वरवत्त्वं वेदितव्यम्; तस्य पदचतुरूर्द्ध्वनामकवृत्तस्य प्रकारभेदत्वेन "गावन्त आपीड़ः" इति सूत्रे वृत्तिकारेण व्याख्यातत्वात्।

(ट) प्रादीति।—व्यञ्जनसंयोगस्य संयुक्तव्यञ्जनवर्णमात्रस्य उपलक्षणं स्वस्य स्वेतरस्य च अजहत्स्वार्थया लक्षणया बोधकशब्दः, एतेन संयुक्तवर्णानामनुस्वार-विसर्ज्जनीयजिह्वामूलीयोपध्मानीयानाञ्च पूर्वस्थितः लघुरपि गुरुसंज्ञात्वेनातिदिश्यते।

(ठ) हे इति।—ग इत्यनुवर्त्तते, "गन्ते" इति सूत्रादिति शेषः। द्विमात्रोप-

## ग्लौ सः ॥ १३ ॥

स इति ग-कारस्य परामर्शः । स ग-कारो द्विमात्रो द्वौ लघू कृत्वा गणयितव्यः । (ड)

## ग्लौ ॥ १४ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः । यत्र विशेषान्तरं न श्रूयते तत्र ग्लावित्युपतिष्ठते । "गायत्र्या वसवः" (पि० सू० ३अ०३सू०) इत्येवमादिवत् प्लुतेनेह व्यवहारो नास्ति । (ढ)

---

लक्षणार्थं द्वे मात्रे यस्य तस्य उपलक्षणार्थं लक्षणया शक्त्या सूत्रोपात्तो द्वे-शब्दः द्विमात्रतां बोधयतीत्यर्थः, एतेन मात्राद्वत्ते द्विमात्रस्य अक्षरस्य गुरुसंज्ञा विहिता तथा अनुस्वारविसर्जनीयजिह्वामूलीयोपध्मानीयानामपि द्विमात्रत्वात् गुरुत्वमिति प्रतिपादितम् ।

(ड) ग्लौ-इति ।—तच्छब्दनिष्पन्नस्य स-शब्दस्य पूर्ववस्तुपरामर्शित्वादेव मण्डूकप्लुतन्यायेन पूर्वतो गकारः अनुवर्तनीय इत्याह,—ग-कारस्येति । सः ग-कारः गुरुः द्विमात्रः मात्राद्वयात्मकः, मात्रावृत्त द्वौ लघू कृत्वा गणयितव्यः, एकस्मिन् गुरौ द्वे मात्रे भवत इति भावः । मात्रावृत्तपरिज्ञानार्थं तथा "गन्ता द्विर्वसवो" (पि० सू० ४अ० ४२सू०) इत्यादिवक्ष्यमाणसूत्रे लघुद्वयसंलग्नेन एकगुरुत्वविधानार्थं-चेदमवगन्तव्यम् ।

(ढ) ग्लौ-इति ।—आशास्त्रपरिसमाप्तेः छन्दःशास्त्रपरिसमाप्तिं यावत् । ग्लौ गश्च लश्च तौ, पूर्वोक्तौ गुरुलघू इत्यर्थः, इतः परमस्मिन् शास्त्रे यत्र विशेषविधिर्नास्ति तत्र ग्लौ इति अधिकृतौ वेदितव्यौ । "गायत्र्या वसवः" इत्येवमादिवत् इत्यादि-वैदिकच्छन्दःसूत्रेषु इव इह अस्मिन् छन्दःशास्त्रे प्लुतेन त्रिमात्रस्वरेण व्यवहारो नास्ति, वैदिकच्छन्दसां स्वरगतगुरुलघुव्यवस्था यथा नास्ति तथा इहापि प्लुतेन व्यवहारो नास्तीत्यभिप्रायः । प्रयोजनमस्य "आसुरी पञ्चदश" (पि० सू० २अ० ४सू०) इत्यत्र हलायुधेन दर्शितं यथा,—"तानि अक्षराणि ग्लौ इत्यधिकारात् गुरूणि लघूनि च यथासम्भवं द्रष्टव्यानि" इति । आसुरीगायत्र्याः पञ्चदशाक्षरात्मकत्वस्यैवाभिहितत्वाल्लघुगुरुविधानाभावः, ततश्च विशेषविधानमन्तरेणास्य सूत्रस्यावसर इति भावः । एतेन गुरुलघुव्यवस्थायाः क्वचित् स्वप्रयत्नोच्चारणपरत्वं क्वचित्

याचितत्वञ्च सूचितम्। केचिदत्र "प्रह्रे वा" इति सूत्रमङ्गीकुर्वन्ति, किन्तु हलायुधेन प्रत्याख्यातमिति नास्माभिरपि तत् प्रदर्शितम्; तथाऽपि बहुषु कविप्रयोगेषु छन्दोग्रन्थेषु च गुर्वक्षरस्य लघुत्वेनोदाहरणदर्शनात् ग्लौ इति सूत्रं प्रह्रे वा इति सूत्रस्य उपलक्षणत्वेनावश्यमेव स्वीकरणीयमिति सुधीभिर्विभाव्यम्। तथा चोक्तं छन्दोमञ्जर्य्यां,—"प्रह्रे वेति पुनः पिङ्गलमुनेर्विकल्पविधायकं सूत्रम्" इति। प्रशब्दे ह्रशब्दे च परे पूर्ववर्णस्य लघुता स्यादित्यभिप्रायः। तथा प्राकृतपिङ्गलेऽपि,—"कत्थवि संजुत्तपरो वण्णो लहु होइ दंसणेण जहा। परिह्लसइ चित्तधिज्जं तरुणिकडक्खम्मि णिव्वुत्तम्॥" इति। अस्य संस्कृतं यथा—"कुत्रापि संयुक्तपरो वर्णो लघुर्भवति दर्शनेन यथा। परिस्खलति चित्तधैर्य्यं तरुणीकटाक्षे निर्वृत्तम्॥" इति। कुत्रचित् स्थले दर्शनेन लक्ष्यानुरोधेन संयुक्तःपरो यस्य तादृशः पूर्वो वर्णः लघुरेव भवति। तरुणीकटाक्षे सम्पन्ने चित्तधैर्य्यं परिस्खलति। अत्र 'ह्र' इत्यस्य संयुक्तपरस्यापेक्षया पूर्वस्य 'रि' इति गुरोर्लघुत्वम् इति भावार्थः। अन्यञ्च तत्रैव,—"इहिकारा बिंदुजुआ ए-ओ सुद्धा अ वण्णमिलिआ वि लहू। र-ह वंजणसंजोए परे असेसं पि सविहासम्॥" इति। अस्य संस्कृतं यथा,—"इकारहिकारौ विन्दुयुतौ ए-ओ शुद्धौ च वर्णमिलितावपि लघू। रेफहकारौ व्यञ्जनसंयोगे परे अशेषमपि सविभाषम्॥" इति। अस्य व्याख्या यथा—इकारहिकारौ विन्दुयुतौ तथा एकारौकारौ च शुद्धौ एकलौ वर्णमिलितौ च तथैव रेफहकारावपि व्यञ्जनेन सह संयुक्ता अपि सर्वे गुरवोऽपि विकल्पेन क्वचिल्लघवो भवन्तीत्यर्थः। तथा वाणीभूषणे,—"संयुक्तपूर्वोऽपि लघुः क्वचित् स्यात् वर्णस्तु प्रह्रादिगतो विभाषा। ए-ओ क्वचित् प्राकृतके लघू स्तः इही तथा विन्दुयुतौ पठितौ॥" इति। एवं छन्दोदीपके,—"सानुस्वारश्च दीर्घश्च सविसर्गो गुरुर्भवेत। वर्णः संयोगपूर्वश्च वा प्रह्रेऽपि तथा मतः॥" इति। तथा च कुमारसम्भवे,—"गृहीतप्रत्युद्गमनीयवस्त्रा" इत्यत्र प्रशब्दे परे तकारस्य, तथा "प्राप्य नाभिह्रदमज्जनमाशु" "तव ह्रियाऽपह्रियो मम ह्रीरभूत्" इत्यादौ च ह्रशब्दे परे भ-व-प-मकाराणां लघुता दृष्टा। प्र-ह्रसंयोगपूर्वस्थितस्य वैकल्पिकलघुत्वं चन्द्रशेखरेणाप्युक्तं यथा,—"रेफहकारव्यञ्जनसंयोगात् पूर्वे संस्थितस्य भवेत। वैकल्पिकं लघुत्वं वर्णस्योदाहरन्ति विद्वांसः॥ जयति प्रदीपितकामो मम मानसह्रदनिमज्जनान्नित्यम्॥" इति। अत्र "जयति" "मानस" इत्यत्र ति-स-इत्येतयोः प्र-ह्रसंयोगात् पूर्वयोरपि लघुत्वं यथाऽवस्थितं, तेन आर्य्याया गणो भङ्गो न स्यात्। एवं "झटिति प्रविश गेहं मा बहिस्तिष्ठ कान्ते!" इति शृङ्गारतिलकश्लोकेऽपि न छन्दोभङ्गप्रसङ्गः इति। अन्ये तु "संयोगमात्रे परभूते लघुत्वम्

अष्टौ वसव इति ॥ १५ ॥

अत्र शास्त्रे वसव इत्युच्यमाने अष्टसङ्ख्योपलक्षिता गुरुलघुस्वरूपा वर्णा गृह्यन्ते । लौकिकप्रसिद्ध्युपलक्षणार्थमिदं सूत्रम् । तेन चतुर्णां समुद्राः पञ्चानामिन्द्रियाणि इत्येवमादयः संज्ञाविशेषा लौकिकेभ्यः प्रत्येतव्याः । इतिकारोऽध्यायसमाप्तिसूचकः । (ण)

इह ध्यादीनामुपादानप्रयोजनं वर्ण्यते—अध्ययनाद्धीर्भवति । यस्य धीस्तस्य श्रीः, बुद्धिपूर्वकत्वात् विभूतेः । यस्य श्रीस्तस्य स्त्री, अर्थमूलकत्वाद्गार्हस्थ्यस्य । "वरा सा" (पि० सू० १अ० २सू०) इत्यनेन सर्वेषां स्त्रीसाधनोपायानां बुद्धेरुपायस्य माहात्म्यं दर्शयति । तथा चोक्तम्,—

"अर्द्धाङ्गुलपरीणाहजिह्वाग्रायासभीरवः ।
सर्वाङ्गीणपरिक्लेशमबुधाः कर्म कुर्वते ॥"

---

अतीवप्रयत्नतया" इत्याहुः । अत एव सरस्वतीकण्ठाभरणे उक्तं,—"यदा तीव्रप्रयत्नेन संयोगादेरगौरवम् । न च्छन्दोभङ्ग इत्याहुस्तदा दोषाय सूरयः ॥" इति । तथा च रामायणे,—"कृतार्थाश्च कृतार्थानां मित्राणां न भवन्ति ये । तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥" इति । तीव्रप्रयत्ने तु गुरुतैव "अथ प्रजानामधिपः प्रभाते" इत्यादौ । एवं प्राकृतपिङ्गलेऽपि,—"जइ दीहो विअ वण्णो लहु जीहा पढइ सो वि लहू । वण्णो वि तुरिअपढिओ दोत्तिण्णि वि एक्क जाणेहु ॥" इति । संस्कृतं यथा,—"यदि दीर्घमपि वर्णं लघुं जिह्वा पठति सोऽपि लघुः । वर्णौ (वर्णा) अपि त्वरितपठितौ द्वौ त्रयो वा एकं जानीत ॥" इति । अस्यार्थः यथा—यदि दीर्घमपि गुरुमपि वर्णं लघुं कृत्वा जिह्वा पठति तदा तं वर्णं लघुं जानीत । किञ्च वर्णौ त्वरितपठितौ (वर्णा त्वरितपठिता वा) द्वौ वा त्रयो वा एक एव वर्ण इति जानीत इति ।

(ण) लघुगुरुसंज्ञालक्षणान्यभिधाय साम्प्रतं लोकव्यवहारतो वस्वादिसाङ्केतिकवर्णबोधाय संज्ञान्तरमाह,—अष्टाविति । लौकिकेभ्य इति ।—यथा लोके चन्द्रपदार्थस्यैकत्वात् चन्द्रशब्दः एकसङ्ख्यायां पक्षशब्दः द्विसङ्ख्यायां समुद्रशब्दः चतुःसङ्ख्यायां वर्त्तते, तथा वसुशब्दोऽपि अष्टसङ्ख्यायामित्यभिप्रायः । वह्नि-वेद-शर-ऋतु-ऋषिप्रभृतयोऽप्येवमवगन्तव्याः ।

तत्राऽऽह शिष्यः,—"का गुहा ?" ( पि० सू० १अ० ३सू० ) गुहाशब्दः स्थानवाचकः। का गुहा यत्रासौ तिष्ठति ? उपाध्यायो ब्रूते,—"वसुधा" (पि० सू० १ अ० ४ सू० ) पृथिव्यां लभ्यते धीर्नात्र विषादः कर्त्तव्यः। पुनरप्याह शिष्यः,—"सा ते क्व ?" ( पि० सू० १अ० ५सू० ) सा धीस्त्वयोपदिष्टा पृथिव्यां क्व स्थितेन लभ्यते ? गुरुराह,— "गृहे" ( पि० सू० १अ० ८।१२ सू० )। पुनरप्याह शिष्यः,— "कदा सः ?" (पि० सू० १अ० ६सू०) सः गृहस्थः पुरुषः कदा कस्मिन् काले तां धियं प्राप्नोति ? अत्रोत्तरं,—"धारादिपरः" ( पि० सू० १अ० ११सू० ) धारणार्थावबोधपरोऽसौ यदा स्यात्तदा धियं लभते। भूयोऽपि प्रश्नः,—"किं वद ?" (पि० सू० १अ० ७सू०) किं कुर्वन्नसौ तां धियं लभते तत् वद ? तत्रोत्तरं, —"न हस-न्" ( पि० सू० १अ० ८सू० ) हासादिचापल्यम-कुर्वाणस्तां धियं लभते इत्यर्थः। ( त )

इति भट्टहलायुधकृतायां छन्दोवृत्तौ प्रथमोऽध्यायः ॥ १ ॥

---

( त ) "धौ श्री स्त्री म्" इत्यादिगणाष्टकेन मादिगणानामुदाहरणमात्रं न कविना निरूपितम्, अर्थबोधात् प्रयोजनान्तरमपि वर्त्तते एतदेव दर्शयितु गुरुशिष्ययोरुक्तिप्रत्युक्तिमाश्रित्य सूत्रार्थमाह, इहेत्यादि।—धिया श्रीः तया च स्त्री, यथा धिया श्रीर्भवति सा धीः बुद्धिः वरा श्रेष्ठा। बुद्धिमाहात्म्यं वैधर्म्येण दर्शयितुमाह, षड्ढेत्यादि।—षड्ङ्गुलः षड्ङ्गुल्यङ्गपरिमितः परीणाहः विशालता यस्य तादृशस्य जिह्वायस्य रसनायप्रदेशस्य आयासे क्लेशप्रदाने भीरवः भीताः शास्त्रार्थपर्य्यालोचनविरताः इत्यर्थः, अबुधाः मूर्खाः, सर्वाङ्गीणपरिक्लेशं सर्वतः पीडाप्रदं भारवहनादिरूपं, कर्म कार्य्यं, कुर्वते सम्पादयन्ति। असौ श्रीः। वसुधा पृथिवी, पृथिव्यामेव सद्गुरूणां सम्भवात् सा धीर्लभ्यते अतस्त्वया विषादः न कार्य्य इत्यभिप्रायः। हासादिचापल्यमिति।—चञ्चलतायाः तादृशवृद्धगुरुजनप्रतिकूलत्वादिति भावः; एतेन सुबुद्धिरेव सर्वविभवप्राप्तेर्मूलमिति महर्षिणा दर्शितम्; बोधश्च छन्दोमूलक इति मत्वा ममायमुद्यमः इत्यभिप्रायः सूचितः।

इति प्रथमाध्यायव्याख्या समाप्ता।

# द्वितीयोऽध्यायः ।

## छन्दः ॥ १ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः । इत ऊर्द्ध्वं यत् वक्ष्यामः छन्दस्तत्रोपतिष्ठते । छन्दःशब्देनाक्षरसङ्ख्यावच्छन्दोऽत्राभिधीयते । (क)

---

(क) इदानीं वैदिकच्छन्दसां सम्यक् परिज्ञानार्थं गायत्र्यादिसप्तच्छन्दसाम् आर्य्यादिभेदनिरूपणार्थञ्च महर्षिः पिङ्गलाचार्य्यः तत्तल्लक्षणानि विधास्यन् द्वितीयाध्याये छन्दोऽधिकारमाह, छन्द इति।—अयमधिकारः छन्दोऽधिकारः। आशास्त्रपरिसमाप्तेः एतच्छन्दःशास्त्रपरिसमाप्तिं यावत। इतः ऊर्द्ध्वम् अतःपरं यद्वक्ष्यामः तत्र छन्दः उपतिष्ठते छन्द इत्यधिकारः वेदितव्यः इत्यर्थः। छादयति सन्तापं वारयति इति छन्दः, तथा चोक्तं—"छादयन्ति ह वा एनं छन्दांसि पापकर्मणः" इति। छदिधातोरसि सिद्धम्। मात्रादिवृत्यन्तरव्यावर्त्तनायाह,—छन्दःशब्देनेति। अत्र वैदिकप्रकरणे ; वैदिकप्रकरणञ्च एतत् सूत्रमारभ्य चतुर्थाध्यायस्य सप्तमसूत्रपर्य्यन्तं बोद्धव्यम्। अक्षरसङ्ख्यावत् अक्षरसङ्ख्यात्मकं छन्दः अभिधीयते निर्णीयते, एतेनात्र प्रकरणे मात्रागणयोः व्यवस्था नास्तीति सूचितम्। अत्रेदमवगन्तव्यं यत्—कतिचित् पुस्तकेषु द्वितीयाध्यायस्यादौ तत्रभवान् महर्षिः पिङ्गलाचार्य्यः स्वरव्यञ्जनदग्धादग्धाक्षरगणमित्रामित्रयोगफलपरिज्ञानाय परिभाषाप्रकरणं चतुर्द्दश-सूत्रनिबद्धमकार्षीदिति परिदृश्यते। हलायुधेन पुनस्तानि न व्याख्यातानि, ग्रन्थसङ्कलयितृभिरपि तत एव नव्याख्यातानि, अस्माभिस्तु तेषामतीवोपयोगित्वादवश्य-ज्ञातव्यतया दुरूहस्थलानां संक्षिप्तव्याख्यानसहितान्यत्र सन्निवेश्यन्ते। "सम्पत्तिरवर्णात" ॥ १ ॥ ग्रन्थादौ पद्यादौ वा अवर्णप्रयोगात् सम्पत्तिर्भवति, यथा "अस्त्युत्तरस्यां दिशि देवतात्मा" इति कुमारे। "धनलाभ इवर्णात्" ॥ २ ॥ "अख्यातिरुकारात्" ॥३॥ "वधूर्वात् ऋकारात् हेयः" ॥४॥ "सौख्यमेषाम" ॥५॥ "वर्गान्तवर्णप्रयोगात्" ॥६॥ वर्गान्तवर्णानां ङ-ञ-ण-न-म-शून्यानाम् एषां प्रयोगात् कवेः सौख्यलाभ इति बोध्यम्। "भ-र-व-ह-ल-वर्जञ्च" ॥ ७ ॥ भ-र-व-ह-ल-वर्जितादेषः प्रयोगात् इति पूर्वेणान्वयः। "दग्धाक्षरवर्ज्जम्" ॥ ८ ॥ दग्धाक्षरवर्ज्जमिति स्वरमात्रोपलक्षणम् ; न केवलमेषामेव

इत्यवगन्तव्यम् । "ग्रैवे यथेष्टलाभः" ॥ ९ ॥ पद्यादौ पद्यादौ वा दग्धाक्षरभिन्नानामक्षराणां प्रयोगे प्रयोक्तुर्यथेष्टलाभो भवेत् । अत्र दग्धादग्धाक्षरभेदज्ञानाय "कः खो गो घश्च लक्ष्मीम्" इत्यादिना "धी श्री स्त्री म्" इति सूत्रस्य टीकायामुक्तं भामहप्रणीतपद्यद्वयं द्रष्टव्यम् । श्लोकद्वयेनानेन फलद्वारा दग्धादग्धाक्षरभेदोऽवगन्तव्यः, तथा च शुभफलानि अदग्धानि अशुभफलानि दग्धानीति स्पष्टम् । अनुस्वारविसर्ग-लृकाराणामपि फलं तत्रैव द्रष्टव्यम् । "म-य-भ-न-प्रयोगात् कीर्त्तिः" ॥ १० ॥ पद्यादौ पद्यादौ वा मगण-यगण-भगण-नगणानां प्रयोगात् प्रयोक्तुः कीर्त्तिर्भवति । "धी श्री स्त्री म्" इति सूत्रस्य टीकायामस्य प्रमाणान्तराणि परिदर्शितानि । "अनिष्टं ग्रैवे" ॥ ११ ॥ पूर्वोक्तावशिष्टेषु रगण-सगण-तगण-जगणेषु प्रथमतः प्रयुज्यमानेषु कवेरनिष्टमेव भवति । "मित्रामित्रयोगात्" ॥ १२ ॥ पूर्वोक्त-सूत्रयोः प्रतिप्रसवार्थमिदम् । गणेषु मित्रामित्रयोगवशात् फलोत्पत्तिः कल्पनीया । तद्विभागाय वक्ष्यमाणसूत्रद्वयस्यावतारः । "म्नौ तौ" ॥ १३ ॥ मश्च नश्च म्नौ, तौ मगण-नगणौ एव मित्रे इत्यभिप्रायः । प्रसङ्गादत्र भगणादीनामपि स्वरूपमुच्यते, यथा—भगण-यगणौ भृत्यौ । जगण-रगणौ उदासीनौ । तगण-सगणौ नीचौ । "भ्यौ ज्रौ त्सौ योगायोगाभ्याम्" ॥ १४ ॥ भय-जर-तस-गणाः परस्परं योगायोगभेदेन शुभाशुभफलप्रदाः ज्ञेयाः । तत्र मित्रयोर्योगे धनम् । मित्रभृत्ययोर्योगे स्थैर्य्यम् । मित्रोदासीनयोर्योगे शून्यम् । मित्रनीचयोर्योगे कष्टः । केवलभृत्ययोर्योगे दूरगमनम् । केवलोदासीनयोर्योगे दारिद्र्यम् । केवलनीचयोर्योगे मरणम् । तथा चोक्तं प्राकृतपिङ्गले,—"मगण-णगण दुइ मित्त हो भगण-यगण हो भिच्च । उआसीण जत दुअउ गण अवसिट्ठउ अरि णिच्च ॥" संस्कृतं यथा—"मगण-नगणौ द्वौ मित्रे भवतः भगण-यगणौ भवतो भृत्यौ । उदासीनौ ज-तौ द्वौ गणाववशिष्टावरी नित्यम् ॥" इति । तथा वाणीभूषणेऽपि,—"मैत्री मगण-नगणयोर्यगण-भगणयोश्च भृत्यता भवति । औदासीन्यं ज-तगणयोररिभावः सगण-रगणयोरुदितः ॥" इति । एतेषां फलान्यपि यथायथं कथितानि प्राकृतपिङ्गले यथा,—"मगण रिद्धि थिरकज्ज यगण सुह संपअ दिज्जइ रगण मरण संपलइ सगण सहवास वसिज्जइ । तगण सुणफल कहइ जगण खरकिरण विसेसइ भगण ठवइ मंगलइ सुकइपिंगल परिभासइ ॥ जत कव्व गाह दोहइ सुणहु अगण होइ पढमक्खरहिं । तसु रिद्धि बुद्धि सव्वे फुरहि रण राउल दुत्तर तरइ ॥" इति । "मगण ऋद्धिं स्थिरकार्य्यं यगणः सुखं सम्पदं ददाति रगणो मरणं सम्पादयति सगणः सहवासाद्विवासयति । तगणः शून्यं फलं कथयति, जगणः खरकिरणान् विशेषयति, भगणः स्थापयति मङ्गलानि सुकवि-

## अथ गायत्र्यधिकारः ।

## गायत्री ॥ २ ॥

अधिकारोऽयमाद्वादशसूत्रपरिसमाप्तेः । "तान्युष्णिक्" (पि० सू० २अ० १४ सू०) इत्यादिसूत्रात् प्राक् यदुच्यते छन्दस्तत् गायत्रीसंज्ञं वेदितव्यम् । (ख)

---

पिङ्गलः परिभाषते ॥ यावत् काव्यं गाथा दोहा श्रूयते नगणो भवति प्रथमाक्षरे । तदा ऋद्धिर्बुद्धिः सर्वमपि स्फुरति रणं राजकुलं दुस्तरं तरति ॥" इति ।

(ख) अथ "तस्योष्णिगासील्लोमभ्यो गायत्री च त्वचो विभोः । त्रिष्टुप् मांसात् स्नुतोऽनुष्टुब्जगत्यस्थ्नः प्रजापतेः ॥ मज्जातः पङ्क्तिरुत्पन्ना बृहती प्राणतोऽभवत् ॥" इत्युक्त्या गायत्र्यादिषु छन्दस्सु अवयवभूतेषु सप्तसु वैदिकच्छन्दःसु गायत्र्याः एव सर्ववेदसाररूपतया ब्रह्मज्ञानद्वारतया द्विजोत्तमत्वहेतुतया च अभ्यर्हितत्वम् ; तथा च—"गायत्र्या ब्राह्मणमसृजत् त्रिष्टुभा राजन्यं जगत्या वैश्यम्" इति श्रुतिः । तथा "जन्मना जायते विप्रः संस्कारात् द्विज उच्यते" इत्यनेन द्विजोत्तमानां द्वितीयं जन्म गायत्रीनिमित्तमतः प्रधाना गायत्री । तथा "सा हैषा गयांस्तत्रे प्राणा वै गयाः" इति बृहदारण्यकब्राह्मणवाक्येन तथा "एते प्राणा वागादयः वै गयाः शब्दकरणात्" इति शाङ्करभाष्याच्च गयशब्दस्य प्राणार्थतया, तथा "प्रयोक्तृगयत्राणात् गायत्री नाम्नेषां छन्दसां प्रयोक्तृप्राणत्राणसामर्थ्यं प्राणात्मभूता सा, सर्वच्छन्दसां चात्मा प्राणः" इति शाङ्करभाष्योक्तव्युत्पत्त्या, तथा "गायत्रीञ्चैव वेदांश्च तुलया समतोलयत् । वेदा एकत्र साङ्गास्तु गायत्री चैकतः स्थिता ॥ सारभूतास्तु वेदानां गुह्योपनिषदो मताः । ताभ्यः सारस्तु गायत्री तिस्रो व्याहृतयस्तथा ॥ गायत्र्याः पदमर्द्धं तु ऋचोऽर्द्धमृच एव वा । ब्रह्महत्या सुरापानं गुरुदाराभिमर्षणम् ॥ यज्जाप्यत दुष्कृतं सर्वं पुनातीत्याह वै मनुः ॥" इति याज्ञवल्क्योक्त्या च गायत्र्याः एव प्राधान्यस्य सर्वथा सुव्यक्तत्वात् प्रथमं गायत्र्यधिकारमाह,—गायत्रीति । आद्वादशसूत्रपरिसमाप्तेः इत आरभ्य द्वादशसूत्रपरिसमाप्तिं यावत्, तेन "जग्यादासुरी" (२।१३ पि०) इति त्रयोदशसूत्रपर्यन्तं गायत्र्यधिकारः इति निष्कर्षः । एतदेव स्फुटयितुमाह,—तान्युष्णिगिति । अत्रेदं वक्तव्यं—यद्यपि उक्तप्रमाणजातं योगरूढ्या मन्त्रभेदबोधकस्यैव गायत्रीशब्दस्य प्राधान्यं प्रति उपष्टम्भकं भवितुमर्हति, न छन्दोबोधकस्य चतुर्विंशत्यक्षरात्मकस्य गायत्रीशब्दस्य,

## दैव्येकम् ॥ ३ ॥

एकाक्षरं छन्दो दैवीगायत्रीति संज्ञायते। तत्रायं प्रदर्शनोपायः,—चतुरङ्गक्रीडायामिव चतुःषष्टिकोष्ठान् लिखित्वा, तत्र द्वितीयायां पङ्क्तौ प्रथमे कोष्ठे दैवीशब्दं विन्यसेत् संज्ञाज्ञापनार्थं, द्वितीये एकसङ्ख्याकमङ्कं विन्यसेत्। (ग)

---

तथाऽपि मन्त्रात्मिकाया गायत्र्याः चतुर्विंशत्यक्षरात्मकत्वेन गायत्रीच्छन्दोनिबद्धत्वात् अभेदविवक्षया छन्दस्यपि उक्तप्रमाणानामुपन्यासो न विरुध्यते। किञ्च, छन्दोबोधकस्य गायत्रीशब्दस्य निरुक्तिरपि एतमेवार्थं प्रकारान्तरेण समर्थयते, यथा—"गायत्री गायतेः स्तुतिकर्मणः" (३।१२ दैव० ब्रा०)। सायनभाष्यं—"गै शब्दे, शब्दः स्तवनं, गायति स्तौति प्रकाशयति देवतामिति गायत्री। अथ ब्राह्मणप्रदर्शनेनैव प्रकारान्तरेण निर्वचनं दर्शयति"—"गायत्री मुखादुदपतदिति च ब्राह्मणम्" (३।३ दैव० ब्रा०)। सायनभाष्य—"गायतः वेदजातं शब्दयतः प्रजापतेर्मुखात् एषा वेदसारभूता उदपतत् उदगच्छत्, ततः अतोऽपि गायत्रीत्यर्थः। अत्रैव गायत्रीविद्यायां प्रकारान्तरेण निरुक्तो गायत्रीशब्दः,—गायन्नेव त्रायते पालयति च सा गायत्री। या वै खलु गायति च 'वृथा संसारे मा क्लिश्यत तदुच्छित्तये मामेव भजध्वम्' इति स्वयं शब्दयति च। तथा कुर्वाणं दुःखात्मकात् संसारात् त्रायते पालयति च सा गायत्रीति निरुच्यते इति शेषः। 'तत् यद्गायंस्तत्रे तस्माद्गायत्री नाम' इति बृहदारण्यकम्। तथा च स्मार्त्तनिर्वचनमपि 'गातारं त्रायते यस्मात् गायत्री तेन सा स्मृता' इति"।

(ग) "गायत्र्युष्णिगनुष्टुप् च बृहती च प्रजापतेः। पङ्क्तिस्त्रिष्टुब्जगती च सप्त छन्दांसि तानि ह॥" (१६।१ ऋ० प्रा०) तथा "दैवान्यपि सप्तैव" (१६।२ ऋ० प्रा०) इत्यादिशास्त्रात् दैवीनामपि सप्तच्छन्दस्तया आर्ष्यादिभेदेन अष्टविधगायत्रीषु आदौ दैवीगायत्रीलक्षणमाह,—दैवीति। एकाक्षरमिति।—एकाक्षरं छन्दः वेदे दैवी गायत्री नाम भवेदित्यर्थः। उदाहरणं यथा—"ओम्" इति। एकाक्षरत्वादियं दैवी गायत्रीति। तत्र सप्तच्छन्दःसु, प्रथमम् अग्रे प्रदर्शित-कोष्ठपूर्त्तिरूपः, प्रदर्शनोपायः सप्तच्छन्दसामक्षरादिपरिज्ञानपन्थाः। तमेवोपायमाह, चतुरङ्गेत्यादि।—चतुरङ्गक्रीडायां चतूराजीक्रीडायाम्, "अष्टौ कोष्ठान् समालिख्य प्रदक्षिणक्रमेण तु। अरुणं पूर्वतः कृत्वा दक्षिणे हरितं न्यसेत्। पार्थ! पश्चिमतः

## आसुरी पञ्चदश ॥ ४ ॥

आसुरी गायत्री पञ्चदशाक्षरा। तानि चाक्षराणि "ग्लौ" ( पि० सू० १अ० १४सू० ) इत्यधिकारात् गुरूणि लघूनि च यथासम्भवं द्रष्टव्यानि। तत्र तृतीयायां पङ्क्तौ प्रथमे कोष्ठे आसुरीशब्दं व्यवस्थाप्य द्वितीये पञ्चदशसङ्ख्याङ्कं विन्यसेत्। (घ)

## प्राजापत्याऽष्टौ ॥ ५ ॥

प्राजापत्या गायत्री अष्टाक्षरा भवति। यत्र क्वचिद्वेदेऽष्टाक्षरं छन्दस्तत् प्राजापत्या गायत्रीति ज्ञेयम्। तत्र चतुर्थ्यां पङ्क्तौ प्रथमे कोष्ठे प्राजापत्याशब्दं व्यवस्थाप्य द्वितीये अष्टसङ्ख्याङ्कं लिखेत्। ( ङ )

## यजुषां षट् ॥ ६ ॥

यजुषां गायत्री षडक्षरा भवति। यत्र क्वचिद्वेदे षडक्षरं

---

पीतमुत्तरे श्यामलं बलम्॥" इति व्यासोक्तलक्षणायां 'दाबाखेलाविशेष' इति प्रसिद्धायां क्रीडायामित्यर्थः, तत्र यथा चतुःषष्टिकोष्ठान् विधाय क्रीडति, तथा चतुःषष्टिकोष्ठान् विधाय तत्राङ्कान् विन्यसेत्। कोष्ठलेखनप्रकारस्तु हत्तिकारप्रदर्शितोपायात् अग्रे दर्शयिष्यमाणचक्रदर्शनाच्च वेदितव्यः।

(घ) "सप्त चैवासुराण्यपि" ( १६।४ ऋ० प्रा० ) इति दर्शनादासुराण्यपि सप्तैव छन्दांसि भवन्ति, तेष्वपि प्रधानभूतत्वात् तद्गायत्र्या लक्षणमेव प्रथमत आह, आसुरीति।—यत्र ह्रस्वदीर्घयोर्विशेषविधानं नास्ति तत्रैव "ग्लौ" इत्यस्यानुवर्त्तनात् यथासम्भवं गुरुलघ्वक्षरात्मिका पञ्चदशाक्षरा गायत्री आसुरी इति संज्ञां भजते। उदाहरणं यथा—"आपो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्" इति।

(ङ) प्राजापत्यागायत्रीलक्षणमाह, प्राजापत्येति।—अत्रापि पूर्ववदेव सर्वं ज्ञेयम्। "अष्टाक्षरप्रभृतीनि" ( १६।१ ऋ० प्रा० ) इति सूत्रेण तथा "प्राजापत्याऽष्टवर्णिका" (२।१ आ० छ०) इत्युक्त्या च अष्टाक्षरं छन्दः वेदे प्राजापत्या गायत्रीति बोध्यम्। तत्र उदाहरणं यथा—"ऋतं सत्यमृतं सत्यम्" ( ११।४७ वा० सं० ) इति। भाष्यं यथा—"प्राजापत्या गायत्री" इति।

छन्दस्तत् याजुषी गायत्रीति संज्ञायते। तत्र पञ्चम्यां पङ्क्तौ प्रथमे कोष्ठे याजुषीशब्दं व्यवस्थाप्य द्वितीये षट्सङ्ख्याङ्कं लिखेत्। (च)

## साम्नां द्विः ॥ ७ ॥

षड़ित्यनुवर्त्तते। द्विरिति क्रियाभ्यावृत्तिदर्शनात् करोति-रध्याह्रियते। तेन द्विःकृता द्विगुणिता षट्सङ्ख्या साम्नां गायत्री भवति। यत्र क्वचिद्वेदे द्वादशाक्षरं छन्दः, तत् साम्नां गायत्रीति संज्ञायते। तत्र षष्ठ्यां पङ्क्तौ प्रथमे कोष्ठे सामशब्दं लिखित्वा द्वितीये द्वादशसङ्ख्याङ्कं लिखेत्। (छ)

## ऋचां त्रिः ॥ ८ ॥

षड़ित्यनुवर्त्तते। अत्रापि पूर्ववत् क्रियाभ्यावृत्तिः, तेन त्रिगुणिता षट्सङ्ख्या ऋचां गायत्री भवति। यत्र क्वचिद्वेदे-ऽष्टादशाक्षरं छन्दस्तदृचां गायत्रीति संज्ञायते। तत्र सप्तम्यां पङ्क्तौ प्रथमे कोष्ठे ऋक्शब्दं व्यवस्थाप्य द्वितीयेऽष्टादशसङ्ख्याङ्कं लिखेत्। (ज)

---

(च) याजुषीगायत्रीलक्षणमाह, यजुषामिति।—स्पष्टम्। उदाहरणं यथा—"अग्निभ्यां पचस्व" (१९।१ वा० स०) इति। भाष्यं यथा—"अग्निभ्यां यजुर्गायत्री" इति।

(छ) साम्नीगायत्रीलक्षणमाह, साम्नामिति।—षट् अनुवर्त्तते, पूर्वसूत्रादिति शेषः। द्विरिति क्रियायाः अभ्यावृत्तिदर्शनात् द्विरित्यनन्तरं कृतेति पदमध्याहार्य्यम्; तेन द्विःकृता द्विगुणिता षट् द्वादश इत्यर्थः। "साम्नां द्वादश" (१६।१२ ऋ० प्रा०) इति सूत्रेण "साम्नां स्याद्द्वादशाक्षरा" (२।२ प्रा० छ०) इति लक्षणेन च सामगायत्र्या द्वादशाक्षरत्वमवगन्तव्यम्। उदाहरणं यथा—"अग्निं पुरीष्यमङ्गिरस्वद्भराम:" (११।४७ वा० स०) इति। भाष्यं यथा—"आग्नेयं यजुः सामगायत्री" इति।

(ज) आर्चीगायत्रीलक्षणमाह,—ऋचामिति। षड़िति।—इहापि पूर्वतः षड़ित्यस्य अनुवर्त्तनं, तस्य च पदस्य त्रिरित्यनेनान्वयः, ततश्च त्रिगुणिता षट् अष्टादशे-

## द्वौ द्वौ साम्नां वर्द्धेत ॥ ६ ॥

गायत्रीत्यनुवर्त्तते। साम्नां पङ्क्तौ गायत्री द्वौ द्वौ सङ्ख्याङ्कौ गृहीत्वा पूर्वात् पूर्वाद्वर्द्धेत, यावदष्टमं कोष्ठं प्राप्नोति। तत्र साम्नां पङ्क्तौ तृतीयादिषु कोष्ठेषु क्रमेण वर्द्धितान्यक्षराणि अङ्केन विन्यसेत्। (भ)

## त्रींस्त्रीनृचाम् ॥ १० ॥

गायत्रीत्यनुवर्त्तते। ऋचां गायत्री त्रींस्त्रीन् सङ्ख्याङ्कान्

---

त्यर्थः। तथा च—"ऋचां त्रिःषट्" (१६।१२ ऋ० प्रा०) इति, तथा "ऋचा-मष्टादशाक्षरा स्यात्" (२।२ चा० छ०) इति। उदाहरणं यथा—"वसवस्त्वा धूपयन्तु गायत्रेण छन्दसाङ्गिरस्वत्" (११।६० वा० स०) इति। भाष्यं यथा—"वीणि ऋग्गायत्र्याः" इति।

(भ) साम्नां द्विरित्यनेन सामगायत्रीलक्षणमभिधाय सामोष्णिगादीनां स्वरूपनिर्णयार्थमाह, द्वाविति।—'गायत्री' इति सूत्रात् गायत्री इति अनुवर्त्तते। क्रमेण वर्द्धितानि उत्तरोत्तरं द्वौ द्वौ कृत्वा वर्द्धितानि। एवञ्च द्वादशाक्षरायाः सामगायत्र्याः तृतीयादिकोष्ठेषु उत्तरोत्तरं द्विद्व्यङ्कवृद्ध्या चतुर्दशाक्षरा साम्नी उष्णिक् षोडशाक्षरा साम्नी अनुष्टुबित्यादयो बोद्धव्याः। तत्र सामोष्णिक् यथा—"नमो वः किरिकेभ्यो देवानां हृदयेभ्यः" (१६।४६ वा० स०) इति। भाष्यं—"चतुर्दशाक्षरं सामोष्णिगेकमेव किरिकेभ्यः" इति। सामानुष्टुप् यथा—"अहः केतुना जुषतां सुज्योतिर्ज्योतिषा स्वाहा" (३७।२१ वा० स०) इति। भाष्यं—"घर्मदेवत्ये यजुषी सामानुष्टुभौ" इति। सामबृहती यथा—"रक्षोहणो वां वलगहना उपदधामि वैष्णवी" (५।२५ वा० स०) इति। अष्टादशाक्षरा सामबृहतीयम् इति। सामपङ्क्तिर्यथा—"एष ते रुद्र भागः सह स्वस्राऽम्बिकया तं जुषस्व स्वाहा" (३।५७ वा० स०) इति। विंशत्यक्षरा सामपङ्क्तिरियम् इति। सामत्रिष्टुप्—"उपयाम गृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा सुत्राम्णे" (२०।३३ वा० स०) इति। भाष्यम्—"उपयाम यजुः सामत्रिष्टुप्।" सामजगती यथा—"विश्वे त्वा देवा वैश्वानरा धूपयन्त्वानुष्टुभेन छन्दसाङ्गिरस्वत्" (११।६० वा० स०) इति। भाष्यं—"तुर्यं सामजगती" इति।

गृहीत्वा पूर्ववद्वर्द्धन्ते। अत्रापि ऋचां पङ्क्तौ तृतीयादिषु कोष्ठेषु क्रमेण त्रिसङ्ख्याकं वृद्धमङ्कं स्थापयेत्। (ञ)

## चतुरश्चतुरः प्राजापत्यायाः॥ ११॥

प्राजापत्यायाः पङ्क्तौ गायत्र्यौ चतुरश्चतुरः सङ्ख्याङ्कान् गृहीत्वा वर्द्धन्ते। अत्रापि तृतीयादिषु कोष्ठेषु विन्यासः पूर्ववदेव। (ट)

---

(ञ) आर्च्युष्णिगादीनां स्वरूपं निरूपयन्नाह, त्रीनिति।—सर्वं स्पष्टम्। अष्टादशाक्षराया आर्च्या गायत्र्याः तृतीयादिकोष्ठेषु उत्तरोत्तरं त्रिवृद्धसङ्ख्या एकविंशत्यक्षरा आर्च्युष्णिगित्यादयो ज्ञेयाः। तत्र आर्ची उष्णिक् यथा—"देवा आशापाला एतं देवेभ्योऽश्वं मेधाय प्रोक्षितं रक्षत" (२२।१९ वा० स०) इति। भाष्यं—"देवदेवत्यं यजुः ऋगुष्णिक्" इति। आर्ची अनुष्टुप् यथा—"रुद्रास्त्वा कृण्वन्तु त्रैष्टुभेन छन्दसाङ्गिरस्वद्ध्रुवास्यन्तरिक्षमसि" (११।५८ वा० स०) इति। भाष्यम्—"उखादेवत्यम् आर्च्यनुष्टुप्" इति। आर्ची बृहती यथा—"वरूत्रीष्ट्वा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वच्छ्रपयन्तूखे" (११।६१ वा० स०) इति। भाष्यम्—"ऋग्बृहती" इति। आर्ची पङ्क्तिः यथा—"जनयस्त्वाच्छिन्नपत्रा देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वत् पचन्तूखे" (११।६१ वा० स०) इति। भाष्यं—"जनयस्त्वा ऋक्पङ्क्तिः" इति। आर्ची त्रिष्टुप्—"अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभि प्रियं मतिं कविम्" (४।२५ वा० स०) इति। आर्ची जगती—"बृहस्पतये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय वयो दात्र एधि मयो मह्यं प्रतिग्रहीत्रे" (७।४७ वा० स०) इति।

(ट) प्राजापत्योष्णिगादीनामक्षरसङ्ख्यां दर्शयति, चतुर इति।—स्पष्टं सर्वम्। "चतुर्भूयः परं परम्" (१६।२ ऋ० प्रा०) तथा "वर्द्धन्ते प्राजापत्या चतुष्टयम्" (२।३ पा० छ०) इत्युक्त्या च अष्टाक्षरात्मिकायाः प्राजापत्यागायत्र्याः चतुश्चतुरक्षरवृद्धिक्रमेण तृतीयादौ कोष्ठे प्राजापत्योष्णिगादीनां द्वादशाक्षरादित्वमित्यवगन्तव्यम्। तत्र प्राजापत्या उष्णिक्—"सुगव्यं नो वाजी स्वश्व्यं पुंसः पुत्रान्" (२५।४५ वा० स०) इति। प्राजापत्या अनुष्टुप्—"तेजोऽसि शुक्रममृतमायुष्पा आयुर्मे पाहि" (२२।१ वा० स०) इति। भाष्यं—"प्राजापत्यानुष्टुप्" इति। षोडशाक्षर-

## एकैकं शेषे ॥ १२ ॥

अनुक्तः शेषः । यत्र गायत्र्यां सङ्ख्याङ्कविनिर्मुक्ता सा एकैकं सङ्ख्याङ्कं गृहीत्वा वर्द्धते । दैवी याजुषी च शेषशब्देनोच्यते, आसुर्य्यां विशेषाभिधानात् । तेन दैवी तृतीयादिषु कोष्ठेषु एकैकमङ्कं गृहीत्वा वर्द्धते । तथैव याजुषी । ( ठ )

---

पादवतीयमनुष्टुप् । प्राजापत्या बृहती यथा—"देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्" ( २०।३ वा० स० ) इति । भाष्यम्—"आर्चं प्राजापत्या बृहती" इति । विंशत्यक्षरपादत्वात् प्राजापत्या बृहतीति बोध्यम् । प्राजापत्या पङ्क्तिर्यथा—"होता यक्षदश्विनौ छागस्य वपाया मेदसो जुषेतां हविर्होतर्यज" ( २१।४१ वा० स० ) इति । भाष्यं—"वपायां प्राजापत्या पङ्क्तिश्छन्दः" इति । प्राजापत्या त्रिष्टुप् यथा—"देवानां त्वा पत्नीर्देवीर्विश्वदेव्यावतीः पृथिव्याः सधस्थे अङ्गिरस्वद्दधतूखे" ( ११।६१ वा० स० ) इति । भाष्यं यथा—"प्राजापत्या त्रिष्टुप्" इति । प्राजापत्या जगती—"अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोडाशं बध्नन्निन्द्राय छागम्" ( २८।२३ वा० स० ) इति । भाष्यम्—"एकाधिका प्राजापत्या जगती" इति । द्वाविंशदक्षरात्मकत्वादस्या अत्र एकाक्षराधिकत्वेन भुरिक्संज्ञिकेयमिति बोध्यम् ।'

( ठ ) दैवीनां याजुषीणामौष्णिगादीनां सङ्ख्याङ्कं सूत्रेणैकेन प्रतिपादयितुमाह, एकैकमिति ।—शेषे दैव्या याजुष्याश्चेत्यर्थः, दैवीयाजुष्योर्विशेषलक्षणाकरणादिति भावः । तदेव स्फुटयितुमाह,—दैवीत्यादि । ननु शेषशब्देन आसुर्य्या अपि ग्रहणं कथं न स्यादित्यत आह, आसुर्य्यामिति ।—"पञ्चादासुरी" ( २।१३ पि०) इति वक्ष्यमाणसूत्रेण विशेषस्य ह्रासस्य तत्र विधानादेव न वृद्धिविषयकसूत्रे तस्याः ग्रहणम् इति भावः । "एकोत्तराणि दैवानाम्" ( १६।५ ऋ० प्रा० ) इत्यनेन दैव्याः, तथा—"गायत्र्यादि जगत्यन्तमेकद्वित्र्यधिकन्तु तत् । आर्षवत्तत्समाहारो ब्राह्मी वर्गः षडुत्तरः ॥" ( १६।११ ऋ० प्रा० ) ("तानि छन्दांसि यजुः-साम-ऋचां गायत्र्यादि जगत्यन्तानि क्रमेण एकद्वित्र्यधिकानि भवन्ति, यजुषां गायत्री षडक्षरा, उष्णिक् सप्ताक्षरा, अनुष्टुप् अष्टाक्षरा इत्यादि ; तथा साम्नां गायत्री द्वादशाक्षरा, उष्णिक् चतुर्दशाक्षरा इत्यादि ; तथा ऋचां गायत्री अष्टादशाक्षरा, उष्णिक् एकविंशत्यक्षरा इत्यादि, एवं सर्वत्र । तत्समाहारः तेषामृग्यजुःसाम्नां छन्दसां समाहारः आर्षवत् ऋषिच्छन्दोवत् द्रष्टव्यः । स ब्राह्मः ब्रह्मणोऽयं वर्गः गणः षडुत्तरो वेदितव्यः" )

## अक्षादासुरी ॥ १३ ॥

एकैकमित्यनुवर्त्तते । आसुरी गायत्री एकैकमक्षरं त्यजेत् । उत्तरेषु कोष्ठेषु वृद्धौ प्राप्तायां ह्रासो विधीयते । तेऽङ्काः क्रमेण स्थाप्याः । (ङ)

---

इत्यनेन च याजुष्या एकैकाक्षरवृद्धिविधानात् एकाक्षराया दैव्याः षडक्षरायाश्च याजुष्या गायत्र्याः तृतीयादिकोष्ठेषु उत्तरोत्तरमेकैकाङ्कवर्द्धनेन तत्तदुष्णिगादयो ज्ञातव्याः; यथा—द्व्यक्षरा दैव्युष्णिक्, सप्ताक्षरा याजुष्युष्णिगित्यादि। तत्र दैवी उष्णिक् यथा—"मधु मधु मधु" (७।१२ वा० सं०) इति। भाष्यं यथा—"मधु माध्वति त्रीणि यजूंषि प्राणदेवत्यानि दैव्युष्णिक्।" द्व्यक्षरत्रिपादरूपेयमिति। दैवी अनुष्टुप् यथा—"इषे त्वा ऊर्जे त्वा" (१।१ वा० सं०) इति। भाष्यं यथा—"तत्र इषे त्वेति त्रिपादत्र्यक्षरो मन्त्रः, तत्र दैव्यनुष्टुप् छन्दः" इति। त्र्यक्षरपादत्वादियं दैव्यनुष्टुप्। दैवी बृहती यथा—"शुषदे वेट्" (७।१२ वा० सं०) इति। भाष्यं—"दैवी बृहती।" दैवी पङ्क्तिर्यथा—"अमुष्मै वेट्" (७।१२ वा० सं०) इति। भाष्यं यथा—"दैवी पङ्क्तिः।" दैवी त्रिष्टुप् यथा—"इन्द्रस्य ध्रुवोऽसि" (५।३० वा० सं०) इति। दैवी जगती यथा—"दिवः संस्पृशस्पाहि" (७।१२ वा० सं०) इति। भाष्यं यथा—"दैवी जगती सुवर्णदेवत्या" इति। याजुषी उष्णिक्—"इन्द्रस्त्वा धूपयतु" (११।६० वा० सं०) इति। भाष्यं—"पञ्चमसप्तमे यजुरुष्णिहौ" इति। सप्ताक्षरैकपादत्वेन याजुषी उष्णिक्। याजुषी अनुष्टुप् यथा—"वरुणस्त्वा धूपयतु" (११।६० वा० सं०) इति। भाष्यं—"षष्ठं यजुरनुष्टुप्" इति। अष्टाक्षरत्वादनुष्टुप्। याजुषी बृहती—"इन्द्राय सुषुवुषे पच्यस्व" (१९।१ वा० सं०) इति। भाष्यम्—"इन्द्राय यजुर्बृहती" इति। नवाक्षरपादत्वेन बृहतीयम्। याजुषी पङ्क्तिः यथा—"स्वाहा मरुद्भिः परिश्रीयस्व" (७।१२ वा० सं०) इति। भाष्यं—"यजुःपङ्क्तिर्घर्मदेवत्या" इति। दशाक्षरैकपादत्वेन याजुषी पङ्क्तिरियम्। याजुषी त्रिष्टुप् यथा—"नमो हिरण्यबाहवे सेनान्ये" (१६।१७ वा० सं०) इति। भाष्यम्—"एकादशाक्षरं यजुस्त्रिष्टुप्" इति। याजुषी जगती यथा—"नमः शिवाय च शिवतराय च" (१६।४१ वा० सं०) इति। भाष्यं—"द्वादशाक्षरं यजुर्जगती" इति।

(ङ) आसुर्युष्णिगादीनां विशेषविधिमाह, अक्षादिति।—अक्षात् त्यजेत्,

**तान्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यः ॥१४॥**

तानि छन्दांसि गायत्र्याः परस्तात् उष्णिगनुष्टुब्बृहती-पङ्क्तित्रिष्टुब्जगत्याख्यानि क्रमेण भवन्ति । (ढ)

**तिस्रस्तिस्रः सनाम्न्य एकैका ब्राह्म्यः ॥ १५ ॥**

यजुषां पङ्क्तिमारभ्य तिस्रो याजुषी, साम्नी, आर्ची चेति गायत्री मिलिता एका षट्त्रिंशदक्षरा ब्राह्मी गायत्री भवति । सनाम्न्य इत्येकसंज्ञा इत्यर्थः । तिस्रस्तिस्र इति वीप्सया परेषा-मुष्णिगादीनामिह ग्रहणम् । तथा एकैकेति वीप्सया तास्र ब्राह्म्यो भवन्तीति विधीयते । ब्राह्म्य इति गायत्र्यादीनां जगतीपर्य्यन्तानां विशेषणम् । एवं याजुषी, साम्नी, आर्ची

---

एकैकमिति शेषः । तदेव स्पष्टयति वृत्तिकारः, एकैकमिति ।—पूर्वसूत्रादेकैक-मित्यनुवृत्त्या "एकादिमान्यसुराणां ततः पञ्चदशाक्षरात्" (१६।६ छ० शा० ) इति वचनेन पञ्चदशाक्षराया आसुरीगायत्र्याः उत्तरोत्तरकोष्ठेषु एकैकाक्षरह्रासेन यद्यदक्षरं भवेत् क्रमेण तत्तदक्षरम् उष्णिगादिकं भवेत् ; तत्र एकादिमानि एकैकन्यूनानीत्यर्थः ; अनेनैव आसुर्य्युष्णिगादीनां लक्षणमभिहितम् । यथा—चतुर्द्दशाक्षरा उष्णिक् त्रयोदशाक्षरा अनुष्टुप्, द्वादशाक्षरा बृहती, एकादशाक्षरा पङ्क्तिः, दशाक्षरा त्रिष्टुप्, नवाक्षरा च जगती इति ज्ञेयम् इति । तत्र आसुर्य्युष्णिक् यथा—"चित स्थ परिचित ऊर्द्ध्वचितः श्रयध्वम्" ( १२।४६ वा० स० ) इति । आसुर्य्यनुष्टुप् यथा—"सप्त संसदो अष्टमी भूतसाधनी" ( २६।१ वा० स० ) इति । भाष्यं—"सप्त संसदः आसुर्य्यनुष्टुप्" इति । आसुरी बृहती यथा—"इन्द्राय त्वा वसुमते रुद्रवते" ( ६।३२ वा० स० ) इति । आसुरी पङ्क्तिः,—"अग्नेर्भस्मास्यग्नेः पुरीषमसि" ( १२।४६ वा० स० ) इति । आसुरी त्रिष्टुप् यथा—"मयि ते कामधरणं भूयात्" ( १२।४६ वा० स० ) इति । आसुरी जगती यथा—"अग्नये त्वा रायस्पोषदे" ( ६।३२ वा० स० ) इति ।

(ढ) वैदिकसप्तच्छन्दःसु "गायत्री" इति सूत्रेण प्राक् केवलं गायत्र्या एव उल्लेखः कृतः न तु उष्णिगादीनां तत्परवर्त्तिनामन्येषां षण्णाम् ; अतस्तत्प्रदर्शनार्थमाह, तानीति ।—तानि गायत्र्या अनन्तरं तृतीयादिकोष्ठेषु येषाम् अङ्कन्यासस्तथा कृताः तानि छन्दांसीत्यर्थः, गायत्रीप्रभृतिकं सप्त वैदिकं छन्द इति निष्कर्षः ।

ष्णोष्णिक् मिलिता एका द्वाचत्वारिंशदक्षरा ब्राह्मी उष्णिक् भवति। एवं तिस्रोऽनुष्टुभः सङ्गताः सत्योऽष्टचत्वारिंशदक्षरा एका ब्राह्म्यनुष्टुप् भवति। ता एव तिस्रो बृहत्यः सङ्गताः सत्यश्चतुःपञ्चाशदक्षरा एका ब्राह्मी बृहती भवति। ता एव तिस्रः पङ्क्तयः सङ्गताः षष्ट्यक्षरा एका ब्राह्मी पङ्क्तिर्भवति। ता एव तिस्रस्त्रिष्टुभः सङ्गताः षट्षष्ट्यक्षरा एका ब्राह्मी त्रिष्टुप् भवति। ता एव तिस्रो जगत्यः सङ्गता द्वासप्तत्यक्षरा एका ब्राह्मी जगती भवति। अत्राष्टम्यां पङ्क्तौ प्रथमे कोष्ठे ब्राह्मीशब्दं व्यवस्थाप्य द्वितीयादिषु कोष्ठेषु क्रमेण षट्त्रिंशदाद्यङ्कान् विन्यसेत्। (च)

---

(च) दैव्येकमित्यादिभिरेकादशसूत्रैः गायत्र्याद्याख्यानां सप्तच्छन्दसां दैव्यादिषड्भेदान् निरूप्य भेदान्तरं दर्शयितुमाह, तिस्र इति।—ननु तिस्र इत्यनेन प्रथमाभिहिताः दैव्यादिकाः तिस्रो हित्वा अनन्तरोक्ताः याजुष्यादिकाः तिस्रः कथं गृह्यन्ते? इति चेत् सत्यं, भगवता पिङ्गलेन "दैव्येकम्" इत्यादिभिः षड्भिः सूत्रैः यथा ग्रहणं कृतं, तत्र "प्राग्यजुषामार्ष्यः" (२।१६ पि०) इति वक्ष्यमाणसूत्रेण याजुषीपूर्ववर्त्तिनां दैव्यादित्रितयानां मिलिताक्षरसङ्ख्याया एव आर्षीलक्षणघटकतया ग्रहणात् अवशिष्टानां याजुष्यादित्रितयानामेव मिलिताक्षरसङ्ख्यानां ब्राह्मीलक्षणघटकत्वमिति अवगन्तव्यम्; यद्वा—तिस्र इत्यनेन अव्यवहितपूर्वोक्तानामार्षी-साम्नी-याजुषीति तिसृणामेव ग्रहणमुचितम् अत एव वृत्तिकृताऽपि अनन्तरमेवोक्तं—यजुषां पङ्क्तिमारभ्य इति। सूत्राणामेतेषामेतादृशक्रमेण पठनादेव हलायुधेनापि तदनुयायिकोष्ठप्रदर्शनं कृतम्। एतेन च अष्टमपङ्क्तिस्थब्राह्मीगायत्र्यादीनां लक्षणमुक्तं भवतीति ज्ञेयम्। समाख्याः समानं तुल्यं नाम अभिधेयं यासां ताः एकसंज्ञाः इत्यर्थः। समानता च तिसृणां तिसृणां गायत्र्यादीनां मिलितरूपेण ग्रहणात् ज्ञातव्या; ततश्च पूर्वोक्तयाजुष्यादित्रिविधगायत्रीणां षड्द्वादशाष्टादशाक्षरात्मिकानां परस्परयोगात् षट्त्रिंशदक्षरा एका ब्राह्मी गायत्री; तथा चोक्तम्—"अक्षराणि तु षट्त्रिंशद्गायत्री ब्रह्मणो मिता। यजुषां षट् ऋचां त्रिःषट् साम्नां द्वादश सम्पदि॥" (१६।१२ ऋ० प्रा०) इति। एवं याजुष्यादि-

त्रिविधविविधानानुष्टुबादीनां छन्दसानां समष्टिसङ्ख्याया मेलनेन द्वाचत्वारिंशदक्षरा ब्राह्मी उष्णिक्, अष्टचत्वारिंशदक्षरा ब्राह्मी अनुष्टुप् इत्यादयोऽवगन्तव्याः। तिस्रः तिस्रः एकैका इत्युभयत्र वीप्सा विवक्षितत्वात् यथा तिसृणां तिसृणां गायत्रीणां मेलनेन एका ब्राह्मी गायत्री भवति, तथा तिसृणां तिसृणाम् उष्णिहां मेलनेन एका ब्राह्मी उष्णिक् भवति। एवं जगतीपर्य्यन्तमेषः क्रमोऽनुसरणीयः। विन्यासप्रकारस्य कोष्ठदर्शनेन विशेषादवगन्तव्यः। तत्र ब्राह्मी गायत्री यथा—"अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोडाशं बध्नन्निन्द्राय वयो धसे छागम्" (२८।४६ वा० सं०) इति। भाष्यम्—"अग्निमद्य एकाधिका ब्राह्मी गायत्री" इति। ब्राह्मी उष्णिक् यथा—"होता यक्षदिडाभिरिन्द्रमीडितमाजुह्वानममर्त्यम्। देवो देवैः सवीर्यो वज्रहस्तः पुरन्दरो वेत्वाज्यस्य होतर्यज" (२८।२ वा० सं०) इति। भाष्यं—"ब्राह्मी उष्णिक्" इति। ब्राह्मी अनुष्टुप् यथा—"होता यक्षत्तिस्रो देवीर्न भेषजं त्रयस्त्रिधातवोऽपस इडा सरस्वती भारती महीः। इन्द्रपत्नीर्हविष्मतीर्व्यन्त्वाज्यस्य होतर्यज" (२८।८ वा० सं०) इति। भाष्यं—"ब्राह्मी अनुष्टुप्" इति। ब्राह्मी बृहती यथा—"देवी जोष्ट्री वसुधिती देवमिन्द्रं वयोधसं देवी देवमवर्द्धताम्। बृहत्या छन्दसेन्द्रियं श्रोत्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीतां यज" (२८।३८ वा० सं०) इति। भाष्यं—"द्वे ब्राह्म्यौ बृहत्यौ" इति। ब्राह्मी पङ्क्तिः,—"देवीं धियं मनामहे सुमृडीकामभिष्टये। वर्चोधां यज्ञवाहसं सुतीर्था नो असद्वशे। ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा" (४।११ वा० सं०)। भाष्य—"देवीं धियमिति...... शक्वरी अतिशक्वरी वा" इति। अतिशक्वरीति ब्राह्मीपङ्क्तेर्नामान्तरं अल्पाक्षरत्वात्। ब्राह्मी त्रिष्टुप्—"तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्" (३६।२४ वा० सं०) इति। भाष्यं—"सूर्यदेवत्या ब्राह्मी त्रिष्टुप्" इति। ब्राह्मी जगती—"त्वमङ्ग इन्द्र दाहृदि शुधी नः शूनोश्च हि द्यौः आ न भीर्षां अद्रिवो घृणा न भीर्षां अद्रिवः। शुष्मिन्तमो हि शुष्मिभिर्वधैरुग्रेभिरीयसे। अपूरुषघ्नो अप्रतीत शूर सत्वभिस्त्रिसप्तैः शूर सत्वभिः॥" (ऋक्० २अष्ट० १अ० १म० १९अनु० १३३सू० ६ऋ०)। भाष्यम्—"त्वमङ्ग इत्येषा धृतिः" इति। द्वासप्तत्यक्षरत्वात् धृतिरिति ब्राह्मीजगत्या नामान्तरं वेदे। अत्र 'द्यौः' इत्यत्र 'दियौः' 'अप्रतीत' इत्यत्र 'अप्रति इत' इति व्यूहेन पादः पूरणीयः इति।

## प्रागयजुषामार्ष्यं इति ॥ १६ ॥

तिस्रस्तिस्र इत्यनुवर्त्तते। यजुषां पङ्क्तेः प्राक् प्राजापत्या, आसुरी, दैवीति यास्तिस्रो गायत्र्यस्ताः सङ्गताः सत्यश्चतुर्विंशत्यक्षरा एका आर्षी गायत्री भवति। ता एव तिस्र उष्णिहः सङ्गता अष्टाविंशत्यक्षरा एका आर्षी उष्णिक् भवति। ता एव तिस्रोऽनुष्टुभः सङ्गता द्वात्रिंशदक्षरा एका आर्षी अनुष्टुप् भवति। ता एव तिस्रो बृहत्यः सङ्गताः षट्त्रिंशदक्षरा एका आर्षी बृहती भवति। ता एव तिस्रः पङ्क्तयः सङ्गताश्चत्वारिंशदक्षरा एका आर्षी पङ्क्तिर्भवति। ता एव तिस्रस्त्रिष्टुभः सङ्गताश्चतुश्चत्वारिंशदक्षरा एका आर्षी त्रिष्टुप् भवति। ता एव तिस्रो जगत्यः सङ्गता अष्टचत्वारिंशदक्षरा एका आर्षी जगती भवति। तत्र प्रथमायां पङ्क्तौ प्रथमे कोष्ठे आर्षीशब्दं व्यवस्थाप्य तदुपरि 'छन्दः' इति लिखित्वा द्वितीयादिषु कोष्ठेषु क्रमेण चतुर्विंशत्याद्यङ्कान् विन्यसेत्। प्रथमपङ्क्तेर्द्वितीयादिकोष्ठेष्वङ्कानामुपरि गायत्र्यादीनि नामानि लिखेत्। अयं स्पष्टतरः प्रदर्शनोपायः। (त)

---

(त) दैव्यादिब्राह्म्यन्तानां सप्तसप्तविधानां गायत्र्यादीनामक्षरसङ्ख्यां निरूप्य इदानीमवशिष्टार्षीगायत्र्यादेरक्षरसङ्ख्यां निरूपयितुं सङ्क्षेपेणाह, प्रागिति।—अनुवर्त्तते, पूर्वसूत्रादिति शेषः। समाम्ना एकैका इत्यनयोरपि अनुवृत्तिर्बोध्या। यजुषां प्राक् इत्यनेन "यजुषां षट्" (२।६ पि०) इति सूत्रात् पूर्वस्यसूत्रत्रयोद्दिष्टानां प्राजापत्यासुरीदैवीनां ग्रहणम्। तदेव स्फुटयितुमाह, यजुषामिति।—अत्र प्रमाणं यथा,—"तानि त्रीणि समागम्य समानामानि समाम तत्। एकं भवत्यृषिच्छन्दस्तथा गच्छति सम्पदम्॥ एवं विप्रकृतीन्याहुर्युक्तानि चतुरुत्तरम्। आर्षिच्छन्दांसि—" (१६।७—८ ऋ० प्रा०)। भाष्यं—"तानि प्रजापतिदैवासुराणां छन्दांसि समाननामानि तानि त्रीणि समागम्य सह भूत्वा सहभूतानां समाम, तदेकम् आर्षिच्छन्दो भवति" इति। तथा आग्नेयच्छन्दःसारे,—"छन्दोऽधिकारे गायत्री दैवी चैकाक्षरीभवेत्। पञ्चदशासुरी सा स्यात् प्राजापत्याऽष्टवर्णिका॥ यजुषां

षड्वर्णा गायत्री साम्नां स्याद्द्वादशाक्षरा। ऋचामष्टादशार्णा स्यात् साम्नां वर्द्धेत च द्वयम्॥ ऋचां त्रयश्च वर्द्धेत प्राजापत्या चतुष्टयम्। वर्द्धेतैकैकशो ह्यासुरी तु एकमुत्सृजेत्॥ उष्णिगनुष्टुब्बृहती पङ्क्तिस्त्रिष्टुब्जगत्यपि। तानि ज्ञेयानि क्रमशः, गायत्री ब्राह्म एव ताः॥ तिर्यक्स्थिताः समाख्याः स्युरेकैका आर्ष्य एव च। प्राग्यजुषां संज्ञाः स्युश्चतुःषष्टिपदे लिखेत्॥" (२।१—५ पा० छ०) इति। कोष्ठज्ञानार्थमाह,—तत्रेति। तत्र आर्षी गायत्री यथा—"वायवायाहि दर्शत, इमे सोमा अरंकृताः। तेषां पाहि श्रुधी हवम्॥" (ऋक्० १अष्ट० १अ० १म० १अनु० २सू० १ऋ०) इति। भाष्य—"वायवायाहि इत्यादिकं नवर्चं सूक्तं...... गायत्रं छन्दः" इति। अष्टाक्षरपादत्वेन चतुर्विंशत्यक्षरा त्रिपदा आर्षीयं गायत्री। आर्षी उष्णिक्—"य एक इद्विदयते वसु मर्त्ताय दाशुषे। ईशानो अप्रतिष्कुत इन्द्रो अङ्ग॥" (ऋक्० १अष्ट० ६अ० १म० १३अनु० ८४सू० ७ऋ०) इति। भाष्यम्—"अस्तावीति विंशत्यृचमेकादशं सूक्तं...... सप्तम्याद्यास्तिस्र उष्णिहः" इति। अत्र प्रथमद्वितीयपादयोरष्टाक्षरत्वेन तृतीयपादस्य द्वादशाक्षरत्वेन च अष्टाविंशत्यक्षरा उष्णिक्। आर्षी अनुष्टुप् यथा—"विद्मा हि त्वा वृषन्तमं वाजेषु हवनश्रुतम्। वृषन्तमस्य हूमह ऊतिं सहस्रसातमाम्॥" (ऋक्० १अष्ट० १अ० १म० ३अनु० १०सू० १०ऋ०)। भाष्यं—"गायन्ति द्वादशानुष्टुभम्" इति। इत्यष्टाक्षरपादचतुष्टयत्वेन द्वात्रिंशदक्षरतया आर्षीनामानुष्टुबिति। आर्षी बृहती यथा—"तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः। अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे॥" (२६।११ वा० स०) इति। भाष्यम्—"इन्द्रदेवत्या पथ्या बृहती" इति। षट्त्रिंशदक्षरा बृहतीयमार्षी सा च तृतीयपादस्य द्वादशाक्षरत्वेन अन्येषामष्टाक्षरत्वेन च पथ्या इति विशेषणविशिष्टा। आर्षी पङ्क्तिर्यथा—"युवोर्हि माता अदितिर्विचेतसा द्यौर्न भूमिः पयसा पुपूतनि। अव प्रिया दिदिष्टन सूरो निनिक्त रश्मिभिः॥" (ऋक्० ८अष्ट० ७अ० १०म० ११अनु० १३२सू० ६ऋ०) इति। भाष्यम्—"ईशानमिति सप्तर्चं चतुर्थं सूक्तम्...... द्वितीयाषष्ठ्यौ प्रस्तारपङ्क्ती द्विद्वादशकद्व्यष्टकवत्यौ" इति। अत्र द्यौः इत्यत्र दिवोः इति पठनीयम्। चत्वारिंशदक्षररूपा आर्षीयं पङ्क्तिः, सा च प्रथमद्वितीयपादयोः प्रत्येकं द्वादशाक्षरत्वेन तृतीयचतुर्थपादयोश्च प्रत्येकमष्टाक्षरत्वेन प्रस्तारपूर्विका ज्ञेया। आर्षी त्रिष्टुप् यथा—"पितुश्चिदूधर्जनुषा विवेद, व्यस्य धारा असृजद्वि धेनाः। गुहा चरन्तं सखिभिः शिवेभिः, दिवो यह्वीभिर्न गुहा बभूव॥" (ऋक्० २अष्ट० ८अ० ३म० १अनु० १सू० ९ऋ०) इति। भाष्यं—"तत्र सोमस्य मेति त्रयोविंशत्यृचं प्रथमं सूक्तम्...... अनुक्तत्वात् त्रिष्टुप् छन्दः"

| | छ० | गा० | उ० | अ० | बृ० | प० | त्रि० | ज० | अक्षरवृद्धिक्षयौ |
|---|---|---|---|---|---|---|---|---|---|
| १ | आर्षी० | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ | ४ वृद्धिः |
| २ | दैवी० | १ | २ | ३ | ४ | ५ | ६ | ७ | १ वृद्धिः |
| ३ | आसु० | १५ | १४ | १३ | १२ | ११ | १० | ९ | १ क्षयः |
| ४ | प्राजा० | ८ | १२ | १६ | २० | २४ | २८ | ३२ | ४ वृद्धिः |
| ५ | याजु० | ६ | ७ | ८ | ९ | १० | ११ | १२ | १ वृद्धिः |
| ६ | साम्नी० | १२ | १४ | १६ | १८ | २० | २२ | २४ | २ वृद्धिः |
| ७ | आर्ची० | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ | ३ वृद्धिः |
| ८ | ब्राह्मी० | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ | ६ वृद्धिः (थ) |

इति भट्टहलायुधकृतायां छन्दोवृत्तौ द्वितीयोऽध्यायः ।

---

इति । एकादशाक्षरचतुष्पादात्मकत्वेन चतुश्चत्वारिंशदक्षरत्वमिति आर्षीत्रिष्टुप्प्रसिद्धिः । आर्षी जगती यथा—"विष्वग्दिन्द्रो अमतेरुत क्षुधः, स इद्रायो मघवा वस्व ईशते । तस्येदिमे प्रवणे सप्तसिन्धवः, वयो वर्धन्ति वृषभस्य शुष्मिणः ॥" ( ऋक्० ७अष्ट० ८अ० १०म० ४अनु० ४३सू० ३ऋ० ) इति । भाष्यं—"तव त्यन्नाम इत्येकादशर्चं प्रथमं सूक्तं दशम्येकादश्यौ त्रिष्टुभौ शिष्टा जगत्यः" इति । द्वादशाक्षरचतुष्पादात्मकत्वेनार्षी जगती । अवेदमवधेयम् ;—पिङ्गलाचार्यकृतगायत्र्यादिलक्षणैर्ये वैदिकमन्त्राः न लक्ष्या भवन्ति प्रत्युतार्षैः ऋषिभिस्तत्तच्छन्दोभिरुक्तास्ते वक्ष्यमाणनिचृद्-भूरिग्-विराट्-स्वराट्-रूपैः समाधेयाः । वेदोक्तमन्त्राणां कात्यायनादिभिरनुक्रमणिकाकारैः मन्त्रादिभिश्च यानि छन्दांसि विहितानि तेषामेव 'स्थितेर्गतिश्चिन्तनीया' इति न्यायात् यथाशास्त्रत्वप्रतिपादनार्थं भगवता पिङ्गलेन छन्दःशास्त्रमिदं प्रणीतं, न तु तद्विरुद्धमिति । अत्र हि गायत्र्यादिसप्तच्छन्दसाम् आर्ष्याद्यष्टविधसंज्ञाभेदेन षट्पञ्चाशद्-भेदा भवन्ति । एतेषामुदाहरणानि कार्त्स्न्येन दर्शयितुं वृत्तिकृता श्रीमता हलायुधभट्टेन नाङ्गीकृतः श्रमः, अस्माभिस्तु यथाप्राप्तमेव कानिचित् प्रदर्शितानि इति दिक् ।

( थ ) वैदिकच्छन्दसाम् आर्ष्याद्यष्टविधभेदाः तदक्षरसङ्ख्यादिगतभेदाश्च

श्रीमता हलायुधभट्टेन चतुःषष्टिकोष्ठात्मकमेकं चक्रम् अङ्कयित्वा प्रदर्शिताः। तदङ्कनप्रकारश्च प्रागुक्तसूत्रेषु तेनैव निरूपितः। अस्माभिश्च तत्कोष्ठ-दक्षिणपार्श्वे अङ्कवृद्धिक्षयप्रदर्शनार्थम्, अपरं कोष्ठाष्टकं सन्निवेशितम्। तत्र च आर्षीपदं प्रथमपङ्क्तेः प्रथमकोष्ठे बोध्यम्। तदुपरितनप्रदेशे च छन्दः इति पदं विलिख्य द्वितीयादिकोष्ठोपरिभागे क्रमेण गायत्र्यादिसप्तच्छन्दसां नामानि लेखनीयानि। ततः तस्या एव पङ्क्तेः द्वितीयादिकोष्ठे सूत्रोक्तरीत्या २४, २८, ३२, ३६, ४०, ४४, ४८, इत्येतानङ्कान् लिखित्वा दक्षिणपार्श्वस्थे अस्मत्प्रदर्शितापरकोष्ठे ४ वृद्धिः; द्वितीयायां पङ्क्तौ प्रथमकोष्ठे दैवीपदं, द्वितीयादिकोष्ठेषु च क्रमेण १, २, ३, ४, ५, ६, ७ अङ्कान् स्थापयित्वा अतिरिक्तकोष्ठे १ वृद्धिः; ततस्तृतीयायां पङ्क्तौ प्रथमकोष्ठे आसुरीपदं विलिख्य अनन्तरकोष्ठेषु वक्ष्यमाणसूत्रोक्तक्रमेण १५, १४, १३, १२, ११, १०, ९, अतिरिक्तकोष्ठे च १ क्षयः; ततश्च पूर्ववत् चतुर्थपङ्क्तौ प्रथमकोष्ठे प्राजापत्यापदं ततः द्वितीयादिकोष्ठे ८, १२, १६, २०, २४, २८, ३२, प्रान्तकोष्ठे च ४ वृद्धिः; पञ्चमपङ्क्तौ प्रथमकोष्ठे याजुषी इति शब्दं द्वितीयादिकोष्ठेषु ६, ७, ८, ९, १०, ११, १२, अन्त्यकोष्ठे च १ वृद्धिः; षष्ठपङ्क्तौ च प्रथमकोष्ठे साम्नोति पदं द्वितीयादिकोष्ठेषु च १२, १४, १६, १८, २०, २२, २४, तदनु च २ वृद्धिः; सप्तमपङ्क्तौ प्रथमकोष्ठे आर्चीपदं द्वितीयादिकोष्ठेषु च १८, २१, २४, २७, ३०, ३३, ३६, ततः ३ वृद्धिः; अष्टमपङ्क्तौ प्रथमकोष्ठे ब्राह्मीपदं लिखित्वा द्वितीयादिषु कोष्ठेषु ३६, ४२, ४८, ५४, ६०, ६६, ७२, अन्ते च ६ वृद्धिरित्येते अङ्काः स्थाप्याः। तथा च "प्राग्यजुषामार्च्यः" (२।१६ पि०) इति सूत्रानुसारेण दैवीगायत्र्याः (१) एकाङ्कम्, आसुरीगायत्र्याः (१५) पञ्चदशाङ्कं, प्राजापत्यागायत्र्याः (८) अष्टाङ्कं परस्परं योजयेत् तेन जाताः (२४) चतुर्विंशत्यङ्काः आर्षीकोष्ठानन्तरस्थद्वितीयकोष्ठे स्थापनीयाः; ततश्च चतुर्विंशत्यक्षरा आर्षी गायत्रीति बोद्धव्यम्। एवंक्रमेण च दैवीमारभ्य प्राजापत्यां यावत् उष्णिगादीनां यथाक्रमोऽधःस्थापितकोष्ठत्रयाङ्कमेलनजाताः अङ्काः,—२८, ३२, ३६, ४०, ४४, ४८, प्रथमपङ्क्तिस्थतृतीयादिकोष्ठेषु क्रमेण स्थाप्याः, ततश्च आर्षी-उष्णिक् अष्टाविंशत्यक्षरा, आर्षी-अनुष्टुप् द्वात्रिंशदक्षरा इत्यादिः बोद्धव्यः। दैवीगायत्र्या एकाक्षरत्वात् द्वितीयपङ्क्तौ द्वितीयकोष्ठे (१) एकाङ्कः स्थाप्यः, तृतीयादिकोष्ठेषु च क्रमशः "एकैकं शेषे" (२।१२ पि०) इति सूत्रेण

एकैकाङ्कवृद्धिक्रमेण दैवी उष्णिक् द्व्यक्षरा दैवी अनुष्टुप् त्र्यक्षरा इत्यादिरवधेयः। आसुरीगायत्र्याः पञ्चदशाक्षरतया तृतीयपङ्क्तौ द्वितीयकोष्ठे (१५) पञ्चदशाङ्कं स्थापयेत्, ततः "ज्यादासुरी" (२।११ पि०) इति सूत्रेण तृतीयादिकोष्ठेषु क्रमेण एकैकाङ्कह्रासतः आसुरी उष्णिक् चतुर्दशाक्षरा इत्यादिक्रमोऽवगन्तव्यः। एवंक्रमेण चतुर्थपङ्क्तौ प्राजापत्यागायत्र्या अष्टाक्षरत्वात् तृतीयादिकोष्ठेषु चतुश्चतुरङ्कवृद्धिक्रमेण अङ्का विन्यस्ताः। तदनन्तरपङ्क्तौ याजुषी-गायत्र्याः षडक्षरत्वात् तृतीयादिकोष्ठेषु एकैकाङ्कवृद्धिक्रमेण अङ्काः स्थाप्याः। षष्ठ्यां साम्नीपङ्क्तौ च द्व्यङ्कवृद्धिः। सप्तमपङ्क्तौ च त्र्यङ्कवृद्धिः। अष्टमपङ्क्तौ च "तिस्रः तिस्रः—" (२।१५ पि०) इत्यादिसूत्रात् याजुषीणां साम्नीनामार्चीनाञ्च ब्राह्म्योऽपि विन्यस्तानां गायत्र्यादीनां समानामङ्कमेलनजाताः अङ्काः स्थाप्या इति कोष्ठपूरणपद्धतिः। एकाक्षरादिक्रमेण गायत्र्यादिच्छन्दसां प्रत्यक्षविहितत्वप्रदर्शनपुरःसरं भेदा निरूप्यन्ते यथा—

| अक्षरा | गायत्री | विशेषनाम |
|---|---|---|
| १। | दैवी | ० |
| २। | „ | भूरिक् |
| ३। | „ | स्वराट् |
| ४। | याजुषी | विराट् |
| ५। | „ | निचृत् |
| ६। | „ | ० |
| ७। | „ | भूरिक् (१) प्राजापत्या निचृत् (२) |
| ८। | प्राजापत्या | ० |
| ९। | „ | भूरिक् |
| १०। | „ | स्वराट् (१) साम्नी विराट् (२) |
| ११। | साम्नी | निचृत् |
| १२। | „ | ० |
| १३। | „ | भूरिक् (१) आसुरी विराट् (२) |
| १४। | „ | स्वराट् (१) आसुरी निचृत् (२) |
| १५। | आसुरी | ० |
| १६। | „ | भूरिक् (१) आर्ची विराट् (२) |
| १७। | „ | स्वराट् (१) आर्ची निचृत् (२) |

| अक्षरा | गायत्री | विशेषनाम |
|---|---|---|
| १८ । | आर्ची | ० |
| १९ । | „ | भूरिक् |
| २० । | „ | स्वराट् |
| २१ । | आर्षी | पादनिचृत् |
| २२ । | „ | विराट् |
| २३ । | „ | निचृत् |
| २४ । | „ | ० |
| २५ । | „ | भूरिक् |
| २६ । | „ | स्वराट् |
| ३४ । | ब्राह्मी | विराट् |
| ३५ । | „ | निचृत् |
| ३६ । | „ | ० |
| ३७ । | „ | भूरिक् |
| ३८ । | „ | स्वराट् |

इति श्रीमत्पिङ्गलाचार्य्यविरचित-पिङ्गलच्छन्दःसूत्रीयहलायुधवृत्तौ
श्रीमत्-जीवानन्दविद्यासागरकृतायां सुखबोधिन्यां द्वितीयोऽध्यायः ।

---

# तृतीयोऽध्यायः ।

## पादः ॥ १ ॥

अधिकारोऽयमाध्यायपरिसमाप्तेः । यदित ऊर्द्ध्वमनुक्रमिष्यामः तत् 'पादः' इत्यधिकृतं वेदितव्यम् । वक्ष्यति च "गायत्र्या वसवः" ( ३।३ पि० ) इति । (क)

## इयादिपूरणः ॥ २ ॥

पाद इत्यनुवर्त्तते । इयादिः पूरणो यस्य स इयादिपूरणः । आदिशब्देन उवादयो गृह्यन्ते । तत्रायमर्थः,—यत्र गायत्र्यादिच्छन्दसि पादस्याक्षरसङ्ख्या न पूर्य्यते, तत्र इयादिभिः पूरयितव्या । यथा,—"तत् सवितुर्वरेणियम्" "दिवं गच्छ सुवः पते" इत्यादि । (ख)

---

(क) पूर्वाध्याये आर्षीदैव्यादिसंज्ञाभेदेन भिन्नानां गायत्र्यादीनामक्षरसङ्ख्यामभिधाय सम्प्रति पुनः तेषामेव पादव्यवस्थां वर्णयितुमुपक्रमते, पाद इति ।—आध्यायपरिसमाप्तेः अध्यायस्य परिसमाप्तिं तृतीयाध्यायसमापनमवधीकृत्य "पादः" इत्यस्य अधिकार इत्यर्थः । [ परिसमाप्तेरिति अभिविध्यर्थकाङा योगात् "पञ्चम्यपाङ्परिभिः" ( २।३।१० पा० ) इत्यनेन पञ्चमी ] इतः ऊर्द्ध्वम् इतःपरम् अनुक्रमिष्यामः वक्ष्यामः, "गायत्र्या वसवः" ( ३।३ पि० ) इत्यत्र पाद इत्यधिकारस्वते गायत्र्याः पादः अष्टाक्षरात्मकोऽत्यर्थस्यानवबोध एव इत्यभिप्रायः ।

(ख) प्रतिपादीयायां निर्दिष्टाक्षरसङ्ख्यायामूनायां तत्पूरणाय परिभाषामाह, इयादीति ।—तथा च—"इयादि पादपूरणी" ( ३।१ प्रा० छ० ) इति । उवादय इत्यत्रादिपदेन यण्-संयोगसवर्णदीर्घगुणवृद्धिव्यूहा गृह्यन्ते । तथा च कात्यायनः,—"पादपूरणार्थन्तु क्षैप्रसंयोगैकाक्षरीभावान् व्यूहेत" इति । अत्र भाष्यं यथा—"क्षैप्रसंयोगो यकारवकारसंयोगः यण्-संयोग इत्यन्ये । कुत एतत् ?

## गायत्र्या वसवः ॥ ३ ॥

पाद इत्यनुवर्त्तते । परिभाषेयम् । गायत्र्याः पादो वसवोऽष्टाक्षराणि भवन्ति । यत्र यत्र गायत्रः पादोऽभिधास्यते, तत्राष्टाक्षरो ग्रहीतव्यः । (ग)

---

यण् हि क्षिप्रं भवतीति क्षैप्रः इति । मध्वत्र इत्यादावेकमात्रामर्द्धमात्रां करोतीति । 'एकः पूर्वापरयोः' इत्यधिकारसम्पन्नसन्धिरेकाक्षरीभावः, तत्र द्वे अक्षरे एकाक्षरीक्रियेतेति । यण्-व्यूहो यथा 'त्वामिन्द्र वज्रिन्' इत्यादौ वज्रिरिन्नित्यादि । सवर्णदीर्घव्यूहो यथा—'यन्नायच्छेऽस्यासते' इत्यादौ अत्र आसते इत्यादि । गुणव्यूहो यथा—'उप इन्द्र सुपर्वणीम् ।' वृद्धिव्यूहो यथा—'ब्रह्मा एतु सदनात्' इत्यादि । यण्-पदेन यवरला गृह्यन्ते । गायत्र्यादिच्छन्दसि चेत् सङ्ख्यापूरणमक्षरगणनया न भवेत्, तदा इयादिभिः उवादिभिश्च तत्पूरणार्थं सूत्रमिदं कृतम् । तथा चोक्तं शौनकेन—"व्यूहेदेकाक्षरीभावान् पादेषूनेषु सम्पदे । क्षैप्रवर्णांश्च संयोगान् व्यवेयात् सदृशैः स्वरैः ॥" (१७।२६—२७ ऋ० प्रा०) इति । अस्यार्थः,—पादेषु श्लोकतुरीयान्यतरांशेषु ऊनेषु अक्षरादिसङ्ख्याभिरपूर्णेषु एकाक्षरीभावान् कृतसन्धिकतया एकपदीकृतान् क्षैप्रवर्णान् यकारवकारसंयुक्तवर्णान् सदृशैः अनुरूपैः इकारोकाररूपैरित्यर्थः स्वरैः सह व्यवेयात् विश्लेषयेत् । केचित् अत्र क्षैप्रसंयोगपदस्य अन्तस्थासंयोगरूपार्थं मन्यन्ते, तथा यकारपदेन च सन्धिविहितस्य प्रत्ययविहितस्य च यकारस्य ग्रहणमिति व्याचक्षते । अन्ये तु "अयं व्यवायः यकार-वकारसंयोग एव दृश्यते रेफ-लकारसंयोगयोर्न" एवमभिधाय "अयं भुवो रयीणां चिकितयत इत्यत्र दीर्घत्वप्रतिषेधार्थं जामिषु जासु चिकेतेति चिकेतशब्दस्य पाठात्" इत्याहुः । बृहदारण्यकमाधवभाष्ये च "द्यौरित्यत्र दियौरिति वरेण्यमित्यत्र वरेणियमिति वर्णविश्लेषेण सुव्यक्तमुक्तम् । अस्याश्च अष्टाक्षरपादतया एकैकाक्षरस्य भूम्यादिरूपता" इति । अतः सर्वप्रमाणसम्मत इयादिपूरणः पाद इति विमृश्य कृतमिदमाचार्य्येण । उदाहरणेन तदेव स्फुटीकुर्वन्नाह, यथेत्यादि ।—तत्सवितुर्वरेण्यमित्यत्र गायत्र्या अष्टाक्षरपादस्य सप्ताक्षरत्वेन वरेणियमिति कृत्वा पादपूरणम् । तथा स्वः पते इत्यत्र च सुवः पते इति । एवमन्यत्रापि वेदितव्यम् ।

(ग) गायत्र्याः पाद इत्युक्ते सामान्यतया तथा अक्षरसङ्ख्या निर्दिशति,

## जगत्या आदित्याः ॥ ४ ॥

पाद इत्यनुवर्त्तते। परिभाषेयम्। जगत्याः पादो द्वादशाक्षराणि भवन्ति। यत्र क्वचिज्जागतः पादस्तत्र द्वादशाक्षरो दृश्यते। (घ)

## विराजो दिशः ॥ ५ ॥

यत्र क्वचिद्वैराजः पाद इत्युच्यते, तत्र दशाक्षरः प्रत्येतव्यः। (ङ)

---

गायत्र्या इति।—अत्रेदमवधातव्यं—यद्यपि आर्षीदैव्यादिभेदेन पादाक्षरसङ्ख्याभेदेन च गायत्र्या बहुविधत्वं तथाऽपि आर्षीगायत्र्याः चतुर्विंशत्यक्षरत्वेन त्रिपादरूपत्वादष्टाक्षरपादत्वं सिद्धं, वेदेऽपि गायत्र्याः पादस्याष्टाक्षरत्वमेवोक्तमिति गायत्र्या अष्टाक्षरः पादः परिभाषितः। अग्निनाऽप्युक्तं—"गायत्री वसवो ज्ञेयाः" (३।१ आ० छ०) इति। अपरञ्च—"गायत्री सा चतुर्विंशत्यक्षरा। अष्टाक्षरास्त्रयः पादाः" (१६।१४ ऋ० प्रा०) इति। बृहदारण्यकब्राह्मणे च—"भूमिरन्तरीक्षं द्यौरित्यष्टावक्षराणि, अष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत् स यावदेषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद। ऋचो यजूंषि सामानीति अष्टावक्षराणि अष्टाक्षरं ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत् स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद।" इत्यादिश्रुतितश्च गायत्र्या अष्टाक्षरः पाद इत्यभिहितम्। यत्र सूत्रे गायत्र्याः पादः इत्युक्तो भविष्यति तत्राष्टाक्षरपादलाभार्थमियं परिभाषा।

(घ) जगत्याः पादस्य अक्षरसङ्ख्यां निर्देष्टुमाह, जगत्या इति।—आदित्या इति द्वादशाक्षरोपलक्षणम्। आर्षीजगत्या अष्टचत्वारिंशदक्षरत्वेन चतुष्पादरूपायास्तस्याः प्रतिपादे द्वादशाक्षरलाभार्थं परिभाषेयं विहिता। तथा च—"पादो जगत्या आदित्याः" (३।१ आ० छ०) इति। अन्यच्च—"पञ्चाशज्जगती द्यूना चत्वारो द्वादशाक्षराः" (१६।७० ऋ० प्रा०) इति।

(ङ) विराजः पादस्य अक्षरसङ्ख्यां निरूपयति, विराज इति।—दिशः इति दशाक्षरोपलक्षणम्। उक्तञ्च—"विराजो दिश ईरिताः" (३।१ आ० छ०) इति। विराट्पङ्क्तिरिति नामान्तरायाः आर्षीपङ्क्तेश्चत्वारिंशदक्षरत्वेन चतुष्पाद-

## त्रिष्टुभो रुद्राः ॥ ६ ॥

त्रैष्टुभः पाद इत्युक्ते सर्वत्रैकादशाक्षरो गृह्यते। अस्मि-न्नेवाध्याये परिभाषा एतावतस्तः। (च)

## एकद्वित्रिचतुष्पादुक्तपादम् ॥ ७ ॥

एभिश्चतुर्भिर्लक्षणैरुक्तः पादो यस्य तदुक्तपादं छन्दः । यस्य छन्दसो यादृशः पादः परिभाषितस्तच्छन्दस्तेनैव पादेन क्वचि-देकपात्, क्वचित् द्विपात्, क्वचित्त्रिपात्, क्वचिच्चतुष्पाद्भवति। गायत्री च त्रिपादेव। चतुर्भिरष्टाक्षरैः पादैरनुष्टुबेव स्यात्। (छ)

---

रूपायास्तस्याः प्रतिपादे दशाक्षरत्वाभावार्थमियं परिभाषा इति। दशाक्षरपादा विराट् पङ्क्तेर्भेदविशेष इति बोध्यम्। अतश्च पङ्क्त्यधिकारे—"चत्वारो दशका विराट्" (१६।५२ऋ० प्रा०) इति। "अथ चतुष्पदी विराड्दशका" (कात्या०) इति।

(च) त्रैष्टुभपादस्य अक्षरसङ्ख्यामाह, त्रिष्टुभ इति।—रुद्रा इति एकादशाक्षरोपलक्षणम्। तथा च—"त्रिष्टुभो रुद्रः पादः स्यात्" (१।२ग्रा० कृ०) इति। आर्षीत्रिष्टुभः चतुश्चत्वारिंशदक्षरत्वेन चतुष्पादायास्तस्याः प्रतिपादे एकादशाक्षर-विधानार्थं परिभाषेयम्। तथा च,—"चतुश्चत्वारिंशत्त्रिष्टुबक्षराणि चतुष्पदा। एकादशाक्षरैः पादैः" (१६।६० ऋ० प्रा०) इति। उष्णिगनुष्टुब्बृहतीनां परिभाषा न दर्शिता इत्याह, अस्मिन्निति।—अतस्त्र एव परिभाषाः दर्शिताः न तु सप्त, प्रयोजनाभावात्। उष्णिगादीनां पादकल्पनन्तु परिभाषाचतुष्टयपादानां संलग्नत्वमेव वेदे व्यवस्थापितं, न पृथक्तया इति। तथा च गायत्र्याश्चतुष्पादत्वे अनुष्टुप्, गायत्रीजागतपादाभ्याम उष्णिग्बृहत्यौ इति फलितम्। एतत्तु अस्मिन्नेवाध्याये १८।२३।२६ सूत्रैः स्वयमेव विवरीष्यते आचार्य्येण।

(छ) गायत्रीजगतीविराट्त्रिष्टुभां चतुर्णां पादव्यवस्थापनमाह,—एकेति। एभिः चतुर्भिः "गायत्र्या वसवः" (३।३ पि०) इत्यादिभिः चतुर्भिः। क्वचिदेक-पादिति।—आग्नेयेऽप्युक्तं—"छन्द एकादिपादजम्" (३।२ आ० क०) इति। अयं भावः,—"उष्णिक् गायत्री—"(३।१८ पि०) इत्यादि सूत्रे गायत्रजागतपादादिमेलनेन उष्णिगादिच्छन्दोदर्शनात् तथा वैदिकमन्त्रेषु क्वचित् क्वचिदेकस्मिन्नेव श्लोके विविधपादमेलनदर्शनाच्च एवमवधातव्यं यत् विभिन्नच्छन्दसां पादमिश्रणेनापि द्विपादादित्वं

## आद्यं चतुष्पादृतुभिः ॥ ८ ॥

ऋतुशब्देन लक्षणया षडक्षरः पादोऽभिधीयते। तैः पादैश्चतुष्पादाद्यं गायत्रं छन्दो भवति। एवं चतुर्विंशत्यक्षराणि सम्पद्यन्ते। तत्रोदाहरणम्।—

"इन्द्रः शचीपतिर्बलेन वीडितः।

दुश्च्यवनो वृषा समत्सु सासहिः॥" (१६।१४ ऋ० प्रा० टीका०)। (ज)

---

भवितुमर्हतीति। कश्चित्तु एकपादित्यादेरेवं व्याख्यां कृतवान् "एकविधाः पादा यस्य तदेकपात्। द्विविधाः पादा यस्य तत् द्विपात्। त्रिविधाः पादा यस्य तत् त्रिपात्। चतुर्विधाः पादा यस्य तच्चतुष्पात्। एतावता पूर्वोक्तनियत-पादनिश्चयणमायातम्। एकः पादो यस्मिन् इति विग्रहस्तु केवलैकविधपादनियम-नामाद्रियते, वक्ष्यमाणवैदिकच्छन्दोविरोधात्" इति। परन्तु एषा च व्याख्या न हलायुधसम्मततया न वा आर्षेयच्छन्दःशास्त्रसम्मततया प्रतिभाति। गायत्र्या वसव इत्यनेन गायत्रीपादस्याष्टाक्षरत्वात् चतुर्भिः पादैः द्वात्रिंशदक्षरतया कथं गायत्र्याश्चतुर्विंशत्यक्षरत्वम् इति संशयमपाकुर्वन्नाह, गायत्री च त्रिपादेवेति।—त्रिपादत्वे चतुर्विंशत्यक्षरत्वमक्षुण्णमेव इति भावः। चतुर्भिरिति।—अष्टाक्षरपाद-च्छन्दसः चतुश्चरणत्वे तु अनुष्टुबेव, न गायत्री इति निष्कर्षः। गायत्र्याः त्रिपादत्वे प्रमाणं यथा—"अष्टाक्षरास्त्रयः पादाः" (१६।१४ ऋ० प्रा०) इति। "प्रथमं छन्दस्त्रिपदा गायत्री" (कात्या०) इति। "ओङ्कारपूर्विकास्तिस्रो महाव्याहृत-यस्तथा। त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम्॥" इति मनुयमहद्वशिष्ठाः। यदत्र वैदिके लौकिके च छन्दसि पादनियमनं कृतं तद्वेदमूलमेव; यथोक्तं यजुर्वेदे,—"द्विपदा याश्चतुष्पदाः त्रिपदा याश्च षट्पदाः। विच्छन्दाः याश्च सच्छन्दाः सूचीभिः शम्यन्तु त्वा॥" इति। विविधं विषमं वा छन्दः विच्छन्दः इति व्युत्पत्त्या विषमाक्षरपादग्रहणम्। समानं छन्दो यासु जातिषु ताः सच्छन्दा इति व्युत्पत्त्या समानाक्षरपादा जातयो गृह्यन्ते। एवमर्द्धसम-गाथा-दण्डकाधिकारादयः लौकिका अपि वेदमूलका एव।

(ज) गायत्र्या वसव-इत्यनेन गायत्र्याः पादस्याष्टाक्षरत्वम् अभिधाय पुनः षडक्षरपादस्तुष्टुभोपलक्षितायाः चतुर्विंशत्यक्षरायाः गायत्र्या लक्षणमाह, आद्य-

## क्वचित्त्रिपादृषिभिः ॥ ६ ॥

क्वचिद्वेदे समाक्षरोपलक्षितैः पादैस्त्रिभिर्गायत्र्येव भवति । एवमेकविंशत्यक्षराणि जायन्ते । तत्रोदाहरणम् ।—

"युवाकु हि शचीनां, युवाकु सुमतीनाम् ।
भूयाम वाजदाव्नाम् ॥" (ऋक्० १अष्ट० १अ० १म० ४अनु० १७सू० ४ऋ० ) । ( झ )

---

मिति ।—आद्यं प्रथमोक्तं, सर्वच्छन्दःप्रधानमित्यर्थो वा, गायत्रमिति शेषः, ऋतुभिः षड्भिः, लक्षणया षडक्षरपादैः चतुष्पात् अपि भवेत् । आग्नेयेऽपि,—"आद्यं चतुष्पादृतुभिः" ( ३।२ आ० छ० ) इति । गायत्र्याः चतुर्विंशत्यक्षरत्वं सर्वसम्मतं, ततश्च त्रिपादायाः तस्याः क्वचित् पादचतुष्टयत्वेऽपि प्रतिपादं षडक्षरनिबद्धत्वात् चतुर्विंशत्यक्षरत्वस्यैव सिद्धेश्चतुष्पादित्युक्तिर्न दोषाय इति भावः । तथा च,—"चत्वारो वा षडक्षराः" ( १६।१४ ऋ० प्रा० ) इति । अस्य चोव्वटभाष्यं,—"षडक्षरा वा चत्वारः पादा भवन्ति" ।

( झ ) क्वचित् गायत्र्या एकविंशत्यक्षरात्मकत्वं लक्षयति, क्वचिदिति ।—क्वचिदित्यनेन न सर्वत्र । ऋषिभिः इति समाक्षरोपलक्षणम् । "त्रिपात् समाक्षरैः क्वचित्" ( ३।२ आ० छ० ) इति । शौनकेनाप्युक्तं—"युवाकु हीति गायत्री त्र्यः समाक्षरा विराट्" ( १६।१८ ऋ० प्रा० ) इति । गायत्र्याः पादस्याष्टाक्षरत्वनियमात् अत्र प्रतिपादमेकाक्षरन्यूनत्वेन पादनिचृद्गायत्रीयमित्यायातम् । एतच्च समनन्तरमेव आचार्य्येणैव स्फुटीकरिष्यते । युवाकु इत्यादि ।—सायणाचार्य्यकृता व्याख्या यथा,—"इन्द्रावरुणयोरित्यादिकं नवर्चं सूक्तं······ युवाकु इत्यादिके द्वे ऋचौ पादनिचृन्नामकच्छन्दोयुक्ते । हि यस्मात् कारणात् शचीनाम् अस्मदीयकर्मणां सम्बन्धि सोमरूपं हविः युवाकु वसतीवर्य्येकधनात्मकैः उदकैः पयःसक्त्वादि-द्रव्यान्तरैश्च मिश्रितं तथा सुमतीनां शोभनबुद्धियुक्तानामृत्विजां स्तोत्ररूपं वचनमपि युवाकु नानाविधैः स्तुत्यगुणैः मिश्रितं, तस्मात् कारणात् हे इन्द्रावरुणौ तथाविधं हविः स्वीकुर्व्वतोर्युवयोः प्रसादादयं वाजदाव्नाम् अन्नप्रदानां पुरुषाणां मध्ये मुख्या भूयाम भवेम । वाजदाव्नामिति वाजं ददातीति दाधातोर्वनिप्" इति ।

## सा पादनिचृत् ॥ १० ॥

सैव गायत्री पादनिचृदिति संज्ञां लभते। प्रयोक्तुरदृष्टाभ्युदयसम्बन्धज्ञापनार्थमियं संज्ञा। वेदस्यानादित्वान्महत्त्वेऽपि न दुष्यति। (ञ)

## षट्कसप्तकयोर्मध्येऽष्टावतिपादनिचृत् ॥ ११ ॥

त्रिपादित्यनुवर्त्तनीयम्। प्रथमः पादः षडक्षरः, द्वितीयोऽष्टाक्षरः, तृतीयः सप्ताक्षरः, एवं त्रिभिः पादैर्या गायत्री सा अतिपादनिचृदिति संज्ञां लभते। तत्रोदाहरणम्।—

"प्रेष्ठं वो अतिथिं, स्तुषे मित्रमिव प्रियम्।
अग्ने रथं न वेद्यम्॥" (साम० १अ० १ऋ० १प्र० १अर्द्ध० १द० ५ऋ०)। (ट)

---

(ञ) सप्ताक्षरायाः संज्ञाविशेषमाह, सेति।—सा पूर्वोक्ता सप्ताक्षरा गायत्री पादनिचृत् इत्याख्यां याति इत्यर्थः। आग्नेयेऽप्युक्तं—"सा गायत्री पादनिचृत्" (३।३ आ० छ०) इति। उदाहरणमस्य तु पूर्व्वसूत्रोक्ता युवाकु इत्यादि ऋगेव। तथा च—"युवाकु हीति गायत्री त्रयः सप्ताक्षरा विराट्। सैषा पादनिचृन्नाम गायत्र्येकविंशिका॥" (१६।१८ ऋ० प्रा०) इति। "त्रयः सप्तकाः पादनिचृत्" (कात्या०) इति च। संज्ञाबीजमाह, प्रयोक्तुरित्यादि।—प्रयोक्तुः पादनिचृद्गायत्रीच्छन्दोबद्धमन्त्रपाठकस्य तत्पठनं शुभोदर्कं सूचयतीति। पादनिचृदिति बह्वक्षरसंज्ञाकरणे दोषमाशङ्क्य तन्निराकरणायाह, वेदस्येति।—अनादित्वात् नित्यत्वात् महत्त्वेऽपि बह्वक्षरत्वेनास्य छन्दसः दीर्घनामत्वेऽपि न दुष्यति। अनादिकालादेव एवं प्रवर्त्तितं, ततश्च न दुष्टमित्यर्थः। निचृदित्यस्य निरुक्तिमाह,—"निचृन्निघृतस्य चृतेः" (३।२० दैव० ब्रा०)। भाष्यम—"एकाक्षरन्यूनासु गायत्र्यादिषु निचृदिति। अर्त्तयति सन्दीपयति ऋग्गतभावानिति चृत् छन्दः निकृष्टमेकाक्षरेण हीनं निचृत" इति। "पादनिचृत्" इत्यत्र "पादनिवृत्" इति पाठान्तरं—पादेन पादमात्रमन्त्रपाठेन निवर्त्तते निश्चितत्वेन प्रापयति अभ्युदयमिति पादनिवृदिति संज्ञा इत्यभिप्रायः।

(ट) अतिपादनिचृल्लक्षणमाह, षट्केति।—षडक्षर-सप्ताक्षरपादयोर्मध्ये-

ऽष्टाक्षरपादश्चेत् तदा एकविंशत्यक्षरा अतिपादनिचृद्गायत्रीति संज्ञा स्यात्। आग्नेये तु,—"तदन्याद्यादिषट् त्रिपात्" (३।३ आ० छ०) इति लक्षणं दृश्यते। मतान्तरे अतिनिवृदिति चास्य नामान्तरं दृश्यते। त्रिपादित्यनुवर्त्तनीयमिति "क्वचित्त्रिपा-दृषिभिः" इति सूत्रादिति शेषः। शौनकेन तु एवंविधस्थले तथा सप्ताक्षरपादद्वयमध्ये षडक्षरपादत्वे षडक्षरपादद्वयान्ते सप्ताक्षरपादत्वे च अतिनिचृदित्येव नाम उक्तं, यथा, —"षट्कः सप्तकयोर्मध्ये स्तोतॄणां विवाचीति। यस्याः सातिनिचृन्नाम गायत्री द्विर्दशाक्षरा॥ षट्कसप्तकयोर्मध्ये सुत्यासावातिथिग्विति। षडक्षरः प्रकृत्यैव व्यूहेनाष्टाक्षरोऽपि वा॥" (१६।१९—२० ऋ० प्रा०) इति। व्याख्या यथा—सप्ताक्षरपादयोर्मध्ये षट्कः षडक्षरः पादश्चेत् सा अतिनिचृन्नाम विंशत्यक्षरा गायत्रीत्यर्थः। षट्कसप्तकयोर्मध्ये षडक्षरपादश्चेत् सा गायत्री अतिनिचृत् अथवा मध्ये अष्टाक्षरपादस्तथापि सा अतिनिचृत्। कात्यायनस्तु—"मध्यमः षट्कश्चेदतिनिचृत्" (कात्या०) इत्येवाह। प्रेष्ठमित्यादि।—भाष्य यथा,—"हे अग्ने! वः त्वां पूजार्थे बहुवचनं स्तुषे स्तौमि अहमुशना इति शेषः। कीदृशं प्रेष्ठं स्तोतॄणामस्माकं धनदानेन प्रियतमम्, अतिथिं सर्वैरतिथिवत् पूज्यं, यद्वा—अत सातत्यगमने ऋतन्यञ्ज्यादिना अतेरिथिन्। सततं देवानां हविः प्रदातृ गच्छन्तं मित्रमिव सखायमिव, प्रियं स्तोतुं प्रीणनकारं रथं न रथमिव वेद्यं वेदो धनं धनहितं लाभहेतुं यथा रथेन धनं लभते तद्वत् स्तोतारो धनं लभन्ते।" "अग्ने" इत्यत्र "अग्निम्" इति ऋग्वेदीयपाठे तु—पूर्वोक्तगुणविशिष्टं "धनलाभकारणमग्निं वो युष्मत्कर्मसिद्ध्यर्थं स्तुषे काव्य उशना स्तौति इत्यर्थः।" अत्र षडक्षरसप्ताक्षरपाद-द्वयमध्यगताष्टाक्षरपादत्वेन अतिनिचृन्नाम गायत्रीच्छन्दः। ऋग्भाष्ये सायणेन तु ऋगियं गायत्रच्छन्दसा निबद्धा इत्युक्तं, यथा—"प्रेष्ठं व इति नवर्चं चतुर्थं सूक्तम्······ आर्षं गायत्रम्" इति। प्रातिशाख्यधृतस्तोतॄणामित्यादि मन्त्रस्तु—"पुरूतमं पुरूणां स्तोतॄणां विवाचि। वाजेभिर्वाजयताम्॥" (ऋक्० ४अष्ट० ७अ० ६म० ४अनु० ४६सू० १९ऋ०) इति। सायणभाष्यमस्या यथा—"पुरूतममित्येषा अतिनिचृत्, त्रयः सप्तकाः पादनिचृत्, मध्यमः षट्कश्चेदतिनिचृत् इत्युक्तलक्षणात्।" एतद्भाष्योक्तलक्षणेन प्रातिशाख्योक्तलक्षणेन च अतिनिचृद्गायत्रीच्छन्द एव पिङ्गलोक्तातिपादनिचृदि-त्यायातम्। महीधरेण तु,—"गोमदूषु णासत्या अश्वावद्यातमश्विना। वर्त्ती रुद्रा नृपाय्यम्" इत्यस्या भाष्ये लिखितं यथा,—"अश्विदेवत्यास्तिस्रो गायत्र्यः आद्या पादनिचृद्गायत्री त्रयः सप्तकाः पादनिचृदिति।" एतेन पादनिचृत्तथा अतिपाद-निचृद्गायत्रीच्छन्दोऽपि प्रमाणितमेव। एतत्सर्वमतपर्य्यालोचनेन पुनरेतदेव मन्यते,

द्वौ नवकौ षट्कश्च सा नागी ॥ १२ ॥

आद्यौ द्वौ नवाक्षरौ पादौ, तृतीयः षडक्षरः, एवं त्रिपात् या गायत्री सा नागी इति उच्यते। (ठ)

विपरीता वाराही ॥ १३ ॥

इयमेव नागी गायत्री विपरीता सती वाराही नाम गायत्री भवति। प्रथमः पादः षडक्षरः द्वितीयतृतीयौ नवाक्षरौ। तत्रोदाहरणम्।—

"त्वामग्ने! पुष्करा-दध्यथर्वा निरमन्थत।
मूर्ध्नो विश्वस्य वाघतः॥" (साम० १प्र० १अ० १प्र० १अर्द्ध० १द० ९ऋ०)। (ड)

---

यत् पादनिचृद्गायत्री या खलु भाष्यादिसम्मता सा पुस्तकान्तरे पादनिवृन्नाम्ना अभिहिता। या अतिनिचृत् सा एव अतिपादनिचृत् अतिपादनिवृदिति वा उच्यते। षट्कसप्तकयोर्मध्ये षडक्षरपादत्वे अतिनिचृदिति यदुक्तं तदिह पिङ्गले न दृश्यते। कतिचित् पुस्तके अतिपादनिचृदित्यत्र अतिपादनिवृदित्यपि पाठः।

(ठ) नागीगायत्रीलक्षणमाह, द्वाविति।—अत्रापि पूर्व्वतस्त्रिपादित्यनुवर्त्तते। नवाक्षरपादद्वयेन षडक्षरैकपादेन च चतुर्विंशत्यक्षरा त्रिपान्नागीनाम गायत्रीति निष्कर्षः। तथा च आग्नेये,—"नागी षड्नवकद्वयैः" (३।२ आ० छ०) इति। शौनककात्यायनाभ्यामियं नोक्ता। उदाहरणन्तु अस्याः स्वयमेव मृग्यम्। यत्तु केनचित् "अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदि स्पृशम्। ऋध्यामात ओहैः" (ऋक्० ३अष्ट० ५अ० ४म० १अनु० १०सू० १ऋ०) इति ऋगुदाहरणत्वेन प्रदर्शिता, तत्तु सायणविरोधात् न सम्यक्, सायणेन इयं पदपङ्क्तिच्छन्दोनिबद्धा इत्युक्तम्।

(ड) वाराहीगायत्रीलक्षणमाह, विपरीतेति।—वैपरीत्यमत्र पादव्यत्ययरूपा, तच्च पूर्व्वसूत्रापेक्षया तृतीयस्याद्यत्वम्। विपरीतत्वं दर्शयति,—प्रथम इत्यादि। एवम् आग्नेयेऽपि,—"वाराही रसविरन्ध्रा" (३।४ आ० छ०) इति। इयमपि शौनकादिग्रन्थे न दृश्यते। त्वामग्ने इति।—अस्या भाष्यं—"त्वामग्ने इत्येषा भरद्वाजेन

## षट्कसप्तकाष्टकैर्वर्द्धमाना ॥ १४ ॥

षडक्षरः प्रथमः पादः, सप्ताक्षरो द्वितीयः, अष्टाक्षरस्तृतीयः, एवं त्रिभिः पादैर्वर्द्धमाना नाम गायत्री भवति। तत्रोदाहरणम्।—

"त्वमग्ने ! यज्ञानां, होता विश्वेषां हितः।
देवेभिर्मानुषे जने॥" ( ऋक्० ४अष्ट० ५अ० ६म० २अनु० १६सू० १ऋ० )। ( ढ )

---

दृष्टा, छन्दोदैवते पूर्ववत् ( गायत्री आग्नेयी )। सैषा नवमी। हे अग्ने अथर्वा एतत्संज्ञ ऋषिः, त्वां पुष्करादधि पुष्करे पुष्करपर्णे निरमन्थत अरण्योः सकाशादजनयत। कीदृशात् पुष्करात् ? मूर्द्ध्नः मूर्द्धवद्धारकात्। विश्वस्य सर्वस्य जगतः वाघतः वाहकात् "पुष्करपर्णे हि प्रजापतिर्भूमिमप्रथयत तत् पुष्करपर्णे प्रथयन" इति श्रुतेः। भूमिश्च सर्वजगत आधारभूतेति पुष्करपर्णस्य सर्वजगद्धारकत्वम्। अत्र पुष्करशब्देन पुष्करपर्णमभिधीयते, इत्येतच्च तैत्तिरीयके विस्पष्टमाम्नातम् ; त्वामग्ने पुष्करादधीत्याह पुष्करपर्णे ह्येनमुपश्रुतमविन्दत" इति। एषा च ऋक् सायणेन केवलगायत्रीच्छन्दोबद्धा इत्युक्तं, न तु वाराहीच्छन्दोबद्धा इति।

( ढ ) वर्द्धमानागायत्रीलक्षणमाह, षट्केति।—इहापि पूर्वतः त्रिपादित्यनुवर्त्तनीयम्। षडक्षरप्रथमपादमारभ्य क्रमेणाक्षरवर्द्धनात् वर्द्धमाना नाम्नीयमेकविंशत्यक्षरा त्रिपाद्गायत्रीत्यभिप्रायः। तथा चाग्नेये,—"वर्द्धमाना षट्सप्ताष्टा" ( ३।२ अा० छ० ) इति। शौनकेनापि प्रदर्शितं यथा,—"उत्तरोत्तरिणः पादाः षट्सप्ताष्टाविति त्रयः। गायत्री वर्द्धमानैषा त्वमग्ने यज्ञानामिति॥" ( १६।२१ ऋ० प्रा० ) इति। केषाञ्चिन्मते आद्यन्तपादयोरष्टाक्षरत्वे मध्यस्य च षडक्षरत्वेऽपि वर्द्धमाना गायत्री भवेत्, उक्तं हि,—"अष्टकौ मध्यमः षटकः एकेषामुपदिश्यते" ( १६।२२ ऋ० प्रा० ) इति। "यस्यास्तु षट्सप्तकाष्टकाः सा वर्द्धमाना" ( कात्या० ) इति च। त्वमग्ने इत्यादि।—सायणव्याख्या यथा,—"द्वितीये अनुवाके अष्ट सूक्तानि। तत्र त्वमग्ने यज्ञानामिति अष्टाचत्वारिंशदृचं प्रथमं सूक्तं भरद्वाजस्यार्षमाग्नेयम् आद्या षष्ठी च वर्द्धमाना षट्कसप्ताष्टका सा वर्द्धमाना इत्युक्तलक्षणोपेतत्वात्। अस्य मन्त्रस्य भरद्वाजऋषिः गायत्रीच्छन्दः अग्निर्देवता अग्निमन्थने विनियोगः। हे अग्ने ! त्वं विश्वेषां सर्वेषां सप्तसंख्यारूपेण विभिन्नानां यज्ञानां होता होमनिष्पादकः

## विपरीता प्रतिष्ठा ॥ १५ ॥

सैव वर्द्धमाना गायत्री यदा विपरीता स्यात्तदा प्रतिष्ठा नाम गायत्री भवति। अष्टाक्षरः प्रथमः पादः, द्वितीयः सप्ताक्षरः, तृतीयः षड़क्षरः। तत्रोदाहरणम्।—

"आपः! पृणीत भेषजं, वरूथं तन्वे मम।
ज्योक् च सूर्य्यं दृशे॥" (ऋक्० १अष्ट० २अ० १म० ५अनु० २३सू० २१ऋ०)। (थ)

## तृतीयं द्विपाज्जागतगायत्राभ्याम् ॥ १६ ॥

तृतीयशब्देनैतदध्यायस्थसूत्रपाठक्रमापेक्षया विराजमाह। तथा चोक्तं,—"विराजो दिशः" (३।५ पि०) इति। यदा द्वादशाक्षरोऽष्टाक्षरश्च पादः स्यात्, ततस्ताभ्यां द्विपात् विराड् नाम गायत्री भवति। तत्रोदाहरणम्।—

"पश्वा न तायुं गुहा चतन्तं नमो, युजानं नमो वहन्तम्।
सजोषा धीराः पदैरनुग्मन्नुप, त्वा सीदन् विश्वे यजत्राः॥"
(ऋक्० १अष्ट० ५अ० १म० १२अनु० ६५सू० १ऋ०)। (त)

---

भवसि, यद्वा—यज्ञसम्बन्धिदेवाह्वाता भवसि। यस्मात् त्वं मानुषे मनोः सम्बन्धिनि मनुष्ये जने यजमाने देवेभिः देवैः हितः होतृत्वेन निहितः भवसि" इति।

(थ) प्रतिष्ठालक्षणमाह, विपरीतेति।—इहापि वर्द्धमानावदेकविंशत्यक्षरा त्रिपादित्येव मन्तव्यम्। केवलं पादाक्षराणामष्टकसप्तकषट्कक्रमरूपेण वैपरीत्यं दर्शयितु-माह,—अष्टाक्षर इति। आग्नेये प्रातिशाख्ये च अस्या उल्लेखो न दृश्यते। कात्यायनः पुनः "विपरीता प्रतिष्ठा" इत्येवाह। आप इत्यादि।—सायणाचार्य्य-विरचितैषमन्त्रस्य विवृतिः,—"त्रिसप्तान्ता एकविंशी प्रतिष्ठा। हे आपः! मम तन्वे शरीरार्थं वरूथं रोगनिवारकं भेषजम् औषधं पृणीत पूरयत, किञ्च ज्योक् चिरं सूर्य्यं दृशे द्रष्टुं नीरोगा वयं शक्नुयाम इति शेषः।"

(त) विराड्गायत्रीलक्षणमाह, तृतीयमिति।—तृतीयं विराडित्यर्थः, जागत-गायत्राभ्यां जागतगायत्रपादाभ्यामित्यर्थः। "जगत्या आदित्याः" (३।४ पि०) इत्यनेन

जागतपादस्य द्वादशाक्षरतया "गायत्र्या वसवः" ( ३।३ पि० ) इत्यनेन गायत्री-पादस्याष्टाक्षरतया च जागतगायत्राभ्यामित्यनेन द्वादशाष्टाक्षरयोर्लाभः। ततश्च द्वादशाक्षराष्टाक्षरपादाभ्यां विहिता विंशत्यक्षरा द्विपाद्विराड्गायत्रीति लक्षणम्। तदेवाह, तृतीयशब्देनेति।—एतदध्यायस्यसूत्राणां "गायत्र्या वसवः" इति प्रथमं सूत्रणं गायत्र्याः, ततः "जगत्या आदित्याः" इति द्वितीयं जगत्याः, अनन्तरञ्च "विराजो दिशः" ( ३।५ पि० ) इति विराजः, एवंरूपेण यः सूत्राणां पाठक्रमः तदपेक्षया विराजं-स्तृतीयतया तृतीयशब्देन विराजमेवाह इत्यर्थः। एवमाग्नेयच्छन्दःसारेऽपि एतादृशीं विराड्गायत्रीमुत्पश्यामः, यथा,—"छन्दश्चाथ तृतीयकम्। द्विपाद्द्वादशवस्वर्कैः" ( ३।४ आ० छ० ) इति। किञ्च द्वादशाक्षराष्टाक्षराभ्यां पादकल्पनेन द्विपादाया अस्या मेलनेन विंशत्यक्षरतया वैराजपादस्य च दशाक्षरत्वे तथैव द्विपादत्वसिद्धेस्तात्पर्य्यवशादेव विराडिति लभ्यते सूत्रेऽस्मिन् विराडित्यनुक्तेः। ऋक्प्रातिशाख्ये तु,—"सखे वाजेषु पादौ द्वौ जागतौ द्विपदोच्यते" ( १६।२३ ऋ० प्रा० ) इति द्वादशाक्षरद्विपादगायत्रीलक्षणं दृश्यते। सायणभाष्येऽपि,—"सखे वाजेषु इति यथोद्देशी चतुर्विंशत्यक्षरा द्विपदा" इति। शौनककात्यायनमते गायत्र्यधिकारे द्वादशाक्षराष्टाक्षरपादाभ्यां विराट्छन्दो नास्ति, भाष्येऽपि विराट् इत्येव नाम दृश्यते न तु विराड्गायत्री, विराडनुष्टुप्, उत वा विराट्पङ्क्तिरित्येतेषां केषामपि समुल्लेखो दृश्यते, केवलं "विंशतिका द्विपदा विराजः" इति द्विपदाविराड्लक्षणं दृश्यते; तथा "अयुञ्जन्त इन्द्र विश्वकृष्टीर्विदानासो निष्षिधो मर्त्यत्रा। मरुतां पृत्सुतिर्हासमाना स्वर्मीळ्हस्य प्रधनस्य सातौ॥" ( ऋक्० २अष्ट० ४अ० १म० २३अनु० १६९सू० २ऋ० ) इत्यस्या भाष्ये "द्वितीया चतुष्पदा विराट्, अथ चतुष्पदा विराट् दशकैः" इति च लक्षणं दृश्यते। पङ्क्त्यधिकारे च ऋक्प्रातिशाख्येऽपि "चत्वारो दशका विराट्" ( १६।५२ ऋ० प्रा० ) इत्येवं लक्षणं दृश्यते। हलायुधेन तु भाष्यकारादिमतमनुसृत्य विंशतिका द्विपदा विराट् इत्यनुशासनमवलम्ब्य च विंशत्यक्षरस्य द्विपादस्य विराट्संज्ञा कृता, तथा गायत्रपादस्य अष्टाक्षरत्वात् अष्टाक्षरैकपादाया अस्याः गायत्र्यधिकारे सन्निवेशश्च कृतः। वस्तुतस्तु "द्वाभ्यां विराट्स्वराजौ" ( ३।६० पि० ) इति वक्ष्यमाणसूत्रेण विराड्गायत्र्यादीनां विशेषलक्षणस्याभिहितत्वात् इदं पुनः द्विपदाया विराज एव सामान्यलक्षणं कृतमिति प्रतिभाति, भाष्यादौ तथा दर्शनात्। विराजो व्युत्पत्तिर्यथा—"विराड्विरमणाद्विराजनाद्वा" ( ३।१२ दैव० ब्रा० ) भाष्यं—"विराट् शब्दः 'रमु क्रीडायां' 'राजृ दीप्तौ' 'राध साध संसिद्धौ' इति त्रिभ्यो धातुभ्योऽन्यतरेणापि निष्पाद्यते धातुत्रयार्थस्य तस्मिन् सम्भवात्" इति। मध्या इत्यादि।

# त्रिपात्त्रैष्टुभैः ॥ १७ ॥

एकादशाक्षरैः पादैस्त्रिपात् विराड् नाम गायत्री भवति । तृतीयमित्यनुवर्त्तनीयम् । तत्रोदाहरणम् ।—

"दुहीयन्मित्रधितये युवाकु, राये च नो मिमीतं वाजवत्यै । इषे च नो मिमीतं धेनुमत्यै ॥" (ऋक्० १अष्ट० ८अ० १म० १७अनु० १२०सू० ९ऋ० )। (थ)

[ इति गायत्र्यधिकारः ] ।

---

—सायणभाष्यमस्याः,—"द्विपदा विराट् छन्दः, विंशतिका द्विपदा विराजः इति हि तल्लक्षणम् । धीराः मेधाविनो देवाः सजोषाः समानप्रीतयः सन्तः हे अग्ने । त्वां पदैः मार्गैः पादकृतैः लाञ्छनैः अनुग्मन् अन्वगमन् कीदृशं पश्वा अपहृतेन पशुना सह वर्त्तमानं तायुं न तायुरिति स्तेननाम यथा स्तेनः परकीयं पश्वादिधनम् अपहृत्य दुष्प्रवेशगिरिगह्वरे वर्त्तते तद्वत् गुहा चतन्तम् अद्भूपायां गुहायां गच्छन्तं वर्त्तमानं, चततिर्गतिकर्मा । तथा च तैत्तिरीयैरग्नेरप्सु प्रवेशः समाम्नायते । सनिलायत स अपः प्राविशदिति । यद्वा—अश्वत्थगुहायां गच्छन्तं वर्त्तमानं श्रूयते च—अग्निर्देवेभ्यो निलायत । अश्वरूपं कृत्वा सोऽश्वत्थे संवत्सरमतिष्ठदिति । तथा नमो युजानं हविर्लक्षणमन्नमात्मना संयुञ्जानं नमो वहन्तं देवेभ्यः अन्नं हविः वहन्तं यजत्राः यजनीयाः विश्वे सर्वे देवाः हे अग्ने ! त्वा त्वामुपसीदन् समीपं प्राप्नुवन् ददृशुरित्यर्थः । अध्ययनसमये द्वे द्वे ऋचौ चतुःपदामेकैकामृचं कृत्वा समाम्नायते" इति । पश्वा इत्यारभ्य वहन्तमित्यन्ता एका ऋक् विंशत्यक्षरा विराड्गायत्रीच्छन्द इत्यभिप्रायः । द्विपादमात्रविराट्छन्दसः उदाहरणं यथा,—"नृभिर्येमाणो हर्य्यतो विचक्षणो, राजा देवः समुद्रियः" (ऋक्० ७अष्ट० ५अ० १म० ७अनु० १०७सू० १६ऋ० )। भाष्यं यथा,—"नृभिर्येमाण इति षोडशी विंशत्यक्षरा द्विपदा विराट्" इति ।

(थ) एकादशाक्षरत्रिपाद्रूपाया विराड्गायत्र्या लक्षणमाह, त्रिपादिति ।—त्रैष्टुभैः, पादैरिति शेषः । "त्रिष्टुभो रुद्राः" (३।६ पि० ) इत्यनुशासनेन त्रैष्टुभैः इत्यनेन एकादशाक्षरपादानां लाभादाह,—एकादशेति । आग्नेयेऽप्युक्तं,—"त्रिपात्तु त्रैष्टुभैः स्मृतम्" (३।४ आ० छ०) इति। ऋक्प्रातिशाख्ये तु अनुष्टुबधिकारे छन्द इदं परिहश्यते न तु गायत्र्यधिकारे ; तथा च,—"दशाक्षरास्तिस्रो विराट् त्रयो वैकादशाक्षराः" (१६।२९ ऋ० प्रा० ) इति । भाष्यं,—"दशाक्षरास्त्रयः पादाः एकादशाक्षरा वा त्रयः

यस्याः पादा भवन्ति विराड्नाम सा अनुष्टुप् वेदितव्या" इति । कात्यायनेनाप्युक्त-मनुष्टुबधिकारे,—"दशकास्त्रयो विराट् एकादशको वा" (कात्या०) । दुहीयादि ।—सायणाचार्य्यकृतास्या व्याख्या यथा,—"दुहीयन्निति नवमी विराट् । हे अश्विनौ ! युष्मासु युवां कामयमानाः स्तुतिभिर्यावयितारः संयोजयितारः वा स्तोतारो मित्रधितये मित्राणां बन्धुजनानां धारणार्थं दुहीयन् युष्मत्सकाशात् धनानि दुहन्ति प्राप्नुवन्ति । अतो गोऽश्वान् अपि वाजवत्यै वाजयुक्ताय च राये धनाय मिमीतं कुरुत, तथा धेनुमत्यै धेनुभिर्युक्ताय, इषे अन्नाय च गोऽश्वान् मिमीतं कुरुतम्, अस्मभ्यं स्तोतृभ्यो बलयुक्तं धनं गोयुक्तमन्नञ्च प्रयच्छतमित्यर्थः" इति । शौनकेन तु आगतपादाभ्यां द्विपदा गायत्री तथा उष्णिग्गर्भा गायत्री इति द्विविधे अतिरिक्ते गायत्र्यौ उक्ते । तत्र प्रथमा "स नो वाजेषु" इत्यादिना प्राक् दर्शिता । तथा "षडक्षरः सप्ताक्षरस्तत एकादशाक्षरः । एषोष्णिग्गर्भा गायत्री ता मे अश्व्यानामिति ॥" (१६।२५ ऋ० प्रा०) इति । उदाहरणे यथाक्रमेण,—"स नो वाजेष्वविता पुरुवसुः पुरःस्थाता मघवा वृत्रहा भुवत्" (ऋक्० ६अष्ट० ४अ० ८म० ६अनु० ४६सू० १३ऋ०) इति । "ता मे अश्व्यानां हरीणां नितोशना । उतो नु कृत्व्यानां नृवाहसा ॥" (ऋक्० ६अष्ट० २अ० ८म० ४अनु० २६सू० २३ऋ०) । सायणभाष्यं,—"त्रयोविंशी उष्णिग्गर्भा षट्सप्तैकादशोष्णिग्गर्भेति लक्षणोपेतत्वात् ।" कात्यायनेन पुनः उष्णिग्गर्भा कृतीयसी इति द्विविधे अतिरिक्ते उक्ते यथा,—"षट्-सप्तैकादश उष्णिग्गर्भा । द्वौ षट्कौ सप्तकश्च कृतीयसी" इति । किञ्च प्रथम-पादस्याष्टाक्षरत्वे द्वितीयस्य दशाक्षरत्वे तृतीयस्य सप्ताक्षरत्वे च भुरिग्गायत्र्यपि दृश्यते "अष्टकौ दशकः सप्तको विद्वांसाविति सा भुरिक्" (१६।१७ ऋ० प्रा०) इति । उदाहरणं यथा,—"विद्वांसाविद्दुरः पृच्छेदविद्वानित्थापरो अचेताः । नू चिन्नु मर्त्ते अक्रौ ॥" (ऋक्० १अष्ट० ८अ० १म० १७अनु० १२०सू० २ऋ०) इति । भाष्ये तु प्रथमपादस्य षडक्षरत्वं द्वितीयस्य द्वादशाक्षरत्वमिति कृत्वा ककुप् इत्यभिहितम् । इह तु एतादृक् छन्दोलक्षणं न दृश्यते । अथ कात्यायनोक्ता गायत्र्यः यथा,—"प्रथमं छन्दस्त्रिपदा गायत्री । १ । पञ्चकाश्चत्वारः । २ । षट्कश्चैकः । २ । चतुर्थश्चतुष्को वा पदपङ्क्तिः । ४ । षट्सप्तैकादश उष्णिग्गर्भा । ५ । त्रयः सप्तकाः पादनिचृत् । ६ । मध्यमः षट्कश्चेदतिनिचृत् । ७ । दशकश्चेद्यवमध्या । ८ । यस्यास्तु षट्सप्तकाष्टकाः सा वर्द्धमाना । ९ । विपरीता प्रतिष्ठा । १० । द्वौ षट्कौ सप्तकश्च कृतीयसी ।" ११ । इत्येकादशविधा गायत्रीति निरूपितम् । तत्र त्रिप्रकाराः पदपङ्क्तयः पङ्क्तिच्छन्दसि भगवता सूत्रकारेण निवेशिताः कृतीयसीत्यधिका ; अन्यान्युक्तानि ।

अथ उष्णिगधिकारः।

## उष्णिक् गायत्रौ जागतश्च ॥ १८ ॥

यत्र गायत्रावष्टाक्षरौ पादौ, जागतश्च द्वादशाक्षरः, एवं त्रिभिः पादैरुष्णिङ्नाम छन्दो भवति। अत्र च क्रमो न विवक्षितः, पादसङ्ख्यामात्रं विधीयते। (द)

---

(द) गायत्र्यधिकारं समाप्य साम्प्रतमुष्णिगधिकारः प्रस्तूयते, उष्णिगिति।— अष्टाक्षरपादद्वयेन द्वादशाक्षरैकपादत्वेन च अष्टाविंशत्यक्षरा पादत्रयवती उष्णिगिति लक्षणम्। तथा चाग्नेये,—"उष्णिक्छन्दोऽष्टवर्णैः पादैर्वेदे प्रकीर्त्तितः" (३।५ चा० छ०) इति। उष्णिक्-पदव्युत्पत्तिमाह दैवतब्राह्मणे यथा,—"उष्णिगुत्-स्नानात् स्निह्यतेर्वा कान्तिकर्म्मणोऽपि वोष्णीषिणी वेत्यौपमिकम्" (३।४ दैव० ब्रा०) इति। भाष्यं यथा—"उत्पूर्वात् 'ष्णा शौचे' (अ० प०) इत्यस्मात् उष्णिक् शब्दः। तदेवाह—उत्स्नानात् उद्भूतस्नानवत्त्वादुष्णिक् वा। यद्वा—स्निह्यतेः 'ष्णिह प्रीतौ' (दि० प०) इति धातुः यतो यत् प्रीत्यात्मकं तत् कान्तमपि भवतीति कृत्वा कान्तिकर्म्मत्वं, स्निह्यते काम्यते इत्युष्णिगित्यर्थः, कान्तं ह्येतत् देवतानां छन्दः। अपि च वोष्णीषी उष्णीषवत्येवेत्यौपमिकम्, उपमाप्रयुक्तमभिधानमपेक्ष्योष्णिक् शब्दः" इति। अत्रेति।—अत्र सूत्रे पादसङ्ख्यामात्रं त्रिभिः पादैः उष्णिक् भवति इत्येवंरूपमेव विधीयते, किन्तु क्रमः गायत्रजागतपादानां पौर्वापर्य्यनिर्णयरूपः न निरूपितः, तस्य वक्ष्यमाणसूत्रेषु स्पष्टतया विहितत्वात् इति बोध्यम्। शौनकेन तु,—"अष्टाविंशत्य-क्षरोष्णिक् सा पादैर्वर्त्तते त्रिभिः। पूर्वावष्टाक्षरौ पादौ तृतीयो द्वादशाक्षरः॥" (१६।२६ ऋ० प्रा०) इत्यनेन क्रमोऽपि व्यवस्थितः, परन्तु एतल्लक्षणोक्तक्रमः आचार्य्येण वक्ष्यमाण-परोष्णिक्लक्षणेन सीकृतः, तच्च स्वयमेवाग्रे वक्ष्यते। कात्यायनेन पुनः,—"द्वितीयमुष्णिक् त्रिपदा" इति मात्रमेव उष्णिहः सामान्यलक्षणं कृतम्। एताभ्यां तु परोष्णिहो लक्षणं न कृतम्। सूत्रमिदमधिकारार्थमित्यभिप्रायः, "प्रथमसूत्रे उष्णिग्ग्रहणमधिकारार्थम्" इति वक्ष्यमाणोक्तेः। ततश्च सामान्य-तया सूत्रमिदं प्रवर्त्तते विशेषास्तु वक्ष्यमाणा एव, पादानां पौर्वापर्य्यनियमो-ऽपि तैरेव इति मन्तव्यम्। अधिकारार्थकत्वप्रख्यापनाय उदाहरणमपि नात्र प्रदर्शितम्।

## ककुम्मध्ये चेदन्त्यः ॥ १९ ॥

गायत्रयोः पादयोर्मध्ये जागतश्चेत् पादो भवति, तदा सा उष्णिक् ककुप्संज्ञां लभते। तत्रोदाहरणम्।—

"सुदेवः समहासति, सुवीरो नरो मरुतः स मर्त्यः।
यं त्रायध्वे स्याम ते॥" (ऋक्० ४अष्ट० ३अ० ५म० ४अनु० ५३सू० १५ऋ०)। (घ)

---

(घ) उष्णिग्भेदं दर्शयति, ककुबिति।—मध्ये, गायत्रीपादयोरिति शेषः। अन्त्यः जागतः पाद इत्यर्थः। उक्तञ्च आग्नेये,—"ककुबुष्णिक् वसुसूर्य्यवसुवर्णैश्च त्रिपाद्भवेत्" (३।५ आ० पु०) इति। अन्यत्राप्युक्तं,—"मध्यमे ककुप्" (१६।२७ ऋ० प्रा०)। उव्वटः,—"तस्मिन् द्वादशाक्षरे मध्यमे सति ककुप् भवति" इति। "मध्यमश्चेत् ककुप्" (कात्या०) इति। ककुभो निर्वचनमाह,—"ककुप् ककुद्रूपिणीत्यौपमिकम्" (३।५ दैव० ब्रा०)। भाष्यं—"ककुप्-शब्दोऽप्युपमा-प्रधानः, यथा वृषभस्य मध्यप्रदेशः ककुत्संज्ञकः उच्छ्रितो भवति एवं मध्यमपादस्य जागतत्वात् चतुरक्षरं ककुत्स्थानीयमस्यास्तीति ककुप्, दकारस्य पकारः। ककुदस्यावस्थायां लोपः इत्यस्मादसमासेऽपि अकारलोपः। ककुभशब्दस्य काकुभं दन्तधावनमित्यादौ अर्थान्तरदर्शनात् स्वाभिमतमर्थमाह"—"ककुप् च कुब्जश्च कुजतेर्वोब्जतेर्वा" (३।६ दैव० ब्रा०)। भाष्यं—"ककुप्-कुब्जशब्दौ कुजते-रुब्जतेर्वोत्पन्नौ। 'कुज कौटिल्यप्रतिष्टम्भविलेखनेषु' 'उब्ज आर्जवे' अत्र व्यत्यासार्थः। ततः कौटिल्य-व्यत्यासार्थकधातुद्वयस्यात्र सम्भवात् ककुप्शब्दः" इति। सुदेव इति।—माधवाचार्य्यविरचिता व्याख्या लिख्यते,—"आद्यापञ्चमीदशम्येकादशीपञ्चदश्यः ककुभः। हे समह! प्रशस्तवचनः समहशब्दः, हे पूजित मरुतां गण! सुदेवः कल्याणमरुत्सञ्ज्ञकदेवोपेतः असति भवति। हे नरः! नेतारः! हे मरुतः! समर्त्यः सुवीरः शोभनपुत्राद्युपेतश्च असति भवति। यं मर्त्यं त्रायध्वे पालयध्वे स एवं भवति ते वयं स्याम युष्मदीयाः" इति। अत्र द्वितीयपादे मर्त्यं इत्यत्र मर्त्तिय इति पाठात् द्वादशाक्षरत्वं, प्रथमस्त्वष्टाक्षर एव। तृतीये स्याम इत्यत्र सियाम इति पठनेन अष्टाक्षरपादसिद्धिः। उदाहरणान्तरं यथा,—"युष्माकं स्मा रथाँ अनु मुदे दधे मरुतो जीरदानवः। वृष्टी द्यावो यतीरिव" (ऋक्० ४अष्ट० ३अ० ५म० ४अनु० ५३सू० ५ऋ०) इति।

## पुर-उष्णिक् पुरतः ॥ २० ॥

पुरतश्चेज्जागतः पादः स्यात्, गायत्रौ च परतः, तदा पुर-उष्णिक् नाम। तत्रोदाहरणम्।—

"अप्स्वन्तरमृतमप्सु भेषज-मपामुत प्रशस्तये।
देवा भवत वाजिनः॥" (ऋक्० १अष्ट० २अ० १म० ५अनु० २३सू० १९ऋ०)। (न)

## परोष्णिक् परतः ॥ २१ ॥

जागतः पादः परतश्चेत् भवति, पूर्वौ च गायत्रौ, तदा परोष्णिक् नाम। "उष्णिक् गायत्रौ जागतश्च" (३।१८ पि०) इत्यनेन गतार्थमेतत्, विशेषसंज्ञाविधानार्थं पुनरुच्यते। प्रथमसूत्रे उष्णिग्ग्रहणमधिकारार्थम्। तत्रोदाहरणम्।—

"अग्ने वाजस्य गोमत, ईशानः सहसो यहो।
अस्मे धेहि जातवेदो महि श्रवः॥" (ऋक्० १अष्ट० ५अ० २म० १३अनु० ७९सू० ४ऋ०)। (प)

---

(न) पुर-उष्णिग्-लक्षणमाह, पुर-उष्णिगिति।—स्पष्टम्। अन्यैरप्युक्तं,— "पुर-उष्णिक् पुरतश्चेत् जागतः पादः ईरितः" (३।५पा० छ०) इति। "पुर-उष्णिक् सा तु तस्मिन् प्रथमे" (१६।२७ ऋ० प्रा०) इति। "तस्मिन् द्वादशाक्षरे प्रथमे सति पुर-उष्णिक् भवति" इति उव्वटव्याख्या। "आद्यो द्वादशकश्चेत् पुर-उष्णिक्" (का०या०) इति। अप्सु इत्यादि।—सायणभाष्यं,—"मेधातिथिः काण्व ऋषिः, अप्सु अन्तरित्येषा पुर-उष्णिक् प्रथमपादस्य द्वादशाक्षरेण पाद्यश्चेत् पुर-उष्णिगिति लक्षणसद्भावात् इति। अप्सु जलेषु अन्तः मध्ये अमृतं पीयुषं वर्त्तते तस्याब्विकारत्वात् अमृतं वा आप इति श्रुत्यन्तराच्च ; तथैवाप्सु भेषजमौषधं वर्त्तते, पुद्रोगनिवर्त्तकस्याप्स्याप्काश्यैवात्। उत अपि च तादृशीनामपां देवतानां प्रशस्तये प्रशंसार्थं हे देवाः ऋत्विगादयः ब्राह्मणाः, एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः इति श्रुत्यन्तरात्। वाजिनः वेगवन्तः भवत शीघ्रं स्तुतिं कुरुत इत्यर्थः।

(प) परोष्णिक्लक्षणमाह, परोष्णिगिति।—यथा च,—"परोष्णिक् परतः तथात्" (३।५ पा० छ०) इति। "उष्णिग्गायत्रौ" इत्यादिसामान्यसूत्रेणैव द्वादशा-

## चतुष्पादृषिभिः ॥ २२ ॥

सप्ताक्षरैश्चतुर्भिः पादैरुष्णिगेव भवति। तत्रोदाहरणम्।—
"नदं व ओदतीनां, नदं योयुवतीनाम्।
पतिं वो अघ्न्यानां, धेनूनामिषुध्यसि॥" (ऋक्० ६अष्ट० ५अ० ८म० ७अनु० ५८सू० २ऋ०)। (फ)
[इत्युष्णिगधिकारः]।

---

चरैकपादत्वे अष्टाक्षरद्विपादत्वे सति उष्णिक्छन्दः सिद्धमेव, पुनः कथमिदं लक्षणमित्याह, विशेषेत्यादि।—विशेषसंज्ञा ककुबुष्णिगिति नामविधानमेव अर्थः प्रयोजनमस्य, तदर्थमेव पुनरिदं सूत्रमित्यर्थः। अग्ने इत्यादि।—सायणाचार्य्यसम्पादिताऽस्या व्याख्या यथा,—"रहूगणपुत्रस्य गोतमस्यार्षम् अग्निर्देवता। हे सहसो यहो बलस्य पुत्र! अग्ने! गोमतः बहुभिः गोभिर्युक्तस्य वाजस्य अन्नस्य ईशानः ईश्वरः त्वमसि। अतः अस्मे अस्मासु हे जातवेदः! जातधन! जातानां वेदितर्वा अग्ने! महि प्रभूतं श्रवः अन्नं धेहि स्थापय" इति।

(फ) क्वचित् सप्ताक्षरचतुष्पादत्वेऽपि उष्णिक् भवति इति दर्शयितुमाह, चतुष्पादिति।—ऋषिभिः सप्तभिरक्षरैरित्यर्थः। तथा चाग्नेये,—"चतुष्पादृषिभिर्भवेत्" (३।५ अ० छ०) इति। शौनकेनाप्युक्तं—"सप्ताक्षैश्चतुर्भिर्ये नदं मंहीमहीति च। पादैरनुष्टुभौ विद्यादक्षरैरुष्णिहाविमे॥" (१६।२९ ऋ० प्रा०)। अथोव्वटभाष्यं,—"सप्ताक्षरैश्चतुर्भिः पादैः द्वे ऋचौ उष्णिहौ भवतः। पादैरनुष्टुभौ जानीयात। अक्षरैः कृत्वा उष्णिहौ भवतः। नदं व ओदतीनां मंहीमहि त्वा वयी इत्येते" इति। "चतुःसप्तका उष्णिगेव" (कात्या०) इति। नदं व इत्यादि।—सायणाचार्य्यकृता व्याख्याऽस्या यथा,—"प्रियमेधस्याङ्गिरसस्यार्षं द्वितीया नदं व इत्येषा चतुःसप्तकोष्णिक् इन्द्रो देवता। ओदतीनाम् ओदत्यः उषसः ओदती भास्वतीति तन्नामसु पाठात्, उषसां नदम उत्पादकमित्यर्थः. इन्द्रेण हि उषस उत्पद्यन्त इन्द्रस्यैव सूर्य्यत्वात्। विवस्वदिन्द्र युष्मा इति हि द्वादशादित्यमध्ये इन्द्रः पठितः, तादृशमिन्द्रं हे यजमानाः! वो युष्मदर्थम् आह्वयत इत्यर्थः। तथा योयुवतीनां सर्वत्र मिश्रयन्तीनां नदीनां नदं शब्दयितारं वो युष्मदर्थम् आह्वयामि। अघ्न्यानाम अहन्तव्यानां गवां पतिमाह्वये। अथ प्रत्यक्षकृता हे यजमान! त्वं धेनूनां क्षीरादिना प्रीणयित्रीणां गवामिषुध्यसि मन्नमिच्छसि" इति। एतदुदाहरणान्तरं यथा—"मंहीमहि त्वा वयम्, अस्माकं

अथानुष्टुबधिकारः।

## अनुष्टुप् गायत्रैः॥ २३॥

चतुष्पादित्यनुवर्त्तते। गायत्रैरष्टाक्षरैः पादैश्चतुष्पाच्छन्दः अनुष्टुप्संज्ञं भवति। तत्रोदाहरणम्।—

"गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः।

ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे॥" (ऋक्० १अष्ट० १अ० १म० ३अनु० १०सू० १ऋ०)। (व)

---

देव पूषन्। मतीनाञ्च साधनं विप्राणाञ्चाधवम्॥" (ऋक्० ७अष्ट० ७अ० १०मं० २अनु० २६सू० ४ऋ०) इति। न्यङ्कुशिरा तनुमध्या अनुष्टुब्गर्भा इति त्रिविधा उष्णिहः शौनककात्यायनाभ्यामधिका उक्ताः, यथा—"ददीरेक्ण इति त्वेषा ककुप्-न्यङ्कुशिरानिचृत्। एकादशोऽस्याः प्रथमः उत्तमश्चतुरक्षरः॥ ताभ्यां परः षडक्षरः प्रथा तनुशिरो नाम। आद्यः पञ्चाक्षरः पादः उत्तरेऽष्टाक्षरास्त्रयः। अनुष्टुब्गर्भेयोष्णिक् साऽगन्त्येऽस्ति पितुं न्विति॥" (१६।२०-२१-२२ ऋ० प्रा०) इति। "त्रैष्टुभजागतचतुष्का न्यङ्कुशिरा। एकादशिनोः परः षट्कस्तनुमध्या। आद्यः पञ्चकस्त्रयोऽष्टका अनुष्टुब्गर्भा" (कात्या०) इति। पिङ्गलेन तु एतादृश्य उष्णिहो नैव दर्शिताः।

(व) उष्णिगधिकारं समाप्य साम्प्रतमनुष्टुबधिकारः प्रारभ्यते, अनुष्टुबिति।— अनुवर्त्तते पूर्वस्मात् सूत्रादधिक्रियते इत्यर्थः। आर्षेयच्छन्दःसारेऽपि सामान्येन चतुष्पादित्येव दृश्यते यथा.—"सोऽष्टाक्षरैरनुष्टुप् स्याच्चतुष्पाच्च" (३।६ षा० छ०) इति। तथा "द्वात्रिंशदक्षरानुष्टुप् चत्वारोऽष्टाक्षराः समाः" (१६।२४ ऋ० प्रा०) इति। "तृतीयमनुष्टुप् चत्वारोऽष्टकाः" (कात्या०) इति च। अनुष्टुभो निर्वचनमाह दैवतब्राह्मणे,—"अनुष्टुबनुष्टोभनात्" (३।७ दैव० ब्रा०)। भाष्यं—"स्तोभति-र्वृत्यर्थः। गायत्रीतस्त्रसमाक्षरपादवृद्धेः। उक्तार्थे ब्राह्मणसम्मतिं दर्शयति—" "अन्वस्तौदिति हि ब्राह्मणम्" (३।८ दैव० ब्रा०)। भाष्यं—"निरुक्ते प्रकारान्तरेण ब्राह्मणवाक्यमुदाहृतम्। गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम्" इति। गायन्ति त्वेति।—सायणाचार्यव्याख्या—"गायन्तीति सूक्तस्य सप्तमद्वचा छन्दोविशेषस्यैवमनुक्रम्यते। गायन्ति द्वादशानुष्टुभं त्विति। तुहि ह वा

## त्रिपात् क्वचिज्जागताभ्याञ्च ॥ २४ ॥

अनुष्टुबित्यनुवर्त्तते। चकारात् गायत्रग्रहणाच्च। गायत्रे-णैकेन पादेन, ततो द्वाभ्यां जागताभ्यां क्वचित् त्रिपादनुष्टुबेव स्यात्। (भ)

## मध्येऽन्ते च ॥ २५ ॥

जागतयोः पादयोर्मध्ये अन्ते च यदा गायत्रः पादो भवति, तदाऽप्यनुष्टुबेव स्यात्। तत्र मध्यपक्षे उदाहरणम्।—

इत्यादि परिभाषायां तु-शब्दस्य सूत्रद्वये परिभावितत्वादस्य सूत्रस्य वक्ष्यमाणस्य चानुष्टुभत्वं द्रष्टव्यम्। हे शतक्रतो! बहुकर्म्मन् बहुप्रज्ञ वा इन्द्र! त्वा त्वां गायत्रिणः उद्गातारः गायन्ति स्तुवन्ति। अर्किणः अर्च्चनहेतुमन्त्रयुक्ता होतारः अर्क-मर्च्चनीयमिन्द्रमर्च्चन्ति शस्त्रगतैः मन्त्रैः प्रशंसन्ति। ब्रह्माणः ब्रह्मप्रभृतयः इतरे ब्राह्मणाः त्वा त्वामुद्‌येमिरे उन्नतिं प्रापयन्ति। तत्र दृष्टान्तः, वंशमिव यथा वंशाग्र नृत्यन्तः शिल्पिनः प्रौढ़ं वंशमुन्नतं कुर्वन्ति, यथा वा सन्मार्गैर्वर्त्तिनः स्वकीयं कुलमुन्नतं कुर्वन्ति तद्वत्। अर्का अर्च्चन्त्येभिरित्यर्काः मन्त्राः, तैरर्च्चनीयतया तदात्मक इन्द्रोऽपि लक्षणया अर्कः। अर्का मन्त्रा येषां सन्तीति अर्किणः होतारः" इति। अत्र द्वितीयपादे "अर्चन्त्यर्कमर्किणः" इति पदव्यूहेन पाठे अष्टाक्षरत्व-मवगन्तव्यम्।

(भ) अनुष्टुभो भेदविशेषमाह, त्रिपादिति।—क्वचिदित्यनेन चास्य न सार्व-त्रिकत्वं विवक्षितम्। जागताभ्यां द्वादशाक्षरपादाभ्याम्। अनुष्टुभो द्वात्रिंश-दक्षरात्मकत्वात् द्वादशाक्षरद्विपादेन अष्टाक्षरैकपादेन च तत्सिद्धिरिति आह, गायत्रेणैकेनेति।—वृत्तौ गायत्रपादस्य प्रथमोल्लेखात्, "त्रिपात् क्वचित्। अष्टार्क-सूर्य्यवर्णैः स्यात्" (३।७ मा० क०) इति लक्षणेऽपि आदौ अष्टपदोल्लेखदर्शनाच्च तथा "मध्येऽन्ते च" (३।२५ पि०) इति वक्ष्यमाणसूत्रे द्वितीयतृतीयपादयोर्विशेष-विधानाच्च अत्र प्रथमपादस्याष्टाक्षरत्वं द्वितीयतृतीययोश्च द्वादशाक्षरत्वमिति वृत्तिकाराभिप्रायः। परन्तु प्रथमपादस्याष्टाक्षरत्वम् ऋक्प्रातिशाख्यानुक्रमणिकादौ न दृश्यते, उदाहरणमप्यस्य दुर्लभम्। एतेनैवमनुमीयते यत् त्रिपादनुष्टुबधिकारार्थं सूत्रमिदं सूत्रकृता प्रणीतमिति दिक्।

"पर्य्यू षु प्र धन्व वाजसातये, परि वृत्राणि सक्षणिः।
द्विषस्तरध्या ऋणया न ईयसे ॥" (ऋक्० ७अष्ट० ५अ० ९म० ७अनु० ११०सू० १ऋ०)।

अन्तपदे उदाहरणम्।—

"मा कस्मै धातमभ्यमित्रिणे नो
मा कुत्रा नो गृहेभ्यो धेनवो गुः।
स्तनाभुजो अशिश्वीः॥" (ऋक्० १अष्ट० ८अ० १म० १७अनु० १२०सू० ८ऋ०)। (म)

[ इत्यनुष्टुबधिकारः ]।

---

(म) त्रिपादनुष्टुभः अन्यविधं भेदविशेषमाह, मध्ये इति।—जागतयोः पादयोः द्वादशाक्षरप्रथमतृतीयपादयोः मध्ये अन्तरे गायत्रः अष्टाक्षरः पादः, तथा द्वादशाक्षरप्रथमद्वितीयपादयोः अन्ते च अवसाने च अष्टाक्षरः पादश्चेत् भवेत् तदाऽपि त्रिपादनुष्टुबिति। आग्नेयेऽप्युक्तं,—"मध्येऽन्ते च क्वचिद्भवेत्" (३।६ अ० छ०) इति। मध्यपादाष्टाक्षरा त्रिपादनुष्टुप् पिपीलिकामध्यानाम्ना अन्तपादाष्टाक्षरा च कृतिनाम्ना शौनककात्यायनाभ्यामभिहिता; तथा च,—"यस्यास्त्वष्टाक्षरो मध्ये सा पिपीलिकमध्यमा" (१६।२६ ऋ० प्रा०) इति। "मध्ये चेदष्टकः पिपीलिकमध्या" (कात्या०) इति। "कृतिर्द्वौ द्वादशाक्षरावेकश्चाष्टाक्षरः परः" (१६।२५ ऋ० प्रा०) "जागतावष्टकश्च कृतिः" (कात्या०) इति। पर्य्यू ष्विति।—सायणाचार्य्यप्रणीतास्य व्याख्या—"पर्य्यू ष्विति द्वादशर्चं सप्तमं सूक्तं त्र्यरुण-त्रसदस्यू राजर्षी अस्य सूक्तस्य द्रष्टारौ, आदितस्तिस्रः पिपीलिकमध्या अनुष्टुभः द्वादशकाष्टकद्वादशकवत्यः। पवमानः सोमो देवता गतो विनियोगः। हे सोम! सु सुष्ठु वाजसातये अन्नलाभसदागमायैव परिप्रधन्व परितः प्रगच्छ। यद्वा—वाजसातये अन्नलाभाय सङ्ग्रामं प्रगच्छ। किञ्च सक्षणिः सहनशीलः त्वं वृत्राणि शत्रून् परिगच्छ। तदेवोच्यते—योऽस्माकम् ऋणयाः ऋणानां यापयिता त्वं द्विषः शत्रून् तरध्यै तरीतुं हन्तुम् ईयसे परिगच्छसि।" अन्तपदे— मा कस्मै इत्यादि।—"मा कस्मा इत्यष्टमी कृतिः जागतावष्टकश्च कृतिः इत्युक्तलक्षणसद्भावात्। हे अश्विनौ! अत्रिणे अत्रिं निरराधित्वं तस्मैकस्मैचिदपि

अथ बृहत्यधिकारः।

## बृहती जागतस्त्रयश्च गायत्राः ॥ २६ ॥

यदा एको जागतः पादः, त्रयश्च गायत्राः, तदा बृहती नाम छन्दो भवति। (य)

## पथ्या पूर्वश्चेत्तृतीयः ॥ २७ ॥

बृहतीत्यनुवर्त्तते। पूर्वः पादो जागतो यदि तृतीयो भवति, अन्ये च गायत्राः, तदाऽसौ बृहती पथ्या नाम। तत्रो-दाहरणम्।—

---

धर्तवे, नः अस्मान्, मा अभिधातम् आभिमुख्येन मा अवस्थापयतम् अपि च नः अस्माकं गृहेभ्यः सकाशात् स्तनाभुजः स्तनैर्वत्सान् मनुष्यांश्च पालयन्त्यः धेनवः गावः ; स्तनैर्भुञ्जन्ति पालयन्ति इति स्तनाभुजः क्विप् अन्येषामपि दृश्यते इति सांहितिको दीर्घ। अशिश्वीः शिशुना वत्सेन विरहिताः अस्मदीये गृहे अप्रयाता वा सत्यः अकुतश्चित् अस्माभिरगम्ये प्रदेशे मा गुः मा गच्छन्तु।" एतेन चतुष्पदा एका त्रिपदा च द्विविधा इति चतुर्विधा अनुष्टुभः पिङ्गलोक्ताः। शौनककात्यायनोक्ता विराट् काविराट् नष्टरूपा महापदपङ्क्तिश्च अनुष्टुभः इह नैव दृश्यन्ते। तासां लक्षणानि तत्र तत्रोक्तानि यथा,—"दशाक्षरास्त्रयो विराट् त्रयो वैकादशाक्षराः" (१६।३९ ऋ० प्रा०) इति। "दशकास्त्रयो विराट् एकादशकी वा" (कात्या०) इति। "नवको द्वादशो द्वूना ता विशांसेति काविराट्" (१६।३७ ऋ० प्रा०) इति। "नवकयोर्मध्ये जागतः काविराट्" (कात्या०) इति। "तैषामेकाधिकावन्त्यौ नष्टरूपा विपृच्छ्यानि" (१६।३८ ऋ० प्रा०) इति। "नववैराजत्रयोदशैर्नष्टरूपा" (कात्या०) इति। "अथ महापदपङ्क्तिस्तु षट्कोऽन्त्यः पञ्च पञ्चकाः" (१६।४० ऋ० प्रा०) इति। "पञ्च पञ्चकाः षट्कश्चैको महापदपङ्क्तिः" (कात्या०) इति।

(य) अनुष्टुबधिकारं परिसमाप्य अधिकारार्थं बृहत्याः सामान्यलक्षणमाह, बृहतीति।—जागतः द्वादशाक्षरः गायत्राः अष्टाक्षराः। अथ बृहत्या निर्वचनमाह, —"बृहती बृंहतेर्वृद्धिकर्म्मणः" (३।११ दैव० ब्रा०)। सायणभाष्यम्—"अस्याः अनुष्टुभः सर्वपादेष्वेकाक्षरवर्द्धनात् प्रवृत्तम्" इति।

"प्र यदित्था परावतः, शोचिर्न मानमस्यथ ।
कस्य क्रत्वा मरुतः कस्य वर्पसा, कं याथ कं ह धूतयः ॥"

इति । ( ऋक्० १अष्ट० ३अ० १म० ८अनु० ३९सू० १ऋ० ) । (२)

## न्यङ्कुसारिणी द्वितीयः ॥ २८ ॥

पूर्वश्चेदित्यनुवर्त्तते । पूर्वश्चेज्जागतः पादो द्वितीयो भवति, शेषाश्च गायत्राः, तदा न्यङ्कुसारिणी नाम बृहती भवति । तत्रोदाहरणम् ।—

(२) बृहतीभेदं पथ्याबृहतीलक्षणमाह, पथ्येति ।—पूर्वः जागतः पाद इत्यर्थः, "बृहती जागतस्त्रयश्च गायत्राः" इत्यत्र जागतपादस्य प्रथमाभिहितत्वात् । ततश्चेत् तृतीयः पादः द्वादशाक्षरः अन्ये प्रथमद्वितीयतुरीयपादाश्च अष्टाक्षराः स्युस्तदा पथ्यानामबृहतीत्यर्थः । तदुक्तमाग्नेये—"पूर्वको यदि तृतीयः पथ्या भवति" ( ३।७ आ० छ० ) इति । शौनककात्यायनाभ्यामियं बृहतीत्येव नाम्ना उक्ता न तु पथ्याबृहतीति । तदुक्तं—"चतुष्पदा तु बृहती प्रायः षट्त्रिंशदक्षरा । अष्टाक्षरास्त्रयः पादास्तृतीयो द्वादशाक्षरः ॥" ( १६।४२ ऋ० प्रा० ) । "चतुर्थं बृहती तृतीयो द्वादश" ( कात्या० ) इति । किञ्च "आ रात्रि पार्थिवं रजः पितुरप्रायि धामभिः । दिवः सदांसि बृहती वितिष्ठस आ त्वेषं वर्त्तते तमः ॥" ( ३४।३२ वा० स० ) इत्यत्र तु भाष्यकारेण पथ्याबृहतीत्येवोक्तम् । यथा—"रात्रिदेवत्या पथ्याबृहती" इति । प्र यदित्येति ।—अस्याः सायणभाष्यम्,—"अयुजो बृहत्यः, युजः सतोबृहत्यः । हे धूतयः ! स्थावरादीनां कम्पनकारिणो मरुतः ! यद्यदा मानं मननीयं युष्मद्बलं परावतः दूरात् इत्था अस्मादन्तरीक्षात् प्राप्य भूमौ प्रक्षिपथ । तत्र दृष्टान्तः, शोचिर्न तेज इव यथा सूर्यस्य तेजः अन्तरीक्षात् भूमौ प्रक्षिप्यते तद्वत् । तदानीं यूयं कस्य यजमानस्य क्रत्वा क्रतुना सङ्गच्छध्वे इति शेषः । तथा कस्य यजमानस्य वर्पसा स्तोत्रेण सङ्गच्छध्वे । कं यजमानमुद्दिश्य याथ देवयजनदेशं गच्छथ । कं ह कं खलु यजमानमनुगृह्णीथेति शेषः ।" अत्र प्रथमद्वितीयचतुर्थपादानां प्रत्येकमष्टाक्षरत्वात् तृतीयपादस्य द्वादशाक्षरत्वाच्च पथ्याबृहतीत्वमिति बोध्यम् ।

"मत्स्यपायि ते महः, पात्रस्येव हरिवो मत्सरो मदः।
वृषा ते वृष्ण इन्दु-र्वाजी सहस्रसातमः॥" (ऋक्० २अष्ट० ४अ० १म० २३अनु० १७५सू० १ऋ०)। (ख)

## स्कन्धोग्रीवी क्रौष्टुकेः॥ २९॥

इयमेव न्यङ्कुसारिणी क्रौष्टुकेराचार्य्यस्य मतेन स्कन्धोग्रीवी नाम। आचार्य्यग्रहणं पूजार्थम्। (ब)

## उरोबृहती यास्कस्य॥ ३०॥

इयमेव न्यङ्कुसारिणी यास्कस्याचार्य्यस्य मतेन उरोबृहती नाम। (भ)

---

(ख) बृहतीभेदं न्यङ्कुसारिणीमाह, न्यङ्कुसारिणीति।—द्वितीयपादस्य द्वादशाक्षरत्वे प्रथमतृतीयचतुर्थपादानामष्टाक्षरत्वे च न्यङ्कुसारिणी बृहतीति लक्षणम्। तदुक्तमाग्नेये—"द्वितीयो न्यङ्कुसारिणी" ( ३।८ आ० छ० )। "द्वितीये न्यङ्कुसारिणी" ( १६।४२ ऋ० प्रा० )। "द्वितीयश्चेत् न्यङ्कुसारिणी" ( कात्या० ) इति। मत्स्यपायीत्यादि।—सायणभाष्यं यथा—"आद्या स्कन्धोग्रीवी बृहती द्वितीयपादस्य द्वादशाक्षरत्वात् इतरेषां त्रयाणामष्टाक्षरत्वाच्च, द्वितीयश्चेत् न्यङ्कुसारिणी उरोबृहती वा स्कन्धोग्रीवी वा इत्युक्तलक्षणसद्भावात्। हे हरिवः! हरिभ्यां तद्वन्निन्द्र! महो महान् पूज्योऽयं सोमः पात्रस्येव तत्पात्रेणेव सोमपात्रेण यथा धार्य्यते सोमः तत्सदृशेन ते त्वया, तृतीयार्थे षष्ठी। यद्वा—पात्रस्येव ते तव स्वभूतो महो महान् सोम इति वा योजना; अपायि पीयते यतः पिबसि अतः मत्सि माद्यसि मादयस्व वा पात्रे यथा सोमः पूर्य्यते तथाऽत्यधिकं पिब, पीत्वा च मादयस्व इत्यर्थः, किञ्च वृष्णे ते अभिमतवर्षित्रे तुभ्यं, चतुर्थ्यर्थे षष्ठी; मत्सरः मदसाधनः मदः तर्पयिता वृषा वर्षिता इन्दुः क्लेदयिता आह्लादकारीत्यर्थः, वाजी अन्नवान्, अन्नवत्तृप्तिसद्भावादन्नवानित्युच्यते। सहस्रसातमः अपरिमितदातृतमः सहस्रपुरुषसम्भजनपर्य्याप्तभक्त्यति-शयो वा, एवं महानुभावः सोमः सम्पादितः तं पिब इत्यर्थः।"

(ब-भ) मतान्तरेण न्यङ्कुसारिण्या नामान्तरे आह द्वाभ्यां सूत्राभ्यां, स्कन्धोग्रीवी उरोबृहतीति।—स्पष्टार्थे। तथा चोक्तमाग्नेये—"द्वितीयो न्यङ्कुसारिणी। स्कन्धोग्रीवी

## उपरिष्टाद्बृहत्यन्ते ॥ ३१ ॥

यदा जागतः पादोऽन्ते भवति, शेषाश्च गायत्राः, तदा उपरिष्टाद्बृहती नाम। तत्रोदाहरणम्।—

"सखायस्त्वा ववृमहे, देवं मर्त्तास ऊतये।
अपां नपातं सुभगं सुदीदितिं सुप्रतूर्त्तिमनेहसम्॥"
( ऋक्० ३अष्ट० १अ० ३म० १अनु० ९सू० १ऋ० )। (घ)

---

क्रोष्टुकिः स्यात् पक्षे पुरोबृहत्यपि॥" ( ३।८ चा० छ० ) इति। "द्वितीये न्यङ्कुसारिणी। स्कन्धोग्रीव्युरोबृहती येषेणा प्रतिजानते॥" १६।४३ ऋ० प्रा० ) इति। "द्वितीयश्चेत् न्यङ्कुसारिणी उरोबृहती स्कन्धोग्रीवी वा" ( कात्या० ) इति।

( घ ) बृहतीभेदमुपरिष्टाद्बृहतीमाह, उपरिष्टादिति।—अन्ते चतुर्थपादे इत्यर्थः। अन्यत् स्पष्टम्। अन्यैरप्येवमेव लक्षणमुक्तं, तथा च—"उपरिष्टाद्बृहत्यन्ते" (३।९ चा० छ० ) इति। "उपरिष्टाद्बृहत्यन्ते" ( १६।४३ ऋ० प्रा०) इति। "अन्त्यश्चे-दुपरिष्टाद्बृहती" ( कात्या० ) इति। सखाय इति।—अस्याः सायणभाष्यं यथा—"सखायस्त्वेति नवमं सूक्तं वैश्वामित्रम्। अत्रेयमनुक्रमणिका—सखायो नव बार्हतं त्रिष्टुबन्तमिति। अन्त्या त्रिष्टुप् शिष्टा अष्टौ बृहत्यः। विश्वामित्रः स्तौति—हे अग्ने! सखायः सोमाज्यादिहविष्प्रदानेन उपकारकत्वान्मित्रभूताः, मर्त्तासः मनुष्याः ऋत्विजः वयम् अपां नपातम् अपां नप्तारं सुभगं शोभनधनयुक्तं सुदीदितिं शोभनदीप्तिं सुप्रतूर्त्तिं शोभनप्रतरणं कर्मानुष्ठातृभिः सुखेन गन्तव्यम्, अनेहसम् उपद्रवरहितम् एतादृशं देवं त्वाम् ऊतये रक्षणाय ववृमहे वृणीमहे" इति। अत्र ववृमहे इत्यन्तः प्रथमः पादः तथा ऊतये इत्यन्तश्च द्वितीयः, सुभगमित्यन्तश्च तृतीयः पादः सर्वः अष्टाक्षरः, अन्त्यः चतुर्थपादः द्वादशाक्षरः इत्युपरिष्टाद्बृहती। अत्र हि सायणेन बृहत्येवोक्ता न तूपरिष्टाद्बृहती। भाष्यसम्मतमुपरिष्टाद्बृहत्या विस्पष्टोदाहरणं यथा—"न तमंहो न दुरितं देवासो अष्ट मर्त्यम्। सजोषसो यमर्य्यमा मित्रो नयन्ति वरुणो अति द्विषः॥" ( ऋक्० ८अष्ट० ७अ० १०म० १०अनु० १२६सू० १ऋ०) इति। भाष्यं यथा—"न तमित्यष्टर्चं चतुर्दशं सूक्तं शिलूषपुत्रस्य कुल्मलबर्हिषस्यार्षं वामदेवपुत्रस्य अंहोमुचो वा वैश्वदेवम् अष्टमी त्रिष्टुप् शिष्टा उपरिष्टाद्बृहत्यः द्वादशकाद्यष्टक-त्रौ उपरिष्टाद्बृहती अन्त्यश्चेत् उपरिष्टाद्बृहतीति हि तल्लक्षणम्" इति।

## पुरस्ताद्बृहती पुरः ॥ २२ ॥

स एव जागतः पादः पूर्वश्चेत् भवति, शेषाश्च गायत्राः, तदा पुरस्ताद्बृहती नाम, "बृहती जागतस्त्रयश्च गायत्राः" (३।२६ पि०) इत्यनेनैव गतार्थमेतत्; संज्ञाविशेषप्रदर्शनार्थं पुनरुच्यते। तत्रोदाहरणम्।—

"महो यस्पतिः शवसो असाम्या, महो नृम्णस्य तूतुजिः।
भर्त्ता वज्रस्य धृष्णोः, पिता पुत्रमिव प्रियम् ॥" (ऋक्० ७अष्ट० ७अ० १०मं० २अनु० २२सू० ३ऋ०)। (स)

## क्वचिन्नवकाश्चत्वारः ॥ २३ ॥

क्वचिद्वेदे नवाक्षराश्चत्वारः पादा दृश्यन्ते, साऽपि बृहत्येव। तत्रोदाहरणम्।—

---

(स) बृहतीविशेषपुरस्ताद्बृहतीलक्षणमाह, पुरस्तादिति।—पुरस्तात् अग्रतः, प्रथमे जागतपादत्वादियं संज्ञा। अन्यैरप्युक्तं—"पुरस्ताद्बृहती पुरः" (३।९ जा० छ०) इति। "पुरस्ताद्बृहती नाम प्रथमे द्वादशाक्षरे" (१६।४३ ऋ० प्रा०) इति। "आद्यश्चेत् पुरस्ताद्बृहती" (कात्या०) इति। सामान्यसूत्रस्य विशेषलक्षणेष्वपि प्रवेशात् प्रागुक्तसूत्रेणैव सिद्धे कथमिदं पुनरुच्यते इत्याह, संज्ञेति।—संज्ञाविशेषस्य पुरस्ताद्बृहतीनामरूपस्य प्रदर्शनार्थं ज्ञापनार्थं वेदे तादृशनामकच्छन्दसः समुल्लेख-दर्शनादिति भावः। महो इत्यादि।—भाष्यमस्याः,—"कुहेति पञ्चदशर्चं षष्ठं सूक्तम् ऐन्द्रं पञ्चदशी त्रिष्टुप् पञ्चमीसप्तमीनवम्यस्तिस्रोऽनुष्टुभः शिष्टाः पुरस्ताद्बृहत्यः आद्यद्वादशकत्वाष्टकवती पुरस्ताद्बृहती। यः इन्द्रः महो महतः शवसो बलस्य पतिः ईश्वरः असाम्या आङ् मर्यादायाम् आ समाप्तेः अनन्तगुण इत्यर्थः, महो महतः नृम्णस्य धनस्य च तूतुजिः क्षोहभ्यः प्रेरकः, किञ्च धृष्णोः शत्रूणां धर्षकस्य वज्रस्य स्वकीयस्यायुधस्य भर्त्ता य इन्द्रो धारयिता स इन्द्रोऽस्मान् पातु इति शेषः। तत्र दृष्टान्तः, पिता पुत्रमिव प्रियं यथा पिता प्रियम् ईप्सितं सुतं पाति तद्वत्।" असाम्या इत्यन्तः प्रथमपादः द्वादशाक्षरः। असाम्या इत्यत्र 'असामिया' धृष्णोः इत्यत्र 'धृष्णुयोः' इति व्यूहेन पादाक्षरपूरणं बोध्यम्।

"तं त्वा वयं पितो वचोभिः, गावो न हव्या सुषूदिम।
देवेभ्यस्त्वा सधमाद-मस्मभ्यं त्वा सधमादम्॥" (ऋक्० २अष्ट० ५अ० १म० २४अनु० १८८सू० ११ऋ०)। (ह)

(ह) नवाक्षरचतुष्पादबृहतीविशेषमाह, क्वचिदिति।—क्वचिदित्यनेनास्या असार्वत्रिकत्वमभिहितम्। नवाक्षरपादचतुष्टयेन षट्त्रिंशदक्षरत्वादस्य बृहतीमध्ये परिगणनम्। तथा चाग्रेऽप्याह—"क्वचिन्नवकाश्चत्वारः" (३।१९ पि० छ०) इति। शौनकेनापि नवाक्षरपादा बृहत्युक्ता यथा—"एकानस्ये पितुस्तोमि नवाक्षरपदोत्तमा" (१६।४७ ऋ० प्रा०) इति। भाष्यकारेणापि दर्शितम्—"उत्तमा चान्त्या एका नवाक्षरपादा विद्यते सापि बृहत्येव। तं त्वा वयं पितो वचोभिः" इति। "चतुर्नवका बृहत्येव" (कात्या०) इति। तत्रैव "द्वयोश्चोपेदमाहार्षं सर्वे व्यूहे नवाक्षराः" (१६।४८ ऋ० प्रा०) इत्यपरं सूत्रम्। एतत्सूत्रीयभाष्यं यथा—"उपेदमुपपर्चनम्। आहार्षं त्वा विदं त्वा इत्येतयोश्च द्वयोः ऋचोः सर्वे व्यूहे नवाक्षराः पादाः भवन्ति, साऽपि बृहत्येव" इति। सायणेन तु एतेषामनुष्टुप्त्वमेवाङ्गीकृतं न तु बृहतीत्वम्; यथा—"उपेदमित्यन्ता अनुष्टुप् शिष्टाश्चतस्रस्त्रिष्टुभः" इति (ऋक्० ४अष्ट० ६अ० ६म० ३अनु० २८सू० ८ऋ०) तथा "मुचामीति पञ्चर्चं दशमं सूक्तं प्रजापतिपुत्रस्य यक्ष्मनाशनाख्यस्यार्षम् अन्त्यानुष्टुप् शिष्टास्त्रिष्टुभः" (ऋक्० ४अष्ट० ८अ० १०म० १२अनु० १६२सू० ५ऋ०) इति। मुचामीत्यादिसूक्तस्य पञ्चमी ऋक् आहार्षमित्यादि। तदत्र एवंविधमहाजनविरोधः सुधीभिरेव समाधेयः। यत्तु केचित् "युवं ह्यास्तं महोरन्" (ऋक्० १अष्ट० ८अ० १म० १७अनु० १२०सू० ७ऋ०) इत्यादिकमत्रोदाहरन्ति तदुभयमतविरुद्धत्वादेवापास्तम्। तथा अत्र सायणेन विष्टारबृहतीत्वेवमुक्तं, भाष्यं यथा—"युवं हि इति सप्तमी विष्टारबृहती। अष्टिनोर्मध्ये दशकौ विष्टारबृहती इति तल्लक्षणोपेतत्वात्" इति। प्रातिशाख्येऽपि—"अष्टिनोर्दशकौ मध्ये विष्टारबृहती ध्रुवम्" इत्येवाभिहितम्। एतेन विपक्षोदाहरणमस्य मृग्यमित्यायातम्। तं त्वेति।—सायणेन तु अस्या अनुष्टुब्त्वमेवाङ्गीकृतं न तु बृहतीत्वम्; तथा च सायणभाष्यं—"पितुं न्वित्येकादशर्चमष्टमं सूक्तम् आगस्त्यमन्नदेवताकं गायत्रम् आद्या अनुष्टुब्गर्भोष्णिक् आद्यः पञ्चकः वर्गोऽष्टका अनुष्टुब्गर्भा इत्युक्तत्वात्। तृतीया पञ्चमी षष्ठी सप्तम्येकादशी चेति पञ्चानुष्टुभः। हे पितो! अन्नरूप! तं तादृशं स्तुतं त्वा त्वां महानुभावं वचोभिः स्तुतिवाग्भिः वयं सुषूदिम आस्वादयामो रसान्। तत्र दृष्टान्तः,—गावो न हव्या गावो यथा हवींषि उत्पादयन्ति तथा त्वत्प्रसादात् सोमं

## वैराजौ गायत्रौ च ॥ ३४ ॥

यत्र वैराजौ पादौ पूर्वौ दशाक्षरौ भवतः, ततो गायत्रौ, साऽपि बृहती। (क)

---

सुषूदिम किमर्थं कीदृशञ्चेति चेदुच्यते—देवेभ्यः इन्द्रादिभ्यः तदर्थं त्वा त्वां सधमादं तेषां सह मादयितारं न केवलं देवेभ्य एव किन्तु सधमादम् अस्माभिः सह मादयितारं हुतशेषरूपं त्वा त्वाम् अस्मभ्यमस्मदर्थमपि" इति। अक्षरव्यूहेन पादाक्षरपूरणमवगन्तव्यम्।

(क) अन्यविधबृहतीमाह, वैराजाविति।—यत्र प्रथमद्वितीयपादौ दशाक्षरौ तृतीयचतुर्थौ चाष्टाक्षरौ तत्र बृहतीति सूत्रार्थः। आग्नेयेऽप्युक्तं—"दिग्दिग्-वस्वष्टवर्णिका" (३।८पा० छ०) इति। किन्तु शौनककात्यायनाभ्यामीदृशी बृहती नोक्ता, ताभ्यान्तु—"षट्किनोर्दशकौ मध्ये विष्टारबृहती युवम्" (१६।४६ऋ० प्रा०)। भाष्यम्—"षट्किनोः पादयोः मध्ये दशकौ यस्याः सा विष्टारबृहती। युवं श्यावं महीरन्" इत्यादिकं तस्योदाहरणञ्च दर्शितम्। "अष्टिनोर्मध्ये दशकौ विष्टार-बृहती" (कात्या०) इति विष्टारबृहतीनाम्ना भिन्नविधा बृहती प्रदर्शिता। पिङ्गलेन च यथा विषमपदा बृहती न प्रदर्शिता तथा इयमपीति मन्ये। उदाहरणन्तु अस्याः स्वयमेव मृग्यम्। युवं हीति सम्पूर्णमन्त्रस्तु—"युवं श्यावं महीरन् युवं वा शिरतंयतम्। ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः॥" इति। केचिदत्र विष्टारबृहत्या लक्षणान्तरानुक्त्या अन्यत्र च तदुक्त्या सूत्रमिदमेवं व्याख्यानयन्ति "यत्र गायत्रौ पादौ वैराजपादयोः पुरः अन्ते च भवतः प्रथमचतुर्थौ पादौ अष्टाक्षरौ द्वितीयतृतीयौ च दशाक्षरौ इत्यर्थः साऽपि बृहती मतान्तरोक्ता विष्टारबृहती-त्यभिप्रायः" इति। केचिदत्र "अपो विश्वस्य दुस्सचितं रायो अमर्त्यं। आदायुषे जात-वेदो बृहन्त त्वमग्ना देवां उषर्बुधः॥" (ऋक्० १अष्ट० ३अ०१म० ८अनु० ४४सू० १ऋ०) इत्युदाहरणत्वेन परिकल्प्य पादमन्यथाकृत्वा पठन्ति; तथा हि,—चित्रमित्यन्तः दशाक्षरैकपादः, आदायुषे इत्यन्तश्चापरः पादः, अमर्त्यं इत्यत्र अमर्तियं इति व्यूहेन दशाक्षरः। बृहा त्वमित्यत्र बृहा तुवम् इति व्यूहेन तदन्तः अष्टाक्षरः अपरः पादः, ततोऽप्यष्टाक्षरः पादः इति तेषामभिप्रायः। भाष्ये तु "प्रथमादृतीयाया: अयुजः बृहत्यः" इत्येवंदर्शनात् बृहतीयं, न तु एतल्लक्षणोक्ता बृहतीति।

त्रिभिर्जागतैर्महाबृहती ॥ ३५ ॥

त्रिभिर्जागतैः पादैश्छन्दो महाबृहती नाम। तस्यो-दाहरणम्।—

"अजीजनो अमृत! मर्त्येष्वा, ऋतस्य धर्मन्नमृतस्य चारुणः। सदासरो वाजमच्छा सनिष्यदत्॥" (ऋक्० ७अष्ट० ५अ० ९म० ७अनु० ११०सू० ४ऋ०)। (ख)

सतोबृहती ताण्डिनः ॥ ३६ ॥

इयमेव महाबृहती ताण्डिन आचार्य्यस्य मतेन सतोबृहती नाम। (ग)

[इति बृहत्यधिकारः]।

---

(ख) बृहतीविशेषमहाबृहतीमाह, त्रिभिरिति।—जागतैः द्वादशाक्षरैः, द्वादशाक्षरत्रिपाद्रूपा षट्त्रिंशदक्षरा महाबृहतीति लक्षणम्। तदुक्तमाग्नेये,—"महाबृहती जागतैः स्यात् त्रिभिः" (३।८अ० छ०) इति। शौनककात्यायनाभ्यान्तु इयमूर्द्ध्वबृहतीत्युक्तम्। यथा—"त्रयो द्वादशका यस्याः सोर्द्ध्वबृहती विराट्" (१६।४४ऋ० प्रा०) इति। तथा "त्रिजागतोर्द्ध्वबृहती" (कात्या०) इति। अजीजन इति।—सायणकृता व्याख्येयं—"पर्य्यूष्विति द्वादशर्चं सप्तमं सूक्तं त्र्यरुण-त्रसदस्यू राजर्षी अस्य सूक्तस्य द्रष्टारौ। आदितस्तिस्रः पिपीलिकमध्या अनुष्टुभः द्वादशकाष्टकद्वादशकवत्यः ततः षडूर्द्ध्वबृहत्यः द्वादशकत्रयवत्यः अथ दशम्याद्यास्तिस्रो विराजः पवमानः सोमो देवता। हे अमृत! मरणधर्मरहित सोम! त्वम् ऋतस्य सत्यभूतस्य चारुणः कल्याणस्यामृतस्य उदकस्य धर्मन् धारके अन्तरीक्षे सूर्य्यमजीजनः। किमर्थं मर्त्येष्वा मनुष्येष्वभिमुखीभवनाय। किञ्च सनिष्यदत् सम्भजन् त्वं वाजमच्छ सङ्ग्राममभिलक्ष्य सदा असरः सरसि गच्छसि" इति।

(ग) महाबृहत्या नामान्तरमाह, सतोबृहतीति।—स्पष्टम्। तथा आग्नेये—"सतोबृहत्यपि ताण्डिनः" (३।१५अ० छ०) इति। शौनककात्यायना-भ्यामपरे च द्वे पिपीलिकामध्याबृहती-विषमपदाबृहत्यौ उक्ते, यथा—"त्रयोदशा-क्षरौ च द्वौ मध्ये चाष्टाक्षरो भवेत्। अभि वो वीरमित्येषा ज्ञेया पिपीलिकमध्यमा॥ अष्टकाद्द्वादशकेन परोऽष्ट च यदि पादाः। बृहती विषमपदा सा वर्णिता;

## अथ पङ्क्त्यधिकारः ।

## पङ्क्तिर्जागतौ गायत्रौ च ॥ ३७ ॥

यदा द्वौ जागतौ पादौ तथा गायत्रौ च, तदा पङ्क्तिर्नाम छन्दो भवति । (घ)

---

सुसनितरय ॥" (१६।४९—५० ऋ० प्रा०) इति । "त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकामध्या । नवकाष्टैकादशाष्टिनो विषमपदा" (कात्या०) इति । अनयोरुदाहरणे क्रमेण यथा—"अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम् । इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा ॥" (ऋक्० ६अष्ट० ४अ० ८म० ६अनु० ४६ सू० १४ ऋ०) इति । "सनितः सुसनितरुग्र चित्र चेतिष्ठ सूनृत । प्रासहा सम्राट् सहुरिं सहन्तं भुज्युं वाजेषु पूर्व्यम् ॥" (ऋक्० ६अष्ट० ४अ० ८म० ६अनु० ४६सू० २०ऋ०) इति च । इह सायणेनापि भाष्ये—"अभि वो वीरमिति चतुर्दशी पिपीलिकमध्या बृहती त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकमध्येत्युक्तत्वात् । सनितः सुसनितरिति विंशी विषमपदा बृहती नवकाष्ट्येकादशाष्टिनो विषमपदेत्युक्तत्वात्" इत्यादिना तथैव प्रतिपादितम् । पिङ्गलोक्ता पिपीलिकमध्या बृहती तु द्वादशाक्षरपादद्वयमध्ये अष्टाक्षरपादत्वे एव सम्भवतीति विभाव्यम् ।

(घ) बृहत्यधिकारे अवसितिमाप्ते साम्प्रतं पङ्क्त्यधिकारं प्रस्तौति, पङ्क्तिरिति ।—जागतौ द्वादशाक्षरौ, गायत्रौ अष्टाक्षरौ । द्वादशाक्षरपादद्वयत्वेनाष्टाक्षरपादद्वयत्वेन च चतुष्पादरूपा चत्वारिंशदक्षरा पङ्क्तिरिति लक्षणम् । तथा च "पङ्क्तिश्छन्दः स्यात् सूर्य्याकाष्टाष्टवर्णकैः" (३।१० आ० छ०) इति । अधिकारार्थं लक्षणमिदम्; तेन वक्ष्यमाणलक्षणानि अस्याः प्रपञ्चा भविष्यन्तीति बोद्धव्यम् । पङ्क्तिपदस्य व्युत्पत्तिर्यथा—"अथ निर्वचनमाह,—पङ्क्तिः पञ्चिनी पञ्चपदा" (३।१२ दैव० ब्रा०) । भाष्यं—"पञ्चसङ्ख्यायोगात् पङ्क्तिशब्दः पञ्चत्वप्रदर्शनं पञ्चपदेति ।" अनया च व्युत्पत्त्या पङ्क्तेः पञ्चपदत्वमेव सामान्यतः सिध्यति । शौनककात्यायनाभ्यामपि तदेव मतं प्रमाणीकृतं यथा—"पङ्क्तिरष्टाक्षराः पञ्च" (१६।५१ ऋ० प्रा०) इति । "सा पङ्क्तिरिष्यते यस्याः अष्टाक्षराः पञ्च पादा भवन्ति" इति उव्वटः । "पञ्चमं पङ्क्तिः पञ्चपदा" (कात्या०) इति । पङ्क्तेश्चत्वारिंशदक्षरात्मकतया अत्र कात्यायनवचनं अक्षरसङ्ख्यायामनुक्तावपि प्रतिपाद-

## पूर्वौ चेदयुजौ सतः-पङ्क्तिः ॥ ३८ ॥

यत्र पूर्वोद्दिष्टौ पादावयुजौ भवतः, प्रथमतृतीयौ पादौ जागतावित्यर्थः, द्वितीयचतुर्थौ च गायत्रौ, तच्छन्दः सतः-पङ्क्तिर्नाम। तत्रोदाहरणम्।—

"यं त्वा देवासो मनवे दधुरिह, यजिष्ठं हव्यवाहन!।
यं कण्वो मेध्यातिथिर्धनस्पृतं, यं वृषा यमुपस्तुतः॥"

( ऋक्० १अष्ट० ३अ० १अ० ८अनु० ३६सू० १० ऋ० )। (ङ)

---

मष्टाक्षरत्वमर्थबलादेव सिध्यति। यत्तु जागतौ गायत्रौ इत्यादिना चतुष्पादत्वमुक्तं तद्विशेषविधिरिति बोद्धव्यम्।

(ङ) पङ्क्तिभेदं सतः-पङ्क्तिं लक्षयति, पूर्वाविति।—पूर्वौ प्रथमोक्तौ जागतौ पादौ इत्यर्थः, द्वादशाक्षराविति यावत्, चेत् अयुजौ प्रथमतृतीयौ। चतुष्पादरूपायाः पङ्क्तेः प्रथमतृतीयपादयोः द्वादशाक्षरत्वे तात्पर्य्यत एव द्वितीय-चतुर्थपादयोरष्टाक्षरत्वमिति वृत्तावुक्तं द्वितीयचतुर्थौ गायत्राविति। तथा चाग्नेये —"पूर्वौ चेदयुजौ सतःपङ्क्तिश्च" (३।११ आ० छ० ) इति। एषैव सतःपङ्क्तिः शौनककात्यायनाभ्यां सतोबृहतीनाम्ना पठिता, यथा—"युग्मावष्टाक्षरौ पादाव-युजौ द्वादशाक्षरौ। सा सतोबृहती नाम" ( १६।५२ ऋ० प्रा० ) इति। "अयुजौ जागतौ सतोबृहती" ( कात्या० ) इति। यं त्वेति।—भाष्यं यथा—"अष्टमे अनुवाके अष्टौ सूक्तानि तत्र प्रवोयह्वम् इति त्रिंशदृचं प्रथमं सूक्तं घोरपुत्रः कण्व ऋषिः अयुजो बृहत्यः तृतीयपादस्य द्वादशाक्षरत्वात् युजः सतो-बृहत्यः प्रथम-तृतीययोः पादयोर्द्वादशाक्षरत्वात्। अग्निर्देवता। हे हव्यवाहन! हविषो वाहकाग्ने! मनवे मनोरनुग्रहाय देवासः सर्वे देवाः यजिष्ठम् अतिशयेन पूज्यं यष्टृतमं वा यं त्वा त्वाम् इह देवयजनदेशे दधुः धृतवन्तः मेध्यातिथिः मेध्यैरतिथिभिर्युक्तः कण्वः एतन्नामको महर्षिः यं त्वां धनस्पृतं धने प्रीणयितारं कृत्वा दधे इति शेषः, तथा वृषेन्द्रो यं त्वां दधे तथा उपस्तुतः अन्योऽपि स्तोता यजमानो यं त्वां दधे स त्वं संसीदस्वेति पूर्वेणान्वयः। संसीदस्व बर्हिषि उपविश" इति। अस्याः ऋचो दशमीत्वादयुक्त्वं ततश्च सतो-बृहतीत्वमिति भाष्यकारमतम्।

## विपरीतौ च ॥ ३९ ॥

यदा तावेव पादौ विपरीतौ भवतः, तदाऽपि सतः-पङ्क्तिरेव। अयमर्थः,—प्रथमतृतीयौ पादौ गायत्रौ, द्वितीयचतुर्थौ च जागतौ। तत्रोदाहरणम्।—

"य ऋष्व: श्रावयत्सखा, विश्वेत् स वेद जनिमा पुरुष्टुतः।
तं विश्वे मानुषा युगेन्द्रं हवन्ते तविषं यतस्रुचः॥"

(ऋक्० ६अष्ट० ४अ० ८म० ६अनु० ४६सू० १२ ऋ०)। (च)

## आस्तारपङ्क्तिः परतः ॥ ४० ॥

यदा जागतौ पादौ परौ भवतः, गायत्रौ च पूर्वौ, तदा आस्तारपङ्क्तिर्नाम। तत्रोदाहरणम्।—

---

(च) विपरीतसतः-पङ्क्तिमाह, विपरीताविति।—चकारेण पूर्वतः सतः-पङ्क्तिरित्यधिक्रियते। तथा च पाणेये—"विपरीतकौ" (३।११ पा० छ०) इति। कात्यायनेन तु "युजौ चेद्विपरीता" इति सूत्रं विदधता विपरीतसतोबृहती इत्येवास्याः नाम इति प्रतिपादितम्। परन्तु "विपरीता विपर्य्यये" (१६।५४ ऋ० प्रा०) इत्यस्य भाष्ये विपरीता-पङ्क्तिरिति नाम दृश्यते, यथा—"तेषां विपर्य्यये युग्मौ द्वादशाक्षरौ अयुजौ अष्टाक्षरौ सा विपरीता-पङ्क्तिर्नाम वेदितव्या" इति। सायणेन पुनः कात्यायनमतमाश्रित्य विपरीता-सतोबृहतीयमित्येव प्रतिपादितम्। य ऋष्व इति।—अस्याः सायणभाष्यं—"य ऋष्व इति द्वादशी विपरीता-सतोबृहती प्रथमतृतीययोरष्टाक्षरवती द्वितीयचतुर्थयोर्द्वादशाक्षरा च युजौ चेत् विपरीता इत्युक्तत्वात्। यः इन्द्रः ऋष्वः दर्शनीयः श्रावयत्सखा श्रावयन्तः सखायः ऋत्विजः यस्य स तादृशः श्रावयत्सखा पुरुष्टुतः बहुभिः यजमानैः स्तुतः यः इन्द्रः स विश्वेत् सर्वाण्यपि जनिम जन्मानि प्राणिनां वेद जानाति तं तविषं बलवन्तम् इन्द्रं विश्वे सर्वेऽपि अध्वर्य्वादयः यतस्रुचः स्वीकृतहविष्काः सन्तः मानुषा मनुष्यसम्बन्धिनः युगा युगानि कालान् सर्वेषु कालेषु हवन्ते आह्वयन्ति स्तुवन्ति" इति।

"भद्रं नो अपि वातय, मनो दक्षमुत क्रतुम् ।
अधा ते सख्ये अन्धसो वि वो मदे,
रणन् गावो न यवसे विवक्षसे ॥" (ऋक्० ७अष्ट० ७अ०
१०म० २अनु० २५सू० १ऋ० )। (छ)

## प्रस्तारपङ्क्तिः पुरतः ॥ ४१ ॥

यदा जागतौ पादौ पूर्वौ भवतः गायत्रौ च परतः, तदा प्रस्तारपङ्क्तिर्नाम। "पङ्क्तिर्जागतौ गायत्रौ च" (३।३७

---

(छ) आस्तारपङ्क्तिमाह, आस्तारेति।—परतः पश्चात, जागतौ पादाविति शेषः। तृतीयचतुर्थपादयोर्द्वादशाक्षरत्वे प्रथमद्वितीयपादयोरष्टाक्षरत्वे आस्तारपङ्क्तिरिति फलितार्थः। तदुक्तं—"परादास्तारपङ्क्तिका" (३।११ श्रा० छ० ) इति। शौनकेन तु—"आस्तारपङ्क्तिरादितः" (१६।५५ ऋ० प्रा० ) इति लक्षणं क्रतम्। "आदौ अष्टाक्षरौ अन्त्यौ द्वादशकौ सा आस्तारपङ्क्तिर्नाम" इति उव्वटभाष्यम्। "युग्मावष्टाक्षरौ" (१६।५३ ऋ० प्रा०) इति सूत्रे प्रथम एव अष्टाक्षरपादद्वयग्रहणादत्र आदितः इत्युक्तं तेन न कश्चिद्विरोधः। तथा च—"पादेष्वेऽष्टाक्षरौ विद्यात् सोपसर्गेषु नामसु" (१६।५३ ऋ० प्रा० ) इति। अत्र उव्वटः,—"आस्तारपङ्क्तिरित्येवमादिषु सोपसर्गेषु नामसु आदितः अन्ततः मध्यतः इत्येवमादिषु अष्टाक्षरौ पादौ विद्यात्" इति। "अन्तौ चेदास्तारपङ्क्तिः" (कात्या० ) इति। भद्रं नो इत्यादि।—सायणभाष्यं—"भद्रमित्येकादशर्चं नवमं सूक्तं तुह्यादिपरिभाषया इदमप्यास्तारपाङ्क्तं सोमदेवताकम्। हे सोम! त्वं नोऽस्मदीयं मनः भद्रं कल्याणं वातय गमय अस्माकं मनः शुभसङ्कल्पं कुर्वित्यर्थः। तथा दक्षमुत दक्षमपि दक्ष इति हर्षं सर्वव्यापिनमन्तरात्मानमपि भद्रं शुभकारित्वलक्षणं प्रापय अस्माकमन्तरात्मानं शुभकारिणं कुर्वित्यर्थः। उत अपि च क्रतुं प्रज्ञानं भद्रं शुभाध्यवसायलक्षणं प्रापय शुभाध्यवसायिनं कुर्वित्यर्थः। अध अथ स्तोतारः ते तव सख्ये सुत्यक्षोदत्वेऽव्ययदृत्वलक्षणे सखित्वकर्मणि रणन् रमन्ताम्। तत्र दृष्टान्तः, गावो न यवसे यथा धेनवो घासे रमन्ते प्रीतिं कुर्वन्ति तद्वत्। कस्मिन् सति अन्धसः सोमाख्यस्यान्नस्य सम्बन्धिनि वः तव विमदे विविधसोमजन्यमदनिमित्ते सति कस्मादेवं यस्मात् विवक्षसे महान् भवसि" इति।

पि० ) इत्यनेन गतार्थमिदं, संज्ञाविशेषज्ञापनार्थं पुनरुच्यते । तत्रोदाहरणम् ।—

"महि द्यावापृथिवी ! भूतमुर्वी, नारी यह्वी न रोदसी सदं नः । तेभिर्नः पातं सह्यस, एभिर्नः पातं शूषणि ॥" ( ऋक्० ८अष्ट० ४अ० १०म० ८अनु० ८३सू० १ऋ० )। (ज)

## विष्टारपङ्क्तिरन्तः ॥ ४२ ॥

यदा जागतौ पादौ मध्ये भवतः आद्यन्तयोश्च गायत्रौ, तदा विष्टारपङ्क्तिर्नाम । तत्रोदाहरणम् ।—

---

(ज) प्रस्तारपङ्क्तिमाह, प्रस्तारेति ।—पुरतः आदितः, जागतौ पादौ इति शेषः । अत आह, यदेत्यादि ।—"पङ्क्तिर्जागतौ गायत्रौ च" ( ३।३७ पि० ) इत्यत्र जागतपादस्य प्रथमाभिहितत्वादधिकृतस्यापि तस्य पुरत इत्यनेन सम्बन्धस्य न्याय्यत्वादिति भावः । तथा चाग्नेयेऽपि—"प्रस्तारपङ्क्तिः पुरतः" ( ३।११ आ० छ० )। शौनकेन पुनः,—"प्रस्तारपङ्क्तिरन्ततः" ( १६।५६ ऋ० प्रा० ) इति लक्षणं विदधताऽपि पूर्ववत् अन्ततः इत्यस्य प्रथमोक्तेन अष्टाक्षरौ इत्यनेन सम्बन्धमङ्गीकृत्य विरोधावसरः नैव दत्तः । कात्यायनेन तु—"आद्यौ चेत् प्रस्तारपङ्क्तिः" इति लक्षणं कृतवता आद्यौ पुरतः स्थितौ जागतौ पादौ इत्येवोक्तम् । सायणभाष्येऽपि —"आद्यौ जागतौ द्वौ गायत्रौ सा प्रस्तारपङ्क्तिः" इति । संज्ञाविशेषेति ।—पङ्क्तिरित्यादि यदुक्तं तत् सामान्यत्वप्रतिपादनार्थं, प्रस्तारपङ्क्तिरिति विशेष-नामप्रतिपादनार्थं तु सूत्रमिदं पुनः कृतमित्यर्थः, अन्यथा भाष्यादौ इयं प्रस्तार-पङ्क्तिरियमास्तारपङ्क्तिरित्याद्युल्लेखादसङ्गतिरेव स्यादिति भावः । महीत्यादि ।—सायणभाष्यं—"शिष्टा नव प्रस्तारपङ्क्तिच्छन्दस्काः, आद्यौ द्वौ जागतौ ततो द्वौ गायत्रौ सा प्रस्तारपङ्क्तिः । हे द्यावापृथिवी ! द्यावापृथिव्यौ युवां महि अत्यन्तं यथा भवति तथा उर्वी विस्तीर्णे भूतं भवतं, किञ्च यह्वी महत्यौ रोदसी द्यावापृथिव्यौ नारी न स्त्रियाविव नोऽस्माकं सदं सदा भवतं, किञ्च युवां शूषणि नोऽस्माकं प्रसुवले युष्मदीयैरेभिः पालनैः पातं रक्षतं, किञ्च युष्मदीयैस्तेभिः तैः पालनैः नोऽस्माकं सह्यसः अतिशयेन पश्चादभिभवितुः शत्रोरपि पातं रक्षतम्" इति ।

"अग्ने! तव श्रवो वयो, महि भ्राजन्ते अर्चयो विभावसो!।
बृहद्भानो! शवसा वाजमुक्थ्यं, दधासि दाशुषे कवे!॥"
(ऋक्० ८अष्ट० ७अ० १०म० ११अनु० १४०सू० १ऋ०)। (झ)

## संस्तारपङ्क्तिर्बहिः॥ ४३॥

यदा तावेव जागतौ पादौ बहिर्भवतः, मध्ये च गायत्रौ, तदा संस्तारपङ्क्तिर्नाम। तत्रोदाहरणम्।—

"पितुभृतो न तन्तुमित् सुदानवः, प्रतिदध्मो यजामसि।
उषा अप स्वसुस्तमः, संवर्त्तयति वर्त्तनिं सुजातता॥"
(ऋक्० ८अष्ट० ८अ० १०म० १२अनु० १७२सू० ३-४ऋ०)। (ञ)

---

(झ) विष्टारपङ्क्तिमाह, विष्टारेति।—अन्तर्मध्ये, जागतौ पादौ इति शेषः। ततश्च प्रथमचतुर्थयोरष्टाक्षरत्वे मध्यपादयोश्च द्वादशाक्षरत्वे सति चत्वारिंशदक्षरा विष्टारपङ्क्तिरिति निष्कर्षः। तदुक्तं—"विष्टारपङ्क्तिरन्तश्चेत्" (३।१२ प्रा० छ०) इति। "विष्टारपङ्क्तिर्बाह्यतः" (१६।५८ ऋ० प्रा०) इति शौनकसूत्रे तु पूर्ववत् बाह्यतः प्रथमचतुर्थयोरष्टाक्षरौ इत्यर्थः। "मध्यमौ चेद्विष्टारपङ्क्तिः" (कात्या०) इत्यत्र तु मध्य एव इत्युक्तम्। अग्ने तवेत्यादि।—सायणभाष्यम्—"अग्ने तवेति षड्टचं द्वादशं सूक्तं पावकगुणविशिष्टोऽग्निः ऋषिः शुद्धाग्निर्देवता आद्या विष्टारपङ्क्तिः अष्टकद्विर्द्वादशाष्टकवती। हे अग्ने! तव वयोऽन्नं श्रवः श्रवणीयं प्रशस्यं हविरात्मकस्य तस्य मन्त्रसंस्कृतत्वेन प्रशस्तत्वात् अन्नेषु मध्ये तवैवान्नं श्रेष्ठमित्यर्थः। हे विभावसो! विशिष्टदीप्तिर्विभा सा एव वसु धनं यस्य तादृशाग्ने! अर्चयः दीप्तयः महि महत् बहुलं भ्राजन्ते। हे बृहद्भानो! प्रौढदीप्ते! कवे! क्रान्तदर्शिन्नग्ने! एवं महानुभावस्त्वं शवसा बलेन उपेतम् उक्थ्यं प्रशस्यं, यद्वा—उक्थः यज्ञः तद्योग्यं वाजमन्नं दाशुषे हवींषि दत्तवते यजमानाय दधासि ददासि प्रयच्छसि" इति।

(ञ) संस्तारपङ्क्तिमाह, संस्तारेति।—बहिः आद्यन्तयोः प्रथमचतुर्थयोः पादयोरित्यर्थः, जागतौ पादौ इति शेषः। प्रथमचतुर्थपादयोर्द्वादशाक्षरत्वे द्वितीयतृतीययोश्चाष्टाक्षरत्वे संस्तारपङ्क्तिरिति वाक्यार्थः। "बहिः संस्तारपङ्क्तिका"

## अक्षरपङ्क्तिः पञ्चकाश्चत्वारः ॥ ४४ ॥

पञ्चाक्षरैश्चतुर्भिः पादैरक्षरपङ्क्तिर्नाम छन्दः। ननु चत्वारिंशदक्षरा पङ्क्तिः, तत् कथं पञ्चकाश्चत्वार इत्युच्यते ? अत्रोत्तरम्—"द्वावप्यल्पशः" ( ३।४५ पि० ) इत्यस्मात् सिंहावलोकितन्यायेनाल्पग्रहणमनुवर्त्तते, तेन पङ्क्तेरल्पत्वं विशेषात् प्रतिपादितं भवति। तत्रोदाहरणम्।—

"आपश्चिदस्मै, पिन्वन्त पृथ्वी-र्वृत्रेषु शूरा, मंसन्त उग्राः ॥" ( ऋक्० ५अष्ट० ३अ० ७म० ३अनु० ३४सू० ३ऋ० )। (ट)

---

( ३।१२ वा० छ०) इति। "संस्तारपङ्क्तिर्मध्यतः" ( १६।५७ ऋ० प्रा० ) इति सूत्रे मध्यत इत्यस्य पूर्वपूर्ववदर्थो बोध्यः। "बाह्यतो चेत संस्तारपङ्क्तिः" (कात्या०) इत्यत्र बाह्यतो बहिः आगतौ पादौ इत्यर्थः। पितु इति।—ऋग्विधसुव्यक्टेन संस्तारपङ्क्तेरुदाहरणत्वेन ऋक्प्रातिशाख्यभाष्ये उपन्यस्ता, अस्माभिरपि तदुक्तिमनुसृत्यैवात्र उद्धृता, परन्तु सायणेन द्विपदा विराट् इत्येवाभिहितम् ; तथा च सायणभाष्यं यथा— "आधाहि इति चतुर्दशमेकविंशं सूक्तम् आङ्गिरसस्य संवर्त्तस्यार्षम् उषोदेवताकं अनन्तोऽपि विंशतिका द्विपदा विराजः। पितुभृतो न भरस्य भर्त्तार इव सुदानवः शोभनदाना वयं तन्तुमित् तन्तुं विस्तीर्णमेव प्रतिदधः उषसं प्रति उपायनरूपेण धारयामः। तेन च यज्ञेन तामुषसं यजामसि। इयम् उषाः स्वसुः भगिन्याः रात्रेः सम्बन्धि तमः अन्धकारम् अपवर्त्तयति आत्मीयेन तेजसा अपगमयति। सुजातता सुजातत्वम् आत्मनः सुप्रजातत्वञ्च वर्त्तनिं स्वं प्रापयति" इति। अत्र पूर्वार्द्धरूपैका परार्द्धरूपा चापरा ऋक्, मन्त्रद्वयसम्मेलनेन पुनरुदाहरणत्वमस्य सिद्धम्। शुद्धोदाहरणमस्य मृग्यम्।

(ट) अक्षरपङ्क्तिलक्षणमाह, अक्षरेति।—पञ्चकाः पञ्चाक्षराः इत्यर्थः। चत्वारः, पादाः इति शेषः। पञ्चाक्षरचतुष्पादरूपत्वेन विंशत्यक्षरा अक्षरपङ्क्तिर्नाम छन्द इति विवेकः। चत्वारिंशदिति।—"पङ्क्तिर्जागतो गायत्री च" ( ३।३७ पि०) इति सामान्यसूत्रेण द्वादशाक्षरपादद्वयाष्टाक्षरपादद्वयमेलनेन पङ्क्तेश्चत्वारिंशदक्षरत्वमिति भावः। सिंहावलोकितन्यायेनेति।—सिंहो यथा कञ्चिन्मृगं हत्वाऽग्रे गच्छन्नन्योऽपि कश्चिन्मृगश्चेत् स्यात्तदा तमपि हन्यामिति बुद्ध्या पृष्ठदेशं पुरोदेशञ्चावलोकयति

## द्वावप्यल्पशः ॥ ४५ ॥

पञ्चकग्रहणमनुवर्त्तते । पञ्चाक्षराभ्यां पादाभ्यामल्पशःपङ्क्तिर्नाम छन्दो भवति, क्वचिदेव वेदे न सर्वत्र । (ठ)

## पदपङ्क्तिः पञ्च ॥ ४६ ॥

पञ्चका इत्यनुवर्त्तते । यदा पञ्चाक्षराः पञ्च पादा भवन्ति, तदा पदपङ्क्तिर्नाम छन्दः । तत्रोदाहरणम् ।—

---

हन्ति च दृष्टिपथमागतं मृगादिकमिति प्रसिद्धं तथा एकस्य शब्दस्य पुरतः पृष्ठे च यत्र उभयोरन्वयः तत्रैव सिंहावलोकितन्यायो बोध्यः. अत्र च उत्तरसूत्रस्थस्य अल्पश इति शब्दस्य अनेनापि सूत्रेण सम्बन्धादस्य न्यायस्य प्रवृत्तिः । एवञ्च उत्तरसूत्रात् अल्पश इत्यधिकृत्य ततो न्यूनत्वेऽपि पङ्क्तिविशेषो भवतीत्यभिप्रायः । आग्नेयेऽप्युक्तम् —"अक्षरपङ्क्तिः पञ्चकाश्चत्वारः" (३।१२ आ० छ०) इति । शौनकेन पुनः द्विपदाया: विराजः पञ्चाक्षरान् पादान् विधाय अक्षरपङ्क्तिरुक्ता । यथा— "विराजो द्विपदाः केचित् सर्वा आहुश्चतुष्पदाः । कृत्वा पञ्चाक्षरान् पादान् तांस्तथाऽक्षरपङ्क्तयः ॥" (१७।६४ ऋ० प्रा०) इति । कात्यायनस्तु गायत्रीमध्ये "पञ्चकाश्चत्वारः" इति सूत्रं विधाय गायत्रीभेदं पदपङ्क्तिं पठितवान् । आपांश्चदिति ।—अत्रापि शौनकमतमनुसृत्यैवास्माभिः ऋगियमुदाहरणत्वेन प्रदर्शिता, भाष्यकारेण पुनरियं द्विपादविराट्छन्दोनिबद्धा इत्युक्तं, तथा च सायणभाष्यं— "तृतीये अनुवाके द्वाविंशति सूक्तानि तत्र प्रघ्नन्तीति पञ्चविंशत्यृचं प्रथमं सूक्तम् । अत्रेयमनुक्रमणिका प्रघ्नन्ति पञ्चाधिका वैश्वदेवम् । आद्या एकविंशतिर्द्विपदा······वसिष्ठ-ऋषिः आद्या एकविंशतिर्द्विपदा विंशत्यक्षरा विराजः । इन्द्रोऽस्मिन्नृचे स्तूयते शुभ्राः शुभ्राः प्रघ्नन्ताना आपश्चिदापोऽप्यस्मा इन्द्राय पिन्वन्त प्यायन्ते हवेषु उपद्रवेषु सत्सूर्णा ऊर्णासेनांस्त्रिणी वा शूरा योद्धारोऽपि मंसन्ते इममेवेन्द्रं स्तुवन्ति" इति ।

(ठ) अल्पशःपङ्क्तिमाह. द्वाविति ।—द्वाविति पादविशेषणं, द्वौ पादाविन्यर्थः । अधिकृतपञ्चाक्षरेण तस्य सम्बन्धः ; ततश्च द्वौ पञ्चाक्षरौ पादौ चेद्भवतः तदा अल्पशःपङ्क्तिर्नाम छन्दो भवतीत्यर्थः । उक्तञ्च—"अल्पशो द्वयम्" (३।१२ आ० छ०) इति । क्वचिदेव वेदे इत्यनेन सर्वत्रैवास्य उदाहरणदुर्घटता वृत्तिकारेण प्रकाशीकृता, अत एव उदाहरणमपि न दर्शितमिति मन्तव्यम् ।

"इन्द्रं जुषस्व, प्रवहायाहि, शूर ! हरिह ! ।
पिबा सुतस्य, मतिर्न मधोः, चकानश्चारु मदाय ॥"
( साम० ५प्र० ७ख० ३प्र० २१सू० १ऋ० ) । ( ङ )

( ङ ) पदपङ्क्तिलक्षणमाह, पदपङ्क्तिरिति ।—पञ्च, पादा इति शेषः। उक्तञ्चाग्नेये—"पदपङ्क्तिः पञ्च भवेत्" (३।१२ आ० छ०) इति । शौनकस्तु इदं छन्दः गायत्र्यधिकारे भूरिक्पदपङ्क्तिनाम्ना उक्तवान् न तु पङ्क्त्यधिकारे । किञ्च अन्त्यपादस्य षडक्षरत्वेऽपि भूरिक्पदपङ्क्तिर्भवति इत्यप्याह । यथा—"पञ्चकाः पञ्च षड् वाऽन्त्यः पदपङ्क्तिर्हि सा भूरिक्" ( १६।१५ ऋ० प्रा० ) इति । "पञ्चकाश्चत्वारः षट्कश्चैकः" ( कात्या० ) इत्यनेन कात्यायनोऽपि गायत्र्यधिकारे एव पञ्चाक्षरपादचतुष्टयषडक्षरैकपादरूपां पदपङ्क्तिमाह । पञ्चाक्षरपञ्चपादाया अस्याः शुद्धोदाहरणं दुर्लभम् । शौनकेन तु—"अधा ह्यन्द्रेति च दृचो घृतमग्ने तमिद्यथः" ( १६।१६ ऋ० प्रा० ) इत्यनेनास्या उदाहरणं प्रदर्शितम् । उव्वटः पुनः "इन्द्र जुषस्व" इत्यादि ऋचमुल्लिख्य "एवमष्टाक्षरैर्विना पञ्चकाः पञ्च पादा भवन्ति" इत्येवंरूपेण पञ्चाक्षरपञ्चपादां पदपङ्क्तिमाह । इन्द्रेति।—अस्या भाष्यं—"यानि मया हवींषि दत्तानि तानि प्रवह आयाहि आगच्छ । शूर ! वीर्यवन् ! उपसर्गाक्षराणि हरिह अथवा हरितवर्णा हया यस्य स हरिहयः तस्य सम्बोधनं क्रियते हे हरिह ! छान्दसो यकारलोपः । पिबा सुतस्य सोमस्य उपसर्गाक्षराणि मतिर्न मधोश्चकानः चारु शोभनः मदाय अश्वाय" इति । त्रयस्त्रिंशदक्षराया अस्याः ऋचः अष्टाक्षरपरित्यागेन पञ्चविंशत्यक्षरत्वमिति उव्वटाभिप्रायः। षडक्षरान्त्यपादायाः शौनकायुक्तायाः पदपङ्क्तेरुदाहरणं यथा—"एभिर्नो अर्कैः भवा नो अर्वाङ्, स्वर्ण ज्योतिः। अग्ने ! विश्वेभिः, सुमना अनीकैः ॥" ( ऋक्० ३अष्ट० ५अ० ४म० १अनु० १०सू० ३ऋ०) इति । तत्र भाष्यम्—"इदं क्षरमपि सूक्तं पदपङ्क्तिच्छन्दस्कं पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्की वा इत्युक्तलक्षणत्वात्" इति । ज्योतिरित्यत्र जियोतिरिति व्यूहेन पादाक्षरपूरणमवगन्तव्यम । पिङ्गलाचार्य्येण पञ्चाक्षरचतुष्पादषडक्षरैकपादरूप-पदपङ्क्तिलक्षणं यदिह न कृतं तत्रायमभिप्रायः,—पञ्चाक्षरपञ्चपादरूपायाः एकपादस्य एकाक्षरवृद्ध्या षडक्षरत्वेन "ऊनाधिकेनैकेन निचृद्भूरिजौ" ( ३।५९ पि० ) इति वक्ष्यमाणलक्षणेन भूरिक्पदपङ्क्तित्वं सिद्धमेव किं लक्षणान्तरेण । प्रातिशाख्येऽपि शौनलक्षणायाः पङ्क्तेर्गायत्र्यधिकारे भूरिक्पदपङ्क्तित्वमेवाङ्गीकृतम् ।

## चतुष्कषट्कौ त्रयश्च ॥ ४७ ॥

चकारः पञ्चका इत्यनुकर्षणार्थः। यदा प्रथमश्चतुरक्षरः पादः, द्वितीयः षडक्षरः, ततस्त्रयः पञ्चाक्षराः, तदा पञ्चपदा पदपङ्क्तिरेव। तत्रोदाहरणम्।—

"अधा ह्यग्ने !, क्रतोर्भद्रस्य, दक्षस्य साधोः।
रथीर्ऋतस्य, बृहतो बभूथ॥" (ऋक्० ३अष्ट० ५अ० ४म० १अनु० १०सू० २ऋ०)। (ढ)

---

(ढ) प्रकारान्तरेण पदपङ्क्तिलक्षणमाह, चतुष्केति।—चतुष्कषट्कौ चतुरक्षर-षडक्षरौ। आग्नेयेऽप्युक्तं—"चतुष्कं षट्ककं त्रयम्" (३।१२ आ० छ०) इति। तथा "द्वौ वा पादौ चतुष्कश्च षट्कश्चैकश्चि पञ्चकाः" (१६।१५ ऋ० प्रा०) इति। भाष्यं यथा—"द्वौ पादौ एकः चतुष्कः एकः षट्कः त्रयश्च पञ्चाक्षराः" इति। कात्यायनः पुनः,—"पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा" (कात्या०) इत्याह। सायणोऽपि इदमेव मतं भाष्ये समर्थितवान्। उदाहरणमस्य यथा—"अग्ने! तमद्या-श्वं न स्तोमैः, क्रतुं न भद्रं, हृदिस्पृशम्। ऋध्यामा त ओहैः॥" (ऋक्० ३अष्ट० ५अ० ४म० १अनु० १०सू० १ऋ०) इति। अत्रादिपादत्रयस्य पञ्चाक्षरत्वं चतुर्थस्य चतुरक्षरत्वमन्त्यस्य च षडक्षरत्वम्। पिङ्गले आग्नेये प्रातिशाख्ये च सूत्रनिर्देशानुसारात् पादाक्षर-सङ्ख्यायाः क्रमाभिप्रायेण हलायुधव्याख्यानं सङ्गतं प्रतिभाति; उव्वटव्याख्याऽपि एतन्मतानुसारिण्येव, किन्तु तथाविधमुदाहरणं दुर्लभम्। एतच्च मतद्वैधं सुधीभिरेव समाधेयम्। अधा ह्यग्ने इत्यादि।—अस्याः सायणभाष्यम्—"इदं कृत्स्नमपि सूक्तं पदपङ्क्तिच्छन्दस्कं पञ्चकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपङ्क्ति-रित्युक्तलक्षणसद्भावात्। अधा हि इदानीमेव हे अग्ने! त्वं क्रतोः अस्मदीयस्य यागस्य रथीर्नेता बभूथ भवसि कीदृशस्य यागस्य भद्रस्य भजनीयस्य दक्षस्य प्रवृद्धस्य साधोः अभीष्टफलानां साधकस्य ऋतस्य सत्यभूतस्य बृहतो महतः" इति। अधा ह्यग्ने इति प्रथमपादस्य चतुरक्षरत्वेऽपि द्वितीयपादस्य षडक्षर-त्वाभावात् पञ्चमपादस्य च पञ्चाक्षरत्वाभावात् अत्रोदाहरणे न कथञ्चिदपि वृत्तिकारकृतव्याख्यासङ्गतिर्दृश्यते। वस्तुतस्तु इदं पुनः अधा हि अग्ने इति व्यूहेन पञ्चाक्षरचतुष्पादायाः षडक्षरान्त्यपादायाश्च पदपङ्क्तेः उदाहरणं ज्ञेयम्।

## पथ्या पञ्चभिर्गायत्रैः ॥ ४८ ॥

पञ्चभिरष्टाक्षरैः पादैः पथ्यानाम पङ्क्तिर्भवति। तत्रोदाहरणम्।—

"तं नो अग्ने! अभी नरो, रयिं सहस्व आ भर।
स क्षेपयत् स पोषयत्, भुवद्वाजस्य सातय,
उतैधि पृत्सु नो वृधे॥" (ऋक्० ४अष्ट० १अ० ५म० १अनु० ९सू० ७ऋ०)। (घ)

---

केचिदत्र सायण-कात्यायनमतविरुद्धतया आग्नेयप्रातिशाख्ययोः पिङ्गलोक्तसूत्रस्य च चतुष्कषट्कत्रयनिर्देशस्य पादक्रमनिर्देशपरत्वं नाङ्गीकुर्वन्ति, चतुरक्षरः एकः पादः षडक्षरः एकः त्रयश्च पञ्चाक्षराः पादाश्चेत् पञ्चपदा पङ्क्तिरित्येवं व्याख्यानयन्ति च। उव्वटेनापि प्रथमपादस्य चतुरक्षरत्वमित्यादिरूपेण स्फुटं न व्याख्यातम्, एवञ्च उदाहरणस्यापि न दुर्घटत्वं विरोधश्च परिहृतो भवेदिति तेषामाशयः। महापदपङ्क्तिनामापरं छन्दः शौनककात्यायनकृतग्रन्थे अनुष्टबधिकारे अधिकं दृश्यते; यथा—"अस्महापदपङ्क्तिस्तु षट्कोऽन्त्यः पञ्च पञ्चकाः" (१६।४० ऋ० प्रा०) इति। उव्वटभाष्यं यथा—"षड्भिः पादैः या अनुष्टुप् सा महापदपङ्क्तिरित्युच्यते अन्त्यः पादः षट्कः पञ्च पञ्चकाः आद्याः" इति। "पञ्च पञ्चकाः षट्कश्चैकः महापदपङ्क्तिः" (कात्या०) इति। एषा तु न पिङ्गले न वा आग्नेये विद्यते। उदाहरणं यथा—"तव स्वादिष्ठाग्ने! संदृष्टिरिदाचिदह्न, इदाचिदक्तोः। श्रिये रुक्मो न, रोचत उपाके॥" (ऋक्० ३अष्ट० ५अ० ४म० २अनु० ११सू० ५ऋ०) इति। सायणभाष्येऽपि तथैवोल्लेखो दृश्यते, यथा—"पञ्चमी तव स्वादिष्ठेत्येषा महापदपङ्क्तिः पञ्च पञ्चकाः षट्कश्चैकः इति लक्षणसद्भावात्" इति।

(घ) पथ्यापङ्क्तिलक्षणमाह, पथ्येति।—स्पष्टम्। पथ्यासंज्ञकपङ्क्तिः केवलमाग्नेये दृश्यते; तथा च—"पथ्या पञ्चभिर्गायत्रैः" (३।१२ आ० छ०) इति। इयन्तु शौनककात्यायनाभ्यां पङ्क्तिनाम्नैव पठिता; तल्लक्षणञ्च "पङ्क्तिर्जागतौ गायत्रौ च" (३।३७ पि०) इत्यस्य टीकायां विस्तरेण प्रदर्शितम् इति। तमिति।—सायणभाष्यं यथा—"त्वामग्ने हविष्मन्त इति अष्टमं नवमं सूक्तम् आत्रेयस्य गयस्यार्षं

## जगती षड्भिः ॥ ४९ ॥

गायत्रैरित्यनुवर्त्तते। गायत्रैः षड्भिः पादैर्जगती नाम पङ्क्तिश्छन्दो भवति। तत्रोदाहरणम्।—

"अव द्रके अव त्रिका, दिवश्चरन्ति भेषजा।
क्षमा चरिष्णु्वेककं, भरतामप यद्रपो।
द्यौः! पृथिवि! क्षमा रपो, मो षु ते किञ्चनाममत्॥"

(ऋक्० ८अष्ट० १अ० १०म० ४अनु० ५९सू० ९ऋ०)। (त)

[इति पङ्क्त्यधिकारः]।

---

सप्तमी-पञ्चम्यौ पङ्क्तौ। हे अग्ने! सहस्वः बलवन् नरः हविषां नेतारः सोऽस्माकं तं रयिं लोके प्रसिद्धं पश्वादिलक्षणं धनम् अभ्याभर आभिमुख्येन आहर। पूर्वोक्तः सोऽग्निः क्षेपयत् अस्मदीयान् शत्रून् क्षेपयतु सोऽग्निः पोषयत् अस्मान् पोषयतु वाजसातस्य सातये लाभाय भुवत् भवतु उत अपि च हे अग्ने! पृत्सु पृतनासु युद्धेषु नोऽस्माकं वृधे वर्द्धये एधि भव सङ्ग्रामे शत्रुविजयार्थं अस्मत्सहायं कुरु इत्यर्थः" इति। शौनककात्यायनाभ्यां पुनः पङ्क्त्यधिकारे दशाक्षरपाद-चतुष्टयरूपा विराट्पङ्क्तिर्नाम पिङ्गलाप्रोक्ताभ्यामनुक्तं छन्दः उक्तम्; यथा— "चत्वारो दशका विराट्" (१६।५२ ऋ० प्रा०) इति। भाष्यं—"यस्याश्चत्वारो दशकाः पादाः सा विराट्पङ्क्तिर्भवति" इति। "अथ चतुष्पदी विराड्दशका" (कात्या०) इति।

(त) पञ्चाक्षरादिपञ्चपादपङ्क्तिलक्षणमभिधाय सम्प्रति षट्पादां जागतीं पङ्क्तिमाह, जगतीति।—अष्टाक्षरैः षड्भिः पादैः अष्टचत्वारिंशदक्षरात्मिका जगती-पङ्क्तिर्नाम छन्दः इत्यर्थः। उक्तञ्चाग्नेये पङ्क्त्यधिकारे—"षड्भिश्च जगती भवेत्" (३।१२ आ० छ०) इति। शौनककात्यायनाभ्यां पुनरियं जगत्यधिकारे महापङ्क्ति-नाम्ना पठिता, तथा च—"महापङ्क्तिः षडष्टकाः" (१६।७१ ऋ० प्रा०) इति। भाष्यं यथा—"यस्याः पादाः षट् अष्टाक्षरा भवन्ति सा जगती महापङ्क्तिरित्युच्यते" इति। "षडष्टका महापङ्क्तिः" (कात्या०) इति। आभ्यां पुनः प्रकारान्तरेणापि महापङ्क्तिरुक्ता, यथा—"अष्टकौ सप्तकः षट्को दशको नवकश्च वा" (१६।७२ ऋ० प्रा०) इति। "अष्टको सप्तकः षट्को दशको नवकश्च" (कात्या०) इति। अथ

### अथ त्रिष्टुब्जगत्यधिकारः।

## एकेन त्रिष्टुब्ज्योतिष्मती ॥ ५० ॥

एकेनेति "पथ्या पञ्चभिर्गायत्रैः" ( ३।४८ पि० ) इत्यतो गायत्रपादस्य प्रस्तुतत्वात् प्रत्यासत्तेश्च तस्यैव सम्बन्धः। गायत्रेणैकेन पादेनाधिकारात् त्रिभिस्त्रैष्टुभैः चतुष्पात् त्रिष्टुब्ज्योतिष्मती नाम। ( घ )

---

बहुषु पुस्तकेषु "जगती नाम छन्दो भवति" इति पाठः, तथा एतत्सूत्रस्य प्राक् "इति पङ्क्त्यधिकारः" इति च दृश्यते ; सर्वथा तदसमीचीनमिव प्रतिभाति, आदौ क्रमप्राप्तं त्रिष्टुब्लक्षणमनुक्त्वा जगतीलक्षणे उक्ते अपक्रमतादोषापत्तेः। अथ हके इति। —सायणभाष्यं यथा—"प्रतारीति द्व्यर्चं सप्तदशं सूक्तं बन्ध्वादीनां त्रयाणां गौपायनानामार्षम् आदितः सप्त त्रिष्टुभः अष्टमी पञ्चाष्टका पङ्क्तिः नवमी षडष्टका महापङ्क्तिः। दिवो द्युलोकात् भेषजा भेषजानि हके द्विकं त्रिका त्रिकं चावचरन्ति तथाश्विनौ द्विकमवचरतः इडा सरस्वती भारती त्रिकमवचरति क्षमा क्षमायाम् एककं चरिष्णु चरति एकमेव भेषजमित्यभिप्रायः। तानि सर्वाणि सुबन्धोः प्राणं परिरक्षन्त्विति शेषः। यद्रपः पापं कक्षवास्ति तदपभरताम् अपहरताम् अपनयतां, हे द्यौः! हे पृथिवि! क्षमा क्षमायां सत्यां यद्वा—क्षमा पृथगप्युच्यते क्षमापि अपहरतु एवमुक्त्वा सुबन्धुं बन्ध्वादयो ब्रुवते—हे सुबन्धो! ते त्वां मो षु मैव सु सुष्ठु किञ्चन रपः कक्षम अममत् हिनस्तु" इति।

( घ ) गायत्रीमारभ्य पङ्क्तिपर्यन्तं निरूप्य त्रिष्टुभः सामान्यलक्षणस्योक्तत्वात् तद्भेदरूपायाः ज्योतिष्मत्याः सामान्यलक्षणमवतारयति, एकेनेति।—एकेन, गायत्रेणेति शेषः। तदेव विशदयति, एकेनेतीति।—प्रस्तुतत्वात "पथ्या पञ्चभिः" ( ३।४८ पि० ) इत्यादि सूत्रात् गायत्रपादस्यैवानुवर्त्तनीयत्वेन प्रस्तावितत्वात् प्रत्यासत्तेश्च गायत्र्याः सान्निध्यवशाच्च तात्पर्य्यवशाच्च वा इत्यर्थः ; तत्र "जगती षड्भिः" ( ३।४९ पि० ) इति सूत्रे षड्भिरित्यनेन यथा गायत्रैरिति अधिकृतपदेन सम्बन्धः तथा इहापि एकेनेति तृतीयैकवचननिर्देशात् वचनविपर्य्ययेणाधिकृतगायत्रपदेन सम्बन्धरूपं बोध्यम। तस्यैव गायत्रपदार्थस्यैव सम्बन्धः एकेनेति पदेनान्वयः। तत आह,—गायत्रेणेति। "अनादेशे पादाश्चत्वारः" इति परिभाषया त्रिष्टुप्पादानां लभ्यत्वेनाह, अधिकारादिति।

—पङ्क्त्यनन्तरं क्रमप्राप्ततया त्रिष्टुभः अधिकारात् इत्यर्थः। एवञ्च सञ्ज्ञापरिभाषासूत्रेण त्रिष्टुब्ज्योतिष्मत्या अपि चतुष्पादत्वनियमात् एकस्मिन् गायत्रपादे लब्धे तात्पर्य्य-वशात् त्रिष्टुभ एव त्रिपादानां लाभ इति भावः। ततश्च एकचत्वारिंशदक्षरा पाद-चतुष्टयवती त्रिष्टुब्ज्योतिष्मतीति सूत्रार्थः। यदुक्तमाचार्य्येण—"एकेन त्रिष्टुब्-ज्योतिष्मती" (३।१२ आ० छ०) इति, तत्तु "छन्दो वक्ष्ये मूलजैः तैः पिङ्गलोक्तं यथाक्रमम्" (१।१ आ० छ०) एतत्प्रतिज्ञानुरूपमेव, एतेन लक्षणेन कियन्तः पादाः कतिसङ्ख्याक्षरैरिति तु बोद्धुमशक्यत्वात्। शौनककात्यायनाभ्यामियं विराड्रूपानाम त्रिष्टुबित्युक्तं, यथा—"चयस्त्वेकादशाक्षरा एकश्चाष्टाक्षरः परः। विराड्रूपाह नामैषा त्रिष्टुप् नाक्षरसम्पदा॥" (१६।६५ ऋ० प्रा०) इति। भाष्यं—"यस्यास्त्रयः पादा एकादशाक्षराः एकश्चापरोऽष्टाक्षरः सा विराड्रूपानाम त्रिष्टुप् वेदितव्या" इति। "एकादशिनस्त्रयोऽष्टकश्च विराड्रूपा" (का०अ०) इति। त्रिष्टुभो निरुक्तिर्यथा—"अथ त्रिष्टुभो निर्वचनं दर्शयति—त्रिष्टुप् स्तोभ इत्युत्तरपदा" (३।१४ दैव० ब्रा०)। भाष्यं—"स्तोभ इति स्तुति-कर्म्मोत्तरपदं यस्याः सा त्रिष्टुप्। अस्तुत्तरपदं, पूर्वपदस्य त्रिशब्दस्य किं प्रवृत्तिनिमित्तमिति स्वयमेव पृष्ठोत्तरमपि ब्रूते"—"का तु त्रिता स्यात्तीर्णतमं छन्दो भवति" (३।१५ दैव० ब्रा०)। भाष्यम्—"अस्य त्रिता त्रित्वं का स्यादिति प्रश्नः। अस्योत्तरं—तीर्णतमं छन्दो भवतीति। पूर्वेभ्यो महत्त्वात् वर्णांश-लकारो लुप्तः। तीर्णतमं तरतेर्वा पूर्वपदम्। उभयार्थोपपत्तिस्मरणात् स्तोभ-नामेति त्रैष्टुभत्वम्। त्रिवृच्छब्द पूर्वपदमित्याह"—"त्रिवृद्वज्रस्य स्तोभमित्येतौप-मिकम्" (३।१६ दैव० ब्रा०)। भाष्यम्—"उभयस्त्रिककोटिलात् वज्रस्त्रिवृत। तस्य स्तोभमिव इत्युपमाप्रधानोऽयं निर्देशः। यत त्रिवृतः स्तोभं त्रिष्टुभस्त्रिष्टुप्त्वमिति ब्राह्मणम्" इति। अत्र "त्रिष्टुभः प्रस्तुतत्वात् प्रत्यासत्तेश्च तस्या एव सम्बन्धः। एकेन त्रैष्टुभेन पादेनाधिकारात् चतुर्भिर्गायत्रैः पञ्चपात् त्रिष्टुप् ज्योतिष्मतीनाम। त्रैष्टुभेन सह पञ्चभिर्गायत्रैरित्युक्ते चत्वार एव गायत्राः पादा लभ्यन्ते। यथो-पाध्यायेन सह पञ्च शिष्या आगता इत्युक्ते उपाध्यायपञ्चमाः प्रतीयन्ते" इति पाठान्तरम्। तत्र व्याख्यानं यथा—एकेन, त्रैष्टुभेनेति शेषः। तदेव विशदयति, त्रिष्टुभः इति।—त्रिष्टुभः प्रस्तुतत्वात् पङ्क्त्यनन्तरं क्रमप्राप्ततया त्रिष्टुबधिकारस्यैव प्रक्रान्तत्वात्, प्रत्यासत्तेश्च "पञ्चा पञ्चभिर्गायत्रैः" इति बहुवचनान्तनिर्देशात् एकेनेति एकवचनान्तेन तदन्वयानुपपत्तिरूपतात्पर्य्यवशाच्च, तस्याः त्रिष्टुभः एव सम्बन्धः एक-पदेन अन्वयः। एतदेव विवृणोति, एकेनेति।—एकेन त्रैष्टुभेन पादेन एकादशा-क्षरैकपादेनेत्यर्थः, "त्रिष्टुभो रुद्राः" (३।६ पि०) इत्युक्तेः। अधिकारात् "पञ्चा

पञ्चभिः" (३।४८ पि०) इत्यादिसूत्रात् गायत्रैरित्यस्यानुवर्त्तनात्. चतुर्भिरिति तु तात्पर्य्यतो लभ्यमिति बोद्धव्यम्। ततश्च एकादशाक्षरैकपादेन अष्टाक्षरचतुष्पादेन च पञ्चपदा त्रिचत्वारिंशदक्षरा त्रिष्टुब्ज्योतिष्मतीति लक्षणार्थः। ननु पञ्चभिः गायत्रैः इत्यधिकृते कथमुच्यते चतुर्भिरिति एकेन त्रैष्टुभेन तत्सम्बन्धाच्च पञ्चपादिति वा कथं युज्यते? इत्यत आह, त्रैष्टुभेन सहेति।—यथा उपाध्यायेन सह पञ्च शिष्या आगता इत्युक्ते चत्वारः शिष्याः एकश्चोपाध्यायः इति बोधः, तथा अत्रापि त्रैष्टुभेनैकेन सह पञ्च गायत्राः इत्युक्ते चत्वार एव गायत्राः पादा लभ्यन्ते। एकेनेति सहार्थे तृतीयेत्यभिप्रायः। बहुषु मुद्रितपुस्तकेषु सूत्रस्यास्य हलायुधवृत्तिरेवंविधैव दृश्यते। एवं व्याख्याने उदाहरणानि नैव सम्भवन्ति। उभयव्याख्यानेऽपि शौनककात्यायनसायणप्रदर्शित-त्रिष्टुब्ज्योतिष्मतीलक्षणस्यैतल्लक्षणभिन्नतयाऽपि पाठान्तरीयव्याख्याने उदाहरणदुर्घटतया "अनादेशे पादाश्चत्वारः" इत्यनुशासनविरुद्धतया च पाठमिमं न साधुतरं मन्यामहे, अतः पुस्तकान्तरपाठ एवास्माभिरङ्गीकृतः। यद्यपि एतदङ्गीकृतपाठपक्षे या एव त्रिष्टुब्ज्योतिष्मती सैव शौनकादिभिः विराड्रूपा त्रिष्टुप् तथा वक्ष्यमाणा जगतीज्योतिष्मती च त्रिष्टुब्ज्योतिष्मतीनाम्ना कथिता तथाऽपि तैः जगतीज्योतिष्मत्याः पृथग्लक्षणाकरणात् यदेव तेषां मते विराड्रूपायाः त्रिष्टुभः उदाहरणं तदेव पिङ्गलोक्तत्रिष्टुब्ज्योतिष्मत्याः, यच्च तेषां त्रिष्टुब्ज्योतिष्मत्या उदाहरणं तदेव पिङ्गलोक्तजगतीज्योतिष्मत्या इति नोदाहरणदुर्घटत्वम्; अस्मिन् पक्षे केवलं नाममात्रेण विरोधः, पक्षान्तरे तु त्रिष्टुब्ज्योतिष्मत्याः लक्षणान्वितं छन्दः केनाप्यन्येन नाम्ना नान्यैरुक्तं, न वा तदुदाहरणं कुत्रापि दृश्यते। सूत्रमिदमधिकारार्थम्। "एकद्वित्रिचतुष्पादुक्तपादम्" (३।७ पि०) इत्यनेन त्रिष्टुभः सामान्यलक्षणस्योक्तत्वादिह पुनर्नोक्तम्। "त्रिष्टुभो रुद्राः" (३।६ पि०) इति परिभाषया त्रिष्टुभः पादानामेकादशाक्षरत्वस्य लाभः। तथा चाग्नेये—"त्रिष्टुभो रुद्रः पादः स्यात्" (३।२ आ० छ०) इति। "एकादशाक्षरा वै त्रिष्टुब्गायत्री अवं त्रिष्टुप्" (१।३।५।५ शत० ब्रा०) इति। "चतुश्चत्वारिंशत्त्रिष्टुबक्षराणि चतुष्पदा। एकादशाक्षरैः पादैः" (१६।६० ऋ० प्रा०) इति। "षष्ठं त्रिष्टुप् त्रैष्टुभपदा" (कात्या०) इत्याद्युक्त्या "अनादेशे पादाश्चत्वारः" इत्युक्त्या च एकादशाक्षरचतुष्पादात्मिका त्रिष्टुबिति सामान्यलक्षणं प्रतीयते। पिङ्गले च पादनियमानुक्तेः एकपादा द्विपादा च त्रिष्टुप् भवतीति बोध्यम्। तत्र चतुष्पदा यथा—"एष व स्तोमो मरुतो नमस्वान्, हृदा तष्टो मनसा धायि देवाः। उपेमा यात मनसा जुषाणाः, यूयं हि ष्ठा नमस इद्वृधासः॥" (ऋक्० २अष्ट० ४अ० १म० २१अनु० १७१सू० २ऋ०) इति। भाष्येऽपि उक्तं—"प्रति व इति

## तथा जगती ॥ ५१ ॥

एकेन गायत्रेण पादेन त्रिभिर्जागतैश्चतुष्पाज्ज्योतिर्नाम जगती भवति। (८)

---

षड्चं सप्तमं सूक्तम् आगस्त्यं त्रैष्टुभम्" इति। त्रिपदा यथा—"प्रत्यञ्चमर्कमनयञ्छचीभि-रादित्स्वधामिषिरां पर्यपश्यन्॥" (ऋक्० ८अष्ट० ८अ० १०म० १२अनु० १५७सू० ५ऋ०)। आर्षेऽप्युक्तम्—"इमानुकमिति पञ्चर्चं षष्ठं सूक्तं...सर्वा त्रिपदाः त्रिष्टुभः" इति। एकपदा यथा—"आ वां सुम्ने वरिमन्त्सूरिभिः ष्याम।" (ऋक्० ५अष्ट० १अ० ६म० ६अनु० ६४सू० ११ऋ०) इति। आर्षं यथा—"त्वेषैकादशर्चं द्वितीयं सूक्तम्...आ वां सुम्न इत्येकादशी एकपदा त्रिष्टुप्" इति। त्रिपदा तु विराड्गायत्री, "त्रिपात् त्रैष्टुभैः" (३।१७ पि०) इति गायत्र्यधिकारोक्तविशेषविधानात्।

(८) त्रिष्टुब्ज्योतिष्मतीमुक्त्वा जगतीज्योतिष्मतीमारभते, तथेति।—तथा त्रिष्टुब्ज्योतिष्मतीवत्, जगती, ज्योतिष्मतीति शेषः। आर्षेऽपि एवमेवोक्तं, यथा—"तथैव जगतीरिता" (३।१३ आ० छ०) इति। तथा-शब्देन पूर्वोक्ता-धिकृतगायत्रपदार्थान्वयवत् इहापि किञ्च त्रिष्टुप्-तात्पर्यवत् जगत्या अपि एवं ज्योति-ष्मती अपि इति बोधः। तदेवाह वृत्तिकारः, एकेनेति।—अष्टाक्षरैकपादत्वे द्वादशाक्षरत्रिपादत्वे च चतुष्पादरूपा जगतीज्योतिष्मतीनाम इत्यर्थः। शौनक-कात्यायनाभ्यामियं त्रिष्टुब्ज्योतिष्मतीनाम्ना पठिता। तदुक्तं लक्षणे यथा—"यस्य द्वादशाक्षरा एकश्चाष्टाक्षरः क्वचित्। एषा ज्योतिष्मती नाम ततो ज्योतिर्यतोऽष्टकः॥" (१६।६६ ऋ० प्रा०) इति। "द्वादशिनस्त्रयोऽष्टकश्च ज्योतिष्मती यतोऽष्टकस्ततो ज्योतिः" (कात्या०) इति। जगत्या निरुक्तिर्यथा—"अथ जगतीच्छन्दो निर्वक्ति—जगती गततमं छन्दो जलजगतिर्भवति क्षिप्रगतिर्जल्गल्यमानाकुर्वन्सृजतेति हि ब्राह्म-णम्।" (३।१७ दैव० ब्रा०) इति। इदमप्यधिकारसूत्रम्। अत्रापि "एकेन जागतेन पादेन चतुर्भिर्गायत्रैः पञ्चपाज्जगतीज्योतिष्मतीनाम" इत्येवं पाठान्तरं पूर्वसूत्रोक्तयुक्त्या न सम्यगादियामहे। एतादृशी जगतीज्योतिष्मती तु शौनक-कात्यायनसायणादिभिः त्रिष्टुबधिकारे महाबृहतीनाम्ना पठिता इति दृश्यते, यथा—"चत्वारोऽष्टाक्षराः पादा एकश्च द्वादशाक्षरः। सा महाबृहती नाम" (१६।६७ ऋ० प्रा०) इति। "चत्वारोऽष्टका जागतश्च महाबृहती" (कात्या०) इति। "अष्टाक्षराश्चत्वारः पादाः एको द्वादशाक्षरः सा महाबृहती"

## पुरस्ताज्ज्योतिः प्रथमेन ॥ ५२ ॥

प्रथमेन गायत्रेण पादेन शेषैश्च त्रैष्टुभैस्त्रिभिः पुरस्ताज्ज्योतिस्त्रिष्टुप् नाम भवति। पूर्वेणैव गतार्थत्वात् विशेषसंज्ञाज्ञापनार्थमिदम्। उदाहरणं यथा।—

"क्रीळन्नो रश्म आ भुवः,
सं भस्मना वायुना वेविदानः।
ता अस्य सन्धृषजो न तिग्माः,
सुसंशिता वक्ष्यो वक्षणेस्थाः॥" (ऋक्० ४अष्ट० १अ० ५म० २अनु० २०सू० ५ऋ०)।

---

(ऋक्० ४अष्ट० ८अ० ६म० ४अनु० ४८सू० प्रारम्भे सायणभाष्यम्) इति। पाठान्तरपक्षं बहुमन्यमानानां मते तु भाष्यादिदर्शिता महाबृहत्येव पिङ्गलोक्ता जगतीज्योतिष्मतीत्येव समाधानम्। त्रिष्टुबिव जगत्या अपि "जगत्या आदित्याः" (३।४ पि०) इति परिभाषया जागतपादस्य द्वादशाक्षरत्वं सिद्धम्। तथा चाग्नेयेऽपि "पादो जगत्या आदित्याः" (३।१ आ० छ०) किञ्च "पश्चाज्जगती ह्यूना चत्वारो द्वादशाक्षराः। तदस्या बहुलं वृत्तम्" (१६।७० ऋ० प्रा०) "सप्तमं जगती जागतपदा" (कात्या०) इत्याद्युक्त्या च जागतपादस्य द्वादशाक्षरत्वमेवावगम्यते। ततश्च "एकद्वित्रिचतुष्पादुक्तपादम्" (३।७ पि०) इत्यनेन द्वादशाक्षरचतुष्पादात्मिका जगतीति सामान्यलक्षणं बोध्यम्। अत एव गायत्रीविराजोरपि सामान्यलक्षणं तत्तदधिकारे पृथक्तया नाभिहिते। तत्रोदाहरणं यथा—"सं जागृवद्भिर्जरमाण इध्यते, दमे दमूना इषयन्निळस्पदे। विश्वस्य होता हविषो वरेण्यः, विभुर्विभावा सुषखा सखीयते॥" (ऋक्० ८अष्ट० ४अ० १०म० ८अनु० ९१सू० १ऋ०)। भाष्यं यथा—"सं जागृवद्भिरिति पञ्चदशर्चं प्रथमं सूक्तम्……अन्त्या त्रिष्टुप् शिष्टा जगत्यः" इति। वरेण्यः इत्यत्र वरेणियः इति व्यूहेन पठनीयम्। द्विपदा जगती यथा—"स नो वाजेष्वविता पुरूवसुः। पुरःस्थाता मघवा वृत्रहा भुवत॥" (ऋक्० ६अष्ट० ४अ० ८म० ६अनु० ४६सू० १३ऋ०) इति। भाष्येऽप्युक्तं—"स नो वाजेष्विति त्रयोदशी चतुर्विंशत्यक्षरा द्विपदा। एषा द्विपदा जगती" इति। अत्र प्रथमपादस्य एकादशाक्षरत्वात् छन्दोलक्षणानुपपत्तेः वाजेषु अविता इति व्यूहेन लक्षणं समन्वेतव्यम्।

तथा जगतीत्यनुवर्त्तनीयम्। तेनाद्येन गायत्रेण पादेन त्रिभिर्जागतैः पुरस्ताज्ज्योतिर्नाम जगती भवति। (ध)

---

(ध) त्रिष्टब्जगत्यधिकारोक्तज्योतिष्मत्याः सामान्यलक्षणं द्वाभ्यामभिधाय तद्भेदानामुभयगतत्वेऽपि प्रायशः समानत्वादेकेनैव द्वयोर्भेदं पुरस्ताज्ज्योतिषमाह, पुरस्तादिति।—त्रिष्टुब्जगत्युभयार्थकं सूत्रमिदम्। पुरस्ताज्ज्योतिरित्यादि संज्ञाद्वयं पूर्वोक्तलक्षणलक्षितयोः ज्योतिष्मत्योर्भेद इत्यभिप्रायः। अत एव वृत्तिकृता "तथा जगतीत्यनुवर्त्तनीयम्" इत्यादिना तदेव विशदीकृतम्। इह ज्योतिःशब्दोऽष्टाक्षरपरः "यतोऽष्टकस्ततो ज्योतिः" इति लक्षणात्, ततश्च पुरस्तादादौ ज्योतिरष्टाक्षरः पादो यत्र इति व्युत्पत्तिसिद्धं पुरस्ताज्ज्योतिरिति नाम। प्रथमपादस्याष्टाक्षरत्वे त्रयाणाञ्च एकादशाक्षरत्वे पुरस्ताज्ज्योतिस्त्रिष्टुबिति लक्षणार्थः। आर्षेयेऽपि—"पुरस्ताज्ज्योतिः प्रथमे" (३।१४ आ० छ०) इति। शौनककात्यायनाभ्यां पुनरेवं ज्योतिष्मती विराड्रूपा त्रिष्टुबित्युक्तं, तल्लक्षणं प्रागेव दर्शितम्। तन्मते विराड्रूपायाः अष्टाक्षरपादस्य आदिमध्यान्तगतभेदाभावात् यत्र क्वचिदेव अष्टाक्षरैकपादत्वे विराड्रूपा त्रिष्टुप् इति बोध्यम्। एतन्मते तु अष्टाक्षरपादस्य प्रथमत्वे पुरस्ताज्ज्योतिस्त्रिष्टुबिति संज्ञा। एवं वक्ष्यमाणसूत्रद्वयेऽपि संज्ञाबीजं बोध्यम्। प्रोक्तलक्षणाभ्यामेतत्सिद्धेऽपि कथं पुनरिदं सूत्रमित्याह, पूर्वेणेति।—पुरस्ताज्ज्योतिः मध्येज्योतिरित्यादि संज्ञाविशेषप्रतिपादनार्थं पुनः सूत्रविधानमित्यभिप्रायः। क्रीळन्नो इत्यादि।—सायणभाष्यं यथा—"पञ्चमी विराड्रूपा एकादशिनस्त्रयोऽष्टकश्च विराड्रूपा इत्युक्तलक्षणोपेतत्वात्। हे रश्मे! रश्मिमन् अग्ने! क्रीळन् वनेषु क्रीळन् मक्षना स्वकार्य्येण श्वसितेन वायुना प्रेरकेण मरुता च संविविदानः सम्यक् ज्ञायमानः त्वं नोऽस्माकम् आभुवः अभिमुखो भव वक्षणेभ्याः वक्षणे वह्नौ श्रिताः वक्ष्यः हविर्वहन्तीति वह्न्यो ज्वालाः सुमंश्रिताः सुतीक्ष्णाः ध्वजः अतूर्णां अर्वञ्चाः ता ज्वालाः अस्य यजमानस्य मम न तिग्माः न तीक्ष्णाः सन् सन्तु" इति। उदाहरणान्तरं यथा—"यं परिधिं पर्य्यधत्था अग्ने! देव! पणिभिर्गुह्यमानः। तं त एतमनु जोषं भरामि, एष न इत् त्वदपचेतयातै॥" (२।१७ वा० सं०) इति। भाष्यं यथा—"यं परिधिमिति एकादशिनस्त्रयोऽष्टकश्च विराड्रूपः। प्रथमोऽष्टकः" इति। पुरस्ताज्ज्योतिस्त्रिष्टुब्वत् पुरस्ताज्ज्योतिर्जगत्यपि इति दर्शयितुमाह, तथेति।—प्रथमपादस्याष्टाक्षरत्वे त्रयाणाञ्च द्वादशाक्षरत्वे पुरस्ताज्ज्योतिर्नाम जगतीति तदर्थः। शौनककात्यायनाभ्यामित्थम्भूतलक्षणैव त्रिष्टुब्ज्योतिष्मतीत्युक्तं, तदस्माभिः प्रागेव प्रदर्शितम्। "ततो ज्योतिर्यतोऽष्टकः"

## मध्येज्योतिर्मध्यमेन ॥ ५३ ॥

यदा मध्यमो गायत्रः तृतीयः पादो भवति, उभयतश्च द्वौ त्रैष्टुभौ, यदा पूर्वौ अन्तिमश्चैकस्त्रैष्टुभस्तदा मध्येज्योतिर्नाम त्रिष्टुप् भवति। मध्येज्योतिरित्यलुक्समासः। तत्रोदाहरणम्।—

"अस्मिन् स्वेतच्छकपूत एनो,
हिते मित्रे निगतान् हन्ति वीरान्।

---

(१०।९९ऋ० प्रा०) इत्यनेन भेदाश्च दर्शिताः। तत्रैव उव्वटः,—"यतः षष्टकः पादस्ततो ज्योतिरिति उच्यते। यद्वा यज्ञं मनवे संमिमिक्षथुः। मध्येज्योतिः। अग्निनेन्द्रेण वरुणेन विष्णुना। उपरिष्टाज्ज्योतिः" इत्यभिधाय पिङ्गलोक्तजगती-गतायाः एव मध्येज्योतिषः उपरिष्टाज्ज्योतिषश्च उदाहरणं दर्शितवान्। यत्तु पुरस्ताज्ज्योतिषः समुल्लेखोऽपि तेन न कृतः विरलोदाहरणत्वमेव तद्बीजमिति मन्यामहे। जगत्यास्तु ज्योतिष्मती ताभ्यां नैवाद्रियते। अत्रापि "गायत्रेण" इत्यत्र "त्रैष्टुभेन" "त्रैष्टुभैस्त्रिभिः" इत्यत्र "गायत्रैः" ततोऽपि "गायत्रेण" इत्यत्र "जागतेन" "त्रिभिर्जागतैः" इत्यत्र च "चतुर्भिः गायत्रैः" इति पाठान्तरम्; अस्मिन् पक्षे—एकादशाक्षरप्रथमपादेन अष्टाक्षरपादचतुष्टयेन च पुरस्ताज्ज्योतिस्त्रिष्टुप् तथा द्वादशाक्षरप्रथमपादेनाष्टाक्षरपादचतुष्केण च पुरस्ताज्ज्योतिर्जगतीत्यर्थः। शौनक-कात्यायनाभ्यां पाठान्तरोक्तलक्षणा पुरस्ताज्ज्योतिर्जगती तु त्रिष्टुबधिकारे महा-बृहतीनाम्ना पठिता, तत्तु जगतीज्योतिष्मत्याः सामान्यलक्षणव्याख्याने प्रदर्शितमेव इति। तत्रोदाहरणं यथा—"नमोवाके प्रस्थिते अध्वरे नरा, विवक्षणस्य पीतये। आयातमश्विनागत-मवस्युर्वामहं हुवे, धत्तं रत्नानि दाशुषे॥" (ऋक्० ६अष्ट० ३अ० ८म० ५अनु० ३५सू० २३ऋ०) इति। सायणभाष्ये यथा—"त्रयोविंशी महाबृहती चत्वारोऽष्टका जागतश्च महाबृहती इत्युक्तलक्षणोपेतत्वात्" इति। अत्र पक्षे पञ्चपादायाः पुरस्ताज्ज्योतिस्त्रिष्टुभः उदाहरणं नैव सम्भवति, तत एव पाठव्यासक्तिः। ननु अङ्गीकृतपाठपक्षे पुरस्ताज्ज्योतिर्जगत्या उदाहरणं यथा न सम्भवति पाठान्तरेऽपि तथा पुरस्ताज्ज्योतिस्त्रिष्टुभः, तत् कथं बहुभिरङ्गीकृतः पाठः परिहृतः इत्यपि न वाच्यं, ज्योतिष्मतीभेदयोर्वक्ष्यमाणसूत्रयोरुदाहरणेषु तथा वक्तुमशक्यत्वात्।

अवीर्वा यद्धात्तनूष्व-

वः प्रियासु यज्ञियास्वर्वा ॥" ( ऋक्० ८अष्ट० ७अ० १०म० ११अनु० १३२सू० ५ऋ० )।

तथा जगतीत्यनुवर्त्तते। एकेन गायत्रेण मध्यमेन तृतीयेन उभयतश्च जागताभ्यां प्रथमद्वितीयाभ्यां चतुर्थेन मध्येज्योतिर्जगती नाम भवति। तत्रोदाहरणम्।—

"यदा यज्ञं मनवे संमिमिक्षथु-

रेवेत्काण्वस्य बोधतं बृहस्पतिम्।

विश्वान्देवाँ अहं हुव,

इन्द्राविष्णू अश्विनावाशुहेषसा ॥" (ऋक्० ५अष्ट० ८अ० ८म० २अनु० १०सू० २ऋ० )। (न)

---

(न) मध्येज्योतिर्नाम त्रिष्टुब्जगत्योर्लक्षणमाह, मध्ये इति।—मध्यमः तृतीयः पाद इत्यर्थः। उभयतः उभयोः पार्श्वयोः। ततश्च प्रथमद्वितीयचतुर्थपादानाम् एकादशाक्षरत्वे तृतीयपादस्य च षडक्षरत्वे मध्येज्योतिर्नाम त्रिष्टुप् इति लक्षणम्। मध्येज्योतिरिति कण्ठेकाल इत्यादिवदलुक्-समासः। आग्नेये तु—"मध्येज्योतिस्तु मध्यतः" ( ३।१४ आ० छ० ) इत्युक्तम्। शौनककात्यायनाभ्यामीदृशी मध्येज्योतिस्त्रिष्टुप् विराड्रूपानाम्ना पठिता। अर्वाग्निति।—सायणभाष्यम्—"ईजानमिति सप्तर्चं चतुर्थं सूक्तं ............तिस्रः विराड्रूपाः एकादशिनस्त्रयोऽष्टकश्चेति लक्षणलक्षिताः। योऽयं शकपूताख्य ऋषिः अस्मिन् शकपूते स्थितम् एतदेनः पापं शत्रूणां पापकरमायुधं वा मित्रे देवे हिते हिताचरणपरे अनुकूले सति निगतान् निगन्तव्यान् हननार्थं नियमेन प्राप्तव्यान् वीरान् शत्रोः पुत्रादीन् सु सुष्ठु हन्ति हिनस्ति अस्मिन्नृषौ समवेतं यत् पापं तन्मित्रस्य प्रसादेन तदीयेषु शत्रुषु सकार्य्यं दुःखं जनयतीत्यर्थः। कदेत्यत आह—अवीः हविर्भिः तर्पयितुः, अवतेरौणादिक ई-प्रत्ययः। तस्य यजमानस्य यज्ञियासु यज्ञार्हासु प्रियासु तनूषु शरीरेषु अर्वा अभिगन्ता मित्रो वरुणो वा यत् यदा अवो रक्षणं धात् दधाति निदधाति स्थापयति। यद्वा—यदा अर्वा अभिगन्ता स ऋषिः अवितुः रक्षितुः मित्रस्य वरुणस्य वा यागार्हासु प्रियासु तनूषु शरीरेषु अवो हविर्लक्षणमन्नं

धात् धारयति तदानीं मित्रे वरुणे चानुकूले सति तदेनौ वीरान् कुलीयध:" इति।
अत्र तृतीयपादस्याष्टाक्षरत्वादन्येषाञ्च त्रयाणां पादानामेकादशाक्षरत्वात् पिङ्गलोक्ता मध्येज्योतिस्त्रिष्टुब्ज्योतिष्मती अन्येरुक्ता स्विराड्रूपा त्रिष्टुबिति मन्तव्यम्। मध्ये-ज्योतिर्जगतीं लक्षयितुमाह, तथा इति।—जगतीति पूर्वसूत्रादिहाप्यनुवर्त्तनीयम्। प्रथमद्वितीयचतुर्थपादानां द्वादशाक्षरत्वे तृतीयपादस्याष्टाक्षरत्वे च पादचतुष्टय-वती मध्येज्योतिर्नाम जगतीति बोधः। शौनककात्यायनाभ्यामीदृशी मध्येज्योति-र्जगतीज्योतिष्मती मध्येज्योतिस्त्रिष्टुब्नाम्ना अभिहिता, जगतीज्योतिष्मती तु नैव ताभ्यामङ्गीकृता इति प्रागेव प्रदर्शितमस्माभिः। यथेति।—सायणभाष्यं यथा—"आद्या बृहती द्वितीया मध्येज्योतिस्त्रिष्टुप् यतोऽष्टकमतो ज्योतिरित्युक्तलक्षण-सद्भावात्। हे अश्विनौ! यद्वा यथा वा येन प्रकारेण मनवे प्रजापतये यजमानाय यज्ञं संमिमिक्षथुः संसिक्तवन्तौ युवां कृतवन्तौ एवेत् एवमेव काण्वस्य कण्वगोत्रस्य मम यज्ञं कर्त्तुं बोधतमवगच्छतम्। अपि च बृहस्पतिं बृहतां देवानां पतिं देवपुरोहितं विश्वान् सर्वान् मित्रादीन् देवांश्च इन्द्राविष्णू च आशुहेषसा शीघ्राश्वौ; यद्वा—हेषृ शब्दे शीघ्रं सर्वत्र शब्दायमानौ सूयमानावश्विनौ च अहं हुवे आह्वये" इति। अत्र तृतीय-पादस्याष्टाक्षरत्वात् प्रथमद्वितीयचतुर्थानाञ्च द्वादशाक्षरत्वात् मध्येज्योतिर्जगतीच्छन्दः। मुद्रित-ऋक्संहितायान्तु "एवेत् काण्वस्य बोधतम्" इत्यन्तेनाष्टाक्षरेण द्वितीय-पादः समाप्तिं गतः "बृहस्पतिम्" इति तु तृतीयपादस्य प्रथमांशत्वेन पठितम् इति परिदृश्यते। अत्रापि वृत्तौ "यदा मध्यमस्त्रैष्टुभः पादो भवति उभयतश्च द्वौ द्वौ गायत्रौ तदा मध्येज्योतिर्नाम त्रिष्टुप् भवति" तथा "जगतीत्यनुवर्त्तनीयम्" इत्यनन्तरञ्च "तेन मध्यमेन जागतेन उभयतश्च द्वौ द्वौ गायत्रौ तदा मध्येज्योतिर्नाम जगती" इति पाठान्तरम्। एतादृशी मध्येज्योतिर्जगती शौनककात्यायनाभ्यां त्रिष्टुबधिकारे यवमध्या त्रिष्टुप्नाम्ना पठिता। तथा च "यवमध्या तु मध्यमे" (१६।६८ ऋ० प्रा०) इति। भाष्यम्—"आद्यावष्टाक्षरौ तृतीयो द्वादशाक्षरः चतुर्थपञ्चमौ चाष्टाक्षरौ सा त्रिष्टुप् यवमध्या ज्ञेया। इडह्निरसे अर्चिभिः" इति। "मध्ये चेत् यवमध्या" (कात्या०) इति। उदाहरणं यथा—"इडह्निरसे! अर्चिभिः शुक्रेण देव! शोचिषा। भरद्वाजे समिधानो यविष्ठ्य रेवन्नः शुक्र दीदिहि द्युमत्पावक! दीदिहि॥" (ऋक्० ४अष्ट० ८अ० ६म० ४अनु० ४८सू० ७ऋ०) इति। यथा वा—"सत्यमिद्वा उ तं वयमिन्द्रं स्तवाम नानृतम्। महाँ असुन्वतो वधो भूरि ज्योतींषि सुन्वतो भद्रा इन्द्रस्य रातयः॥" (ऋक्० ४अष्ट० ८अ० ६म० ४अनु० ४८सू० २१ऋ०) इति।
भाष्यं यथा—"एकविंशी यवमध्या महाबृहती आद्यौ द्वौ अष्टकौ तृतीयो द्वादशकः

## उपरिष्टाज्ज्योतिरन्त्येन ॥ ५४ ॥

यदा त्रयस्त्रैष्टुभाः पादाः भवन्ति अन्ते च गायत्रस्तदा उपरिष्टाज्ज्योतिस्त्रिष्टुप् नाम भवति। तत्रोदाहरणम्।—

"स इद्भोचदभि दृष्णात्ति वाज-मर्वता स धत्ते अचिति श्रवः।
त्वे देवत्रा सदा पुरूवसो !, विश्वा वामानि धीमहि ॥"

( ऋक्० ६अष्ट० ७अ० ८म० १०अनु० ८२सू० ५ऋ० )।

तथा जगतीत्यनुवर्त्तनीयम्। तेनान्त्येन गायत्रेण शेषैश्च जागतैस्त्रिभिरुपरिष्टाज्ज्योतिर्जगतीनाम भवति। तत्रोदाहरणम्।—

"अग्निनेन्द्रेण वरुणेन विष्णुना-दित्यै रुद्रैर्वसुभिः सचाभुवा।
सजोषसा उषसा सूर्य्येण च, सोमं पिबतमश्विना ॥"

( ऋक्० ६अष्ट० ३अ० ८म० ५अनु० ३५सू० १ऋ० )। (घ)

[ इति त्रिष्टुब्जगत्यधिकारः ]।

---

चतुर्थपञ्चमावष्टकौ सा यवमध्या महाबृहती" इति। नाममात्रविरोधस्वीकारे अत्र पक्षे मध्येज्योतिर्जगत्युदाहरणमत्र सम्भवति, किन्तु एतत्पाठान्तरीयमध्येज्योतिस्त्रिष्टुबुदाहरणं कुत्रापि नैव सम्भवति, तथा मध्येज्योतिरिति संज्ञाऽपि न व्युत्पत्तिसिद्धा "ततो ज्योतिर्यतोऽष्टकः" इति वचनेन उभयज्योतिरित्येव वक्तुमौचित्यादिति पाठान्तरं सुधीभिश्चिन्त्यम्।

(घ) उपरिष्टाज्ज्योतिस्त्रिष्टुब्जगत्योर्लक्षणमाह, उपरिष्टादिति।—उपरिष्टात् अन्ते इत्यर्थः। आग्नेयेऽपि—"उपरिष्टाज्ज्योतिरन्त्यात्" (३।१४ भा० छ०) इति। शौनककात्यायनाभ्यां "ततो ज्योतिर्यतोऽष्टकः" इत्यनेनैव अस्या अपि लक्षणं कृतं, न तु उपरिष्टाज्ज्योतिरिति नाम्ना। उव्वटसायणाभ्यां पुनर्मध्येज्योतिः उपरिष्टाज्ज्योतिः इत्यङ्गीकृतम्। प्रथमादिपादत्रयाणामेकादशाक्षरत्वे चतुर्थपादस्याष्टाक्षरत्वे च पादचतुष्टयवती उपरिष्टाज्ज्योतिस्त्रिष्टुबिति लक्षणार्थः। एतादृशी अपि पूर्ववत् शौनकाद्युक्ता विराड्रूपा त्रिष्टुप्, न तु उपरिष्टाज्ज्योतिस्त्रिष्टुबिति प्रायेण व्याख्यातम्। स इद्भे इति।—अस्याः सायणभाष्यं यथा—"चदर्यौवि

चतुर्दशर्चं द्वितीयं सूक्तं……पञ्चमी विराड्रूपा । हे पुरुवसो ! बहुधनाग्ने ! यस्तुभ्यं हवींषि प्रयच्छति स यजमानः दृळ्हेचित् दृढेऽपि शत्रुपुरे स्थितं वाजमन्नम् अर्वताश्वेन अभितृणत्ति हिनस्ति यथा, स यजमानः अक्षिति अक्षीणं श्रवोऽन्नं धत्ते धारयति । तथा च सति तुभ्यं हविषां प्रदातारो वयमपि देवता देवे त्वयि स्थिता विश्वा सर्वा सर्वाणि वामानि वननीयानि धनानि सदा सर्वदा धीमहि धारयामः" इति । पूर्ववदिहापि जगतीलक्षणपरिग्रहार्थमाह, तथेति ।—तथा प्रथमादिपादत्रयाणां द्वादशाक्षरत्वे अन्त्यपादस्याष्टाक्षरत्वे च पादचतुष्टय-वती उपरिष्टाज्ज्योतिर्जगतीति लक्षणार्थः । शौनककात्यायनाभ्यान्तु एषैव उपरिष्टाज्ज्योतिस्त्रिष्टुबिति प्रागुक्तलक्षणेनाभिहितम् । अग्निनेति ।—सायणभाष्यं यथा—"अग्निनेन्द्रेणेति चतुर्विंशत्यृचं पञ्चमं सूक्तम्……उपरिष्टाज्ज्योतिश्छन्दः चतुर्थ-पादस्याष्टाक्षरत्वात् यतोऽष्टकस्ततो ज्योतिरिति तल्लक्षणम । हे अश्विना ! अश्विनौ ! अग्निना इन्द्रेण वरुणेन विष्णुना आदित्यैः रुद्रैः वसुभिश्च सचाभुवा सहभूतौ उषसा सूर्येण च सजोषसा सङ्गतौ युवां सोमं पिबतम्" इति । अत्र विष्णुना इत्यन्तो द्वादशाक्षरः प्रथमः पादः, सचाभुवा इत्यन्तश्च द्वितीयः, तथा सूर्येण इत्यत्र व्यूहेन सूरियेण इति पठनात् तृतीयश्च द्वादशाक्षरः पादः, चतुर्थश्च अष्टाक्षरः इति उपरिष्टाज्ज्योतिर्जगती अन्यैरुक्ता उपरिष्टाज्ज्योतिस्त्रिष्टुबिति बोध्यम् । अत्रापि "वयस्त्रैष्टुभाः" इत्यत्र "चत्वारो गायत्राः" "गायत्रः" इत्यत्र "त्रैष्टुभः" तथा "गायत्रेण" इत्यत्र "जागतेन" "जागतैस्त्रिभिः" इत्यत्र च "गायत्रैश्चतुर्भिः" इति पाठान्तरम् । ततश्च अष्टाक्षरप्रथमादिपादचतुष्के एकादशाक्षरपञ्चमपादे च पञ्चपादा उपरिष्टाज्ज्योतिस्त्रिष्टुप् तथा पञ्चमपादस्य द्वादशाक्षरत्वे च उपरिष्टाज्ज्योतिर्जगतीति तेषामाशयः । एवंविधा उपरिष्टाज्ज्योतिस्त्रिष्टुप् शौनककात्यायनाभ्यां केनापि नाम्ना नैवोक्ता ; जगती तु महाबृहती नाम्ना पठिता, तल्लक्षणे च प्रागेव प्रदर्शिते । अत्र उपरिष्टाज्ज्योतिर्जगत्या उदाहरणं यथा—"नवानां नवतीनां विषस्य रोपुषीणाम् । सर्वासामग्रभं नामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥" (ऋक० २अष्ट० ५अ० १म० २४ अनु० १९१सू० १३ऋ०) । सायणभाष्यं यथा—"नवानामित्येषा त्रयोदशी महाबृहती चत्वारोऽष्टका जागतश्च महाबृहती इति ह्युक्तम् । अत्र यद्यपि अक्षराणि न्यूनानि तथाऽपि व्यूहेन पूरणीयानि" इति । त्रिष्टुबधिकारे शौनककात्यायनाभ्यामुपजगती अभिसारिणी विराट्स्थाना विराड्रूपा महाबृहती यवमध्या विराट्पूर्वा पङ्क्त्युत्तरा वा इत्येते अधिकास्त्रिष्टुभः उक्ताः । शौनकोक्तमुपजगतीलक्षणाक्रान्तं छन्दस्तु कात्यायनेन प्रकरणभेदात् कदाचित्

त्रिष्टुप् कदाचित् जगती इति विशिष्टनाम्ना उक्तम्। तत्र विराड्रूपाख्याः त्रिष्टुब्ज्योतिष्मतीलक्षणाभिन्नत्वेन ब्रह्मण्याचक्राद्वन्द्वोः पाठान्तरीयजगतीज्योतिष्मतीलक्षणाभिन्नत्वेन प्रागेव तेषां लक्ष्यलक्षणानि प्रदर्शितानि। त्रिष्टानां चतुर्णां लक्षणं यथा—"द्वौ चेत्तु द्वादशाक्षरौ। प्रायश्चोपजगत्येषा परश्चात्तु सा त्रिष्टुप् ॥" (१६।६१ ऋ० प्रा० ) इति। उव्वटभाष्यं—"यदि द्वौ द्वादशाक्षरौ भवतः द्वावेकादशाक्षरौ परस्य जगतीप्राये वर्त्तमाना इत्यर्थः, उपजगती नाम वेदितव्या। यथा—सो चिन्नु वृष्टिर्यूथ्या स्वा सचाँ। अन्य तु त्रिष्टुभःप्रायस्य सा त्रिष्टुप्नाम्ना वेदितव्या। यथा—सनेमि चक्रमजरं विवावृते" इति। "द्वौ तु जागतौ यस्याः सा जागते जगती त्रैष्टुभे त्रिष्टुप्" (कात्या० )। उदाहरणं यथा—"सनेमि चक्रमजरं विवावृत उत्तानायां दश युक्ता वहन्ति। सूर्यस्य चक्षूरजसैत्यावृतं तस्मिन्नार्पिता भुवनानि विश्वा ॥" ( ऋक्० २अष्ट० ३अ० १म० २२अनु० १६४सू० १४ऋ० ) इति। भाष्यं—"त्रिष्टा चनादेशपरिभाषया त्रिष्टुभः"। अत्यास्य त्रैष्टुभे त्रिष्टुप्प्राये वर्त्तमानत्वादुपजगतीच्छन्दः। उदाहरणं यथा—"सो चिन्नु वृष्टिर्यूथ्या स्वा सचाँ इन्द्रः श्मश्रूणि हरिताभिप्रुष्णुते। अववेति सुक्षयं सुते मधूदिद्धूनोति वातो यथा वनम् ॥" ( ऋक्० ७अष्ट० ७अ० १०म० २अनु० २३सू० ४ऋ० ) इति। भाष्यं—"त्रिष्टाश्चतस्रो जगत्यः"। ऋचोऽस्याः जागते जगतीप्राये वर्त्तमानत्वात् पूर्ववदुपजगतीच्छन्दो बोध्यम्। "वैराजजागतैः पादैर्यौ वाचेत्यभिसारिणी" ( १६।६२ ऋ० प्रा० )। "वैराजौ जागतौ चाभिसारिणी" ( कात्या० )। उदाहरणं—"यो वाचा विवाचो मृध्रवाचः पुरू सहस्राशिवा जघान। तत्तदिदस्य पौंस्यं गृणीमसि पितेव यस्तविषीं वावृधे शवः ॥" ( ऋक्० ७अष्ट० ७अ० १०म० २अनु० २३सू० ५ऋ० ) इति। भाष्यं—"पञ्चमी अभिसारिणी" इति। "नवकौ दशकौ वा स्यादेकोऽनेकोऽपि त्रिष्टुभः। एकादशाक्षराणि विराट्स्थानाऽऽह नाम सा ॥" ( १६।६३ ऋ० प्रा० ) इति। भाष्यं यथा—"एतदुक्तं भवति यद्येको नवकः द्वौ दशकौ भवतः, एको दशको द्वौ नवकौ उभयथापि एकस्त्रैष्टुभः द्वौ चेत्त्रैष्टुभौ एकेको इतरौ वा विराट्स्थाना नाम वेदितव्या" इति। "नवकौ वैराजस्त्रैष्टुभश्च, द्वौ वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थाना" ( कात्या० ) इति। उदाहरणं यथा—"सुधी ष्वमिन्द्र मा रिषण्यः स्याम ते दावने वसूनाम्। इमा हि त्वामूर्जो वर्धयन्ति वसूयवः सिन्धवो न क्षरन्तः ॥" (ऋक्० २अष्ट० ६अ० २म० १अनु० ११सू० १ऋ० ) इति। भाष्यं यथा—"सुधी ष्वमिन्द्रेत्येकविंशत्यृचमेकादशं सूक्त… …मिन्द्रं विराट्स्थानमन्तऽन्त्यामिति विराट्स्थाना त्रिष्टुप्" इति। "पूर्वौ

दशाक्षरो पादावुत्तरेऽष्टाक्षरास्त्रयः। विराट्पूर्वाऽ नामैषा त्रिष्टुप् पङ्क्त्युत्तरैव वा॥" (१६।६४ ऋ० प्रा०) इति। "आद्यौ दशकावष्टकास्त्रयः पङ्क्त्युत्तरा विराट्पूर्वा वा" (कात्या०) इति। उदाहरणम्—"पूर्वेन्द्राग्निभ्यामहावि हव्यं शूष्यं घृतं न पूतमद्रिभि:। ता सूरिषु श्रवो बृहद्रयिं गृणत्सु दिधृतमिषं गृणत्सु दिधृतम्॥" (ऋक्० ४अष्ट० ४अ० ५म० ६अनु० ८६सू० ६ऋ०) इति। भाष्यम्—"इन्द्राग्नीश्चमिति षड्चं चतुर्दशं सूक्तं......षष्ठी विराट्पूर्वा आद्यौ दशकावष्टकास्त्रय इति परिभाषितत्वात्" इति। एवं जगत्यधिकारे च शौनक-कात्यायनाभ्यां महासतोबृहती महापङ्क्तिश्चेति द्वे अधिके उक्ते; यथा—"महासतोबृहत्यर्कौ व्यूहयोरेतयो: सह। अन्त्यात् त्वेति पादान्ते दैवतान् सप्तविंशके॥" (१६।७१ ऋ० प्रा०) इति। "अष्टिनस्त्रय: खौ च भौ महासतोबृहती" (कात्या०) इति। "महापङ्क्ति: षडष्टका:। अष्टको सप्तक: षटको दशको नवकश्च वा" (१६।७१—७२ ऋ० प्रा०) इति। "अष्टको सप्तक: षट्को दशको नवकश्च, षडष्टका वा महापङ्क्ति:" (कात्या०) इति। तयोरुदाहरणे यथा—"आ य: पप्रौ भानुना रोदसी उभे, धूमेन धावते दिवि। तिरस्तमो ददृश ऊर्म्यास्वा, श्यावास्वरुषो वृषा, श्यावा अरुषो वृषा॥" (ऋक्० ५अष्ट० ८अ० ६म० ४अनु० ४८सू० ६ऋ०) इति। भाष्यं यथा— "षष्ठी महासतोबृहती अष्टाक्षरास्त्रय: पादा: द्वादशाक्षरौ द्वौ पादौ सा महासतोबृहती" इति। अत्र प्रथमतृतीययोर्द्वादशाक्षरत्वमन्ययोश्च त्रयाणामष्टाक्षरत्वमिति महासतोबृहतीनाम्नीयं जगती। "सेहान उग्र पृतना, अभिद्रुह: शचीपत, इन्द्र विश्वाभिरूतिभि:। माध्यन्दिनस्य सवनस्य, वृत्रहन्ननेद्य, पिबा सोमस्य वज्रिव:॥" (ऋक्० ६अष्ट० ३अ० ८म० ५अनु० ३७सू० २ऋ०) इति। भाष्यं—"प्रेदं ब्रह्मेति सप्तर्चं सप्तमं सूक्तं···शिष्टा: षडृच: षडष्टका महापङ्क्तय:" इति। इयं षडष्टका महापङ्क्तिजगती तु पिङ्गलेन पङ्क्त्यधिकारे जगतीपङ्क्तिनाम्ना उक्ता। "सूर्ये विषमासजामि, दृतिं सुरावतो गृहे। सो चिन्नु न मराति, नो वयं मरामा-रे अस्य योजनं हरिष्ठा, मधुत्वा मधुला चकार॥" (ऋक्० २अष्ट० ५अ० १म० २४अनु० १९१सू० १०ऋ०) इति। भाष्यं—"कङ्कत इति षोडशर्चं द्वादशं सूक्तं......सूर्ये विषमित्याद्यास्तिस्रो महापङ्क्तय: अष्टको सप्तक: षट्को दशको नवकश्चेत्युक्तलक्षणोपेतत्वात्" इति। त्रयोदशाक्षरचतुष्पादत्वे तु अतिजगतीति ज्ञेयम्। तदोदाहरणं यथा—"तमिन्द्रं जोहवीमि मघवानमुग्रं, सत्रा दधानमप्रतिष्कुतं शवांसि। मंहिष्ठो गीर्भिरा च यज्ञियो ववर्त-द्राये नो विश्वा सुपथा कृणोतु वज्री॥" (ऋक्० ६अष्ट० ६अ० ८म० १०अनु० ८६सू० १२ऋ०) इति। भाष्यं—"त्रयोदश्यतिजगती" इति।

अथ गायत्र्यादीनां विशेषसंज्ञा।—

## एकस्मिन् पञ्चके छन्दः शङ्कुमती ॥ ५५ ॥

यदैकः पञ्चाक्षरः पादो भवति, त्रयश्च षडक्षराः, तदा शङ्कुमती नाम गायत्री भवति। छन्दोग्रहणे प्रकृते पुनश्छन्दोग्रहणं छन्दोमात्रप्रतिपत्त्यर्थम्; तेन सर्वेषु छन्दःसु पञ्चाक्षरैकपादलक्षिता शङ्कुमती भवति। इतरथा ह्यनन्तरसम्प्रत्ययः स्यात्। तत्रोदाहरणम्।—

"युक्तेन मनसा, वयं देवस्य।
सवितुः सवे, स्वर्ग्याय शक्त्या॥" (११।२ वा० स०)। (फ)

---

(फ) त्रिष्टुब्जगत्यधिकारं परिसमाप्य गायत्र्यादिच्छन्दसां शङ्कुमतीसंज्ञकं भेदं दर्शयति, एकस्मिन्निति।—पञ्चके पञ्चाक्षरे, पादे इति शेषः। सर्वेषामेव छन्दसां यथालक्षणमुपात्तेषु पादान्तरेषु पञ्चाक्षरैकपादत्वे च शङ्कुमतीति लक्षणम्। तथा च,—"एकस्मिन् पञ्चके तथा। भवेच्छन्दः शङ्कुमती" (३।१४—१५ जा० छ०) इति। शौनक-कात्यायनाभ्यामीदृशो भेदो नाभिहितः। गायत्रीच्छन्दसः प्रथमाभिहितत्वेन तद्गतमेव लक्षणार्थं दर्शयितुमाह—त्रयश्चेति। शङ्कुमत्याः सर्वच्छन्दोगतत्वं प्रतिपादयति, छन्दोग्रहणे इति।—सूत्रे छन्दः इति पदानुपादानेऽपि प्रकरणादेव छन्दःप्रतीतेः पुनश्छन्दोग्रहणं छन्दोमात्रप्रतिपत्त्यर्थं छन्दोमात्रेषु शङ्कुमतीति ज्ञापनार्थं पुनश्छन्दोग्रहणमित्यर्थः। तदेव समर्थयते, इतरथेति।—अनन्तरसम्प्रत्ययः आनन्तर्यज्ञानं त्रिष्टुब्जगत्यधिकारात् परत्वात् तत्तद्विषयमात्रगता शङ्कुमतीति प्रतीतिरित्यर्थः। युक्तेनेति।—अस्य महीधरभाष्यं यथा—"गायत्री, तृतीयः पादः पञ्चार्णः तेन शङ्कुमती, तदुक्तं पिङ्गलेन—एकस्मिन् पञ्चके छन्दः शङ्कुमतीति। सवितुर्देवस्य प्रजापतेः सवे प्रसवे आज्ञायां वर्त्तमाना वयं यजमाना युक्तेन इन्द्रियेभ्यो नियमितेन एकाग्रेण मनसा स्वर्ग्याय स्वर्गसाधकाय कर्म्मणे शक्त्या स्वसामर्थ्येन प्रयत्नं कुर्म्मः इति शेषः" इति। अत्र मनसा इत्यन्तः षडक्षरः प्रथमः पादः, देवस्य इत्यत्र देवसिय इति पठित्वा द्वितीयः पादः पूरणीयः, तथा शक्त्या इत्यत्र शक्तिया इति पठित्वा चतुर्थोऽपि षडक्षरः कर्त्तव्यः। तृतीयस्तु पञ्चाक्षर इति शङ्कुमतीलक्षणवतीयं गायत्री। केचित्तु त्रयमित्यत्र; सवे

## षट्के ककुम्मती ॥ ५६ ॥

एकस्मिन् षडक्षरे पादे, अन्येषु यथालक्षणमुपात्तेषु छन्दोमात्रं ककुम्मती नाम भवति। (ब)

## त्रिपाद्‌णिष्ठमध्या पिपीलिकमध्या ॥ ५७ ॥

यदा आद्यन्तौ पादौ बह्वक्षरौ, मध्यमोऽल्पतराक्षरः, तदा अणिष्ठमध्या सती पिपीलिकमध्या नाम भवति। अयमर्थः,—आद्यन्तौ पादावष्टाक्षरौ, मध्यमस्त्र्यक्षरः, एवं त्रिपात् गायत्री पिपीलिकमध्या नाम भवति। एवं चतुरक्षरे पञ्चाक्षरेऽपि

---

त्यन्तश्च अष्टाक्षरः पादः अपरः पञ्चाक्षर इति ककुम्मतीत्वं मन्यन्ते। एतन्मते अष्टाक्षरद्विपादत्वे पञ्चाक्षरैकपादत्वे च ककुम्मतीति बोद्धव्यम्। ककुमत्यनुष्टुभो यथा—"पितुं नु स्तोषं महो धर्माणं तविषीम्। यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥" (ऋक्० २अष्ट० ५अ० १म० २४अनु० १८७सू० १ऋ०) इति। अत्राद्यपादस्य पञ्चाक्षरत्वादन्येषाञ्च अष्टाक्षरत्वात् ककुमत्यनुष्टुबिति बोद्धव्यम्। शौनकादिभिः ककुमत्या अनुल्लेखादेतल्लक्षणकं छन्दः अनुष्टुब्गर्भोष्णिङ्नाम्ना अभिहितम्। भाष्यकारेणापि तदेव समर्थितम्; तथा च भाष्ये—"पितुं न्वित्येकादशर्चमष्टमं सूक्तम् आगस्त्यमन्नदेवताकं गायत्रम् आद्यानुष्टुब्गर्भा उष्णिक् आद्यः पञ्चकः त्रयोऽष्टका अनुष्टुब्गर्भा इत्युक्तत्वात्" इति। तल्लक्षणञ्च उष्णिगधिकारे एव प्रदर्शितम्। अन्येषाञ्च उदाहरणानि पूर्वरीत्या स्वयं समर्थनीयानि।

(ब) सर्वच्छन्दसां ककुम्मतीति विशेषसंज्ञामाह, षट्के इति।—षट्के षडक्षरे, पादे इति शेषः। सर्वेषु छन्दःसु स्वस्वलक्षणान्वितपादान्तरत्वे षडक्षरैकपादत्वे च ककुम्मतीति लक्षणम्। आग्नेयच्छन्दःसारे तु एव केवलमीदृक्छन्द उक्तं, यथा—"षट्के छन्दः ककुम्मती" (३।१५ आ० छ०) इति। शौनकादिभिश्च ईदृशं छन्दोलक्षणं न कृतं, भाष्येऽपि अस्याः समुल्लेखो न दृश्यते। उदाहरणमपि नैव सुघटम्। अत्र पादद्वयस्याष्टाक्षरत्वे एकपादस्य षडक्षरत्वे च ककुम्मती गायत्रीति बोध्यम्। एतेन षडक्षरैकपादोपलक्षितानामतिपादनिचृदादिगायत्रीणां (३।११—१५ पि०) सूत्रोक्तानां ककुम्मतीभिन्नविषयत्वमेव बोद्धव्यमिति दिक्। एवमुष्णिगादीनामपि ककुम्मतीत्वं ज्ञेयम्।

**मध्यमे पादे पिपीलिकमध्या सिध्यति। यत्किञ्चित्त्रिपाच्छन्दो लघुमध्यमपादं, तत् सर्वं पिपीलिकमध्यमुच्यते। (भ)**

---

(भ) त्रिपाच्छन्दसां मध्यपादीयाक्षरसङ्ख्यावैशिष्ट्येन पिपीलिकमध्या इति विशेषाभिधानमाह. त्रिपादिति।—त्रिपात् पादत्रयवती गायत्री, अतिशयेन अल्पं अल्पिष्ठं लघ्वक्षरपादं मध्यं मध्यस्थितं यस्याः सा लघुमध्यपादा सती इत्यर्थः, पिपीलिकमध्या नाम भवति। तथा च—"त्रिपादल्पिष्ठमध्या स्यात् सा पिपीलिकमध्यमा" (३।१५ वा० छ०) इति। गायत्रीगतदृष्टान्तेन विशेषं समर्थयते, अयमर्थ इति।—प्रथमतृतीयपादयोरष्टाक्षरत्वे द्वितीयपादस्य त्र्यक्षरत्वे चतुरक्षरत्वे पञ्चाक्षरत्वे वा त्रिपाद्गायत्री पिपीलिकमध्या इति लक्षणम्। अत्र त्र्यक्षर इति अल्पाक्षरोपलक्षणार्थम्। उक्तौ गायत्रीति यदुक्तं तदपि सर्वच्छन्दसामुपलक्षणार्थमेव, तच्च दर्शयति,—यत् किञ्चिदिति। शौनक-कात्यायनाभ्यां गायत्र्याः पङ्क्त्यादिवयाणाञ्च पिपीलिकमध्यात्वं नाभिहितम्। पिपीलिकमध्यापदव्युत्पत्तिमाह,—"अथ पिपीलिकामध्याया निर्वचनं वक्तुं पिपीलिकाशब्दस्य निर्वचनमाह—पिपीलिका पेलतेर्गतिकर्मणः" (१।९ दैव० ब्रा०)। भाष्यं—"न ह्यसौ क्षणमप्युदास्ते। इदानीं तच्छन्दोनिर्वचनं दर्शयति—पिपीलिकामध्येत्यौपमिकम्" (१।१० दैव० ब्रा०)। भाष्यं—"पिपीलिकानाम उभयतः स्थूलो मध्ये कृशः उद्भिज्जः प्राणिविशेषः, तन्मध्यमिव मध्यं यस्याः सा तथोक्ता। मध्यमपदलोपी समासः। तस्यास्तनुमध्यत्वमनुक्रम्य एकादशिनोः परः षट्कस्तनुशिरा मध्ये चेत् पिपीलिकामध्येत्युक्तम्" इति। एषामुदाहरणानि वृत्तिकृता न दर्शितानि यथाप्राप्तमस्माभिः कतिचित् प्रदर्श्यन्ते। तत्रोष्णिक् यथा—"हरी यस्य सुयुजा विव्रता वेरर्वन्तानु शेपा। उभा रजी न केशिना पतिर्दन्॥" (ऋक्० ८अष्ट० ५अ० १०म० ९अनु० १०५सू० २ऋ०)। अस्याः सायणभाष्यं यथा—"नाना सुमितो गुणतो दुर्मिवः सः ऋषिः, हरी यस्य सुयुजा वज्रं यच्छते इति द्वे पिपीलिकमध्ये एकादशषट्कैकादशके औष्णिहौ" इति। "एकादशाक्षरौ च द्वौ मध्ये चैकः षडक्षरः। उष्णिक् पिपीलिकमध्या हरी यस्येति दृश्यते॥" (१६।२१ ऋ० प्रा०) इति। "मध्यश्चेत् पिपीलिकामध्या" (कात्या०) इति। पिपीलिकामध्यायाः अनुष्टुभः बृहत्याश्च उदाहरणं (३।२५ पि० तथा ३।२६ पि०) सूत्रटीकायां द्रष्टव्यम्।

**विपरीता यवमध्या ॥ ५८ ॥**

आद्यन्तौ पादौ लघ्वक्षरौ, मध्यमश्च बह्वक्षरः सा गायत्री यवमध्या नाम भवति। एवमुष्णिगादिष्वपि योज्यम्। (म)

**ऊनाधिकेनैकेन निचृद्भुरिजौ ॥ ५९ ॥**

चतुर्विंशत्यक्षरा गायत्री, एकेनाक्षरेण न्यूनेन सा निचृत् इति विशेषसंज्ञां लभते एकेनाधिकेन भुरिगिति। एव-

---

(म) पूर्ववदपरां विशेषसंज्ञामाह, विपरीतेति।—वैपरीत्यञ्चात्र पूर्वसूत्रीयापिपीलिकमध्याया एव बोध्यम्। ततश्च विपरीता बह्वक्षरमध्यपादा इत्यर्थः। पूर्वत्र यथा अल्पाक्षरमध्यपादत्वे पिपीलिकमध्या अत्र तथा बह्वक्षरमध्यपादत्वे यवमध्या इति लक्षणार्थः। तथा च—"विपरीता यवमध्या" (३।१६ आ० छ०) इति। शौनक-कात्यायनाभ्यां मध्यपादस्य दशाक्षरत्वे यवमध्येति कथितम्; यथा—"आद्यन्तौ सप्तकौ यस्या मध्ये च दशको भवेत्। यवमध्या च गायत्री समुन्व इति दृश्यते॥" (१६।२४ ऋ० प्रा०) इति। "दशकश्चेद्यवमध्या" (कात्या०) इति। वृत्तौ पूर्ववत् गायत्रीगतलक्षणमत्याः प्रतिपाद्य सर्वच्छन्दसामेव यवमध्यात्वं प्रतिपादयितुमाह—एवमिति। शौनक-कात्यायनाभ्यान्तु केवलं गायत्र्यास्त्रिष्टुभश्च यवमध्यात्वमुक्तं, न तु पिङ्गलवत् सर्वेषामेव छन्दसां, तत्र यवमध्यागायत्र्या लक्षणं प्रागेव प्रदर्शितं, त्रिष्टुभस्तु—"यवमध्या तु मध्यमे" (१६।६८ ऋ० प्रा०) इति। "मध्ये चेद्यवमध्या" (कात्या०) इति। उव्वटेन—"इन्द्राग्निरग्ने अर्चिभिः" (ऋक्० ४अष्ट० ८अ० ६म० ४अनु० ४८सू० ७ऋ०) इत्यादिना यदस्या उदाहरणं प्रदर्शितं, तत्तु सायणेन महाग्निरन्या उदाहरणत्वेनोक्तं, तच्च प्रदर्शितमेवास्माभिः (३।५४ पि०) सूत्रे पाठान्तरीयोपरिष्टाज्ज्योतिर्जगत्याः टीकायामिति। समुन्वे इति।—अस्याः सायणभाष्यं यथा—"स सुन्वे यो वसूनामित्येषा तु यवमध्या गायत्री पवमानः सोमो देवता। तथा चानुक्रम्यते……स सुन्वे गायत्री यवमध्येति। स सोमः सुन्वे अभिषूयते ऋत्विग्भिः। यः सोमः वसूनां धनानाम् आनेता यश्च रायां रान्ति प्रयच्छन्ति क्षीरादिकमिति रायो गावस्तेषामानेता। यश्च इडानाम् अन्नानाञ्च यश्च सोमः सुक्षितीनां सुनिवासानां शोभनमनुष्ययुक्तानां गृहाणाम आनेता विद्यते सोऽभिषुतो-ऽभूत्" इति। एवमन्येषामप्युदाहरणानि स्वयमनुसन्धेयानि।

सुष्णिगादिष्वपि द्रष्टव्यम्। तत्र निचृद्गायत्र्या उदाहरणं यथा।—

"यः शुक्र इव सूर्य्यः, हिरण्यमिव रोचते।
श्रेष्ठो देवानां वसुः॥" ऋक्० १अष्ट० २अ० १म० ८अनु० ४३सू० ५ऋ० )।

भुरिग्गायत्र्या उदाहरणं यथा।—

"परिधामानि यानि ते, त्वं सोमासि विश्वतः।
पवमान ऋतुभिः कवे!॥" ( ऋक्० ७अष्ट० २अ० ९म० ३अनु० ६६सू० ३ऋ० )। (य)

---

(य) गायत्र्यादिच्छन्दसाम् एकाक्षरन्यूनाधिकत्वे निचृत्-संज्ञां भुरिक्-संज्ञाञ्च दर्शयति, ऊनाधिकेनेति।—एकेन एकसङ्ख्याकाक्षरेण, ऊनाधिकेन न्यूनेन वर्द्धितेन च इत्यर्थः, ऊनाधिकत्वञ्चात्र यथाक्रमं बोद्धव्यम्। इत्तौ गायत्रीति यदुक्तं तत् सर्वेषामेव छन्दसामुपलक्षणार्थमिति प्रदर्शयितुमाह, एवमिति।—ततश्च सर्वेषामेव छन्दसां स्वस्वलक्षणलक्षितानामेकाक्षरन्यूनत्वे निचृत् एकाक्षराधिक्ये च भुरिगिति विशेषसंज्ञा भवेदिति सूत्रार्थः। तथा च—"निचृ ( द्व ) देकेन वर्ज्जिता भुरिगेकेनाधिकेन" ( ३।१६ षा० छ० ) इति। "एकद्व्यूनाधिका सैव निचृदूनाधिका भुरिक्" ( १७।१६ ऋ० प्रा० ) इति। उव्वटभाष्यं यथा—"एकेन ऊना निचृद्भवति एकेनाधिका सा भुरिक् भवति। यः शुक्र इव सूर्य्यो निचृत्। परिधामानि यानि ते भुरिक्" इति। एतयोर्भुरिक्पदस्य निर्वचनं यथा—"तथा एकाक्षराधिक्ये संज्ञान्तरमाह—"भरणात् भुरिज उच्यते" ( ३।२१ दैव० ब्रा० )। भाष्यं यथा—"एकाक्षरेण भरणात् चतुर्विंशत्यात्मगायत्र्यादाविति शेषः" इति। निचृत्-पदस्य व्युत्पत्तिस्तु ( ३।१० पि० ) टीकायां प्रागेव प्रदर्शिता इति। य इति।—भाष्यं यथा—"कद्रुद्रायेति नवर्चमष्टमं सूक्तं…घोरपुत्रः कण्व-ऋषिः गायत्रीच्छन्दः। यो रुद्रः सूर्य्य इव शुक्रः सूर्य्य इव दीप्तिमान् हिरण्यमिव रोचते यथा सर्वेषां प्राणिनां हिरण्यं प्रीतिकरं भवति तथा रुद्रोऽपि, स च देवानां सर्वेषां मध्ये श्रेष्ठो वसुः निवासहेतुश्च" इति। अत्र सूर्य्य इत्यत्र सूरियः इत्यक्षरव्यूहेन पादपूरणम्। श्रेष्ठो देवानां वसुरित्यत्र एकाक्षरन्यूनत्वेन निचृत्-संज्ञकेयं गायत्री। भुरिग्गायत्र्या उदाहरणं यथा परिधामानीति।—सायणभाष्यं यथा—"पवस्वेति विंशत्यृचं षष्ठं

## द्वाभ्यां विराट्-स्वराजौ ॥ ६० ॥

ऊनाधिकग्रहणमनुवर्त्तते। द्वाभ्यामक्षराभ्यां न्यूनाधिकाभ्यां गायत्री यथाक्रमं विराट्-स्वराट्संज्ञिका भवति। एवमुष्णिगादिष्वपि द्रष्टव्यम्। तत्र विराड्गायत्र्या उदाहरणं यथा।—

"प्रवता हि क्रतूना-मा हा पदेव गच्छसि।
अभक्षि सूर्य्ये सचा॥" ( ऋक्० ३ अष्ट० ६ अ० ४ म० ३ अनु० ३१ सू० ५ ऋ० )।

स्वराड्गायत्र्या उदाहरणं यथा।—

"जोषा सवितर्यस्य ते, हर: शतं सवाँ अर्हति।
पाहि नो दिद्युत: पतन्त्या:॥" ( ऋक्० ८ अष्ट० ८ अ० १० म० १२ अनु० १५८ सू० २ ऋ० )। ( र )

---

सूक्तं···त्वं सोम सूर इत्येषानुष्टुप् शिष्टा गायत्र:। हे सोम! यस्मात् ते त्वदीयानि धामानि तेजांसि परितो वर्त्तन्ते, अत एव हे पवमान! पूयमान! हे कवे! क्रान्तकर्म्मन्! हे सोम! त्वमृतुभि: वसन्तादिकालविशेषै: सह विश्वत: सर्वतोऽसि भवसि। अहोरात्रौ यत्र यत्र व्याप्तौ तत्र तत्र वसन्तादिकालोपाधिक: सोमस्त्विष्ठति तयोस्तदधीनत्वादित्यर्थ:" इति। अत्र तृतीयपादस्य नवाक्षरत्वात् भुरिक्-संज्ञकेयं गायत्री।

( र ) सर्वच्छन्दसां द्व्यक्षरन्यूनाधिकत्वे विशेषाभिधानाय सूत्रान्तरमवतारयति, द्वाभ्यामिति।—द्वाभ्याम्, अक्षराभ्यामिति शेष:। पूर्वसूत्रात् वचनविपरिणामेन ऊनाधिकपदमधिकर्त्तव्यमित्यत आह, ऊनेति।—स्वस्वलक्षणलक्षितगायत्र्यादिसर्वच्छन्द:सु पादाक्षराणां द्व्यक्षरन्यूनत्वे विराट्संज्ञा तथा द्व्यक्षराधिक्ये च स्वराट्संज्ञा भवेत् इति सूत्रार्थ:। चतुर्विंशत्यक्षरा गायत्री चेत् द्वाविंशत्यक्षरा तदा विराड्गायत्री यदा च षड्विंशत्यक्षरा तदा स्वराड्गायत्रीति निष्कर्ष:। उक्तञ्च —"द्विहीना च विराड्भवेत्। स्वराट् स्याद्द्वाभ्यामधिकम्" ( ३।१६—१७ पा० छ० ) इति। गायत्रीति सर्वच्छन्दसामुपलक्षणार्थं, तदेव दर्शयति, एवमिति।—उष्णिहादीनामपि विराट्-स्वराट्-संज्ञा तथैवेति भाव:। उक्तञ्च—

"विराजस्तूत्तरस्याहुर्द्वाभ्यां या विषये स्थिताः। स्वराज एवं पूर्वस्य याः काश्चैवं गताः ऋचः॥" (१७।१७ ऋ० प्रा०) इति। व्याख्यानमस्य यथा—"द्वाभ्यामक्षराभ्यां या ऋचः अधिका न्यूना वा विषये मध्ये स्थिता उत्तरस्य पूर्वस्य च छन्दसः, विराजः ता आहुरुत्तरस्य। स्वराजः पूर्वस्य। यथा षड्विंशत्यक्षरा ऋचौ गायत्री-प्राये स्वराज्यौ गायत्र्यौ भवन्ति, उष्णिक्प्रायेण विराज उष्णिहो भवन्ति। यथा—जोषा सवितर्यस्य ते इति स्वराड्गायत्री। अतिथिं मानुषाणामिति विराडुष्णिक्। उत्तरत्रापि याः काश्चैवंगता एता एव ऋचो भवन्ति" इति। प्रवतेत्यादि।—सायणभाष्यं—"कया नश्चित्र इति पञ्चदशर्चं दशमं सूक्तं वामदेवस्यार्षमैन्द्रं गायत्रम्। हे इन्द्र! त्वं क्रतूनां कर्म्मणां यजमानानां सम्बन्धिनः प्रवता प्रवतः प्रवणान् देशान् पदेव पदानि स्वकीयानि स्थानानीव आगच्छसि हि आगतो भवसि खलु इति पूरणः। हे इन्द्र! त्वाम् अहं सूर्य्ये सूर्य्येण सचा सह अभक्षि भजे" इति। अत्र द्वाविंशत्यक्षरत्वात् विराड्गायत्रीच्छन्दः। जोषेति।—अस्याः सायणभाष्यं—"सूर्य्यमिति पञ्चर्चं सप्तमं सूक्तं सूर्य्यपुत्रस्य चक्षुःसंज्ञस्यार्षं सूर्य्यदेवत्यं गायत्रम्। हे सवितः! सर्वस्य प्रेरक सूर्य्य! जोष अस्मत्स्तुत्यादिकं सेवस्व यस्य ते तव हरः रसहरणशीलं तेजः शतं सवान् यज्ञान् यज्ञान् प्रति अर्हति योग्यं भवति, यद्वा—प्रकाशनादिद्वारा पूजयति, स त्वं नोऽस्मान् पतन्त्याः निपतन्त्याः शत्रुभिरस्मासु क्षिप्यमाणायाः दिद्युतः वज्रनामैतत् द्योतमानायाः शत्रोरायुधात् पाहि रक्ष" इति। गायत्र्याश्चतुर्विंशत्य-क्षरात्मकत्वेऽपि अत्र षड्विंशत्यक्षरत्वात् स्वराड्गायत्रीत्वम्। विराडुष्णिक् यथा—"अतिथिं मानुषाणाम् सूनुं वनस्पतीनाम्। विप्रा अग्निमवसे प्रत्नमीडते॥" (ऋक्० ६अष्ट० २अ० ८म० ४अनु० २३सू० २५ऋ०) इति। भाष्यम्—"ईळिष्वेति त्रिंशदृचं तृतीयं सूक्तं व्यश्वपुत्रो विश्वमना ऋषिः उष्णिक्छन्दः" इति। अत्र "चतुर्थाष्टभिः" (३।२२ पि०) इत्यनेन विहितायाः उष्णिहः चतुर्थपादस्य पञ्चाक्षरत्वात् द्व्यक्षरन्यूनत्वमिति विराडुष्णिक्। स्वराडुष्णिक् यथा—"अग्निना घर्मं पातं हार्दान-महर्दिवाभिरूतिभिः। तन्त्रायिणे नमो द्यावापृथिवीभ्याम॥" (३८।१२ वा० स०) इति। भाष्यं—"स्वराडुष्णिक्" इति। विराडनुष्टुप् यथा—"अषाढासि सहमाना सहस्वारातीः सहस्व पृतनायतः। सहस्रवीर्य्यासि सा मा जिन्व॥" (१३।२६ वा० स०) इति। भाष्यं—"अविद्दृष्टेष्टकादेवत्या विराडनुष्टुप्" इति। एवमन्येषामपि उदाहरणानि ज्ञेयानि। शौनकेन तु द्वाभ्यां त्रिभिश्चतुर्भिः पञ्चभिर्वा अक्षरैर्न्यूनाः गायत्र्यः विराट्संज्ञका एव इष्यन्ते, यथा—"याः काश्चित्त्रिपादास्तु गायत्र्यो हीनतां गताः।

## आदितः सन्दिग्धे ॥ ६१ ॥

यदा षड्विंशत्यक्षरं छन्दो भवति, तदा किं प्रतिपत्तव्यम्? किं गायत्री स्वराट् उत उष्णिक् विराट्? इति। एवं सन्दिग्धे छन्दसि आदिभूतात् पादान्निर्णयः कर्त्तव्यः। यदि प्रथमः पादो गायत्रस्तदा गायत्र्येवासौ। अथोष्णिक्स्तदोष्णिगिति। एवं सर्वत्र। (ल)

---

अक्षरैर्बहुभिस्तास्तु गायत्र्या उपधारयेत्॥" (१७।१८ ऋ० प्रा०) इति। तारादिरित्यादि बह्व्यः संज्ञाश्च तेन तत्र कथिताः, यथा—"तारात् विराट् स्वराट् सम्राट् स्वभ्रिणी परमेष्ठी। प्रतिष्ठा प्रत्नममृतं वृषा शुक्रं जीवं पयः॥ वृष्णमर्योऽथाऽथोऽम्बु वाय्यपि-ओदकमुत्तमम्॥" (१७।१९ ऋ० प्रा०) इति। तथा मा प्रमा प्रतिमा उपमा समा च इति पञ्च छन्दांस्यपि पिङ्गले न दृश्यन्ते, शौनकेन तान्युक्तानि यथा—"मा प्रमा प्रतिमोपमा समा च चतुरक्षरात्। चतुरुत्तरमुद्यन्ति पञ्च छन्दांसि तानि ह॥" (१७।२३ ऋ० प्रा०) इति, तथा मादिच्छन्दसामक्षरन्यूनत्वे विराड्रूपाः कर्विकादयोऽपि पिङ्गलेन नोक्ताः; ते च यथा—"कर्विका सर्विका मर्षिका सर्वमात्रा विराट्कामा। द्व्यक्षरादीनि मादीनां वैराजान्यनुचक्षते॥" (१७।२४ ऋ० प्रा०) इति च। एतेन गायत्र्यादीनि छन्दांसि वैदिकप्रकरणे पिङ्गलेन उक्तानि मादीनान्तु ऋष्युल्लेखाभावात् वेदे नोक्तानि, तानि च कल्पितानीव मन्यन्ते। चतुरक्षरं छन्दः मा इति, ततश्चतुरक्षरवृद्ध्या अष्टाक्षरतया अष्टाक्षरं प्रमानाम छन्दः, ततोऽपि चतुर्वृद्ध्या द्वादशाक्षर प्रतिमा छन्दः, पूर्वरीत्या षोडशाक्षरं छन्दः उपमा, विंशत्यक्षरञ्च समा छन्द इति ज्ञेयम्। मादीनां द्व्यक्षरन्यूनत्वे विराट् मा कर्विका नाम द्व्यक्षरं छन्दः, तथा सर्विका विराट्प्रमा षडक्षरं छन्दः, मर्षिका विराट्प्रतिमा दशाक्षरं छन्दः, सर्वमात्रा विराट् उपमा चतुर्दशाक्षर छन्दः, विराट्कामा विराट्समा अष्टादशाक्षरं छन्दः इत्यायातम्। तैत्तिरीयेऽप्युक्तं—"मा छन्दः, प्रमा छन्दः, प्रतिमा छन्दः, अस्रीविश्छन्दः, पङ्क्तिश्छन्दः, उष्णिहा छन्दः बृहती छन्दः, अनुष्टुप् छन्दः, विराट् छन्दः, गायत्री छन्दः, त्रिष्टुप् छन्दः, जगती छन्दः, पृथिवी छन्दः, अन्तरिक्षं छन्दः, द्यौश्छन्दः, समा छन्दः, नक्षत्राणि छन्दः, मनश्छन्दः, वाक्छन्दः, कृषिश्छन्दः, हिरण्यं छन्दः, गौश्छन्दः, अजा छन्दः, अश्वश्छन्दः" (४।३।७) इति।

(ल) प्रोक्तलक्षणच्छन्दसामक्षरन्यूनाधिक्येऽपि निचृदादिविशेषसंज्ञाविधानात्

## देवतादितश्च ॥ ६२ ॥

इदमपरं निर्णयनिमित्तमुच्यते—सन्दिग्धे छन्दसि देवतादेश निर्णयः कर्त्तव्यः। आदिग्रहणं स्वरादिपरिग्रहार्थम्। कस्य छन्दसः का देवता? यथा निर्णयः कर्त्तव्यः इत्यपेक्षायामिदमुच्यते। (व)

---

एकत्र लक्षणद्वयप्रवेशे किं नाम छन्दः इति निरूपयिष्यन्नाह, आदितः इति।—आदितः आदिभूतात्, पादादिति शेषः। गायत्री स्वराट् उत उष्णिक् विराडिति सन्देहे येन छन्दसा प्रथमः पादः निबद्धः तदेव छन्दः तत्र इति मन्तव्यम्। तथा चोक्तम्—"आदिपादान्निश्चयः स्यात्" (३।१७ भा० छ०) इति। "आकृतिव्यपदेशानां प्राय आदितः आदितः" (१८।४ ऋ० प्रा०) इति।

(व) अपरमपि सन्दिग्धच्छन्दोनिरूपणोपायं दर्शयितुमाह, देवतादित इति।—देवता मन्त्रान्तर्भूता अग्न्यादिकाः, तथा च याज्ञवल्क्यः,—"यस्य यस्य च मन्त्रस्य उद्दिष्टा या च देवता। तदाकारं भवेत्तस्य दैवतं दैवतोच्यते॥" इति। तथा—"अथातो दैवतं तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तद्दैवतमित्याचक्षते, सैषा देवतोपपरीक्षा यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते तद्दैवतः स मन्त्रो भवति। तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च" (७अ० १पा० १निरु०) इति। भाष्यं यथा—"यदर्थवस्तु कामयमानः ऋषिः यस्यां देवतायाम् अभिष्टुतायाम् आर्थपत्यम् अर्थपतिभावमात्मनः इच्छन् अमुष्याः देवतायाः प्रसादेनाहममुष्यार्थस्य पतिर्भविष्यामीत्येतां बुद्धिं पुरोधाय स्तुतिं प्रयुङ्क्ते तद्दैवत एव स मन्त्रो भवति" इति। देवतादितः मन्त्राणां देवतादिज्ञानादित्यर्थः, सन्दिग्धच्छन्दोनिर्णयः कर्त्तव्य इति शेषः। वैदिकमन्त्रेषु यथा छन्दसामवश्यज्ञेयत्वं तथा देवतादीनामपि। उक्तञ्च याज्ञवल्क्येन—"आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च। वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः॥" इति। "कर्मारम्भे मन्त्राणां देवता वेदितव्याः संन्यस्य मनसि देवतां ततो हविर्हूयते, देवतामविज्ञाय यो जुहोति देवतास्तस्य हविर्न जुषन्ते। स्वाध्यायमपि योऽधीते मन्त्रदैवज्ञः सोऽस्मिन् लोके देवैरपीष्यते। तस्माच्च देवता वेद्या मन्त्रे मन्त्रे प्रयत्नतः। मन्त्राणां देवताज्ञानात् मन्त्रार्थमधिगच्छति॥" इत्यनुक्रमणिकोक्त्या न केवलं मन्त्राणां देवताज्ञानात् छन्दोज्ञानमेव, अपि तु मन्त्रप्रयोजनसाफल्यमपि इति प्रतीयते।

**अग्निः सविता सोमो बृहस्पतिर्वरुण इन्द्रो विश्वेदेवा देवताः॥ ६३॥**

गायत्र्यादीनां जगतीपर्य्यन्तानां यथाक्रममग्न्यादयो देवता वेदितव्याः। तत्र सन्दिग्धे छन्दसि यद्याग्नेयं तदा गायत्री, यदि सावित्रं तदोष्णिक्। एवं सर्वत्र। वैदिकेष्वेव छन्दःसु निचृद्भुरिजौ तथा विराट्-स्वराजौ च दृश्येते, न लौकिकेषु। अतो लौकिकपक्षे सन्देहाभावान्निर्णयनिमित्तभूता देवतादयो नेष्यन्ते। (अ)

ततश्च अवश्यमेव देवता वेदितव्या इत्यायातम्। सर्वेषु मन्त्रेषु तत्तद्देवतैव छन्दसां विज्ञापिका सन्देहनिराकरणञ्च देवतानिरूपणादेव इति तात्पर्य्यार्थः। उक्तञ्च —"सन्दिग्धौ देवतादितः" (३।१७ आ० छ०) इति। स्वरादिपरिग्रहार्थं षड्जादिसप्तस्वरपरिग्रहार्थम्।

(अ) गायत्र्यादिसप्तच्छन्दसां देवतानिरूपणायाह, अग्निरिति।—देवता अग्निश्चेत् गायत्री, सविता चेत् तदा उष्णिक् इत्याद्यर्थः। तथा चोक्तं—"छन्दसां देवताः क्रमात्। अग्निः सूर्य्यः शशी जीवो वरुणश्चेन्द्र एव च। विश्वेदेवाश्च" (३।१७—१८ आ० छ०) इति। "दैवतं छन्दसामत्र वक्ष्यते तत उत्तरम्। अग्नेर्गायत्र्यतीधि हे भक्त्या दैवतमाहतुः॥ सप्तानां छन्दसामृचौ॥" (१७।२० ऋ० प्रा०) इति। भाष्यम्—"अग्नेर्गायत्र्यभवत सयुग्वेत्यारभ्य हे ऋचौ छन्दसां भक्त्या दैवतमाहतुः सप्तानां, तस्मादग्नेर्गायत्री भवति, सावित्री उष्णिक्, सौमी अनुष्टुप्, बृहती बार्हस्पत्या, मैत्रावरुणी विराट्, ऐन्द्री त्रिष्टुप्, वैश्वदेवी जगती" इति। "अथातश्छन्दोदैवता गायत्र्या अग्निः उष्णिहः सविता अनुष्टुभः सोमः बृहत्या बृहस्पतिः पङ्क्तेर्वरुणः त्रिष्टुभः इन्द्रः जगत्याः विश्वेदेवाः विराजो मित्रः स्वराजो वरुणः अतिच्छन्दसः प्रजापतिः विच्छन्दसः वायुः द्विपदायाः पुरुषः एकपदायाः ब्रह्मा। सर्वा ऋचः आग्नेय्यः सर्वाणि यजूंषि वायव्यानि सर्वाणि सामानि सौराणि सर्वाणि ब्राह्मणानि च, स्वाहाकारस्याग्निः वषट्कारस्य विश्वेदेवाः" (अनुक्र०) इति। "व्याहृतीनाञ्च सर्वेषाम् आर्षञ्चैव प्रजापतिः। गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च॥ त्रिष्टुप् च जगती चैव छन्दांस्येतानि सप्त वै॥ अग्निर्वायुस्तथा सूर्य्यो बृहस्पतिरपां

पति:। इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः॥" (संवर्त:) इत्यादौ च किञ्चित् अन्यथाऽपि दृश्यते। सर्वमेतत् स्फुटमुक्तं दैवतब्राह्मणे यथा—"अग्नेर्गायत्र्यभवत् सयुग्वोष्णिहया सविता सम्बभूव अनुष्टुभा सोमो उक्थैर्महस्वान् बृहस्पतेर्बृहती वाचमावत्" (२।७) इति। भाष्यं यथा—"अग्नेः सयुग्वा सहायभूता गायत्री अभवत्। प्रजापतेर्मुखात् देवतासु मध्ये अग्निरजायत, छन्दःसु मध्ये गायत्री च उभावप्यजायेतामित्यर्थः। तथा च तैत्तिरीयक—'प्रजापतिरकामयत प्रजायेय' इति। स मुखतस्त्रिवृतं निरमिमीत। तमग्निर्देवताया अन्वसृज्यत गायत्री छन्दसः इति। यद्वा—सयुग्वा इत्युत्तरत्र सम्बध्यते। अग्नेः सकाशात् गायत्री अजायत इत्यर्थः, तथा उष्णिहया उष्णिक्छन्दसा; सह सयुग्वा सह युज्यमाना ककुप् सविता देवः सम्बभूव तस्मात् प्रजापतेर्यज्ञे; तथा उक्थैः मन्त्रैः महस्वान् तेजस्वी सोमः अनुष्टुभा अनुष्टुप्छन्दसा सार्द्धं तस्मादेव प्रजापतेरजायत। तथा बृहस्पतेर्वाचं वाक्यं बृहतीच्छन्दः अभवत् अचरत् अगच्छद्वा। बृहत्या सार्द्धं बृहस्पतिरपि तस्मात् प्रजापतेर्यज्ञे अजायत इत्यर्थः। अथ द्वितीयं मन्त्रमुदाहरति"—"विराण्मित्रावरुणयोरभिश्रीरिन्द्रस्य त्रिष्टुबेह भागोऽह्नः। विश्वान् देवान् जगत्या विवेश तेन चाकॢप्र ऋषयो मनुष्याः" (२।८ दैव० ब्रा०) इति। भाष्यम्—"अपि च मित्रावरुणयोर्देवयोः विराट् छन्दः अभिश्रीः प्राप्तास्रया आसीत। अथ इन्द्रस्य त्रिष्टुप्छन्दः अह्नो भागः माध्यन्दिनसवनाख्योऽभूत्। तथा जगतीच्छन्दः विश्वान् देवान् आ विवेश प्रविष्टा। तेन अग्न्यादिदेवताकेन गायत्र्यादिच्छन्द-उपनिबद्धेन ऋषयो मनुष्या मरणशीला मानवाश्च आकॢप्राः अकॢपिरे कॢप्ताः सृष्टा आसन्नित्यर्थः। अतो गायत्र्या अग्न्यादिदेवताकेन गायत्र्यादिच्छन्द इत्युक्तं भवति। अथोपरितनानां छन्दसां देवतामाह"—"प्राजापत्या अतिच्छन्दसो विच्छन्दसो वायुर्देवताः। पुरुषो द्विपदानां दैवतं ब्रह्म एकपदाः स्मृताः॥" (२।९ दैव० ब्रा०) इति। भाष्यम्—"अतिच्छन्दसः अतिजगत्यतिशक्वर्यादयोऽतिपूर्वाः, विच्छन्दसः शक्वर्यादिष्टितयः। यद्वा—सर्वा एता अतिच्छन्दसः। विच्छन्दसो गायत्र्यादय एवैकद्व्यक्षरन्यूनाधिकभूताः, ताश्च क्रमेण प्रजापतिवायुदेवताकाः। द्विपदा एकपदाश्च तदभिधानसमये दर्शिताः, ताश्च क्रमेण पुरुषब्रह्मदेवताकाः। अथ अनिर्दिष्टायाः पङ्क्तेर्देवतामाह"—"वासवी पङ्क्तिः" (२।१० दैव० ब्रा०) इति। भाष्यं—"वासवी वसुदेवताका। अथ छन्दसामुक्तदेवताकत्वे प्रमाणमुपन्यस्यति"—"स तु न मन्त्रेऽतद्दैवत्या एवैतेषु छन्दस्स्वृषयो भवन्तीति छन्दसां तद्दैवतमिति" (२।११ दैव०

## स्वराः षड्जादयः ॥ ६४ ॥

षड्जर्षभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादाः स्वरा गायत्र्यादिषु क्रमेण द्रष्टव्याः। ( घ )

---

ब्रा० ) इति। भाष्यं—"तु-शब्दः शङ्काव्यावृत्त्यर्थः, स पुरुषः न मन्येत छन्दसामुक्त-देवताकत्वे प्रमाणं नास्तीति न शङ्केत। यथा एतेषु गायत्र्यादिच्छन्दःसु एतद्देवत्या एव अग्न्यादिदेवताका एव ऋचः प्रायेण सम्भवन्ति तथा छन्दसामु ( तु-शब्दोऽप्यर्थे ) अग्न्यादिदेवताक-ऋगाश्रयाणामपि छन्दसामेतद्दैवतं ह एता अग्न्यादिदेवता भवितुं युक्ताः सन्त्वित्यर्थः" इति। वैदिकच्छन्दःसु सन्देहनिरसनार्थं देवतानिर्णयः कर्त्तव्यः न तु लौकिकच्छन्दःसु इति दर्शयति,—वैदिकेष्विति। शौनकेन च एतदतिरिक्ता अपि छन्दसां देवता उक्ता, यथा—"न पङ्क्तिः सा तु वासवी। प्राजापत्यास्त्वतिच्छन्दा विच्छन्दा वायुदेवता। द्विपदा पौरुषं छन्दः ब्राह्मी त्वेकपदा स्मृता॥" ( १७।२१—२६ ऋ० प्रा० ) इति।

( घ ) सप्तच्छन्दसां सप्तस्वरोच्चार्यत्वेन सन्दिग्धच्छन्दोनिर्णये स्वरस्यापि हेतुतां दर्शयति, स्वरा इति।—स्वराः सङ्गीतशास्त्रप्रसिद्धाः षड्जादयः सप्त, गायत्र्यादि-सप्तच्छन्दःसु क्रमेण प्रयोज्याः इति शेषः। तेन गायत्री षड्जस्वरा, उष्णिक् ऋषभ-स्वरा, अनुष्टुप् गान्धारस्वरा, बृहती मध्यमस्वरा, पङ्क्तिः पञ्चमस्वरा, त्रिष्टुप् धैवत-स्वरा, जगती निषादस्वरा, इत्यायातम्। उक्तञ्च—"षड्जाद्याः स्वराः षड्जो वृषः क्रमात्। गान्धारो मध्यमश्चैव पञ्चमो धैवतस्तथा॥ निषादः······॥" ( ३।१८—१९ भा० छ० ) इति। भरतोऽपि स्वराणां सप्तविधत्वमेवाह, यथा—"स स्वरो यः श्रुतिस्थाने स्वरन् हृदयरञ्जकः। षड्ज-ऋषभ-गान्धाराः मध्यमः पञ्चमस्तथा॥ धैवतश्च निषादश्च स्वराः सप्त प्रकीर्त्तिताः॥" इति। नारदेन षड्जादीनां लक्षणान्यप्युक्तानि, यथा—"षड्जं रौति मयूरोऽपि वृषो नदति चर्षभम्। अजा विरौति गान्धारं क्रौञ्चो नदति मध्यमम्॥ पुष्पसाधारणे काले कोकिलो रौति पञ्चमम्। अश्वश्च धैवतं रौति निषादं रौति कुञ्जरः॥" इति। एषाञ्च प्रत्येकं त्रैविध्यं, यदुक्तं शिक्षायाम्,—"उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः" इति। गायत्रमन्त्राणां षड्जस्वरेण पठनात् स्वरेण सन्दिग्धच्छन्दोनिर्णयः सम्भवतीत्यनारम्भ इति बोद्धव्यम्।

**सितसारङ्गपिशङ्गकृष्णनीललोहितगौरा वर्णाः ॥६५॥**

गायत्र्यादिषु क्रमेण वर्णा निर्णयनिमित्तमभिधीयन्ते । (स)

**आग्निवेश्य-काश्यप-गौतमाङ्गिरस-भार्गव-कौशिक-वाशिष्ठानि गोत्राणीति ॥ ६६ ॥**

गायत्र्यादीनां क्रमेणैतानि गोत्राणि, भवन्तीति वाक्यशेषः । अत्र रोचनाभाः कृतयः, श्यामान्यतिच्छन्दांसि इत्येवमधीयते छान्दसाः । तन्नोपपद्यते ; कृतीनामतिच्छन्दसाञ्च निचृद्भुरिजो-

---

(स) तेषां छन्दसां वर्णनिर्णयमाह, सितेत्यादि ।—सितादिगौरान्ताः सप्त वर्णाः, गायत्र्यादिषु सप्तसु छन्दःसु यथाक्रमेण विज्ञेयाः इति शेषः । तथा हि गायत्रं सितं श्वेतवर्णं शुक्लवर्णमित्यर्थः । औष्णिहं सारङ्गं शुक्लकृष्णमिश्रवर्णम् । आनुष्टुभं पिशङ्गं गोरोचनावर्णम् । बार्हतं कृष्णम् अगुरुवर्णम् । पाङ्क्तं नीलम् उत्पलवर्णम् । त्रैष्टुभं लोहितम् इन्द्रगोपकीटवर्णम् । जागतं गौरं सिद्धार्थवर्णं हरिद्राभमिति यावत् । तथा च—"वर्णाः श्वेतश्च सारङ्गश्च पिशङ्गकः । कृष्णो नीलो लोहितश्च गौरो गायत्र्यमुख्यके ॥" ( ३।१९—२० प्रा० छ० ) इति । प्रातिशाख्ये दैवतब्राह्मणे च पिङ्गलोक्तवर्णात् किञ्चित् वैपरीत्यं दृश्यते, तद्यथा —"सितश्च सारङ्गमतः पिशङ्गं कृष्णमेव च । नीलश्च लोहितश्चैव सुवर्णमिव सप्तमम् ॥ अरुणं श्यामगौरे च बभ्रु वै नकुलं तथा ॥" ( १७।२८ ऋ० प्रा० ) इति । उव्वटेन अस्य भाष्ये पङ्क्तेररुणवर्णं उक्तः नीलवर्णस्तु विराजः, तद्यथा—"श्वेतं शुक्लवर्णं गायत्रम् । द्विवर्णं शुक्लकृष्णसारङ्ग-मौष्णिहम् । पिशङ्गं गोरोचनावर्णमानुष्टुभम् । कृष्णमगुरुवर्णं बार्हतम् । नीलमुत्पलवर्णं वैराजम् । लोहितमिन्द्रगोपवर्णं त्रैष्टुभम् । सुवर्णरूपवर्णं जागतम् । अरुणं प्रातःसन्ध्याभवर्णं पाङ्क्तम् । श्यामं कृष्णवर्णमतिच्छन्दः । गौरं सिद्धार्थवर्णं विच्छन्दः । बभ्रु कपिलवर्णं द्विपदं छन्दः । नकुलवर्णमेकपदं छन्दः" इति । एवं दैवतब्राह्मणेऽपि यथा—"शुक्ला गायत्री रूपेण सारङ्गं रूपमुष्णिहाम् । पिशङ्गं ककुभां रूपं कृष्णमानुष्टुभं ततः ॥ रोहितं बृहतीनान्तु नीलं पाङ्क्तं ततः पुनः । सुवर्णं त्रिष्टुभां रूपं गौरं जागतमुच्यते ॥" ( ३।१२ दैव० ब्रा० ) इति ।

विराट्-स्वराजोश्च प्रवेशाभावात् कश्चिन्नास्ति संशयः, यस्य निर्णयनिमित्तं वर्णोपन्यासः क्रियेत। ऋषिदैवतास्वरवर्णानां ज्ञानान्निःश्रेयसमिच्छन्ति छान्दसाः । ( छ )

इति भट्टहलायुधकृतायां छन्दोवृत्तौ तृतीयोऽध्यायः ॥ ३ ॥

---

( छ ) गायत्र्यादिजगत्यन्तानां सप्तच्छन्दसां गोत्रनिर्णयमाह, आग्निवेश्येत्यादि ।—अग्निवेश्यादयः सप्त ऋषयः गायत्र्यादिसप्तच्छन्दसां यथासङ्ख्यं गोत्राणि भवन्ति इति फलितार्थः। तथा च—"अग्निवेश्यः काश्यपश्च गौतमाङ्गिरसौ क्रमात्। भार्गवः कौशिकश्चैव वाशिष्ठो गोत्रमीरितम् ॥" ( ३।२० अ० छ० ) इति। ततश्च गायत्र्याः अग्निवेश्यः ऋषिः उष्णिहः काश्यपः इत्यादिरूपेण व्याख्येयम्। एभिः सप्तभिः ऋषिभिः क्रमेण एतानि छन्दांसि लोकहितार्थं प्रकाश्य दर्शितानीति तेषाम् ऋषित्वमिति बोद्धव्यम्। यो यस्य छन्दसः प्रकाशकः स तस्य ऋषिरिति भावः। ऋषिज्ञानाच्छन्दसां निर्णयः सम्भवतीत्ययमारम्भः। छन्दःसन्देहनिरासार्थञ्च "आदितः सन्दिग्धे" ( ३।६१ पि० ) इत्यादीनि सूत्राणि विहितानीति भावः। विच्छन्दसामतिच्छन्दसाञ्च वक्ष्यमाणानां वर्णाः पिङ्गलेन नोक्ता अन्यैश्चाभिहिता इति दर्शयितुमाह, श्यामानीति।—अतिच्छन्दांसि अतिजगतीप्रभृतीनि श्यामानि कृष्णवर्णानि। कृतयः कृतिप्रकृत्यादीनि छन्दांसि रोचनाभाः रक्तकह्लारवर्णाः इत्येवम् आतिच्छान्दसाः अतिच्छन्दोविदः अधीयते कथयन्ति। शौनकेनाप्युक्तम्—"अरुणं श्यामगौरं च बभ्रु वै नकुलन्तथा" ( १७।२८ ऋ० प्रा० ) इति। भाष्यम्—"अरुणं प्रातःसन्ध्याभवर्णं पाङ्क्तं, श्यामं कृष्णवर्णम् अतिच्छन्दः, गौरं सिद्धार्थवर्णं विच्छन्दः, बभ्रु कपिलवर्णं द्वैपदं छन्दः, नकुलवर्णम् एकपदं छन्दः" इति। दैवतब्राह्मणे तु अतिच्छन्दसां कपिशवर्णत्वमुक्तं यथा—"अतो यान्यन्यानि छन्दांसि श्यावं तेषां ततः पुनः।" ( २।३ दैव० ब्रा० ) इति। भाष्यं यथा—"अतो यान्यन्यानि गायत्र्यादिसप्तच्छन्दोभ्यो व्यतिरिक्तानि अतिजगतीप्रभृतीनि उत्कृतिपर्य्यन्तानि तेषां श्यावं कपिशवर्णं विद्यात्" इति। गायत्र्यादिसप्तच्छन्दोव्यतिरिक्तानां वक्ष्यमाणानां छन्दसां स्वमते वर्णविनिर्णयाकरणे युक्तिमवतारयति, तन्नेति।—तत् अतिच्छन्दसां वर्णनिर्द्धारणं न उपपद्यते नैव युज्यते। कथमित्याह, कृतीनामिति।—गायत्र्यादिच्छन्दसामक्षरन्यूनाधिक्येन निचृद्भुरिगादिसंज्ञाविधानात् यत्र गायत्री उष्णिग्वा इति सन्देहस्तत्र छन्दोनिर्द्धारणार्थं वर्णविनिर्णयः कर्त्तव्यः, कृत्यादीनान्तु अक्षरन्यूनाधिकत्वेन विशेषसंज्ञाविधानाभावात्

छन्दसां सन्देहावसरो नास्तीति वर्णविनिर्णयप्रयोजनमपि नास्ति अतस्तेषां लक्षणान्यपि पिङ्गलेन न कृतानि इति भावः। तत् कथमन्यैर्वा लक्षणानि तेषां कृतानीत्याह, तदपीत्यादि।—ऋष्यादिज्ञानस्य छन्दोनिर्द्धारणमेव न केवलं प्रयोजनं निःश्रेयःप्राप्तिरूपप्रयोजनान्तरमप्यस्तीति तन्निरूपणं विधेयमिति भावः। उक्तञ्च—"यस्तु जानाति तत्त्वेन आर्षं छन्दश्च दैवतम्। विनियोगं ब्राह्मणञ्च मन्त्रार्थज्ञानकर्म च॥ एकैकस्याः ऋचः सोऽपि वन्द्यो ह्यतिथिवद्भवेत्। देवतायाश्च सायुज्यं गच्छत्यत्र न संशयः॥ पूर्वोक्तेन प्रकारेण ऋष्यादीन् वेत्ति यो द्विजः। अधिकारी भवेत्तस्य रहस्यादिषु कर्मसु॥ आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च। वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः॥" इति योगियाज्ञवल्क्यः। शौनकादिभिरन्येषामपि छन्दसामुक्तो वर्णविभागः प्रदर्श्यते यथा—"पृश्निवर्णं वैराजम्" (१७।२९ ऋ० प्रा०) इति। उव्वटस्तु त्रिविधाया विराजः एकस्याः पृश्निवर्णत्वं द्वयोश्च नीलत्वमभिहितवान्, यथा—"एतास्तिस्रो विराजः,—अनुष्टुबेका पङ्क्तिरेका द्वाभ्यां न्यूना चैका। तत्र पूर्वयोर्नीलवर्णः अन्त्याः पृश्निरिति वेदितव्यम्" इति। "विराजः पृश्नयो विद्यात्" (२।५ दैव० ब्रा०) इति। तथा "निचृच्छ्यावम्" ( १७।३० ऋ० प्रा०) "पृषत् भुरिक्" ( १७।३१ ऋ० प्रा० ) "ब्रह्मसामर्ग्यजुश्छन्दः कपिलं वर्णतः स्मृतम" ( १७।३२ ऋ० प्रा० ) इति। भाष्यं—"ब्रह्मणः सामर्ग्यजुषाञ्च छन्दः वर्णतः कपिलं जटाकलापसूर्य्यरश्मिवर्णं स्मृतम्" इति। "नकुलन्त्वेकपादानां द्विपदां बभ्रुरुच्यते। सारङ्गशुक्लकृष्णाख्यपाप्यृग्यजुःसामब्राह्म्यान्विताः॥" (२।६ दैव० ब्रा०) इति।

## छन्दसां देवता-स्वरादिज्ञापकयन्त्रम्।

| छन्दः | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|
| देवता | अग्निः | सविता | सोमः | बृहस्पतिः | वरुणः | इन्द्रः | विश्वेदेवाः |
| स्वरः | षड्जः | ऋषभः | गान्धारः | मध्यमः | पञ्चमः | धैवतः | निषादः |
| वर्णः | शुक्लः | कपिशः | पीतः | कृष्णः | नीलः | रक्तः | गौरः |
| ऋषिः | अग्निवेश्यः | काश्यपः | गौतमः | आङ्गिरसः | भार्गवः | कौशिकः | वशिष्ठः |

इति श्रीमज्जीवानन्दविद्यासागरकृतायां पिङ्गलच्छन्दःसूत्रे हलायुधकृतौ सुखबोधिन्यां व्याख्यायां तृतीयोऽध्यायः।

---

# चतुर्थोऽध्यायः ।

## चतुःशतमुत्कृतिः ॥ १ ॥

चतुरधिकं शतं चतुःशतम्; मध्यमपदलोपी समासः; अथवा चत्वारि च शतञ्च चतुःशतम्; द्वन्द्वसमासः। कर्मधारयपक्षस्तु नेष्यते; तत्र चतुःशतानीति प्राप्नोति। यत्र चतुःशतमक्षराणां सङ्ख्या भवति, तदुत्कृतिर्नाम छन्दः। तत्रोदाहरणम्।—

"मयि त्वदिन्द्रियं महत्, मयि दक्षो मयि क्रतुः।
मयि धायि सुवीर्य्यं, त्रिशुग्घर्मो विभातु मे ॥
आकूत्या मनसा सह, विराजा ज्योतिषा सह।
यज्ञेन पयसा सह, ब्रह्मणा तेजसा सह ॥
क्षत्रेण यशसा सह, सत्येन तपसा सह।
तस्य दोहमशीमहि, तस्य सुम्नमशीमहि ॥
तस्य भक्षमशीमहि ॥" (तै० आ० ४प्र०२१अनु०)। (क)

---

(क) तत्रभवान् महर्षिः पिङ्गलः गायत्र्यादिसप्तवैदिकच्छन्दांसि निर्दिश्य साम्प्रतमुत्कृत्यादिपञ्चदशवैदिकच्छन्दसां लक्षणान्यभिधास्यन् लौकिकवृत्तपरिज्ञानहेतुभूतगणमात्रादिनिरूपणार्थं चतुर्थाध्यायमारभते। तत्र प्रथममुत्कृतिलक्षणमाह, चतुरिति।—चतुःशतं चतुरधिकशतसङ्ख्याक्षरं छन्दः उत्कृतिर्नाम इत्यर्थः। ननु चतुःशतमित्यनेन किं चत्वारि शतानि प्रतीयन्ते उत वा चतुरधिकैकशतमिति सन्देहं निराकर्तुमाह, मध्यमपदलोपीति।—समासद्वयेऽपि चतुरधिकैकशतमित्येवार्थः। चतुःशतार्थे तु कर्मधारयस[illegible]स्यैव न्याय्यत्वं, तथात्वे पुनरेकवचनासङ्गतेः कर्मधारयसमासो नेष्यते। तदुक्तम् अमरसिंहेन—"विंशत्याद्याः सदैकत्वे

चतुरश्चतुरस्त्यजेदुत्कृतेः ॥ २ ॥

चतुःशताक्षराच्छन्दसः क्रमेण चतुरश्चतुरः सङ्ख्याविशेषांस्त्यजेत्। एतदुक्तं भवति—उत्कृतेरारभ्य चतुर्भिश्चतुर्भिरक्षरैर्न्यूनानि छन्दांस्यन्यानि स्थापयेत् अष्टचत्वारिंशदक्षरं यावत्। (ख)

---

सर्वाः सङ्ख्येयसङ्ख्ययोः। सङ्ख्यार्थे द्विबहुत्वे स्तः॥" इति। छन्दोलक्षणमाह, यत्रेति।—यत्र छन्दसि, अक्षराणां सङ्ख्या चतुरधिकैकशतं भवेत् यावद्भिः पादैः चतुरधिकैकशतमक्षरसङ्ख्या पूर्णा भवेत् तावद्भिरेव पादैः उत्कृतिर्नाम छन्दः इत्यर्थः। उक्तञ्च—"चतुःशतमुत्कृतिः स्यात्" (४।१ चा० छ०) इति। "शतमुत्कृतिरुच्यते" (१७।११ ऋ० प्रा०) "उत्तमा तु चतुःशतम्" (१७।१२ ऋ० प्रा०) इति। न पुनरेषु पादसङ्ख्यायाः नियमः, यस्मिन् पुनः अष्टाक्षरपादानां त्रयोदशपादैरक्षरपूरणं दृश्यते। मयीत्यादि।—सायणभाष्यं—"त्यत् प्रसिद्धं, महत् इन्द्रियं, मयि धायि धीयतां स्थाप्यतां, तथा दक्षः उत्साहः, क्रतुः अनुष्ठानं, सुवीर्य्यं सर्वेषु कार्य्येषु शोभनं सामर्थ्यं, तत् सर्वं मयि स्थाप्यताम्। त्रिशुक् अग्निविद्युदात्मनः त्रेधा भिन्नदीप्तिः, घर्मः मदर्थम् आकूत्यादिभिः सह विभातु विविधं दीप्यताम्। आकूतिः सङ्कल्पः, मनः सङ्कल्पसाधनं, विराट् अन्नं, ज्योतिः तेजः, यज्ञः क्रतुः, पयः क्षीरं, ब्रह्म ब्राह्मणजातिः, तेजः शरीरकान्तिः, क्षत्रं क्षत्रियजातिः, यशः कीर्त्तिः, सत्यम् अनृतवर्जितं, तपः कृच्छ्रचान्द्रायणादिकं, तस्य तैः आकूत्यादिभिः युक्तस्य घर्मस्य, दोहं वृष्ट्यादिसमृद्धिं, वयम् अशीमहि। तस्य सुम्नं तन्निमित्तं सुखञ्च, अशीमहि। तस्य प्रवर्ग्यस्य प्रसादात् भक्षञ्च अशीमहि व्याप्नुयाम" इति। उत्कृत्यादिकन्तु केचित् विच्छन्दांसि केचित् अतिच्छन्दांसि इति नामत्वेनाहुः। अतिपूर्वत्वेन अतिजगत्यादयः एव अतिच्छन्दांसि इत्यपरे। पिङ्गलेन एतेषां देवतावर्णादयो नोक्ताः। शौनकादिभिरुक्ताश्च ते प्रागेव प्रदर्शिता अस्माभिः।

(ख) वक्ष्यमाणलक्षणानाम् अभिकृत्यादीनां छन्दसां लक्षणसिद्ध्यर्थमाह, चतुर इति।—चतुःशताक्षरात् चतुरधिकैकशताक्षरात् उत्कृतेरित्यर्थः, क्रमेण पर्य्यायेण चतुरः चतुरः सङ्ख्याविशेषान् चतुश्चतुःसङ्ख्याकाक्षराणि त्यजेत् परिहरेत्। एतेन उत्कृतेः चतुरक्षरत्यागेन शताक्षरमभिकृतिर्नाम, ततश्चतुरक्षरन्यूनत्वे षण्णवत्यक्षरं सङ्कृतिर्नाम इत्यादिक्रमो बोध्यः।

## तान्यभि-सं-व्या-प्रेभ्यः कृतिः ॥ ३ ॥

तान्युत्कृतेरनन्तराणि छन्दांसि अभि-सम्-वि-आङ्-प्र-इत्येतेभ्यः पराणि कृतिसंज्ञानि भवन्ति। तत्र शताक्षरं छन्दोऽभिकृतिः। तत्रोदाहरणम्।—

"संवत्सरोऽसि परिवत्सरोऽसीदा-
वत्सरोऽसीद्वत्सरोऽसि वत्सरोऽसि।
उषसस्ते कल्पन्तामहोरात्रास्ते कल्पन्ता-
मर्द्धमासास्ते कल्पन्तां मासास्ते कल्पन्ताम्
ऋतवस्ते कल्पन्तां संवत्सरस्ते कल्पताम्।
प्रेत्या एत्यै सञ्चाञ्च प्र च सारय।
सुपर्णचिदसि तया देवतयाङ्गिरस्वद्ध्रुवः सीद॥" (२७। ४५ वा० स०) इति।

---

(ग) अभिकृत्यादिसंज्ञिकां पञ्चविधां कृतिं निर्दिशति, तानीति।—पूर्वसूत्रोक्तनियमेन चतुरक्षरन्यूनतया शताक्षरं छन्दः अभिकृतिर्नाम इत्यर्थः। तथा षण्णवत्यक्षरं सङ्कृतिर्नाम, एवं-क्रमेण प्रकृत्यन्तं बोद्धव्यम। तथा च—"उत्कृतेश्चतुरस्त्यजेत्। अभि-सं-व्या-प्रेभ्यः कृतिस्तानि छन्दांसि वै पृथक्॥" (४।१ आ० छ०) इति। प्रातिशाख्ये तु वैपरीत्येन अक्षरवृद्धिनियमेन कृत्यादिलक्षणान्याह यथा—"कृतिः प्रकृतिराकृतिर्विकृतिः सङ्कृतिस्तथा। षष्ठी चाभिकृतिर्नाम सप्तम्युत्कृतिरुच्यते॥ अशीतिश्चतुरशीतिरष्टाशीतिर्द्विर्नवतिः। षण्णवतिः शतं पूर्णमुत्तमा तु चतुःशतम्॥" (१७।११—१२ ऋ० प्रा०) इति। संवत्सरोऽसीति।—अस्या महीधरभाष्यं यथा—"अग्निदेवत्यं यजुः। अत्र यजुषि नवनवत्यक्षराणि एको व्यूहः ततः शताक्षराभिकृतिश्छन्दः। चित्याग्नेरभिमर्शने विनियोगः। हे अग्ने! त्वं संवत्सरोऽसि परिवत्सरोऽसि इदावत्सरोऽसि इद्वत्सरोऽसि वत्सरोऽसि निर्विशेषणः पञ्चसंवत्सरात्मकयुगरूपोऽसि इत्यर्थः, युगं भवेत् वत्सरपञ्चकेन इति ज्योतिःशास्त्रोक्तेः। तस्य ते तव उषसः प्रातःकालादयः कालविशेषाः सङ्गवमध्याह्नादयः अहोरात्राः दिवसनिशाः अर्द्धमासाः पक्षाः मासाश्चैत्रादयः ऋतवः वसन्तादयः कल्पन्तामवयवत्वेन क्लृप्ता भवन्तु। संवत्सरश्च उपलक्षणं संवत्सरादयः पञ्चापि कल्पन्ताम्। क्रियाऽऽवृत्तिरादरार्था। किञ्च प्रेत्यै प्रगमनाय

पञ्चवत्यक्षरं सङ्कृतिः। द्वानवत्यक्षरं विकृतिः। तत्रो-दाहरणम्।—

"इमा मे अग्न इष्टका धेनवः सन्त्वेका च
दश च दश च शतञ्च शतञ्च सहस्रञ्च
सहस्रञ्चायुतञ्च चायुतञ्च नियुतञ्च
नियुतञ्च प्रयुतञ्चार्बुदञ्च न्यर्बुदञ्च
समुद्रश्च मध्यञ्चान्तश्च परार्द्धश्चैता मे
अग्न इष्टका धेनवः सन्त्वमुत्रामुष्मिंल्लोके॥" (१७।२ वा० स०) इति।

अष्टाशीत्यक्षरमाकृतिः। तत्रोदाहरणम्।—

"तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्।
पश्येम शरदः शतं जीवेम शरदः शतम्।
नन्दाम शरदः शतं मोदाम शरदः शतम्।
भवाम शरदः शतं शृणवाम शरदः शतम्।
प्रब्रवाम शरदः शतम् अजीताः स्याम शरदः शतम्।
ज्योक् च सूर्यं दृशे॥" (तै० आ० ४प्र० ४२अनु०) इति।

---

एत्य चागमनाय च समञ्च सङ्कुच प्रसारय च स्वेच्छया सङ्कोचविकाशौ कुर्विति भावः। किञ्च सुपर्णाकारेण चितत्वात् सुपर्णचिदसि। तया देवतया वाचा सहितः सन् अङ्गिरस्वत् अङ्गिरस इव प्राणा इव प्राणा ध्रुवः स्थिरः सीद तिष्ठ" इति। विरलोदाहरणतया सङ्कृतेरुदाहरणमत्र न प्रदर्शितम्। शौनकेन तु—"सङ्कृतेस्तु न वै तत्र" (१७।१४ ऋ० प्रा०) इत्युक्तम्। भाष्यकारस्तु—"सङ्कृतिस्तु न वै तत्र। तस्मिंस्तुभेदजेऽपि न विद्यते। एवं-प्रायेण वर्णयन्ति। केचिद्वर्णयन्ति सङ्कृतेर्न वा इत्येतदुदाहरणम्" इत्युक्तवान्। किन्तु न वा इत्याद्युदाहरणं कुत्रापि न दृश्यते। विकृतेरुदाहरणं दर्शयति, इमा इत्यादि।—भाष्यं यथा—"विकृतिरग्निदेवत्या। हे अग्ने! या इष्टकाः पञ्चसु चितिषु उपहिताः इमाः इष्टकाः मे मर्द्यं मदर्थं धेनवः अभिमतफलदोग्ध्र्यः सन्तु, त्वत्प्रसादादस्मिन् लोके इति शेषः। तासां सङ्ख्यामाह, एकेत्यादि।—एकैकादि-परार्द्धपर्यन्तैः सङ्ख्यैरुत्तरोत्तरं दशगुणिता सङ्ख्योच्यते। एका एकत्वसङ्ख्या-

चतुरशीत्यक्षरं प्रकृतिः। तत्रोदाहरणम्।—

"अंशुरंशुष्टे देव ! सोमाप्यायतामिन्द्रायैकधनविदे।
आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व।
आप्याययास्मान् सखीन् सन्या मेधया स्वस्ति ते
देव ! सोम ! सुत्यामशीय एष्टा रायः प्रेषे भगाय
ऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्याम्॥" ( ५।७ वा० स० ) इति। ( ग )

---

विशिष्टा सा दशगुणिता दशसङ्ख्यामापद्यते, सा दशगुणिता शतं भवति, पूर्वसङ्ख्यासहितोत्तरसङ्ख्याग्रहणमाधिक्याय, शतं दशगुणितं सहस्रं भवति, सहस्रं दशगुणितम् अयुतं भवति, अयुतं दशगुणितं नियुतं भवति, नियुतं लक्षं, नियुतं दशगुणितं प्रयुतं भवति, प्रयुतं लक्षदशकं, प्रयुतग्रहणं कोटेरुपलक्षकं, प्रयुतं दशगुणं कोटिः, कोटिर्दशगुणः अर्बुदम, अर्बुदं दशगुणं न्यर्बुदं, न्यर्बुदशब्देनाब्जसङ्ख्या ज्ञेया। एतेषां ग्रहणमब्जसमुद्रान्तर्वर्त्तिनीनां खर्व-निखर्व-महापद्म-शङ्कुरूपाणां सङ्ख्यानामुपलक्षकं, तेनाब्जं दशगुणं खर्वं, खर्वं दशगुणं निखर्वं, निखर्वं दशगुणं महापद्मं, महापद्मं दशगुणं शङ्कुः, शङ्कुर्दशगुणः समुद्रः, समुद्रः दशगुणो मध्यं, मध्यं दशगुणमन्तः, अन्तः दशगुणः परार्द्धः। चकारा इतरेतरसमुच्चयार्थाः। एवमेताः एकादशसङ्ख्यासंज्ञासम्मिता इष्टका एता हे अग्ने ! मे धेनवः सन्तु इति पूर्वोक्तस्य निगमनम्। एतद्धेनुभवनं कुत्राथ्यते ? तदाह—अमुत्र अन्यजन्मनि तथा अस्मिन् लोके स्वर्गे सर्वत्र इष्टदाः सन्त्वित्यर्थः। यद्यपि नियतसङ्ख्यया इष्टकाश्चीयन्ते तथाऽपि मन्त्रसामर्थ्याद्वर्द्धमाना एकादिपरार्द्धान्तसङ्ख्या भवन्तीति भावः। तच्चक्षुरित्यादि।—अस्य सायणभाष्यं यथा—"अथ हाविंशमन्त्रमाह, तच्चक्षुर्देवहितं सूर्यं हशी इति। पुरस्तात् पूर्वस्यां दिशि उच्चरत् उदयं गच्छत्। शुक्रं ज्योतिःस्वरूपं, देवहितं सर्वेभ्यो देवेभ्यो हितकारि, चक्षुः दृष्टेरनुग्राहकं, तत् आदित्यमण्डलं, शरदः शतं शतसङ्ख्याकान् संवत्सरान्, सर्वदा पश्येम। तत्प्रसादाज्जीवनादिव्यापारांश्च प्राप्नुवाम। नन्दाम द्रव्यैः समृद्धाः भूयास्म। मोदाम तद्भोगेन हृष्टाः स्म। भवाम स्वस्थाने निवसाम। शृणवाम वेदशास्त्ररहस्यं गुरुमुखादवगच्छेम। प्रब्रवाम शिष्येभ्यः प्रकर्षेण कथयाम। अदीनाः अनुग्रा केनापि अजिताः, किञ्च ज्योक् दीर्घं कालं, सूर्यं हशी द्रष्टुं समर्था भूयास्म" इति। अष्टाशीत्यक्षरत्वादियमाकृतिः। अंशुरंशुरिति।—भाष्यं यथा—"प्रकृतिश्चतुरक्षाणा सोमदेवत्या।

## प्रकृत्या च ॥ ४ ॥

**उपसर्गवर्जितः शुद्धः कृतिशब्दः प्रकृत्या स्वरूपेणैवावतिष्ठते।**

अन्त्योऽक्षरौ लिङ्गोक्तदैवतः। चतुरशीत्यक्षरा प्रकृतिः। तत्र मन्त्रद्वयम्। सोमवल्ल्या अवयवोऽंशुरुच्यते। वीप्सा सर्वसङ्ग्रहार्था। हे सोम! देव! ते तवांशुरंशुः सर्वोऽप्यवयवः इन्द्राय इन्द्रप्रीत्यर्थम् आप्यायतां वर्द्धतां चिरावस्थानेन यः सोमावयवो म्लानः शुष्कश्च तदुभयं मन्त्रेणाप्यायितं भवति। तदाह तित्तिरिः,—यद्देवस्य शुष्यति यन्म्लायते तदेवास्यैतेनाप्याययतीति। किम्भूतायेन्द्राय? एकधनविदे एकं मुख्यं धनं सोमरूपं विन्दते लभते स एकधनवित्; यद्वा—सोमकण्डनाय यैर्जलमानीयते ते कुम्भाः एकधनाः एकं धनं सोमरूपं यत्रेति तान् वेत्ति जानातीति सोमकण्डनाय जलकुम्भा आनीता इति जानातीत्यर्थः। किञ्च हे सोम! तुभ्यं त्वत्पानार्थमिन्द्र आप्यायतां वर्द्धतां, तथा हे सोम! त्वमपि इन्द्राय इन्द्रपानाय आप्यायस्व सर्वतो वृद्धो भव। अनेनोभयोरपि वृद्धिर्भवति। तदाह तित्तिरिः,—उभावेवेन्द्रञ्च सोमञ्चाप्याययतीति। किञ्च हे सोम! सखीन् सखिवत् प्रीतिविषयानस्मानृत्विजः सन्या मेधया आप्यायय प्रवर्द्धय। सनिर्धनदानं मेधार्थधारणशक्तिः। ऋत्विजो वा अस्य सखाय इत्युक्तेः सखिशब्देन ऋत्विजः। किञ्च हे सोम देव! ते तव स्वस्ति क्षेमोऽस्तु तव प्रसादादहं सुत्यां सोमाभिषवक्रियां समाप्तिदिनमशीय प्राप्नुयाम्। (का० ८, २, ९) प्रत्येत्य प्रस्तरे निह्नुवत उत्तानहस्ता दक्षिणोत्ताना वेष्टा राय इति। सर्वेऽपि ऋत्विजः प्रस्तरे निजहस्तानुत्तानान् कृत्वा दक्षिणहस्तं वोत्तानमुपर्य्यवस्थाप्य निह्नुवते सोमं परिचरन्तीति सूत्रार्थः। रायो धनानि एष्टाः आ समन्तादिष्टा अस्माकमपेक्षिताः। सोम! त्वत्प्रसादादस्माकं रायः सन्त्विति भावः। यद्वा—रायः दक्षिणालक्षणा एष्टाः आ समन्तात् दत्ताः यजते रूपं दक्षिणा दास्यन्त इति भावः। किमर्थम्? प्रेषे भगाय। प्रकर्षेणेष्यत इति प्रेट् तस्मै प्रेष्यमाणाय भगायैश्वर्याय। यद्वा—प्रकर्षेण इषे अन्नाय भगाय च। किञ्च ऋतवादिभ्योऽग्निहोतृभ्यः ऋतमवश्यम्भाविफलोपेतं कर्म सम्पादयेति शेषः। ऋतं सत्यं वदन्ति इति ऋतवादिनः। यद्वा—षष्ठ्यर्थे चतुर्थी; ऋतवादिनामस्माकमृतं कर्मफलमस्त्विति शेषः। द्यावापृथिवीभ्यां तदभिमानिदेवताभ्यां नमोऽस्तु। तयोरनुग्रहेण यजमानायाविघ्नस्थितिर्भवतीति नमस्क्रियते। तदाह तित्तिरिः,—द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिन् लोके प्रतितिष्ठतीति। अत्र चतुरशीत्यक्षरत्वादियं प्रकृतिः।

तेनैतदुक्तं भवति—अशीत्यक्षरं छन्दः कृतिर्नाम। तत्रो-दाहरणम्।—

"देव इन्द्रो नराशंसस्त्रिवरूथस्त्रिबन्धुरो देवमिन्द्रमवर्द्धयत्।
शतेन शितिपृष्ठानामाहितः सहस्रेण प्रवर्त्तते
मित्रावरुणेदस्य होत्रमर्हतो बृहस्पतिः
स्तोत्रमश्विनाध्वर्य्यवं वसुवने वसुधेयस्य वेतु यज॥"

( २८।१९ वा० सं० ) इति। ( घ )

## धृत्यष्टिशक्करीजगत्यः॥ ५॥

कृतेरधस्ताद्धृतिरष्टिः शक्करी जगतीत्येते शब्दाः क्रमेण व्यवस्थापनीयाः। ( ङ )

---

( घ ) उदाद्युपसर्गविवर्जितां शुद्धकृतिं निर्दिशति, प्रकृत्येति।—प्रकृत्या स्वभावेन, उपसर्गराहित्यात् आत्मस्वरूपेण इत्यर्थः, कृतिर्नाम छन्दो भवतीति शेषः। अत्रापि पूर्ववदुत्तरोत्तरं चतुरक्षरत्यागोऽनुवर्त्तनीयः, तेन चतुरशीत्यक्षरायाः प्रकृतेश्चतुरक्षरत्यागेन अशीत्यक्षरं कृतिर्नाम छन्द इति फलितम। देव इन्द्र इति।—अस्या महीधरभाष्यं यथा—"कृतिः। नरा ऋत्विग्यजमानाः शंसन्ति नराशंसः यज्ञो देवः इन्द्रं देवमवर्द्धयत्। कीदृशो नराशंसः? इन्दतीति इन्द्रः ऐश्वर्य्यवान् त्रिवरूथः वरूथं गृहं त्रीणि वरूथानि सदोहविर्धानाग्नीध्राणि यस्य सः। त्रिबन्धुरः त्रीणि बन्धुराणि ऋग्यजुःसामलक्षणानि बन्धनानि यस्य सः नराशंसः शितिपृष्ठानां शतेनाहितः सन् सहस्रेण गोसहस्रेण प्रवर्त्तते। शिति श्यामं पृष्ठं यासां ताः शितिपृष्ठा गावः। मित्रावरुणा इत् मित्रावरुणावेवास्य नराशंसस्य होत्रमर्हतः होतृकर्मणि योग्यौ भवतः बृहस्पतिः स्तोत्रमौद्गात्रमर्हति अश्विना अश्विनौ अस्याध्वर्य्यवमर्हतः। स वेतु" इति। अत्र एकाक्षरन्यूनेन अशीतिपूरणमित्यशीत्यक्षरं कृतिर्नामच्छन्दः। पुस्तकविशेषे "प्रकृत्या च उपसर्गवर्जितः" इति सूत्रं परिलक्ष्यते।

( ङ ) उत्कृत्यादिसप्तच्छन्दांसि निर्णीय अतिधृत्याद्यष्टविधवैदिकच्छन्दोनिर्णय-पुरःसरं वैदिकच्छन्दांस्युपहरति—धृतीत्यादिसूत्रद्वयेः। तत्रातिधृत्यादिच्छन्दोगणेऽपि प्राकरणिकत्वेनाधिकृतचतुरक्षरत्यागनियामकमित्यनुसृत्य हस्तिकृदाह, कृतेरधस्तादिति।—पूर्ववत् इहापि क्रमेण चतुश्चतुरक्षरत्यागोऽनुसर्त्तव्य इत्यर्थः।

## पृथक् पृथक् पूर्वत एतान्येवैषाम् ॥ ६ ॥

एषां धृत्यादीनां पूर्वतः पृथक् पृथगेतान्येव शब्दरूपाणि विन्यसेत् । पृथक् पृथग्ग्रहणं प्रत्येकं पूर्वत्वज्ञापनार्थम्, अन्यथा हि समुदायपूर्ववर्त्तित्वमेषां स्यात् । तेनायमर्थः,—धृति-शब्दात् पूर्वं धृतिशब्दः, अष्टिशब्दात् पूर्वमष्टिशब्दः, शक्करी-शब्दात् पूर्वं शक्करीशब्दः, जगतीशब्दात् पूर्वं जगतीशब्दः स्थापनीयः । (च)

## द्वितीयं द्वितीयमतितः ॥ ७ ॥

अत्र द्वितीयं द्वितीयं शब्दरूपमति-शब्दात् परतः प्रयोक्तव्यम् । एवं सत्युत्तरेषां छन्दसामेताः संज्ञाः क्रमेण भवन्ति । तत्र षट्सप्तत्यक्षरं छन्दोऽतिधृतिः । तत्रोदा-हरणम् ।—

"स हि शर्धो न मारुतं तुविष्वणि-
रप्नस्वतीषूर्वराखिष्टनिरार्त्तनाखिष्टनिः ।
आदद्धव्यान्याददिर्यज्ञस्य केतुरर्हणा ।
अध स्मास्य हर्षतो हृषीवतो
विश्वे जुषन्त पन्थां नरः शुभे न पन्थाम् ॥" (ऋक्० २अष्ट० १अ० १म० १८अनु० १२७सू० ६ऋ० ) इति ।

---

(च) अतिधृत्यादिसंज्ञाविधानार्थं सूत्रमवतारयति, पृथगिति ।—एषां पूर्वसूत्रो-द्दिष्टानां धृत्यष्टिशक्करीजगतीनां पूर्वतः प्राक् पृथक् पृथक् स्वतन्त्रभावेन एतान्येव पूर्वोक्तानि धृत्यादिशब्दरूपाण्येव विन्यसेत् स्थापयेत् । पृथक् इति प्रतिपदस्य पूर्वं प्रत्येकं पद निवेशनीयमित्यर्थः । अन्यथा—पृथग्ग्रहणमन्तरेण, एषां धृत्यादीनां, समुदायपूर्ववर्त्तित्वं धृत्यष्टिशक्करीजगती इत्येकमेव पदं पुनः स्थाप्यमित्यर्थः । प्रत्येक-पूर्वत्वमेव दर्शयति—तेनेति ।

(छ) अतः किं विधेयमित्यपेक्षायामाह, द्वितीयमिति ।—द्वितीयं द्वितीयमिति

इत्येवमित्यादिसूत्रेण पश्चात् स्थापितं धृत्यादिशब्दजातम् अतिशब्दात् परतः स्थाप्यम्। ततश्च अतिधृतिः धृतिः अत्यष्टिः अष्टिः अतिशक्वरी शक्वरी अतिजगती जगती एवंविधानि शब्दरूपाणि स्थापनीयानि इत्यर्थः। तथा च—"अतिधृतिधृती अत्यष्टि-श्चाष्टिरित्यतः। अतिशक्वरी शक्वर्यतिजगती जगत्यपि॥" (४।२ भा० छ०) इति। तेन कृतेरारभ्य चतुरक्षरपरित्यागात् क्रमेण एताः संज्ञा भवन्तीति भावः। तदेव दर्शयति, तत्रेत्यादि।—अतिधृतिः षट्सप्तत्यक्षरा, अशीत्यक्षररूपायाः कृतेश्चतुरक्षरत्यागेन तथैव जायते इति भावः। एषु छन्दःसु पादनियमाभावात् केवलमक्षरसङ्ख्यया लक्षणमभिहितमित्यपि सूच्यते। तथा च--"द्वाविति च्छन्दसां वर्गौ उत्तरौ चतुरुत्तरौ। प्रथमाऽतिजगत्यासां सा द्विपञ्चाशदक्षरा॥ षट्पञ्चाशत्तु शक्वरी षष्टिरेवातिशक्वरी। उत्तराष्टिश्चतुःषष्टिः ततोऽष्टाषष्टिरित्यष्टिः॥ धृतिः पूर्वा द्विसप्ततिः षट्सप्ततिस्त्वतिधृतिः॥" (१७।१८ ऋ० प्रा०) इति। पिङ्गलेन पुनरेषां पादनियमो नाभिहितः, अतः कात्यायनोक्तः पादनियमः अत्र प्रदर्श्यते यथा—"पादाः अतिजगत्यास्तु त्रयो द्वादशकाः परौ। अष्टकौ शक्वरीपादाः सप्तैवाष्टाक्षराः स्मृताः॥ अतिशक्वरीपादौ द्वौ आदितः षोडशाक्षरौ। जागतो-ऽथाष्टकौ चाष्टि-पादाः षोडशकास्त्रयः॥ अष्टकौ चात्यष्टिपादौ जागतौ चाष्टकास्त्रयः। जागतश्चाष्टकश्चाथ धृतिपादौ तु जागतौ॥ पादास्त्रयोऽष्टकाश्चाथ षोडशाक्षर एव च। अष्टकश्चाथातिधृतौ द्वौ पादौ जागतौ ततः॥ त्रयोऽष्टका जागतश्च तथा-ऽष्टाक्षरकावपि॥" इति। स हि शर्द्धो इति।—अस्याः सायणभाष्यं—"स हि शर्द्धो इत्यस्याः षट्सप्तत्यक्षरातिधृतिः उत्कृत्यभिकृतिसङ्कृतिविकृत्याकृतिप्रकृतिकृत्यति-धृतिधृत्यष्टिषु चतुरुत्तरशताक्षरमारभ्य चतुर्णां चतुर्णां परित्यागेन एकैकमुक्तं छन्दो जायते। स हि स एव स्तुत्यतया प्रसिद्धः एवाग्निः तुविष्वणिः तुवीति बहुनाम उरु तुवीति बहुनामसु पाठात् बहुध्वनिः प्रभूतध्वनियुक्तः वर्त्तते अत्यन्तज्वलितोऽग्नौ वायुसम्पर्कात् भुग् भुगिति ध्वनिरुत्पद्यते प्रज्वलति इत्यर्थः। ध्वनने दृष्टान्तः,—मारुतं शर्द्धो न, मरुत्-सम्बन्धि बलमिव, मरुतां समूहो यथा ध्वनति तद्वेत्यर्थः। कुत्रेति तदुच्यते—अप्नस्वतीषु खननप्रोक्षणादिकर्मोचितासु अप्न इति कर्मनाम।······उर्वरासु उरुवरणयुक्तासु श्रेष्ठासु वेदिभूमिषु कीदृशोऽयम् इष्टनिः यष्टव्यः किञ्च आर्त्तनासु आर्त्तान् करोति आर्त्तयति आर्त्तयन्तीति आर्त्तनाः पृतनाः तासु तासां जयाय इष्टनिः इष्टव्यः यष्टव्यो वा, किञ्च एवं स्तनयन्नग्निः हव्यानि आज्यपुरोडाशादीनि आदत् अत्ति भक्षयति,······आददिः सर्वत्र हविरादानशीलः तथा यज्ञस्य केतुः प्रज्ञापकः केतुस्थानीयो वा अर्हणा पूजनीयः किञ्च अधानन्तरं कर्म्मतः ऋषिभिर्भरणादत्यन्तहर्षसंयुक्तस्य, यद्वा—अभिमत-

द्वासप्तत्यक्षरं धृतिः । तस्योदाहरणम् ।—

"सखे ! सखायमभ्यावव्रुत्स्वा-
शुं न चक्रं रथ्येव रंह्या-ऽस्मभ्यं दस्म ! रंह्या ।
अग्ने ! मृळीकं वरुणे, सचा विदो मरुत्सु, विश्वभानुषु
तोकाय तुजे शुशुचान ! शं, कृध्यस्मभ्यं दस्म ! शं कृधि ॥"

ऋक्० ३ अष्ट० ४ अ० ४ म० १ अनु० १ सू० ३ ऋक्० १ ) ।

---

फलदानेन यजमानान् हर्षयतः इत्थंभूतः आव्यलोकादेः हर्षयुक्तस्याग्नेः पन्थां पन्थानं मार्गं विश्वे सर्वे मनुष्याः जुषन्त अप्रीणयन् असेवन्त वा । किमर्थम् ? शुभे शुभाय शोभनाय ऐहिकामुष्मिकफलदस्याग्नेरेव मार्गं सर्वे अनुगच्छन्ति अग्निमेव प्रीणयित्वा साधयन्ति । मार्गाश्रयणे दृष्टान्तः,—यथा लोके नरो मनुष्याः शुभे शोभनाय सुखप्राप्तये पन्थानं सर्वैर्गन्तव्यं निर्भयं प्रौढमार्गमिव" इति । अत्र नृविष्विषिरित्यन्तः द्वष्टनिरित्यन्तश्च द्वादशाक्षरपादद्वयं, ततः इष्टनिः आहदिः अर्द्धया इत्यन्ताश्चाष्टाक्षरास्त्रयः पादाः ,इत्थंभूतः इत्यन्तः द्वादशाक्षरैकपादः, ततः पन्थां पन्थामित्यन्तौ द्वावष्टाक्षरौ पादौ । उव्वटेनापि इयमेव ऋक् उदाहरणत्वेन प्रदर्शिता । सखे इत्यादि ।—अस्याः सायणकृता व्याख्या—"मन्त्रद्रष्टा वामदेव-ऋषिः प्रथमा चतुःपञ्चाक्षरा अष्टिः, द्वितीया त्रिपञ्चाशदक्षरा अतिजगती, तृतीया द्वासप्तत्यक्षरा धृतिः । सखे ! सखिभूत ! दस्म ! दर्शनीय ! हे अग्ने ! त्वं तव सखायं वरुणमस्मभ्यम् अस्मदर्थम् आववृत्स्व अभिमुखीकुरु, तत्र दृष्टान्तः, —रंह्या रंहणे गमने साधुभूतौ रथ्येव रथे योजितावश्वौ यथा आशुं शीघ्रगमनं चक्रं लक्ष्यदेशं प्रत्यभिमुखीकुरुतः तद्वत् हे अग्ने ! सचा तव सहाये वरुणे मृळीकं सुखकरं हविः विदः लब्धवानसि तथा विश्वभानुषु सर्वतोव्याप्ततेजस्केषु मरुत्सु सुखकरं लब्धवानसि आप्रीवरुणा आग्निमारुतयोः कर्मणोरिष्टवानसि इत्यर्थः । शुशुचान ! दीप्यमान ! हे अग्ने ! तोकाय तुद्यते पीड्यतेऽनेन माता गर्भवासेनेति तोकः पुत्रः तस्मै तुजे तुजति गच्छति अनेनाश्वर्त्तं पिता इति तुक् पौत्रः तस्मै शं सुखं कृधि कुरु दस्म ! दर्शनीय ! हे अग्ने ! अस्मभ्यं शं कृधि सुखं कुरु" इति । अत्र 'अभ्यावव्रत्स्व' 'रथ्येव' 'रंह्या' 'रंह्या' 'सचा' 'विश्व' इत्यादिषु व्यूहेन "अभिया आववृत्सुव" इत्यादिरूपेण प्रयुनादक्षरपूरणमवधेयम्, एवञ्च आववृत्स्व

स ईं ममाद महि कर्म कर्त्तवे महामुरुं,

सैनं सश्चद्देवो देवं, सत्यमिन्द्रं सत्य इन्दुः ॥" (ऋक्० २अष्ट० ६अ० २म० २अनु० २२सू० १ऋ०)।

षष्ट्यक्षरमतिशक्करी। तत्रोदाहरणम्।—

"सुषुमायातमद्रिभिर्गोश्रीता मत्सरा इमे,

सोमासो मत्सरा इमे आ राजाना दिविस्पृशा,-

ऽस्मत्रागन्तमुप नः, इमे वां मित्रावरुणा!,

गवाशिरः सोमाः शुक्रा गवाशिरः ॥" (ऋक्० २अष्ट० २अ० १म० २०अनु० १३७सू० १ऋ०)।

---

त्रिकद्रुकेषु इति।—अस्याः सायणभाष्यं यथा—"आद्या अष्टिश्छन्दः चतुःषष्ट्यक्षरा। गृत्समदो ऋषिः—महिषः महान् पूज्यः तुविशुष्मः बहुबलः तृपत् तृप्यन्निन्द्रः त्रिकद्रुकेषु ज्योतिर्गौरायुरित्येतन्नामकेषु आभिप्लविकेषु अहःसु सुतमभिषुतं यवाशिरं यवमयैः सक्तुभिर्मिश्रितं तं सोमं विष्णुना सहापिबत् यथा वशत् पूर्वं यथा तं सोममकामयत तथाऽपिबत् पीतः स सोमः महां महान्तमुरुं तेजसा विस्तीर्णम् ईमेनमिन्द्रं ममाद अमादयत् किमर्थं महि महत् वृत्रहननादिलक्षणं कर्म कर्त्तवे कर्त्तुं सत्यः यथार्थभूतः इन्दुः सवन् देवः दीप्यमानः स सोमः सत्यं यथार्थभूतं देवं सोमं कामयमानम् एनमिन्द्रं सश्चत् व्याप्नोतु" इति। अत्र "तुविशुष्मः" "वशत्" "महामुरुम्" इति षोडशाक्षरपादत्रयं, ततश्च अष्टाक्षरपादद्वयम्। ऋक्प्रातिशाख्यभाष्ये उव्वटेनापि इयमेव ऋक् उदाहरणत्वेन प्रदर्शिता। ततश्च पुनः क्रमप्राप्तां षष्ट्यक्षरामतिशक्करीमुदाहरति, सुषुमायातमद्रिभिरिति।—अस्याः सायणकृता व्याख्या यथा—"सुषुमायातमिति तृचात्मकं चतुर्थं सूक्तं पादच्छेपमतिशाक्करं षष्ट्यक्षरोपेतत्वात्। हे मित्रावरुणौ! आयातम् अस्मदीयं प्रत्यागच्छतम् आगमनाय किमस्तीति चेत्तदाह—अद्रिभिः अभिषवसाधनैः ग्रावभिः सुषुम सोमं सुतवन्तो वयम् अतो गोश्रीताः पयोभिर्मिश्रिताः तस्मात् मैत्रावरुणं पयसा श्रीणातीति हि ब्राह्मणम्। मत्सराः तृप्तिहेतवः सोमाः मत्सरः सोमो मन्दतेस्तृप्तिकर्मण इति यास्कः। इमे पुरतो गृहीता वर्त्तन्ते अत आयातं पुनस्त एव विशेष्यन्ते इमे सोमासो मत्सराः मदहेतवः मादने सामर्थ्यवन्तो वा इतरयज्ञगतसोमेभ्यः सोमाः कीदृशो

षट्पञ्चाशदक्षरं शक्करी । तत्रोदाहरणम् ।—

"प्रो ष्वस्मै पुरोरथ-मिन्द्राय शूषमर्चत !,
अभीकेचिदु लोककृत्, सङ्गे समत्सु वृत्रहा-
ऽस्माकं बोधि चोदिता,"नभन्तामन्यकेषां,
ज्याका अधिधन्वसु ॥" ( ऋक्० ८ अष्ट० ७अ० १०म० ११अनु० १३३सू० १ऋ० ) ।

---

युवां राजाना राजनशीलौ दिविस्पृशा द्युलोकवासिनौ ईदृशौ युवाम् अध्वरा अध्वरेषु मध्ये अध्वरपालकौ वा युवां नोऽस्मत्सम्बन्धिनं यज्ञम् उपागतं समीपे आगच्छतं किञ्च हे मित्रावरुणा ! एतन्नामानौ देवौ ! वां युवयोरर्थाय इमे सोमाः गवाशिरः गोभिः क्षीरैः आशिरो मिश्रिताः सञ्जाताः किञ्च गवाशिरः गोभिः उदकैर्मिश्रिताः सञ्जाताः, यद्वा—गोभिः स्तुतिलक्षणैर्मन्त्रैः मिश्रिताः, अत एव शुक्रा दीप्ताः सञ्जाताः आशिरमवनयति शुक्रत्वायेति श्रुतेः" इति । अत्र इमे तथा दिविस्पृशा इत्यन्तौ षोडशाक्षरौ द्वौ पादौ, नः तथा वरुणा इत्यन्तश्चाष्टाक्षरपादद्वयं, ततो द्वादशाक्षरपादः । ऋक्प्रातिशाख्यभाष्यकारेणापि असावेव ऋक् उदाहरणत्वेन गृहीता । ततः षट्पञ्चाशदक्षरां शक्करीमुदाहरति, प्रो ष्वस्मायिति ।—अस्याः सायणभाष्यं—"प्रो ष्विति सप्तर्चं पञ्चमं सूक्तं पिजवनपुत्रस्य सुदास-आर्षम् ऐन्द्रम् आद्यस्तृचः शाक्करः षट्पञ्चाशदक्षरा शक्करी । अस्मा इन्द्राय षष्ठ्यर्थे चतुर्थी अस्येन्द्रस्य पुरोरथं रथस्य पुरः पुरतो पुरोऽव्ययमिति गतित्वात् गतिसमासः रथस्य अग्रतो वर्त्तमानं शूषं बलं सु प्रो अर्चत हे स्तोतारः ! सुष्ठु प्रपूजयत प्रउ इति निपातसमुदायः प्रो इति ओदिति प्रगृह्यसंज्ञा इन्द्रो विशिष्यते समत्सु समानं माद्यन्त्यत्रेति समदः सङ्ग्रामाः समत्सु सङ्ग्रामेषु सङ्गे सङ्गमनीये शत्रुबले अभीकेचित् अभ्यर्णेऽपि निकटं प्राप्तेऽपि केशाकेश्यवस्थायामपि लोककृत् स्थितिकृत् न पलायिता स्थित्वा वृत्रहा वृत्राणामावरकाणां हन्ता एवंविधः स इन्द्रः अस्माकं स्तोतॄणां चोदिता धनानां प्रेरिता सन् बोधि अस्माभिः कृतानि परिचरणानि बुध्यताम् । अपि च अन्यकेषां कुत्सितानामन्येषां शत्रूणाम् अधिधन्वसु धनुःषु अधिरोपिता ज्याकाः कुत्सिता ज्याः नभन्तां हिंसन्तां नश्यन्तु" इति । अत्र "प्रो ष्वस्मै" "अन्यकेषां" "ज्याकाः" "अधिधन्वसु" इत्येतेषु प्रोषुवस्मै इत्यादिरूपवकार-यकारव्यूहेनाक्षरपूरणम् ।

द्वापञ्चाशदक्षरमतिजगती। तत्रोदाहरणम्।—

"तमिन्द्रं जोहवीमि मघवानमुग्रं
सत्रा दधानमप्रतिष्कुतं शवांसि
मंहिष्ठो गीर्भिरा च यज्ञियो,
ववर्त्तद्राये नो विश्वा, सुपथा कृणोतु वज्री॥" (ऋक्० ६अष्ट० ६अ० ८म० १०अनु० ८६सू० १३ऋ०)।

अष्टचत्वारिंशदक्षरं जगती। तत्रोदाहरणम्।—

"तन्न ऋतमिन्द्र! शूर! चित्र पात्व-
पो न वज्रिन्! दुरितातिपर्षि भूरि।

---

एतेनात्र अष्टाक्षराः सप्त पादाः ज्ञेया इति। उव्वटोऽपि एतामेव ऋचमुदाहृतवान्। अथ द्वापञ्चाशदक्षरमतिजगतीच्छन्द उदाहरति, तमिन्द्रं जोहवीमीति।—अस्याश्च सायणभाष्यं—"या इन्द्रेति पञ्चदशर्चं चतुर्थं सूक्तं……अष्टौदश्यतिजगती। तं पूर्वोक्तगुणोपेतम् इन्द्रं जोहवीमि यष्टाऽहं पुनः पुनराह्वयामि। कीदृशं मघवानं मंहनीयधनवन्तमुग्रमुद्गूर्णबलं सत्रा सत्यं यथार्थमेव शवांसि बलानि दधानम् अत एवाप्रतिष्कुतं शत्रुभिरप्रतिरोधनीयमाह्वयामि। किञ्च मंहिष्ठः पूज्यतमः दातृतमो वा यज्ञियो यज्ञार्हः इन्द्रः गीर्भिरस्मदीयाभिः स्तुतिभिरा-ववर्त्तच्च यज्ञेष्वाभिमुख्येन वर्त्ततां च, ततो वज्री वज्रवान् इन्द्रः नोऽस्माकं राये धनाय विश्वा विश्वानि सर्वाण्येव सुपथा सुमार्गाणि कृणोतु च करोतु धनं सर्वदिक्ष्वस्मान् प्राप्नोत्वित्यर्थः" इति। अत्र "यज्ञियः" इत्यन्तो द्वादशाक्षरत्रिपाद्रूपः षट्त्रिंशाक्षरः परौ चाष्टाक्षरौ पादौ विज्ञेयौ। उव्वटभाष्येऽपि इदमेवोदाहरणम्। अष्टचत्वारिंशदक्षरां जगतीं निरूप्य वैदिकच्छन्द उपसंहरति,—अष्टेति। तन्न ऋतमिति।—अस्याः सायणविवृतिः,—"या इन्द्रेति पञ्चदशर्चं चतुर्थं सूक्तं काश्यपस्य रेभस्यार्षमैन्द्रम्। पञ्चदशी जगती। हे शूर! बलवन्! चित्र! चायनीय! विविधरूप! वा इन्द्रामायाभिः पुरुरूप ईयत इत्यादिषु दृष्टत्वात्। बहुविधरूप हे इन्द्र! तत् प्रशस्तं त्वदीयमृतं सत्यं मा मां पातु सर्वतो रक्षतु। किञ्च हे वज्रिन्! वज्रवन्निन्द्र! भूरि भूरीणि बहूनि दुरिता दुरितानि पापानि अतिपर्षि अतीत्य पारय, तत्र दृष्टान्तः,—आपो न यथा नाविका उदकानि मनुष्यान् पारयति तद्वत् अस्मान्-

कदा न इन्द्र राय आ दशस्ये-

र्विश्वप्स्न्यस्य स्पृहयाय्यस्य राजन्!॥" (ऋक्० ६अष्ट०
६अ० ८म० १०अनु० ८६सू० १५ ऋ०)। (छ)

पापानि पारय। हे राजन्! दीप्यमान! हे इन्द्र! विश्वप्स्न्यस्य रूप इति रूपनाम रूपे साधु सां यकारोपजनम्छान्दसः। बहुरूपं तत् स्पृहयाय्यस्य सर्वैः स्पृहणीयं रायः क्रियाग्रहणमिति सम्प्रदानसंज्ञा चतुर्थ्यर्थे बहुलमिति षष्ठी। तद्धनं नोऽस्मभ्यम् आ आभिमुख्येन कदा दशस्येः? कस्मिन् काले प्रयच्छेः? तदा तव स्वभृतं सत्यं मां रक्षत् मह्यं धनं दत्त्वा कर्माणि च कारयित्वा तथा हेतुभूतेन तुष्टाश्च मां पापरहितं कुर्विथ्यः" इति। अत्र "दशस्येः" "स्पृहयाय्यस्य" इत्युभयत्र व्यूहेनाक्षरपूरणं तेन च द्वादशाक्षरचतुष्पादत्वात् अष्टचत्वारिंशदक्षरा जगतीति बोद्धव्यम। एतेषु अपि छन्दःसु अक्षरन्यूनाधिक्यवशात् निचृद्भुरिक्-विराट्-स्वराजः पूर्वोक्तरीत्या समर्थनीयाः। विभिन्नलक्षणविनिश्रितपादत्वे तु शौनकादिभिः प्रगाथ इति विशेषसंज्ञा अङ्गीकृता; यथोक्तं,—"बार्हती बृहतीपूर्वः ककुप्पूर्वस्तु काकुभः। एतौ सतोबृहत्यन्तौ प्रगाथौ भवतो द्वयौ॥" (१८।१ऋ० प्रा०) इति, तथा "अनुष्टुप् द्वे च गायत्र्यावेष आनुष्टुभः स्मृतः। विराजावभिसम्पन्नः पथ्यान्ते स उच्यते॥" (१८।३ ऋ० प्रा०) इति च। बहुलक्षणात्मकेषु पादेषु प्रथमपादीयच्छन्दः-पूर्वत्वेन संज्ञाव्यवस्था च तेनैव कृता. यथा—"आकृतिर्व्यपदेशानां प्रायः आदितः आदितः" (१८।४ ऋ० प्रा०) इति। तेन एकस्मिन् गायत्र्यानुष्टुप्पादत्वे आदितः यस्य छन्दसः पादः तेनैव व्यपदेशः। तत्र गायत्रबार्हतप्रगाथलक्षणं यथा—"गायत्र्यादिस्तु बार्हते प्रायो गायत्रबार्हतः" (१८।५ऋ० प्रा०) इति। उदाहरणं यथा—"तमिन्द्रं दानमीमहे शवसानमभीर्वम्। ईशानं राय ईमहे॥" (ऋक्० ६अष्ट० ४अ० ८म० ६अनु० ४६सू० ६ऋ०) इति। गायत्रकाकुभप्रगाथलक्षणं यथा—"गायत्रकाकुभो नाम प्रायो भवति काकुभे" (१८।६ ऋ० प्रा०) इति। उदाहरणं यथा—"सुगोपो या स मर्त्यो यं मरुतो यमर्यमा। मित्रः पान्त्यद्रुहः॥" (ऋक्० ६अष्ट० ४अ० ८म० ६अनु० ४६सू० ४ऋ०) इति। एवम् अन्यान्यपूर्वः सतोबृहत्यन्तः प्रगाथः औष्णिहः, तथा पङ्क्त्यन्तः ककुप्पूर्वः पाङ्क्तकाकुभो नाम वेदितव्यः। एवं महासतोबृहत्यन्तः प्रगाथः महाबार्हतः, बृहतीमुखः जगत्यन्तः प्रगाथः बार्हत एव, अतिजगत्यन्तः बृहतीमुखोऽपि स एव, यवमध्योत्तरः बृहतीमुखोऽपि बार्हत एव। ककुप्पूर्वः बृहत्यन्तः काकुभबार्हतः, तथा आनुष्टुभपाङ्क्तः,

## अत्र लौकिकम् ॥ ८ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः। पूर्वेषां छन्दसां वैदिकत्वमेव। इतः प्रभृत्यार्य्यादीनां चूलिकापर्य्यन्तानां लौकिकत्वमेव। समान्यादीनामुत्कृतिपर्य्यन्तानां वैदिकत्वं लौकिकत्वञ्च। अत्र—वैदिकच्छन्दसां प्रस्तावे, प्रसङ्गात् वेदवदनादिमुनिपारम्पर्य्यागतं स्मृतिपुराणेतिहासादिषु दृश्यमानमार्य्यादिदण्डकपर्य्यन्तं लौकिकं छन्दोजातमधिक्रियते, तन्मूलत्वात् काव्यस्य। काव्यञ्च कीर्त्तिरूपत्वादानन्दहेतुत्वाच्च पुरुषार्थः। (ञ)

## आ त्रैष्टुभाच्च यदार्षम् ॥ ९ ॥

आङभिविधौ, त्रिष्टुबेव त्रैष्टुभम्; स्वार्थे तद्धितः। गायत्र्यादि-त्रिष्टुप्पर्य्यन्तं यदार्षं छन्दोजातं वैदिके व्याख्यातं लौकिके च तत् तथैव द्रष्टव्यम्। किं तदार्षम्? चतुर्विंशत्यक्षरा गायत्री। अष्टाविंशत्यक्षरा उष्णिक्। द्वात्रिंशदक्षरा

---

काकुभस्त्रैष्टुभः, आनुष्टुभस्त्रैष्टुभः, बार्हतस्त्रैष्टुभः, त्रैष्टुभजागत इत्यादयोऽवमन्तव्याः। तदुक्तं शौनकेन—"औष्णिहस्तूष्णिहापूर्वः पङ्क्त्यन्तः पाङ्क्तकाकुभः। महाबृहतीबृहत्यन्तो यो महाबृहतीमुखः। बार्हतो बृहतीमुखः। अथो अतिजगत्यन्तः। यवमध्योत्तरोऽपि च॥" (१८।७—११ऋ० प्रा०) इत्यादि।

(ञ) वैदिकच्छन्दोजातमभिधाय साम्प्रतं लौकिकच्छन्दांसि निरूपयितुमधिकारार्थं सूत्रमाह,—अत्रेति। अधिकार इति।—अयं लौकिकाधिकारः एतच्छन्दःशास्त्रसमाप्तिपर्य्यन्तं वेदितव्यमित्यर्थः। वैदिकलौकिकच्छन्दसां विशेषभेदं दर्शयति, पूर्वेषामित्यादि।—पूर्वेषाम् इतः पूर्वमभिहितानाम् एकद्वित्रिपञ्चषट्पादादिरूपाणां गायत्र्यादीनां तथा दैव्यादिरूपाणां गायत्र्यादीनाञ्च वैदिकत्वमेव, एवकारेण न पुनस्तेषां लौकिकत्वमित्यर्थः प्रकटितः। चूलिकापर्य्यन्तानां केवलमेव लौकिकत्वम्। सूत्रार्थमाह,—अत्रेति। लौकिकच्छन्दसामपि परम्परया पुरुषार्थप्रदत्वं प्रतिपादयितुमाह, काव्यञ्चेति।—काव्यस्य पुरुषार्थत्वे काव्यमूलीभूतच्छन्दसामपि पुरुषार्थत्वमित्यभिप्रायः।

(झ) वैदिके गायत्र्यादि त्रिष्टुबन्तं छन्दोजातम् आर्य्यादिभेदेन प्रत्येकमष्ट-

अनुष्टुप्। षट्त्रिंशदक्षरा बृहती। चत्वारिंशदक्षरा पङ्क्तिः। चतुश्चत्वारिंशदक्षरा त्रिष्टुप्। चः समुच्चये। (भ)

## सुप्रतिष्ठा-प्रतिष्ठा-मध्याऽत्युक्तोक्ताश्च ॥ १० ॥

लौकिकप्रस्तावमधिकृत्यैतत्; तेन विंशत्यक्षरा सुप्रतिष्ठा, षोडशाक्षरा प्रतिष्ठा, द्वादशाक्षरा मध्या, अष्टाक्षरा अत्युक्ता, चतुरक्षरा उक्ता, अतः परं न ह्रासः, द्वितीयसूत्रे एतत्पर्य्यन्तमेव नियमात्। अक्षरच्छन्दः अधिकृत्यैषा संज्ञा, तत्रैवाक्षरह्रास-विधानात्। इत्येवं लौकिके संज्ञाऽवगन्तव्या। (ञ)

---

विधं, लौकिके पुनः किमित्यपेक्षायामाह,—आ त्रैष्टुभात् इति। तस्य व्याख्यानमाह, आङिति।—आ-शब्दः अभिविधौ सीमार्थे; ततश्च "पञ्चम्यपाङ्परिभिः" (२।३।१० पा०) इति सूत्रेण पञ्चमी। एतेन लौकिके षडक्षरपादानां चतुष्पादत्वे सति चतुर्विंशत्यक्षरं गायत्रं छन्दः, सप्ताक्षरपादानां चतुष्पादत्वे च अष्टाविंशत्यक्षरा उष्णिक्, तथा अष्टाक्षरपादानां चतुष्पादत्वे द्वात्रिंशदक्षरा अनुष्टुप्, एवं नवाक्षरपादानां चतुष्पादत्वे च षट्त्रिंशदक्षरा बृहती, दशाक्षरपादानां चतुष्पादत्वे च चत्वारिंशदक्षरा पङ्क्तिः, एकादशाक्षरचतुष्पादत्वे च चतुश्चत्वारिंशदक्षरा त्रिष्टुबिति निष्कर्षः। इहापि पूर्ववत् "चतुरश्चतुरस्त्यजेत्" (४।२ पि०) इति वैदिकच्छन्दोवत् नियमः, यथा—चतुश्चत्वारिंशदक्षरायाः त्रिष्टुभश्चतुरक्षरपरित्यागेन चत्वारिंशदक्षरा पङ्क्तिः ततोऽपि चतुरक्षरत्यागात् षट्त्रिंशदक्षरा बृहती, ततश्चतुरक्षरपरित्यागेन द्वात्रिंशदक्षरा अनुष्टुप्, ततश्चतुरक्षरत्यागेन अष्टाविंशत्यक्षरोष्णिक्, ततोऽपि चतुरक्षरत्यागेन चतुर्विंशत्यक्षरा गायत्रीति भावः। चः समुच्चये इति।—वैदिके यथा चतुरक्षरत्यागनियमेन एतानि छन्दांसि भवन्ति तथा लौकिकेऽपि इत्यर्थः। आ त्रैष्टुभादित्यनेन जगतीं वर्जयित्वा एतल्लक्षणं प्रवर्त्तते, पश्चात् जगतीलक्षणस्याभिहितत्वादिति।

(ञ) अपरमपि पञ्चविधं लौकिकं छन्दः आह, सुप्रतिष्ठेति।—इहापि पूर्ववच्चतुरक्षरत्यागनियमोऽवश्यं स्वीकरणीयः; तेन चतुर्विंशत्यक्षरगायत्र्याश्चतुरक्षर-त्यागात् विंशत्यक्षरा सुप्रतिष्ठा, ततश्च चतुरक्षरत्यागे षोडशाक्षरा प्रतिष्ठा इत्यादिक्रमः अनुसरणीयः। एवञ्च उक्तायाश्चतुरक्षरत्वात् एकाक्षरपादा उक्ता, द्व्यक्षरपादा अत्युक्ता, त्र्यक्षरपादा मध्या, चतुरक्षरपादा प्रतिष्ठा, पञ्चाक्षरपादा सुप्रतिष्ठेति बोधः, "पादश्चतुर्भागः" (४।११ पि०) इति वक्ष्यमाणसूत्रेण चतुर्भागेन-

## पादश्चतुर्भागः ॥ ११ ॥

चतुर्भागश्चतुर्विंशत्यक्षराया गायत्र्याश्चतुर्थो भागः पादसंज्ञां लभते। गायत्र्याः षडक्षरः पादः। एवमुष्णिगादिष्वपि द्रष्टव्यम्। समवृत्तविषयमेतत्। (ट)

---

भागस्य लौकिके पादनियमात्। सम्पूर्णाक्षरात् हेत्वाश्चतुरक्षरत्यागेन एकैकपादतः एकैकाक्षरत्याग एव प्रतीयते। अथवा एकैकाक्षरवृद्धिक्रमेणापि तथैवार्थः। अतश्छन्दोमञ्जर्यामपि "आरभ्यैकाक्षरात् पादादेकैकाक्षरवर्धितैः। पादैरुक्थादिसंज्ञं स्याच्छन्दः षड्विंशतिं गतम् ॥" इति। परन्तु तत्र "उक्ता" इत्यत्र "उक्था" इति पाठो दृश्यते। बहुषु मुद्रितपुस्तकेषु सूत्रमिदं प्रत्याख्यातम्; तेषां मते एकादिपञ्चाक्षरपर्यन्तं प्रस्तारवशात् छन्दःसिद्धिः, किन्तु सूत्रे तद्विधानाभावरूपदोषस्य परिहार्यः। प्रस्तारप्रदर्शनेन भगवता पिङ्गलाचार्येण यत् प्रतिपादितं तत्तु सूत्रानुसारेणैव; किञ्च पिङ्गलाचार्यकृतसूत्रपर्यायक्रमश्च आग्नेयमहापुराणे लक्षणपर्यायक्रमश्च प्रायशः सम एव दृश्यते, दृश्यते च तत्र सुप्रतिष्ठादीनां समुल्लेखः, एवञ्च सूत्रस्याख्यानाभावपक्षे क्रमभङ्गदोषः। तथा चाग्नेये—"चतुःशतमुत्कृतिः स्यादुत्कृतेश्चतुरस्त्यजेत्। अभिसंख्याप्रभृत्यः कृतिः तानि छन्दांसि वै पृथक् ॥ कृतिश्चातिधृतिर्धृतिरत्यष्टिश्चाष्टिरित्यतः। अतिशक्वरी शक्वर्यतिजगती जगत्यपि ॥ छन्दोऽत्र लौकिकं स्याच्च आर्षमात्रैष्टुभात् श्रुतम्। त्रिष्टुप्पङ्क्ती च बृहती अनुष्टुबुष्णिगीरितम् ॥ गायत्री स्यात् सुप्रतिष्ठा प्रतिष्ठा मध्यया सह। अत्युक्ताथोक्ता चादिश्च एकैकाक्षरवर्जितम् ॥" (४।१—४ आ० छ०) इति।

(ट) वैदिके छन्दोजाते क्वचिदेकपादं क्वचिद्द्विपादं क्वचित्त्रिपादं क्वचिच्चतुष्पादं छन्दो वर्त्तते, इह लौकिके पुनः कीदृशः पादः इत्यपेक्षायामाह, पादः चतुर्भाग इति।—चतुर्णां पादानाम् एको भागः अंशः श्लोकस्य चतुर्थांशः पादः इत्यर्थः। तदेव विशेषेण प्रकाशयति, गायत्र्या इति।—ततश्च लौकिके उक्तायाश्चतुरक्षररूपायाः पादः एकाक्षरः, अत्युक्तायाश्च द्व्यक्षरः, मध्यायास्त्र्यक्षरः, प्रतिष्ठायाश्चतुरक्षरः, सुप्रतिष्ठायाश्च पञ्चाक्षरः, चतुर्विंशत्यक्षररूपाया गायत्र्याः षडक्षरः, एवमुष्णिहादीनामपि एकैकाक्षरवृद्ध्या षड्विंशत्यक्षरपर्यन्तं पादः कल्पितः। अर्द्धसम-विषमवृत्तलक्षणस्य वक्ष्यमाणत्वात् समवृत्तविषयमेतदित्युक्तम्। एतेन "गायत्र्या वसवः" (३।३ पि०) इति यदुक्तं तत् वैदिकमात्रपरं लौकिके तस्याः षडक्षर एव पादः, एवञ्च लौकिकच्छन्दसां सर्वेषां चतुष्पदत्वमेवाङ्गीकृतं, विषमवृत्तेऽपि चतुष्पदलाभत्वादिति भावः।

## यथावृत्तसमाप्तिर्वा ॥ १२ ॥

यस्य वृत्तस्य यादृशैः पादैर्न्यूनाक्षरैरधिकाक्षरैर्वा समाप्ति-र्दृश्यते, तस्य तादृशा एव पादा ग्रहीतव्याः। वा-शब्दो व्यवस्थितविभाषायाम्, उद्गतादिषु विषमवृत्तेषु चतुर्भागाति-क्रमेणापि पादव्यवस्थादर्शनात्। (ठ)

आदौ तावद्गणच्छन्दो मात्राच्छन्दस्ततः परम्।
तृतीयमक्षरच्छन्दश्छन्दस्त्रेधा तु लौकिकम् ॥
आर्य्याद्युद्गीतिपर्य्यन्तं गणच्छन्दः समीरितम्।
वैताल्यादि चूलिकान्तं मात्राच्छन्दः प्रकीर्त्तितम् ॥
समान्याद्युत्कृतिं यावदक्षरच्छन्द एव च ॥ (ड)

तत्रादौ तावदार्य्यालक्षणसिद्ध्यर्थं गणसंज्ञां करोति—

## लः समुद्रा गणः ॥ १३ ॥

ल इत्येकमात्रिकस्याक्षरस्य ग्रहणम्। समुद्रा इति चतुः-सङ्ख्योपलक्षणार्थम्। चतुर्णां लकाराणां गणः इत्येषा संज्ञा विधीयते। (ढ)

---

(ठ) ननु विषमवृत्तेषु उद्गतादिषु न्यूनाधिकाक्षरघटितपादत्वेन श्लोकचतुर्थैकभागातिक्रमेणापि पादव्यवस्थादर्शनात् चतुर्थभागस्य पादत्वं कथं युज्यते, इत्याह यथेत्यादि।—यस्य वृत्तस्य चतुर्भागन्यूनाक्षरपादत्वं चतुर्भागाधिकाक्षरपादत्वं वा तस्य वृत्तस्य तादृशाक्षरघटितपादाः ग्रहणीयाः इत्यर्थः। व्यवस्थितविभाषार्थक-वा-शब्देनैतत् सूचितमिति दर्शयितुमाह,—वा-शब्द इति। तत्र हेतुं दर्शयति,—उद्गतादिष्विति।

(ड) लौकिकच्छन्दसां बहुभेदतया तेषां क्रमनिर्णयपुरःसरं कतिपयैर्हैतैः वृत्तिकारः सम्प्रति प्रधानभेदान् विवृणोति, आदावित्यादि।—गणमात्राक्षरभेदेन लौकिकं छन्दस्त्रिविधम्; तत्र प्रथमं आर्य्यातः उद्गीतिं यावत् गणच्छन्दः, तत्र गण-नियमनात्; ततः परं वैतालीयमारभ्य चूलिकापर्य्यन्तं मात्राच्छन्दः; ततश्च समानीतः उत्कृतिपर्य्यन्तमक्षरच्छन्दः इत्यर्थः।

(ढ) वक्ष्यमाणसूत्रस्य प्रयोजनं दर्शयति, तत्रेति।—गणसंज्ञामन्तरेणार्य्यालक्षणं

## गौ गन्तमध्यादिर्लश्च ॥ १४ ॥

अनेन गणस्य विन्यासभेदं दर्शयति। स हि गणः कदाचित् गुरुद्वयेन ( ‿‿ ) भवति, कदाचिदन्तेनैकेन गुरुणा, ( --‿ ) कदाचिन्मध्यमेन, ( -‿- ) कदाचिदाद्येन, ( ‿-- ) कदाचित् चतुर्भिर्लघुभिः ( ---- )। अन्तस्य भेदस्याभावात् विस्पष्टार्थमिदं सूत्रम्। अन्तमध्यादिरिति प्रथमं द्वन्द्वसमासं कृत्वा पश्चात् गकारेण बहुव्रीहिः। द्वन्द्वात् परो यः श्रूयते, लभतेऽसौ प्रत्येकमभिसम्बन्धम्। द्वौ गकारौ चत्वारो लघवो भवन्ति, स एको गणः ( ‿‿ )। गकारोऽन्ते यस्य स गन्तो द्वितीयो गणः ( --‿ )। गकारो मध्ये यस्य स ग-मध्यस्तृतीयो गणः ( -‿- )। गकार आदौ यस्य स गादिश्चतुर्थो गणः ( ‿-- )। नकार-लकारौ मिलितौ चत्वारो लघवो भवन्ति, स पञ्चमो गणः ( ---- )। ( ण )

न सिध्यतीति भावः। गणसंज्ञां दर्शयति, ल इति।—समुद्राः चत्वारः, लः एकमात्रात्मकाक्षराणि, गणः गणसंज्ञा इत्यर्थः। एकेति।— एका मात्रा यस्य तादृशस्याक्षरस्य ग्रहणं ल्-शब्देन प्रतीतिः, समुद्रा इत्यनेन च चतुःसङ्ख्या इति बोधः ; ततश्च लघुरूपचतुर्मात्राया एकगणत्वमिति लक्षणं सिद्धम्।

( ण ) गणलक्षणमभिधाय साम्प्रतं तद्विन्यासभेदं दर्शयितुमाह, गाविति।—गौ गुरुद्वयम्। गन्तमध्यादिः अन्तगुरुः मध्यगुरुः आदिगुरुश्च इत्यर्थः। तथा लश्च लघवश्च, चत्वार इति शेषः, प्रथमाया बहुवचनेन "लः" इति सिद्धेः चतुर्लकाराणामेव च गणत्वविधानात्। स च गणः एवं-रूपेण पञ्चविध इत्यर्थः। गुरुद्वयेनेति।—एकगुरोः द्विमात्रात्मकत्वात् गुरुद्वयेन ( ‿‿ ) चतुर्मात्रासिद्धिरिति, तेन एको गणः इत्यायातम्। गन्तमध्यादिरिति पदं विवृणोति, कदाचिदन्तेनेत्यादिभिः।—अन्तगुरुत्वादेव गुरोर्द्विमात्रास्वरूपत्वेनापरौ लघुभूताविति लभ्येते, ततश्च चतुर्मात्रासिद्धिरिति, तेनापि एकः गणः भवतीति भावः। उक्तञ्च—"गुरुस्तु द्विकलो ज्ञेयो नागदन्तसमाकृतिः। ऋजुरूपस्तु लघुः कीर्तितः॥" इति। गुरुमध्यत्वेऽपि पूर्वापरयोः लघुत्वात्

अथ आर्य्याधिकारः ।—

एवं गणेषु सिद्धेषु इदानीमार्य्यालक्षणं करोति—

## स्वरा अर्द्धञ्चार्य्यार्द्धम् ॥ १५ ॥

गणग्रहणमनुवर्त्तते । स्वरा इति सप्तानां संज्ञा । यत्र प्रस्तारे गणाः सप्त भवन्ति, अर्द्धञ्च गणस्य, तदार्य्यार्द्धं निष्पद्यते । द्वितीयमप्यर्द्धं तादृशमेव । सम-प्रविभागेऽर्द्धशब्दः । यद्येवमष्ट-

---

चतुर्मात्रिकत्वमित्याह, मध्यमेन गुरुणेति ।—तेन च ( -⏑- ) आद्यन्तलघुको मध्यगुरुश्च एको गणः इत्यर्थः । तथा आद्यगुरुत्वे अपरयोर्द्वयोर्लघुत्वे च चतुर्मात्रासिद्धेस्तादृशः ( ⏑-- ) एको गणः । चतुर्लघुत्वेऽपि चतुर्मात्रिकत्वमिति ( ---- ) तादृशश्चापरो गण इति पञ्चैव गणभेदा दर्शिताः इति निष्कर्षः । मात्राप्रस्तारनियमेन प्रस्तारे क्रियमाणे सर्वगुर्वादि-सर्वलघ्वन्ताः पञ्चैव भेदा गणस्य भवन्ति, तत् कथमिदं सूत्रमित्याह, षष्ठस्य भेदस्येति ।—विस्पष्टार्थं सुकुमारमतीनां सुखबोधार्थम् अन्तमध्यादिरिति ।—अन्तश्च मध्यश्च आदिश्च ते अन्तमध्यादयः, गः गुरवः अन्तमध्यादयो यत्र सः अन्तमध्यादिगुरुर्गण इत्यर्थः । कथमेतेन अन्तगुरुर्मध्यगुरुरादिगुरुरित्यर्थो लभ्यते इत्यत आह,—द्वन्द्वादिति । समुदयसूत्रार्थेन पञ्चगणान् विस्पष्टयति, द्वाविति ।—गुरुद्वयस्वरूप एको गणः गन्तमध्यादिस्वरूपश्च त्रिगणः इति मिलित्वा चत्वारः । नकारलकाराविति ।—'ल्' इत्येकमात्रिकाक्षरोपलक्षितत्वेन त्रिलघुश्च नकारः एकलघुश्च ल इति मिलित्वा चत्वारः लघवः ; ततश्च चतुर्लघुस्वरूपः एको गणः इति पञ्च गणभेदाः । केचिदत्र नकार-लकारौ मिलिताविति वृत्तिग्रन्थाभिप्रायमपरिज्ञाय सूत्रे "लश्च" इति पाठमशुद्धं मन्यमानाः तत्र "न्लौ च" इति पाठं समर्थयन्ते । बहुषु प्राचीनपुस्तकेषु तादृशपाठमपश्यन्तो वयमिममपि सङ्गतार्थमुत्प्रेक्षमाणा नान्यथा विदधीमः । इह वक्रात्मकरेखारूपं ( ⏑ ) गुरुचिह्नं सरलरेखारूपञ्च ( - ) लघुचिह्नं पूर्वाचार्य्यप्रसिद्धमवधेयम् ।

( त ) आर्य्याया लक्षणमाह, स्वरा इति ।—पूर्वत इह गणग्रहणमधिक्रियते । निषादादिभेदेन स्वराणां सप्तविधतया सप्तसङ्ख्यावाचकोऽत्र स्वरशब्दः, ततश्च यत्र सप्तसङ्ख्या गणा भवन्ति तथा गणस्यार्द्धञ्च भवति तदार्य्याया अर्द्धं स्यात्, तथैव परार्द्धमपि, एवञ्च आर्य्यां वृत्तं सिध्यतीत्यर्थः । एतेन आर्य्यार्द्धे सार्द्धसप्तगणाः

शब्दस्य "अर्द्धं नपुंसकम्" (२।२।२पा०) इत्यनेनैकदेशिसमासे सति पूर्वनिपातः प्राप्नोति। यथा,—अर्द्धाढ़कम्, अर्द्धपलम्, अर्द्धखारीति। नैष दोषः,' सत्यपि सम-प्रविभागवचनत्वे सम्बन्धमात्रस्यात्र विवक्षितत्वात्, सम-प्रविभागवचनस्यार्द्ध-शब्दस्यैकदेशिसमासव्यभिचारदर्शनात्। यथा—तुलार्द्धेन गां क्रीणाति।

पणार्द्धक्रीततांबूल-चर्वणात् गर्विताननाः।
अनभ्यासाद्गलल्लाला यान्त्येते वारयात्रिकाः॥

तथाऽसम-प्रविभागार्थत्वेऽप्यर्द्धशब्दस्यैकदेशि-समासदर्शनाच्च।
यथा—

अर्द्धचन्द्रं दधन्मूर्द्ध्नि पातु वः पार्वतीपतिः।
कालकूटविषं हन्तुं सङ्गृहीतमिवामृतम्॥

---

पूर्वायाश्च पञ्चदशगणाः इति भावः। द्वितीयार्द्धस्य तथात्वे हेतुं दर्शयति, समेति।—समप्रविभागे तुल्यांशे अर्द्धशब्दः, क्लीवत्वेन निर्देशात् इत्यर्थः। तथात्वे च दोषं दर्शयति, यद्येवमिति।—"पुंस्यर्द्धोऽर्द्धं समेऽंशके" इत्यमरसिंहोक्तेः अर्द्धशब्दस्य समांशेऽर्थे नपुंसकत्वं, नपुंसकत्वे च "अर्द्धं नपुंसकम्" (२।२।२ पा०) इति सूत्रेण एकदेशिसमासे सति पूर्वनिपातप्रसङ्गात् अर्द्धार्य्यम इत्येव भवितुमर्हति, तथा चोक्तं काशिकायाम्—"अर्द्धमित्येतत् नपुंसकमेकाधिकरणेन समस्यते तत्पुरुषश्च समासो भवति षष्ठीसमासापवादोऽयं योगः अर्द्धं पिप्पल्याः अर्द्धपिप्पली" इत्यादि। तदेव समर्थयते, नैष इति।—अत्र समप्रविभागस्य सम्बन्धमात्रार्थे विवक्षितत्वात् समासविधेरनित्यत्वाच्च दोषपरिहार इत्यर्थः। आर्य्यायाः अर्द्धमार्य्यार्द्धम् इति षष्ठीसमास इति भावः। उक्तञ्च दुर्गसिंहेन—"पिप्पल्यर्द्धमिति षष्ठीसमासोऽपि दृश्यते" इति। एतेन "अर्द्धं नपुंसकम्" इति पाणिनीयसूत्रस्य व्यभिचारः स्वीकरणीयः एव। अन्वयव्यतिरेकाभ्याम् अव्याप्त्यतिव्याप्तिलक्षणं व्यभिचारं दर्शयति, तुलेत्यादि।—अत्र तु अर्द्धशब्दस्य समप्रविभागार्थत्वेऽपि न पूर्वनिपातः। प्रमाणान्तरमुपक्षिपति, पणार्द्धेत्यादि।—पणस्यार्द्धं पणार्द्धं तेन क्रीतस्य ताम्बूलस्य चर्वणात् गर्वितम् आननं मुखं येषां ते, तथा अनभ्यासात् ताम्बूलस्य नित्यचर्वणाननुष्ठानात् गलन्त्यः लाला मुखज-जल-बिन्दुविशेषाः येषां ते एते

अन्यच्च—

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते ॥

अत्रार्य्याया लक्षणं कुर्वाण एवं ज्ञापयत्याचार्य्यः,—यदार्य्यायामवान्तरपादव्यवस्था नास्ति ; तेन द्वीपादन्यस्मादित्यादौ गणत्रयस्यान्ते गुरुत्वं न स्यात् ।

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ (त)

---

चारयायिकाः वराननुयायिनः यान्ति गच्छन्ति । अत्रापि अर्द्धपदम् इत्येव भवितुं युक्तः । असमप्रविभागार्थे अर्द्धशब्दस्य पूर्वनिपातं दर्शयति, अर्द्धचन्द्रमित्यादि ।—पार्वतीपतिः शिवः मूर्द्धि शिरसि चन्द्रस्यार्द्धम् अर्द्धचन्द्रं कालकूटविषं हलाहलं हन्तुं निराकर्त्तुं सङ्गृहीतं सञ्चितम् अमृतं पीयूषमिव दधत् धारयन् वः युष्मान् पातु रक्षतु । एवमन्यदपि प्रमाणं दर्शयति, तुल्यार्थमित्यादि ।—तुल्यः समानः अर्थः प्रयोजनं यस्य तथाविधं तथा तुल्यं सामर्थ्यं शक्तिर्यस्य तथाभूतं, मर्मज्ञं मर्म जानाति इति तादृशं मर्मज्ञं तत्त्वज्ञं, व्यवसायिनम् उद्यमशीलं, राज्यस्यार्द्धं हरतीति तादृशम् अर्द्धराज्यहरं भृत्यं यः प्रभुः न हन्यात् निधनं न कुर्य्यात् सः स्वयमेव हन्यते, तेनैव भृत्येनेति शेषः । अत्रेत्यादि ।—आचार्य्यः पिङ्गलाचार्य्यः । अत्र आर्य्याप्रकरणे । अवान्तरपादव्यवस्था अवगतमन्तरं मध्यम् अवान्तरं तादृशी पादव्यवस्था प्रधानतया पादस्वीकारः नास्ति । तेन च "द्वीपादन्यस्मादपि" इत्यत्र तथा "घटयति" इत्यत्र च फलेकारस्य पादान्तत्वेऽपि "गन्ते" (१।१० पि०) इति सूत्रेण गणत्रयस्यावसाने गुरुत्वं न स्यादित्यर्थः । द्वीपादिति ।—अभिमुखीभूतः अनुकूलः विधिः दैवं द्वीपात् जलमध्यस्थ-स्थलप्रदेशात्, अन्यस्मात् स्थानान्तरात्, जलनिधेः समुद्रस्य मध्यात् अन्तरात्, दिशः अन्तात् दिक्प्रान्तादपि, अभिमतम् इष्टवस्तु झटिति अकस्मात् आनीय सङ्गृह्य घटयति मेलयति । मतान्तरे गुरुलघुसंख्याभेदेन आर्य्याया बहवो भेदाः सन्ति, ते च यथा—सप्तविंशतिर्गुरवः त्रयो लघवः सा लक्ष्मीः । षड्विंशतिर्गुरवः पञ्च लघवः सा ऋद्धिर्नाम । पञ्चविंशतिः गुरुतया सप्त लघुतया च बुद्धिर्नाम । चतुर्विंशतिगुरुका नवलघुका च लज्जा । त्रयोविंशतिगुरुका एकादशलघुका च विद्या । द्वाविंशतिगुरुत्वे त्रयोदशलघुत्वे

## अत्रायुङ् न ज् ॥ १६ ॥

अत्र आर्य्याच्छन्दसि, अयुग्गणः प्रथमस्तृतीयः पञ्चमः सप्तमश्च, न जगणः मध्यगुरुर्न कर्त्तव्यः। शेषास्तु कामतोऽत्र भवन्ति। (थ)

---

च क्षमा नाम। तथा एकैकगुरुह्रासेन द्विद्विलघुवृद्ध्या च आर्य्येयं देव्यादिनामधेयाऽपि भवेत्, एकगुरुका तु न भवतीति नियमः। देव्यादिनामानि यथा भामहः,—"देवी गौरी रात्रिः चूर्णा छाया कान्तिः महामाया कीर्त्तिः सिद्धा मनोरमा गाहिनी विश्वा वासिता शोभा हरिणी चक्री सारसी कुररी सिंही हंसी" इति। एवमार्य्यायाः पाठ-नियमश्च प्रथमपादे राजहंसगतिवदतिमन्थरं, द्वितीये पुनः सिंहविक्रमवदुद्धतं, तृतीये गजेन्द्रपदविलासादिवत् सलीलं, चतुर्थे भुजङ्गगतिवत् चपलम् इति। तथा चोक्तं प्राकृतपिङ्गले—"पढमं वी हंसपअं बीए सिंहस्स विक्कमं जाआ। तीए गअवरलुलिअं अहिवरलुलिअं चउत्थए गाहा॥" (१।५६) संस्कृतं यथा—"प्रथममिव हंसपदं द्वितीये सिंहस्य विक्रमो यादृक्। तृतीये गजवरललितमहिवरलुलितं चतुर्थके गाथायाः॥" इति। गाथेति आर्य्याया एव नामान्तरम्। तथेयमार्य्या त्रयोदशलघुका विप्रा एकविंशतिलघुका क्षत्रिया सप्तविंशतिलघुका वैश्या तदन्या च शूद्रा इति; यदुक्तं प्राकृतपिङ्गले—"तेरहलहुआ विप्पी एआईसेहि खत्तिणी भणिआ। सत्ताईसा वेसी सेसा सा सुद्दिणी होइ॥" (१।५८) इति। अस्य संस्कृतं यथा—"त्रयोदश-लघुका विप्रा एकविंशतिभिः क्षत्रिया भणिता। सप्तविंशतिभिर्वैश्या शेषा सा शूद्रा भवति॥" इति। पुनरियमेकनायका चेत् कुलीना भवति, द्विनायका स्वयं-ग्राहिणी, नायकहीना रण्डा, बहुनायका वेश्या, नायकस्तु जगणः इति। तथा चोक्तं तत्रैव प्राकृतपिङ्गले—"एक्के जे कुलमंती वे णाअकेहि होइ संगहिणी। णाअकहीणा रंडा वेसा बहुणाअआ होइ॥" (१।५७) इति। संस्कृतं यथा—"एकेन जेन कुलवती द्वाभ्यां नायकाभ्यां स्वयं-ग्राहिणी। नायकहीना रण्डा वेश्या बहुनायका भवति॥" इति। तथा प्रथम-तृतीय-पञ्चम-सप्तमेषु जगणश्चेत् दुष्टा। तथा च तत्रैव—"जा पढम-तीअ-पंचम-सत्तमठाणे ण होइ गुरुमज्झा। गुज्जिणिए गुणरहिआ गाहा दोसं पआसेइ॥" (१।५९) इति। अस्य संस्कृतं यथा—"या प्रथम-तृतीय-पञ्चम-सप्तमस्थाने ननु भवति गुरुमध्या। गुर्विणीव गुणरहिता गाथा दोषं प्रकाशयति॥" इति।

(थ) अयुग्गणस्य नियममाह—अत्रेति।

## षष्ठो ज् ॥ १७ ॥

आर्य्याच्छन्दसि षष्ठो गणो ( -⏑- ) मध्यगुरुरेव भवति।

अत्र उदाहरणम्।—

१भ० २स० ३द्वि० ४द्वि० ५स० ६ज० ७सर्व० ग०

⏑ - - - - ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ - - ⏑ - ⏑ - - - - - - ⏑

सा जयति जगत्याय्या देवी दिवमुत्पतिष्णुरतिरुचिरा।

१द्वि० २ज० ३स० ४भ० ५द्वि० ६ज० ७भ० ग०

⏑ ⏑ - ⏑ - - - ⏑ ⏑ - - ⏑ ⏑ - ⏑ - - ⏑

या दृश्यतेऽम्बरतले कंसवधोत्पातविद्युदिव ॥ (८)

---

(८) पूर्वं जगणस्य अयुजि निषेधात् युजि एव तस्य प्राप्तिसम्भावनया युजः कस्मिन् अन्यस्मिन्नपि स भवितुमर्हति इति नियमनायाह, षष्ठ इति।—ज् जगण इत्यर्थः आर्य्याच्छन्दसीति।—मध्यगुरुरेव इत्येवकारेण आर्य्यायाः षष्ठगणः मध्यगुरुरेव भवति, न तु आदिगुरुरन्तगुरुः सर्वगुरुर्वा इत्यर्थो लभ्यते, एतेन वक्ष्यमाणसर्वलघुत्वनियमस्य न काऽप्यसङ्गतिरिति बोध्यम्। अयं हि वैकल्पिकविधिः, वक्ष्यमाणेन "सर्वलघुर्वा" इत्यभिधानात्। प्रथमार्द्धद्वितीयार्द्धरूपभागद्वयात्मिकायाः आर्य्यायाः प्रथमार्द्धे सार्द्धसप्तसङ्ख्यकाः गणाः, तेष्वपि प्रथमतृतीयपञ्चमसप्तमगणाः जगणहीनाः भवेयुः, षष्ठगणश्च मध्यगुरुः ( जगणः ) इति भावः आर्य्यामुदाहरति, सेति।—दिवं स्वर्गम् उत्पतिष्णुः चलिष्णुः अतिरुचिरा अत्यन्तमनोज्ञा या देवी अम्बरतले गगनमण्डले कंसवधोत्पातविद्युत् कंसविनाशसूचकतडिदिव दृश्यते अवलोक्यते, सा आर्य्या जगत्पूज्या देवी महामाया जगति पृथिव्यां जयति सर्वोत्कर्षेण वर्त्तते; सा प्रसिद्धा आर्य्याच्छन्दश्च जयति इत्यपि ध्वन्यते। अत्रोदाहरणे 'सा जय' इति प्रथमो ( ⏑-- ) भगणः, 'ति जग' इति द्वितीयः ( --⏑ ) सगणः, 'त्याय्यां' इति तृतीयो ( ⏑⏑ ) द्विगुरुः, 'देवी' इति चतुर्थो गणः ( ⏑⏑ ) तथैव, "दिवमुत्" इति पञ्चमः ( - -⏑ ) सगणः, 'पतिष्णु' इति षष्ठः मध्यगुरुः ( -⏑- ) जगणः, 'रतिरुचि' इति सप्तमो गणः ( ---- ) चतुर्लघुरूपः, 'रा' इति अर्द्धमात्रात्मक एको ( ⏑ ) गुरुरिति मिलित्वा सिद्धाः सार्द्धसप्तगणाः। द्वितीयार्द्धमपि पूर्ववदेव यथा—'या दृ' इति द्विगुरुरूप ( ⏑ ⏑ ) एको गणः, 'श्यतेऽम्ब' इति मध्यगुरुः ( -⏑- ) द्वितीयो जगणः

## न्लौ वा ॥ १८ ॥

षष्ठ इत्यनुवर्त्तते। आर्य्याया: षष्ठो गण: ( ---- ) सर्व-लघुर्वा भवति। तत्र उदाहरणम् ।—

१द्वि० २ज० ३द्वि० ४द्वि० ५द्वि० ६सर्व० ७सर्व० ग०

◡ ◡ – ◡ – ◡ ◡ ◡ ◡ ◡ ◡ – – – – – – – – – ◡

रूपान्तरेण देवीं तामेव स्तौमि सपदि किल महिष: ।

१द्वि० २भ० ३भ० ४भ० ५भ० ६ल० ७द्वि० ग०

◡ ◡ ◡ – – ◡ – – ◡ – – – – ◡ – ◡ ◡ ◡

पादस्पर्शसुखादिव मीलितनयनोऽभवद्यस्या: ॥ (घ)

---

'रतम्' इति तृतीय: ( --◡ ) सगण:, 'कंसव' इति चतुर्थ: आदिगुरु: ( ◡-- ) भगण: 'धोत्या' इति गुरुद्वयात्मक: ( ◡◡ ) पञ्चमो गण: 'त' इति एक-लघ्वात्मक: ( - ) षष्ठ: गण:, 'विद्युदि' इति सप्तम: आदिगुरु: ( ◡-- ) भगण:, 'व' इति पादान्तलघोर्गुरुत्वनियमात एकगुरुरूप: ( ◡ ) अष्टमगण: ।

(घ) आर्य्याया: षष्ठगणे मध्यगुरुत्वनियमस्य व्यभिचारं दर्शयति, न्लाविति ।— न् च ल् च न्लौ नगणो लघुश्चेत्यर्थ: । षष्ठ इति पूर्वसूत्रादत्राधिकृत: । नगणस्य त्रिलघु-त्वात् ल्-कारस्यैकलघुत्वाच्च न्लौ वा इत्यनेन आर्य्याया: पूर्वार्द्धे षष्ठगण: चतुर्लघुरूपो वा इत्यर्थो लभ्यते । उत्तरार्द्धे तु "षष्ठश्च ल्" ( ४।२२ पि० ) इति वक्ष्यमाणसूत्रेण षष्ठो गण: एकलघुरेव भवेत् । तथा च प्राकृतपिङ्गले—"सत्तगणा दीहंता जो णलहु छट्ठ णेह जो विसमे । तह गाहे बिअ अद्धे छट्ठं लहुअं विआणेहु ॥" (१।५० ) इति । अस्य संस्कृतं यथा—"सप्तगणा दीर्घान्ता जो नलघू षष्ठे नेह जो विषमे । तथा गाथाद्वितीयार्द्धे षष्ठं लघुकं विजानीत ॥" इति । अस्य च व्याख्या—"अत्र चतुष्कला: सप्त गणा दीर्घान्ता गुर्वन्ता: इत्यर्थ: । अत्र षष्ठो गण: जगणो भवति नगण-लघू वा भवत: इति नियम: । इह विषमे स्थाने प्रथम-तृतीय-पञ्चम-सप्तमस्थाने जगणो न भवति तथा गाथाया द्वितीयार्द्धेऽपि षष्ठं गणम् एकलघ्वात्मकं विजानीत" इति । तथा वाणी-भूषणेऽपि—"षष्ठं नघु तरदले विषमे जगणो न गाथाया:" इति । तदुदाहरणमाह, रूपान्तरेणेत्यादि ।—यस्या: देव्या:, पादस्पर्शसुखात् पादयोश्चरणयो: स्पर्शेन यत् सुखं सन्ततानन्द: तस्मादिव ( इति हेतूत्प्रेक्षा ) महिष: असुरविशेष:, सपदि अकस्मात् मीलितनयन: मुकुलितनेत्र:, मृत इत्यर्थ:, अभवत् किल निश्चितं,

## न्लौ चेत् पदं द्वितीयादि ॥ १९ ॥

षष्ठो गणः (- - - -) सर्वलघुश्चेत् भवति, तदा द्वितीयाक्षरादारभ्य पदं प्रवर्त्तते । पूर्वमेवोदाहरणम् । (न)

## सप्तमः प्रथमादि ॥ २० ॥

षष्ठे गणे मध्यगुरौ ( -⏑- ) सर्वलघौ (- - - -) वा जाते सप्तमो गणः सर्वलघुश्चेत् भवति, तदा प्रथमाक्षरादारभ्य पदं प्रवर्त्तते । तत्रोदाहरणम् ।—

१द्वि० २म० ३द्वि० ४ज० ५द्वि० ६ज० ७सर्व० ग०

⏑ ⏑ ⏑ - - ⏑ ⏑ - ⏑ - ⏑ ⏑ - ⏑ - - - - - - ⏑

ब्रह्मक्षत्रकुलीनः प्रलीनसामन्तचक्रनुतचरणः ।

१सर्व० २ज० ३द्वि० ४द्वि० ५द्वि० ६ल० ७ज० ग०

- - - - ⏑ - ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ - ⏑ - - ⏑

सकलसुकृतैकपुञ्जः श्रीमान् मुञ्जश्चिरञ्जयति ॥

---

रूपान्तरेण अन्येन रूपेण, परिणतामिति शेषः, तामेव प्रसिद्धां देवीं कौमि नौमि । श्लोकोपरि प्रगणविभागचिह्नदर्शनेन पूर्वप्रदर्शितप्रणाल्या गणा निरूपणीयाः ।

(न) पथ्यार्याया लक्षणमभिधाय षष्ठगणस्य चतुर्लघुत्वे यतिनियममाह, न्लौ चेदिति ।—अत्र द्वितीयपदमक्षरे व्याचष्टे क्रमम् ; द्वितीयं षष्ठगणस्य द्वितीयाक्षरम् आदि प्रथमभूतं यस्य तत्, पदमित्यस्य विशेषणम् ; लघुरूपाणां चतुर्णामक्षराणां मध्ये प्रथमाक्षरस्थाने विरतिं विधाय द्वितीयाक्षरमारभ्य पदं पठनीयमित्यर्थः, यथा पूर्वोदाहृते "नि सपदि" इत्यत्र षष्ठगणप्रथमाक्षरं नि-कारं विहाय द्वितीयाक्षरात् स-कारात् पदपाठारम्भः ; अतः उक्तं "पूर्वमेवोदाहरणम्" इति ।

(प) तत्र यतिनियमे विशेषमाह,—सप्तम इति । सूत्रार्थं विवृणोति, षष्ठे इति ।—षष्ठगणस्य मध्यगुरुत्वे सर्वलघुत्वे वा सप्तमगणस्य सर्वलघुता चेद्भवति तदा षष्ठगणान्ते विरतिं विधाय सप्तमगणस्य प्रथमाक्षरमारभ्य पदप्रवृत्तिर्विधेया इत्यर्थः । तत्रोदाहरणं, ब्रह्मेति ।—ब्रह्मक्षत्रकुलीनः ब्रह्मक्षत्रकुलोत्पन्नः, प्रलीनसामन्तचक्रनुतचरणः अवनतराजमण्डलसंस्तुतपादपद्मः, सकलसुकृतैकपुञ्जः सम्पूर्णपुण्यराशिभूतः, श्रीमान् श्रीविशिष्टः, मुञ्जः मुञ्जनामा नरपतिः, चिरं

१मर्व० २ज० ३द्वि० ४द्वि० ५मर्व० ६मर्व० ७मर्व० ग०

जयति भुवनैकवीरः सीरायुधतुलितविपुलबलविभवः।

१मर्व० २ज० ३सर्व० ४म० ५द्वि० ६ल० ७द्वि० ग०

अनवरतवित्तवितरणनिर्जितचम्पाधिपो मुञ्जः ॥ (प)

## अन्त्ये पञ्चमः ॥ २१ ॥

अन्ते भवमन्त्यं, दिगादित्वात् यत्। अन्त्ये द्वितीयेऽर्द्धे पञ्चमश्चेत् गणः ( - - - - ) सर्वलघुर्भवति, तदा प्रथमादि पदं प्रवर्त्तते। तत्रोदाहरणम्।—

१मर्व० २म० ३द्वि० ४म० ५स० ६ज० ७म० ग०

स जयति वाक्पतिराजः सकलार्थिमनोरथैक-कल्पतरुः।

नित्यं जयति उत्कर्षवान् भूयात्। अत्र 'त्तवक' इति षष्ठगणान्ते विरतिं विधाय 'मुतचर' इति सप्तमगणस्य चतुर्णांमक्षराणां प्रथमाक्षरं मु-रूपमारभ्य सुबन्तादिपद-प्रवृत्तिरिति। षष्ठगणस्य मध्यगुरुत्वे इदमुदाहरणम्। षष्ठसप्तमयोः सर्वलघुत्वे उदाहरणमाह, जयतीति।—भुवनेषु जगत्सु एकः अद्वितीयः, सर्वप्रधान इत्यर्थः, वीरः, तथा सीरायुधेन हलायुधेन तुलितः सदृशीकृतः विपुलः प्रभूतः बलविभवः शक्तिरूपसम्पत् यस्य सः, अनवरतं निरन्तरं वित्तवितरणेन धनदानेन निर्जितः पराभूतः चम्पाधिपः चम्पादेशस्वामी येन सः, मुञ्जः तदाख्यः प्रसिद्धः नरपतिः, जयति सर्वोत्कर्षेण वर्त्तताम्। अत्रापि 'बलविभ' इति सप्तमगणस्य प्रथमाक्षरमारभ्य पदं पठनीयम्।

(फ) एवमार्य्याच्छन्दसां पूर्वार्द्धस्य सूत्रद्वयेन यतिनियममभिधाय साम्प्रतं परार्द्धस्य यतिनियममाह, अन्त्ये इति।—द्वितीयार्द्धे पञ्चमगणस्य सर्वलघुत्वे चतुर्थ-गणान्ते विश्रामं कृत्वा पञ्चमगणस्य प्रथमाक्षरमारभ्य पदं पठेदिति निष्कर्षः। तत्रोदाहरणं, स जयति इत्यादि।—सकलानां निखिलानाम् अर्थिमनोरथानां

१द्वि० २ज० ३भ० ४द्वि० ५सर्व० ६ल० ७भ० ग०

⏑ ⏑ – ⏑ – ⏑ – – ⏑ ⏑ – – – – – ⏑ – – ⏑

प्रत्यर्थिभूतपार्थिवलक्ष्मी-हठहरणदुर्ललितः ॥ (फ)

## षष्ठश्च ल् ॥ २२ ॥

अन्त्य इत्यनुवर्त्तते। अन्त्ये द्वितीयेऽर्द्धे मध्यगुरौ (-⏑-) सर्वलघौ (----) वा षष्ठे गणे प्राप्ते तदपवादो लकारो विधीयते। पूर्वमेवोदाहरणम्। (ब)

---

याचकजनमनोवासनानाम् एकः अद्वितीयः कल्पतरुः कल्पवृक्षः, प्रत्यर्थिभूताः प्रतिकूलवर्त्तिनः ये पार्थिवाः राजानः तेषां लक्ष्मीहठहरणे बलपूर्वकसम्पदपहरणे दुर्ललितः उग्रमूर्त्तिः, स वाक्पतिराजः जयति उत्कर्षेण वर्त्तताम्। अत्र 'हठहर' इति चतुर्लघुरूपस्य पञ्चमगणस्य प्रथमाक्षरं ह-कारमारभ्य पदपाठः।

(ब) षष्ठगणे मध्यगुरुत्वनियमस्य सर्वलघुत्वनियमस्य च व्यभिचारं प्रदर्शयति, षष्ठश्चेति।—अपवादसूत्रमिदम्। पूर्वसूत्रात् अन्त्ये इति पदमिह आधिक्रियते। आर्य्यायाः उत्तरार्द्धे षष्ठो गणः एकलघुरेव करणीयः, एवञ्च तस्य एकलघुत्वविधानात् सार्द्धसप्तगणनियमोऽक्षुण्ण एव। उदाहरणमस्याः पूर्वदर्शितमेव, यथा—स जयति इत्यादिश्लोके 'हठहर' इति सर्वलघुपञ्चमगणस्यान्ते 'ण' इति एकलघुः षष्ठगणः कृतः इति। ग्रन्थकृता अनुक्तस्यापि मात्राप्रस्तारस्य कथञ्चिदवबोधाय किञ्चिदत्र प्रदर्श्यते, विशेषस्तु अग्रे दर्शयिष्यते। आर्य्यायाः पूर्वार्द्धपरार्द्धयोः गणविकल्पानां परस्परगुणनेन याः सङ्ख्या भवन्ति, ताः पृथक् अङ्कयित्वा पूर्वार्द्धगुणितसमष्टिसङ्ख्यायाः परार्द्धगुणितसङ्ख्यया पुनर्गुणने याः सङ्ख्या जायन्ते ता एव प्रस्तारसङ्ख्याः इति ज्ञातव्यम्; ततश्च आर्य्यायाः पूर्वार्द्धगणविकल्पगुणितसाधारणसङ्ख्या प्रथमगणे चतुर्भेदा इति (४) द्वितीये पञ्च (५) तृतीये चत्वारः (४) चतुर्थे पञ्च (५) पञ्चमे चत्वारः (४) षष्ठे द्वौ (२) सप्तमे चत्वारः (४) अष्टमे एकः (१) एतेषां परस्परगुणने अष्टशताधिकद्वादशसहस्राणि (१२८००) जायन्ते, उत्तरार्द्धसङ्ख्या तु अन्यत् पूर्ववत्, केवलं षष्ठे एकः (१) इत्येव विशेषः। गुणितसङ्ख्या तु चतुःशताधिकानि षट्सहस्राणि (६४००) इति; उभयविकल्पानां परस्परगुणने एकोनविंशतिलक्ष-विंशतिसहस्राधिकाः अष्टौ कोटयः (८१९२००००) इत्यार्य्याया भेदसङ्ख्याः।

## त्रिषु गणेषु पादः पथ्याद्ये च ॥ २३ ॥

चकारोऽन्त्य इत्यनुकर्षणार्थः। यस्या आर्य्याया अन्त्येऽर्द्धे आद्ये च त्रिषु गणेषु पादः समाप्यते, सा आर्य्या पथ्या नाम भवति। तद्यथा।—

१द्वि० २द्वि० ३द्वि० ४म० ५द्वि० ६ज० ७द्वि० ग०

ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ - - ᴗ ᴗ - ᴗ - ᴗ ᴗ ᴗ

पथ्याशी व्यायामी स्त्रीषु जितात्मा नरो न रोगी स्यात्।

१सर्व० २म० ३द्वि० ४म० ५द्वि० ६ल० ७द्वि० ग०

- - - - ᴗ - - ᴗ ᴗ ᴗ ᴗ - - ᴗ ᴗ - ᴗ ᴗ ᴗ

यदि वचसा मनसा वा द्रुह्यति नित्यं न भूतेभ्यः॥

पादग्रहणं यत्युपलक्षणार्थम्। (भ)

---

(भ) आर्य्याविशेषे पादनियममाह, त्रिष्विति।—यस्या आर्य्याया उभयदले गणत्रयेषु विश्रामरूपपादसमाप्तिः सा पथ्यानाम आर्य्या इति फलितार्थः। यद्यपि आर्य्यायां पूर्वार्द्धपरार्द्धमात्रभेदपरिकल्पनं न तु विशेषतः एकद्वित्रिचतुष्पादव्यवहारो दृश्यते, तथाऽपि पदपाठे विश्रामस्थलमेवार्य्यायामाचार्य्यैश्च सामान्यतः पादत्वेन व्यवह्रियते ; ततश्च उभयार्द्धे विरतिद्वित्वेन चतुष्पादा एव भवन्तीति भावः। तस्योदाहरणं यथा पथ्याशीति।—नित्यं नियतं पथ्याशी हितभोजी व्यायामी व्यायामशीलः तथा स्त्रीषु रमणीषु जितात्मा जितेन्द्रिय इत्यर्थः, नरः मनुष्यः, यदि वचसा वाक्येन मनसा चेतसा वा भूतेभ्यः प्राणिभ्यः न द्रुह्यति न हिनस्ति, तदा रोगी व्याधियुक्तो न स्यात् न भवेत्। अत्र प्रथमार्द्धे 'यामो' इत्यन्तगणत्रयेषु तथा उत्तरार्द्धे 'सा वा' इत्यन्तेषु च विश्रामात् पथ्यात्वम्। पादसमाप्तिः यतिरेव। एतदेव विवृणोति, पादग्रहणमिति।—यत्युपलक्षणमेव अर्थः प्रयोजनं यस्य तत ; आर्य्यायां सर्वेऽपि यतिनियममेव प्राधान्येनाङ्गीकुर्वन्ति, पादव्यवहारन्तु गुणीभूतत्वेनेति ; तथा चोक्तं छन्दोमाणिक्यकारेण,—"पूर्वार्द्धे षष्ठो जः स्त्री वा स्ते चास्य लघुनि भवति यतिः। षष्ठः स्वपरोऽत्र यतिस्तुर्य्योऽप्यत्र भवति चरमदले॥" इति। अस्यार्थः,—स्त्र इति चतुर्लघोर्गणस्य संज्ञा पूर्वार्द्धे षष्ठो गणः जगणः स्त्री वा कार्य्यः, स्ते तु षष्ठगणे अस्य लघुनि तदीयप्रथमलघ्वन्ते यतिर्भवति।

यदि षष्ठः खपरः स्वः चतुर्लघुः पंक्ती यस्य वः तथा सप्तमः चतुर्लघुः आदिस्थर्थः, तदाच षष्ठान्ते वा यतिः। चरमदले द्वितीयार्द्धे यदि तुर्य्यः चतुर्थः खपरः तत्रापि चतुर्थान्ते यतिः" इति। एवमेव चेतराजेनापि—"षष्ठे द्वितीयमादाय लमेवारभ्यते पदम्। सप्तमे नृत्ते पुनर्मुख्यं पूर्वार्द्धेऽस्यौ यतिः स्मृता॥ पदमारभ्यते नित्यं गृहीत्वा प्रथमं लघु। पञ्चमे नृत्ते बुधैरेवं चरमार्द्धे स्मृता यतिः॥" इति। सर्वस्मिन्नेव छन्दोग्रन्थे प्रधानतः पूर्वार्द्धपरार्द्धरूपभागद्वयमेव आर्य्यायाः परिदृश्यते न तु चवान्तरपादव्यवस्था, तत्तु इत्तिकृता (४।१५ पि०) टीकायां प्रागेव प्रतिपादितम्; तेन च तन्मतानुसारिणा केनचित् तद्वृत्तिकारवचनमुपजीव्य "यत्तु कालिदासेन श्रुतबोधे 'यस्याः पादे—' इति पद्यमुखेन आर्य्याया मात्रावृत्तत्वमाश्रित्य धृतपादव्यवस्थं मात्रापरिगणनं विहितं तत् प्रामादिकमेव, आर्य्याया गणवृत्तत्वात् पादकल्पनमप्ययुक्तमेव कृतार्द्धलक्षणत्वात्। केदारभट्टेनापि वृत्तरत्नाकरे यन्मात्रावृत्तानुपूर्वकमिति प्रथमाध्यायान्ते पठित्वा मात्रावृत्तत्वमस्याः स्वीकृतं तदुन्मत्तप्रलपितवत्। एवमन्यैरपि गङ्गादास-कुमारभट्ट-जगन्नाथाचार्य्यच्छन्दोमञ्जरी-छन्दोमणिमाला-छन्दःपीयूष-छन्दोमुक्तावल्यादिषु यदार्य्याया मात्रावृत्तत्वमङ्गीकृतं तत् केवलं प्रौढवादमात्रमेव" इत्यनेन कालिदासादिषु दोषारोपः कृतः तदसत् इत्यस्माकं मतम्; सूत्रे पादशब्दप्रयोगात् तत्रैव च अन्येषां पादकल्पनाच्च। किञ्च न केवलं कालिदासेन, परन्तु प्राकृतपिङ्गलकारादिभिरपि स्वग्रन्थे आर्य्यायाः मात्रावृत्तत्वमङ्गीकृत्य पादव्यवस्था प्रदर्शिता; तथा च प्राकृतपिङ्गले—"पढमं बारहमत्ता बीए अट्ठार हेहिं संजुत्ता। जह पढमं तह तीअं दहपंचविहूसिआ गाहा॥" (१।४९) इति। "पढमं वी हंसपअं बीए सिंहस्स विक्कमं जाआ। तीए गअवरललिअं अहिवरललिअं चउत्थए गाहा॥" (१।५६) इति। तथा वाणीभूषणे—"आदिस्तृतीये द्वादश दशाष्टमात्रा द्वितीयचरणे च। तुर्य्ये पञ्चदश स्युर्गाथेयं पिङ्गलेनोक्ता॥" इति। एवं नारदशिक्षायामपि—"पथ्यापादः प्रथमो द्वादशमात्रस्तथा तृतीयोऽपि। अष्टादश द्वितीयः समापनः पञ्चदशमात्रः॥" इति। प्रमाणैरेभिः अस्याः पादव्यवस्था मात्रावृत्तत्वञ्च प्रमाणीभवति। किञ्च पूर्वार्द्धपरार्द्धरूपेण विभक्तायामार्य्यायां पादव्यवस्था नास्ति गणच्छन्दस्त्वात् सा इति पिङ्गलेन न कुत्रापि स्पष्टतया उक्तं, प्रत्युत "गणाद्वृत्तसमाप्तिर्वा" (४।१२ पि०) इति सूत्रं विधाय चतुर्भागात् न्यूनाधिकाभ्यामपि पादव्यवस्था स्वीकृता, तेन च यत्र यतिस्तत्रैव पादसमाप्तिः इत्यपि वक्तुं शक्यते। वस्तुतस्तु "पद्यं चतुष्पदी" इत्युक्तेः पद्यरूपाया आर्य्यायाः पादचतुष्टयत्वं सम्पुष्टेः व्यवस्थापितं,

## विपुलाऽन्या ॥ २४ ॥

यस्या आर्य्याया अन्त्येऽर्द्धे आद्ये वोभयोर्वा त्रिषु गणेषु पादो न विश्राम्यति, सा आर्य्या विपुला नाम। सा चाद्यन्तो-भयपूर्वकत्वात्त्रिधा भवति। सामान्येन विधानमेतत्।

तत्रादिविपुला।—

१हि० २हि० ३हि० ४म० ५हि० ६सर्व० ७हि० ग०



स्निग्धच्छायालावण्यलेपिनी किञ्चिदवनत-घ्राणा।

---

तत् सामान्यत: एव ज्ञेयं, न तु अक्षरच्छन्दोवत् मुख्यतया पादचतुष्टयत्व-प्रतिपादनार्थम्। किञ्च हलायुधमते गणच्छन्दोऽन्तर्गताया अस्या गङ्गादासादिभि: यत् मात्राछन्दस्त्वमङ्गीकृतं तत् गुरुलघुरूपमात्राचतुष्टयेनैव एकगणत्वनियमनात् गणच्छन्दसोऽपि मात्राच्छन्दस्येव अन्तर्भूतत्वस्वीकारात्, अत एव तै: वृत्तजातिभेदेन लौकिकच्छन्दसां द्वैविध्यमेव प्रदर्शितं न तु त्रैविध्यम्; यदुक्तं छन्दोमञ्जर्य्यां—"पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा। वृत्तमक्षरसङ्ख्यातं जातिर्मात्राकृता भवेत्॥" इति। वृत्तरत्नाकरेऽप्युक्तं—"पिङ्गलादिभिराचार्य्यैर्यदुक्तं लौकिकं द्विधा। मात्रा-वर्णविभेदेन छन्दस्तदिह कथ्यते॥" टीकाकृता नारायणभट्टेनाप्युक्तं यथा—"पिङ्गलेन सूत्रकर्त्रा आदिपदात् भाष्यकारादिभिश्चाचार्य्यैर्यदुक्तं यल्लौकिकं छन्दो मात्रावर्ण-विभेदेन इदं मात्राच्छन्द आर्य्यादि इदं वर्णच्छन्द: समान्यादीति भेदेन द्विधा द्विप्रकारमुक्तं तच्छन्द इह ग्रन्थे कथ्यते इत्यर्थ:। मात्रावर्णग्रहणेन मात्राच्छन्दो गणच्छन्द इति कैश्चिदुक्तो द्वेधा विभाग: पराकृत:, ताद्दशविभागे च गणच्छन्दसा-मपि सङ्ग्रहादिति भाव:" इति। एतेन "आर्य्यायामवान्तरपादव्यवस्था नास्ति" "छन्दस्त्रेधा तु लौकिकम्।" "आर्य्याद्युद्गीतिपर्य्यन्तं गणच्छन्द: समीरितम्" इत्यादि हलायुधोक्तमेतदपेक्षितम्; तदेवं महाजनविरोध: सुधीभिरेव समाधेय:।

(म) विपुलानाम्नीमार्य्यामाह, विपुलेति।—अन्या पूर्वोक्तलक्षणविपरीता। सूत्रार्थं विवृणोति, यस्या इति।—यस्या उत्तरार्द्धे पूर्वार्द्धे वा उभयदले वा गणत्रयेषु न पादसमाप्ति: सा विपुलानामार्य्या भवेत्, सा च पूर्वार्द्धे गणत्रयान्ते विश्रामाभावा-दुत्तरार्द्धे च विश्रान्ते: आदिविपुलाख्या, तथा उत्तरार्द्धे गणत्रयान्ते विरतेरभावात् पूर्वार्द्धे च विश्रमणादन्त्यविपुलाख्या, उभयत्र गणत्रयान्ते विश्रामाभावाच्च उभयविपुला

१सर्वं० २द्वि० ३द्वि० ४स० ५द्वि० ६ज० ७द्वि० ग०

– – – – ⏑ ⏑ ⏑ ⏑ – – ⏑ ⏑ ⏑ – ⏑ ⏑ ⏑

मुखविपुला सौभाग्यं लभते स्त्रीत्याह माण्डव्यः॥

अन्तविपुला।—

१द्वि० २ज० ३स० ४भ० ५द्वि० ६ज० ७द्वि० ग०

⏑ ⏑ – ⏑ – – – ⏑ ⏑ – – – ⏑ ⏑ – ⏑ – ⏑ ⏑ ⏑

चित्तं हरन्ति हरिणीदीर्घदृशः कामिनां कलालापैः।

१द्वि० २ज० ३द्वि० ४सर्वं० ५स० ६ल० ७सर्वं० ग०

⏑ ⏑ – ⏑ – ⏑ ⏑ – – – – – – ⏑ – – – – – – ⏑

नीवीविमोचनव्याजकथितजघना जघनविपुला॥

---

इत्येवं त्रिविधा। "संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः। यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति॥" इति वृत्तरत्नाकरवचनस्य टीकायां नारायणभट्टोऽप्याह—"इयञ्च त्रिविधा, पूर्वार्द्ध एव त्रिगणानान्त इति विरामा मुख-विपुला, उत्तरार्द्धे एतादृक् जघनविपुला, उभयोरर्द्धयोस्तादृगुभयविपुलेति ; इयमेव महाविपुलेति" इति। तत्र क्रमेणोदाहरणं, स्निग्धेत्यादि।—स्निग्धच्छाया स्निग्धा सेवसुभगा छाया कान्तिर्यस्याः सा लावण्यलेपिनी प्रभाविशेषशोभिनी, किञ्चित् ईषत् अवनतः प्राणः नासिका यस्याः सा मुखविपुला प्रशस्तमुखी, स्त्री रमणी सौभाग्यं सुभगत्वं लभते प्राप्नोति इति माण्डव्यः आह कथयति ; तथा मुखे आद्यदले गणत्रय-मुल्लङ्घ्य पादविश्रमणादियं मुखविपुला आदिविपुला नाम आर्य्या सौभाग्यं प्राधान्यं लभते इति माण्डव्यनामा मुनिराह इत्यपि ध्वन्यते। अत्राद्यदले 'स्निग्ध' 'च्छाया' 'लाव' इति गणत्रयमुल्लङ्घ्य पादविश्रामात् तथा उत्तरार्द्धे च 'भाग्यम्' इत्यन्तगणत्रयान्ते विरतिदर्शनाच्च मुखविपुलानामेयमार्य्या। चित्तमिति।—हरिण्याः नयने इव दीर्घे आयते दृशौ लोचने यासां ताः मृगनयनवदतिप्रशस्तनयनाः, कामिन्यः इत्यर्थः, कलालापैः अस्फुटमनोहरवचनैः कामिनां कामुकानां चित्तं मानसं हरन्ति आकर्षन्ति। तथा नीवीविमोचनस्य वस्त्रग्रन्थिमोचनस्य व्याजेन छलेन कथितः व्यक्तीभूतः प्रकाशित इति यावत्, जघनः यस्याः सा: तादृशी रमणी, जघनविपुला, इति कथ्यते इति शेषः, जघनदेशस्य विशालत्वादिति भावः। जघने चरमदले गणत्रयान्ते चतुर्थगणस्याद्याक्षरे पादविश्रमणादियं जघनविपुला नाम आर्य्या कथ्यते इत्य-मरार्थश्च ध्वन्यते। अत्र च 'नीवी' 'विमोच' 'नव्या' इति गणत्रयमुल्लङ्घ्य 'ज'

उभयविपुला।—

१द्वि० २सर्व० ३स० ४ज० ५द्वि० ६ज० ७भ० ग०

⏑ ⏑ – – – – – – – ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ – – ⏑

या स्त्री कुचकलसनितम्बमण्डले जायते महाविपुला।

१द्वि० २ज० ३स० ४ज० ५भ० ६ल० ७भ० ग०

⏑ ⏑ – ⏑ – – – ⏑ – ⏑ – ⏑ – – – ⏑ – – ⏑

गम्भीरनाभिरतिदीर्घलोचना भवति सा सुभगा॥

अत्रोच्यते—पथ्याविपुलालक्षणयोः सहानवस्थानलक्षणविरोधस्तेन मिश्रीभावो नास्ति। य एवांशो विपुलया स्पृष्टस्तेनैव पथ्यात्वं नष्टं भवति। उभयाश्रयत्वात् पथ्यालक्षणस्य विपुलायास्तत्रांशेनापि प्रवेशो दुर्लभः। ततश्च पथ्यालक्षणैकांशवैकल्येऽपि तदन्यमात्रविषयत्वात् विपुला भवत्येव। पथ्याचपलयोश्च विरोधाभावात् बाध्यबाधकभावो नास्ति। तत्रायं सङ्ग्रहः।—

एकैव भवति पथ्या विपुलास्तिस्रस्ततश्चतस्रस्ताः।
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोड़शार्य्याः स्युः॥

इत्थं पादविश्रमणात् लक्षणसङ्गतिः। उभयविपुलामाह, येत्यादि।—या रमणी कुचकलसे स्तनमण्डले तथा नितम्बमण्डले श्रोणीमण्डले च महाविपुला अत्यन्तमहती, गम्भीरनाभिः विवरयुक्तनाभिमण्डला, अतिदीर्घलोचना अतिदीर्घे विशाले लोचने चक्षुषी यस्याः तादृशी जायते, सा सुभगा सौभाग्यवती भवति इत्यर्थः। अत्र उभयदले 'या स्त्री' 'कुचकल' 'सनित' इति गणत्रयान्ते तथा 'गम्भी' 'रनाभि' 'रतिदी' इति गणत्रयान्ते च पादविश्रामाभावादियमुभयविपुलानामार्य्या। पथ्याविपुलानामधेययोरार्य्याभेदयोरेकत्रानवस्थानरूपविरोधं प्रदर्श्य समर्थयते, य एवेति।—विपुलालक्षणस्पृष्टत्वात् पादविश्रामाभावरूपेषु त्रिषु गणेषु पथ्यात्वं विनष्टं तथा त्रिषु गणेषु पादसमाप्तिरूपेषु पथ्यालक्षणस्पृष्टत्वात् विपुलात्वं विनष्टं भवेत्, ततश्चानयोर्मिश्रीभावो नास्ति; एवञ्च विपुलायां गणत्रयान्ते यत्र क्वचित् पादान्ततेति पथ्यातः अस्या भेद इति बोध्यम्। ननु तर्हि पूर्वार्द्धे पथ्या उत्तरार्द्धे च विपुला भवतु इत्याह,—उभयाश्रयत्वादित्यादि। कुत्र विपुलाया लक्षणप्रवेश इत्याह,—तत इत्यादि।

गीतिचतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात्।
साकल्येनार्य्याणामशीतिरिव भेदाः स्युः॥
तेषामनुक्तोदाहरणान्यूह्यानि। (म)

पथ्याचपलयोरिति।—पथ्याचपलयोर्भिन्नविषयत्वाद्विरोधाभावः। प्रभावमुपक्षिपति, तथेति।—एका पथ्या तिस्रो विपुलाः इति चतस्रः आर्य्याः, ताः पुनः चपलाभेदत्रयैः प्रत्येकं त्रिगुणिता द्वादशान्ये आर्य्यायाः भेदाः, पूर्वोक्ताश्च चत्वार इति मिलित्वा षोडश भेदा जायन्ते। तथा गीतिरुपगीतिरुद्गीतिरार्य्यागीतिरिति भेदचतुष्टयस्य पूर्वोक्तषोडशभेदैर्भिन्नत्वेन प्रत्येकं षोडशप्रकारतया चतुःषष्टि भेदाः पूर्वोक्ताश्च षोडश इति मिलित्वा सर्वाश्चैताः पञ्च षोडशत्वेन अशीतिप्रकारा भवन्ति। सुकुमारमतीनां बोधसौकर्य्यार्थं नामतस्ते प्रदर्श्यन्ते, यथा— १ पथ्यार्य्या। २ आदिविपुलार्य्या। ३ अन्तविपुलार्य्या। ४ उभयविपुलार्य्या। ५ मुखचपलापथ्यार्य्या। ६ मुखचपलादि-विपुलार्य्या। ७ मुखचपलान्तविपुलार्य्या। ८ मुखचपलोभयविपुलार्य्या। ९ जघन-चपलापथ्यार्य्या। १० जघनचपलादिविपुलार्य्या। ११ जघनचपलान्तविपुलार्य्या। १२ जघनचपलोभयविपुलार्य्या। १३ महाचपलापथ्यार्य्या। १४ महाचपलादि-विपुलार्य्या। १५ महाचपलान्तविपुलार्य्या। १६ महाचपलोभयविपुलार्य्या। १७ गीतिपथ्यार्य्या। १८ गीत्यादिविपुलार्य्या। १९ गीत्यन्तविपुलार्य्या। २० गीत्युभयविपुलार्य्या। २१ मुखचपलागीतिपथ्यार्य्या। २२ मुखचपलागीत्यादि-विपुलार्य्या। २३ मुखचपलागीत्यन्तविपुलार्य्या। २४ मुखचपलागीत्युभय-विपुलार्य्या। २५ जघनचपलागीतिपथ्यार्य्या। २६ जघनचपलागीत्यादि-विपुलार्य्या। २७ जघनचपलागीत्यन्तविपुलार्य्या। २८ जघनचपलागीत्युभय-विपुलार्य्या। २९ महाचपलागीतिपथ्यार्य्या। ३० महाचपलागीत्यादिविपुलार्य्या। ३१ महाचपलागीत्यन्तविपुलार्य्या। ३२ महाचपलागीत्युभयविपुलार्य्या। ३३ उपगीतिपथ्यार्य्या। ३४ उपगीत्यादिविपुलार्य्या। ३५ उपगीत्यन्त-विपुलार्य्या। ३६ उपगीत्युभयविपुलार्य्या। ३७ मुखचपलोपगीतिपथ्यार्य्या। ३८ मुखचपलोपगीत्यादिविपुलार्य्या। ३९ मुखचपलोपगीत्यन्तविपुलार्य्या। ४० मुख-चपलोपगीत्युभयविपुलार्य्या। ४१ जघनचपलोपगीतिपथ्यार्य्या। ४२ जघनचपलोप-गीत्यादिविपुलार्य्या। ४३ जघनचपलोपगीत्यन्तविपुलार्य्या। ४४ जघनचपलोप-गीत्युभयविपुलार्य्या। ४५ महाचपलोपगीतिपथ्यार्य्या। ४६ महाचपलोपगीत्यादि-विपुलार्य्या। ४७ महाचपलोपगीत्यन्तविपुलार्य्या। ४८ महाचपलोपगीत्युभयविपुलार्य्या।

## चपला द्वितीयचतुर्थौ गमध्ये जौ ॥ २५ ॥

अधिकारोऽयम् । द्वितीयचतुर्थौ गणौ मध्यगुरू (- ⏑ -) भवतः, प्रथमश्चान्तगुरुः (- - ⏑) तृतीयो द्विगुरुः (⏑⏑) पञ्चमश्चादिगुरुः (⏑ - - -) शेषं यथाप्राप्तम् । एवं ग-कारयोर्मध्ये द्वितीयचतुर्थौ जकारौ भवतः, सा आर्य्या चपला नाम । उदाहरणमग्रतः । (य)

४९ उद्गीतिपथ्यार्य्या । ५० उद्गीत्यादिविपुलार्य्या । ५१ उद्गीत्यन्तविपुलार्य्या । ५२ उद्गीत्युभयविपुलार्य्या । ५३ मुखचपलोद्गीतिपथ्यार्य्या । ५४ मुखचपलोद्गीत्यादिविपुलार्य्या । ५५ मुखचपलोद्गीत्यन्तविपुलार्य्या । ५६ मुखचपलोद्गीत्युभयविपुलार्य्या । ५७ जघनचपलोद्गीतिपथ्यार्य्या । ५८ जघनचपलोद्गीत्यादिविपुलार्य्या । ५९ जघनचपलोद्गीत्यन्तविपुलार्य्या । ६० जघनचपलोद्गीत्युभयविपुलार्य्या । ६१ महाचपलोद्गीतिपथ्यार्य्या । ६२ महाचपलोद्गीत्यादिविपुलार्य्या । ६३ महाचपलोद्गीत्यन्तविपुलार्य्या । ६४ महाचपलोद्गीत्युभयविपुलार्य्या । ६५ आर्य्यागीतिपथ्यार्य्या । ६६ आर्य्यागीत्यादिविपुलार्य्या । ६७ आर्य्यागीत्यन्तविपुलार्य्या । ६८ आर्य्यागीत्युभयविपुलार्य्या । ६९ मुखचपलार्य्यागीतिपथ्यार्य्या । ७० मुखचपलार्य्यागीत्यादिविपुलार्य्या । ७१ मुखचपलार्य्यागीत्यन्तविपुलार्य्या । ७२ मुखचपलार्य्यागीत्युभयविपुलार्य्या । ७३ जघनचपलार्य्यागीतिपथ्यार्य्या । ७४ जघनचपलार्य्यागीत्यादिविपुलार्य्या । ७५ जघनचपलार्य्यागीत्यन्तविपुलार्य्या । ७६ जघनचपलार्य्यागीत्युभयविपुलार्य्या । ७७ महाचपलार्य्यागीतिपथ्यार्य्या । ७८ महाचपलार्य्यागीत्यादिविपुलार्य्या । ७९ महाचपलार्य्यागीत्यन्तविपुलार्य्या । ८० महाचपलार्य्यागीत्युभयविपुलार्य्या इति ।

(य) आर्य्याभेदचपलामाह, चपलेति ।—द्वितीयचतुर्थौ गणौ गमध्ये गुर्वक्षरयोर्मध्ये जौ गुरुमध्यौ चेद्भवतः तदा सा आर्य्या चपलानाम स्यादित्यर्थः । मुखचपलादिभेदेन चपलाया बहुभेदतया एतत्सूत्रविषयमधिकृत्य च तेषां प्रवर्त्तनात् आह,—अधिकारोऽयमिति । द्वितीयचतुर्थगणयोः गुरुमध्यगतत्वं विवृणोति, प्रथमश्चान्तगुरुरित्यादि ।—अन्तः शेषवर्णः गुरुर्यस्य स तादृशः प्रथमः गण इत्यर्थः, तथा तृतीयो गणः द्विगुरुः द्वौ वर्णौ आद्यन्तौ गुरू यस्य सः; द्वितीयगणस्यान्तवर्णत्वेन तृतीयगणप्रथमवर्णस्य चतुर्थगणस्याद्यवर्णत्वेन च तृतीयगणान्तवर्णस्य गुरुत्वाभावतया द्विगुरुत्वं तृतीयगणस्य, तथा चतुर्थगणस्यान्तवर्णत्वेन पञ्चमगणादिवर्णस्य

## पूर्वे मुखपूर्वा ॥ २६ ॥

पूर्वेऽर्द्धे चपलालक्षणं चेत् भवति, तदा सा आर्य्या मुखचपला नाम । पथ्यापूर्वक-मुखचपलोदाहरणम् ।—

१म० २ज० ३चि० ४ज० ५चि० ६ज० ७म० ग०

ऽऽ। ।ऽ। ऽ।। ।ऽ। ।। ।ऽ। ऽऽ ऽ

अतिदारुणा द्विजिह्वा परस्य मर्मानुसारिणी कुटिला ।

गुरुत्वार्थं पञ्चमस्यादिगुरुरित्यभिप्रायः । अत्र "प्रथमस्यान्तगुरुः" "पञ्चमस्यादिगुरुः" इति यदुक्तं तत् केवलं प्रथमगणस्यान्तवर्णगुरुत्वे पञ्चमस्य आदिवर्णगुरुत्वे तात्पर्य्यबोधनार्थम् । तत्पूर्वापरवर्णस्य शेषं यथाप्राप्तमित्यन्यथा यथासम्भवत्वमिति । यत्तु केनचित "उभयदलयोर्गमध्यगतौ जगणौ चेत चपलालक्षणं सिध्यति, एवमेवैतत् पिङ्गलसूत्र-च्छन्दोमञ्जरी वृत्तरत्नाकरादिषु प्रतिपादितम । यत्तु हलायुधेन प्रथमस्यान्तगुरुः पञ्चमस्यादिगुरुः इत्याद्युक्तं तच्चिन्त्यम ; सर्वत्र चपलोदाहरणेषु प्रथमस्यान्तगुरोः पञ्चमस्यादिगुरोश्चादर्शनात्" इत्यनेन हलायुधव्याख्यानमसङ्गतमित्युक्तं तन्न समीचीनतया प्रतिभाति, पिङ्गलादिषु द्वितीयचतुर्थौ गुरुमध्यगतौ जगणौ चेत् चपला इत्येवं लक्षणदर्शनात् न तु केवलं ग-मध्यगतौ जगणौ चेच्चपला इत्येवं लक्षणम ; एवञ्च उभयदलयोर्गमध्यगतजगणद्वयेनैव चपलालक्षणे सिद्धे पिङ्गलाद्युक्तस्य द्वितीयचतुर्थौ इति पदस्य वैयर्थ्यं स्यात् ; ततश्च प्रथमस्यान्तगुरुत्वाभावे पञ्चमस्य आदिगुरुत्वाभावे द्वितीयचतुर्थयोर्गमध्यगत्वमेव न स्यादिति । "उभयार्द्धयोर्जकारौ द्वितीयचतुर्थौ गमध्यगौ यस्याः । चपलेति नाम तस्याः प्रकीर्त्तितं नागराजेन ॥" इति वृत्तरत्नाकरवचनस्य टीकायां नारायणभट्टोऽपि एतमेवाह,—"यस्याः द्वयोरर्द्धयोर्ब्यस्तयोः समस्तयोर्वा द्वितीयचतुर्थौ गणौ पश्चात्पुरःस्थितगुरुमध्यगौ जगणौ स्यातां सा आर्य्या चपला । एतदुक्तं भवति प्रथमो गणः द्विगुरुः अन्त्यगुरुर्वा तृतीयो द्विगुरुः पञ्चमो द्विगुरुरादिगुरुर्वा द्वितीयचतुर्थौ मध्यगुरू नियतमस्यामिति ।" एवं छन्दोमञ्जर्य्यामपि— "दलयोर्द्वितीयतुर्य्यौ गगौ जकारौ तु यत्र चपला सा" इति दिक् ।

(२) चपलाभेदमाह, पूर्वे इति ।—पूर्वे प्रथमार्द्धे । मुखपूर्वा, चपलेति शेषः, मुखचपलेत्यर्थः । मुखचपलापथ्या-मुखचपलादिविपुला-मुखचपलान्त्यविपुला-मुखचपलोभयविपुलाभेदैनास्याः आर्य्यायाश्चतुर्विधत्वात् क्रमेण तासामुदाहरणानि प्रदर्श्यन्ते, अतिदारुणेत्यादि ।—परस्य अन्यस्य मर्मानुसारिणी अवस्तुदा,

१द्वि० २सर्व० ३द्वि० ४द्वि० ५द्वि० ६ल० ७सर्व० ग०

दूरात् परिहरणीया नारी नागीव मुखचपला ॥

आदिविपुलापूर्व्वक-मुखचपलोदाहरणम्।—

१द्वि० २ज० ३द्वि० ४ज० ५द्वि० ६ज० ७द्वि० ग०

यस्याश्च लोचने पिङ्गले भ्रुवौ सङ्गते मुखं दीर्घम्।

१म० २ज० ३द्वि० ४द्वि० ५भ० ६ल० ७सर्व० ग०

विपुलोन्नताश्च दन्ताः कान्ताऽसौ भवति मुखचपला ॥

उभयविपुलापूर्व्वक-मुखचपलोदाहरणम्।—

१म० २ज० ३द्वि० ४ज० ५द्वि० ६ज० ७द्वि० ग०

विपुलाभिजातवंशोद्भवाऽपि रूपातिरेकरम्याऽपि।

कुटिला पापस्वभावा वक्रगमना च, द्विजिह्वा खलस्वभावा, "द्विजिह्वस्तु खले सर्पे" इति मेदिनी. अन्यत्र—अत एव द्विरसना, अतिदारुणा अत्यन्तभीषणा मुखचपला मुखे आनने तरला, असंयतमुखी इत्यर्थः, नारी रमणी नागी भुजङ्गी इव दूरात् विप्रकृष्टात् परिहरणीया त्याज्या; मुखे पूर्वार्द्धे चपलालक्षणयुक्ता आर्य्या मुखचपलानाम भवेत् इत्यपि व्यज्यते। अत्र उभयदले त्रिषु गणेषु पादविश्रमणादस्याः पथ्यालक्षणत्वं, तथा पूर्वार्द्धे 'अतिदा' इति प्रथमगणान्तगुरुत्वात् 'जिह्वा' इति तृतीयगणस्य द्विगुरुत्वेन च तयोर्मध्ये 'रुणा द्वि' इति द्वितीयगणस्य मध्यगुरुत्वाच्च चपलालक्षणयुक्ता भवतीति पथ्यापूर्व्विका मुखचपलानामेयमार्य्या। मुखचपलाया आदिविपुलापूर्व्विकाया उदाहरणमाह, यस्या इति।—यस्याः रमण्याः, लोचने चक्षुषी, पिङ्गले पिङ्गलवर्णे, भ्रुवौ सङ्गते मिश्रीभूते युग्मे इत्यर्थः, मुखं वदनं, दीर्घं लम्बमानाकृति, दन्ताः दशनाः विपुलोन्नताः विशालाः अथच उन्नता बहिः प्रकाशिता इत्यर्थः, असौ एवम्भूता कान्ता कामिनी मुखचपला मुखे आनने चपला असंयतमुखीत्यर्थः, भवति। मुखे पूर्वार्द्धे चपलालक्षणयुता अतः इयं मुखचपलानाम आर्य्या इत्यपि व्यज्यते। अत्र आदिविपुलावत् 'ने पि' इति पूर्वार्द्धे तृतीयगणान्ते पादविरामाभावात् तथा उत्तरार्द्धे 'दन्ताः' इति तृतीयगणान्ते पादविरतेः एवं 'अ

१द्वि० २ज० ३द्वि० ४ज० ५सर्व० ६ल० ७सर्व० ग०

निःसार्य्यते गृहाद्वल्लभाऽपि यदि भवति मुखचपला ॥ (र)

## जघनपूर्वेतरञ्च ॥ २७ ॥

द्वितीयेऽर्द्धे चपलालक्षणञ्चेद्भवति, सा आर्य्या जघनचपला नाम। तत्र पथ्यापूर्वकजघनचपलोदाहरणम्।—

१द्वि० २भ० ३द्वि० ४भ० ५स० ६ज० ७द्वि० ग०

यत्पादस्य कनिष्ठा न स्पृशति महीमनामिका वाऽपि।

१द्वि० २ज० ३द्वि० ४ज० ५द्वि० ६ल० ७सर्व० ग०

सा सर्वधूर्त्तभोग्या भवेदवश्यं जघनचपला ॥

---

णोच' 'कली भ' इति द्वितीयचतुर्थयोः जगणत्वात् आदिविपुलापूर्विका मुखचपला-नामेयमार्य्या। उभयविपुलापूर्विकाया मुखचपलाया उदाहरणमाह, विपुलेत्यादि।—विपुलाभिजातवंशोद्भवाऽपि महाकुलीनकुलजाताऽपि का कथा नीचकुलजाता-नामिति भावः, रूपातिरेकरम्याऽपि रूपातिरेकेण सौन्दर्य्यातिशयेन रम्या मनोज्ञा अत्यन्तसुन्दराकृतिरपीत्यर्थः, वल्लभाऽपि प्रियाऽपि नारी यदि मुखचपला असंयतमुखी हिताहितं प्रियाप्रियञ्च किमपि न विचिन्त्य यथेच्छं भाषमाणा इत्यर्थः, भवति, तदा गृहात् आलयात सा निःसार्य्यते वहिष्क्रियते। अत्रोभयदले गणत्रयान्ते पादो न विश्राम्यति, किञ्च पूर्वेऽर्द्धे द्वितीयचतुर्थौ जगणौ प्रथमः शेषगुरुः तृतीयो द्विगुरुः पञ्चमश्चादिगुरुरतः उभयविपुलापूर्वकमुखचपलेयमार्य्या इति।

(ल) जघनचपलानाम्नीमार्य्यामाह, जघनपूर्वेति।—इतरत्र द्वितीयार्द्धे इत्यर्थः। एतदेव विवृणोति वृत्तिकारः, द्वितीये इति।—"पूर्वे मुखपूर्वा" (४।२६ पि०) इति पूर्वसूत्रे स्थिते तत्र इतरत्र इत्युपादानात पूर्वार्द्धेतरस्यैव प्रतीतेः द्वितीये अर्द्धे इत्युक्तम्। पथ्यापूर्वकजघनचपलामुदाहरति, यदित्यादि।—यस्याः रमण्याः पादस्य चरणस्य कनिष्ठा कनिष्ठाङ्गुलिः तथा अनामिका कनिष्ठासन्निहिताङ्गुलिरपि महीं पृथिवीं न स्पृशति जघनचपला जघनयोश्चापल्यवती सा रमणी

अन्तविपुलापूर्वक-जघनचपलोदाहरणम् ।—

१द्वि० २द्वि० ३द्वि० ४ज० ५द्वि० ६ज० ७द्वि० ग०

ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ - ᴗ - ᴗ ᴗ - ᴗ - ᴗ ᴗ ᴗ

यस्याः पादाङ्गुष्ठं व्यतीत्य याति प्रदेशिनी दीर्घा ।

१स० २ज० ३द्वि० ४ज० ५भ० ६स० ७स० ग०

- - ᴗ - ᴗ - ᴗ ᴗ - ᴗ - ᴗ - - - - - ᴗ ᴗ

विपुले कुले प्रसूताऽपि सा ध्रुवं जघनचपला स्यात् ॥

महाविपुलापूर्वक-जघनचपलोदाहरणम् ।—

१स० २स० ३स० ४ज० ५भ० ६ज० ७द्वि० ग०

- - ᴗ - - ᴗ - - ᴗ - ᴗ - ᴗ - - - ᴗ - ᴗ ᴗ ᴗ

मकरध्वजसद्मनि दृश्यते स्फुटं तिलकलाञ्छनं यस्याः ।

---

अवश्यं नियतं सर्वेषां धूर्त्तानां विटानां भोग्या भोगार्हा भवेत्; जघने उत्तरार्द्धे [ जघनशब्देन शरीरचरमभागप्रतीतेरिह परार्द्धार्थे जघनशब्दः ] चपला चपलाच्छन्दः इत्यपि ध्वन्यते । अत्र प्रथमार्द्धे 'यत्या' 'टस्य क' 'निष्ठा' इति गणत्रयान्ते पादविरतिः पथ्यावत्, किन्तु चपलावत् गमध्यगौ द्विचतुर्थौ गणौ जगणौ न भवतः । उत्तरार्द्धे तु 'सा स' 'वंधूर्त्त' 'भोग्या' इति गणत्रयान्ते पथ्यावत् पादविरतित्वात् तथा 'वंधूर्त्त' 'भवेद' इति द्वितीयचतुर्थगणयोराद्यन्तगुरुत्वात् जगणत्वाच्च चपलालक्षण-प्रवेशः इति पथ्यापूर्वकजघनचपलोदाहरणम् । अन्तविपुलापूर्वकजघनचपलामाह, यस्या इति ।—यस्याः कामिन्याः दीर्घा विपुला प्रदेशिनी पादतर्ज्जन्यङ्गुलिः पादाङ्गुष्ठं पादस्य अङ्गुष्ठाङ्गुलिं व्यतीत्य अतिक्रम्य याति प्रवर्त्तते विपुले श्रेष्ठे कुले वंशे जाता उत्पन्ना अपि सा रमणी जघनचपला चञ्चलजघना इत्यर्थः, दुःशीला कामुकी च नारी जघनयोश्चापल्यवती भवेत् इति भावः । अत्र हि उत्तरार्द्धे चतुर्थगणस्याद्यवर्णे 'पि'कारे पादविरतिः दृश्यते, न तु गणत्रयान्ते, तथा 'कुले प्र' 'पि सा ध्रु' इति द्वितीयचतुर्थगणयोः गुरुमध्यगतत्वात् जगणत्वाच्च चपलालक्षणप्रवेशतया अन्तविपुलालक्षणप्रवेशतया च अन्तविपुलापूर्वकं जघन-चपलोदाहरणमिदमिति दिक् । महाविपुलापूर्वकजघनचपलामुदाहरति, मकर-ध्वजेत्यादि ।—यस्याः रमण्याः मकरध्वजसद्मनि कामायतने, योनिदेशे इति

१स० २ज० ३द्वि० ४ज० ५भ० ६ल० ७स० ग०

विपुलान्वयाभिजाताऽपि जायते जघनचपलाऽसौ ॥ (ल)

उभयोर्महाचपला ॥ २८ ॥

यस्या उभयोरर्द्धयोश्चपलालक्षणं भवति, सा आर्य्या महाचपला नाम। तत्र पथ्यापूर्वक-महाचपलोदाहरणम्।—

१म० २ज० ३द्वि० ४ज० ५द्वि० ६ज० ७द्वि० ग०

हृदयं हरन्ति नार्य्यो मुनेरपि भ्रूकटाक्षविक्षेपैः।

१द्वि० २ज० ३द्वि० ४ज० ५द्वि० ६ल० ७भ० ग०

दोर्मूलनाभिदेशं निदर्शयन्त्यो महाचपलाः ॥

यावत्, तिलकलाञ्छनं तिलचिह्नं स्फुटं सुव्यक्तं दृश्यते अवलोक्यते, असौ रमणी विपुलान्वयाभिजाताऽपि श्रेष्ठवंशसम्भूताऽपि जघनचपला जघनयोश्चाञ्चल्यवती जायते, तन्नाम्ना अभिधीयते इत्यर्थः। इह 'मकर' ध्वजस्य' 'यानि ह' इति प्रथमार्द्धे तथा 'विपुला' 'न्वयाभि' 'जाता' इति उत्तरार्द्धे च गणत्रयान्ते पादविश्रामाभावादुभयविपुलापूर्वकत्वम्, उभयविपुला एव महाविपुलेत्युच्यते। तथा उत्तरार्द्धे पुनः 'न्वयाभि' 'पि जाय' इति द्वितीयचतुर्थौ गणौ गुरुमध्यगतौ जगणौ स्तः, अतः जघनचपलात्वञ्चेति महाविपुलापूर्वकजघनचपलोदाहरणम्।

(ल) आर्य्याभेदमहाचपलाया लक्षणमाह, उभयोरिति।—उभयोः पूर्वापरार्द्धयोरित्यर्थः। उभयोरर्द्धयोश्चपलालक्षणं "द्वितीयचतुर्थौ ग्मध्ये जौ" इत्येवं रूपम्। उदाहरति, हृदयमित्यादि।—दोर्मूलं बाहुमूलं नाभिदेशः नाभिस्थानं [ समाहारत्वादेकत्वं क्लीवत्वञ्च ] तत् निदर्शयन्त्यः बहिः स्फुटं प्रकाशयन्त्यः "बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम्" इति साहित्यदर्पणोक्तेरिति भावः, अत एव महाचपलाः अतिचञ्चलाः नार्य्यः कामिन्यः भ्रूकटाक्षविक्षेपैः अपाङ्गवीक्षितैः इत्यर्थः, मुनेरपि जितेन्द्रियस्य ऋषेरपि हृदयं मानसं हरन्ति आकर्षन्ति। अत्र 'हृदयं' 'हरन्ति' 'नार्य्यः' इति पूर्वार्द्धे तथा 'दोर्मू' 'लनाभि' 'देशम्' इति चरमार्द्धे च गणत्रयान्ते पादविरतिरिति पथ्यापूर्वकत्वं, तथा उभयदले एव द्वितीयचतुर्थौ गणौ

महाविपुलापूर्वक-महाचपलोदाहरणम् ।—

१स० २ज० ३द्वि० ४ज० ५द्वि० ६ज० ७द्वि० ग०

- - ᵕ  - ᵕ - ᵕ ᵕ  -  ᵕ - ᵕ  ᵕ - ᵕ  - ᵕ ᵕ  ᵕ ᵕ

चिबुके कपोलदेशेऽपि कूपिका दृश्यते स्मिते यस्याः ।

१स० २ज० ३द्वि० ४ज० ५द्वि० ६ल० ७भ० ग०

- - ᵕ  - ᵕ - ᵕ ᵕ  -  ᵕ - ᵕ  ᵕ  - ᵕ - - ᵕ

विपुलान्वयप्रसूताऽपि जायते सा महाचपला ॥ (व)

## आर्याद्धसमा गीतिः ॥ २६ ॥

आर्येणार्द्धेन सममन्यमर्द्धं यस्याः सा आर्याद्धसमा, मध्य-पदलोपो समासः । एतदुक्तं भवति—द्वितीयेऽप्यर्द्धे षष्ठो गणो जकारो ( - ᵕ - ) न्लौ वा ( - - - - ) कर्त्तव्यः । तत्र पथ्या-गीत्युदाहरणम् ।—

१स० २द्वि० ३स० ४भ० ५म० ६ज० ७द्वि० ग०

- - ᵕ  ᵕ ᵕ  - - ᵕ  ᵕ - -  - - - ᵕ -  ᵕ  - ᵕ  ᵕ ᵕ

मधुरं वीणारणितं पञ्चमसुभगश्च कोकिलालापः ।

---

ग्मध्यगौ जगणौ स्तः, अतः महाचपलात्वमिति पथ्यापूर्वकमहाचपलोदाहरणमिदम् । महाविपुलापूर्वकमहाचपलामुदाहरति, चिबुके इत्यादि ।—यस्याः स्त्रियः स्मिते हास्यकाले चिबुके अधराधःप्रदेशे, तथा कपोलदेशेऽपि गण्डस्थलेऽपि कूपिका कूपवत् गभीरता ( 'टोल् खाओया' इति भाषा ) दृश्यते विलोक्यते सा रमणी विपुलान्वये श्रेष्ठवंशे प्रसूताऽपि उत्पन्नाऽपि महाचपला अत्यन्तचञ्चला जायते । अत्र उभयार्द्धे एव 'पि' इति चतुर्थगणाद्यक्षरे विरामात् गणत्रयान्ते विश्रामाभावः, पुनश्च ग्मध्यगतौ द्वितीयचतुर्थौ जगणौ भवतः, अतः उभयविपुलापूर्वकमहा-चपलार्य्योदाहरणमिदम् ।

( श ) आर्य्याङ्गतां गीतिमाह, आर्येत्यादि ।—"षष्ठो ज्" ( ४।१७ पि० ) "न्लौ वा" ( ४।१८ पि० ) इति सूत्रद्वयेन आर्य्यायाः पूर्वार्द्धे षष्ठो गणः मध्यगुरुः सर्वलघुर्वा कर्त्तव्यः इति व्यवस्थापितं, द्वितीयार्द्धे पुनरन्यथैव, इह तु पूर्वार्द्धसमं परार्द्धं चेद्भवति तदा यष्टिमात्रात्मिकेयं गीतिरित्यभिप्रायः । मधुरमिति ।—मधुरा

१द्वि० २भ० ३द्वि० ४स० ५स० ६ज० ७भ० ग०

⏑ ⏑ ⏑ – – ⏑ ⏑ – – ⏑ – – ⏑ – ⏑ – ⏑ – – ⏑

गीतिः पौरवधूनामधुना कुसुमायुधं प्रबोधयति ॥

आदिविपुलागीत्युदाहरणम् ।—

१सर्व० २भ० ३द्वि० ४ज० ५द्वि० ६ज० ७स० ग०

– – – – ⏑ – – ⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – – – ⏑ ⏑

इयमपरा विपुला गीतिरुच्यते सर्वलोकहितहेतोः।

१भ० २ज० ३द्वि० ४ज० ५भ० ६ज० ७द्वि० ग०

– – ⏑ – ⏑ – ⏑ ⏑ – ⏑ – – – ⏑ – ⏑ – ⏑ ⏑ ⏑

यदनिष्टमात्मनस्तत् परेषु भवताऽपि मा क्वचित् कारि ॥

पथ्यामहाचपलागीत्युदाहरणम् ।—

१द्वि० २ज० ३द्वि० ४ज० ५द्वि० ६ज० ७स० ग०

⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – – – ⏑ ⏑

कामस्त्वकास्ति गीतिर्मृगीदृशां सीधुपानचपलानाम्।

---

मधुरं वीणारणितं मनोहरः वीणाशब्दः, पञ्चमसुभगः पञ्चमस्वरसुन्दरः कोकिलालापश्च कोकिलशब्दश्च तथा पौरवधूनां पुरस्त्रीणां गीतिः सङ्गीतं कुसुमायुधं कामं प्रबोधयति प्रकटयति। अत्र हि 'रणितम' इति 'धूना' इति च उभयार्द्धे एव तृतीयगणान्ते विश्रामदर्शनात् पथ्यात्वं, किञ्च 'श्च कोकि' 'युधं प्र' इत्युभयत्र च मध्यगुरुषष्ठगणत्वात् गीतित्वमिति पथ्यागीत्युदाहरणमिदम्। पथ्यापूर्विकां गीतिम् उदाहृत्य भेदान्तरं दर्शयितुम् आदिविपुलापूर्वकत्वमस्या उदाहरति, इयमित्यादि।—सर्वलोकहितहेतोः सकलजनहितविधानाय इयं वक्ष्यमाणा अपरा अन्या विपुला महती गीतिः उक्तिः वाक्यमिति यावत्, उच्यते कथ्यते, किन्तदित्याह,—आत्मनः स्वस्य यदनिष्टम् अप्रियं तत् परेषु अन्येषु क्वचित् कदाचिदपि भवता मा कारि न विधीयताम्, "आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः" इति स्मरणादिति भावः। अस्याः प्रथमार्द्धे गणत्रयान्ते पादो न विश्राम्यति, चरमार्द्धे च तत्र विश्राम्यति, तथा उभयत्र च समानषष्ठ-जगणविधानाद्वियमादिविपुलापूर्विका गीतिः। कामनिति।—सीधुपानचपलानां मद्यपानचञ्चलानां मृगीदृशां कुरङ्गीनयनानां गीतिः

१स० २ज० ३द्वि० ४ज० ५द्वि० ६सर्व० ७स० ग०

– – ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ – – – – – – ⏑ ⏑

सुरतस्य मुक्तलज्जं निरर्गलालापमणितरमणीयम् ॥

महाविपुला-महाचपलागीत्युदाहरणम् ।—

१द्वि० २ज० ३द्वि० ४ज० ५द्वि० ६सर्व० ७सर्व० ग०

⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ – – – – – – – – ⏑

पञ्चेषुवल्लभः पञ्चमध्वनिस्तत्र भवति यदि विपुलः ।

१स० २ज० ३द्वि० ४ज० ५द्वि० ६ज० ७द्वि० ग०

– – ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ ⏑

चपलं करोति कामाकुलं मनः कामिनामसौ गीतिः ॥

(श)

## अन्त्येनोपगीतिः ॥ ३० ॥

अन्त्येनार्द्धेन सममाद्यमर्द्धं यस्याः सा आर्या उपगीति-र्नाम । तत्र पथ्योपगीत्युदाहरणम् ।—

---

गानं, तथा मुक्तलज्जं मुक्ता त्यक्ता लज्जा व्रीडैव तत्र तथाभूतं निरर्गलालापेन निरर्गलं निर्बाधं यथा तथा आलापेन परस्परभाषणेन तथा मणितेन सुरतकालिका-व्यक्तशब्दविशेषेण च रमणीयं मनोज्ञं सुरतस्य कामं निकामं चकास्ति शोभते। अत्र उभयदले एव 'गीतिः' 'लज्जम्' इति तृतीयगणान्ते पथ्यावत् पादविरतिरिति पथ्यालक्षणत्वं, किञ्च प्रथमार्द्धे षष्ठो जगणः उत्तरार्द्धे च सर्वलघुः षष्ठो गणः तथा उभयत्र द्वितीयचतुर्थौ गुरुमध्यगतजगणौ, अत इयं पथ्यामहाचपलानामगीतिः। पञ्चेषिविति।—अत्र गीतौ पञ्चेषुवल्लभः कामप्रियः पञ्चमध्वनिः कोकिलशब्दः यदि चेत् विपुलः महान् भवति जायते तदा असौ गीतिः गानं कामिनां कामुकानां मनः चित्तं कामाकुलम् अनङ्गसन्तप्तम् अत एव चपलम् अधीरं करोति। अत्र उभय-दले एव द्वितीयचतुर्थौ गुरुमध्यगतौ जगणौ तथा 'भः प' 'कामा' इति तृतीयगणान्ते पादविश्रामाभावः, एवं प्रथमे 'त्र भवति' इति सर्वलघुः षष्ठो गणः, द्वितीये 'मिनाम' इति षष्ठो जगणः अतः महाचपला-महाविपुलागीत्युदाहरणमिदम् ।

(श) उपगीतिलक्षणमाह, अन्त्येनेत्यादि।—आर्य्याया उत्तरार्द्धे यथा षष्ठो

१द्वि० २भ० ३भ० ४द्वि० ५द्वि० ६ज० ७भ० ग०

⏑ ⏑⏑ – – ⏑ – – ⏑⏑⏑ ⏑ ⏑ – ⏑ – – ⏑

गान्धर्वं मकरध्वजदेवस्यास्त्रं जगद्विजयि ।

१सर्व० २भ० ३भ० ४स० ५द्वि० ६ल० ७द्वि० ग०

– – – – ⏑ – ⏑ ⏑ – – – – ⏑ ⏑ ⏑ – ⏑ ⏑ ⏑

इति समवेक्ष्य मुमुक्षुभिरुपगीतिस्त्यज्यते देशः ॥

अथ विपुलोपगीत्युदाहरणम् ।—

१स० २ज० ३द्वि० ४सर्व० ५भ० ६ल० ७द्वि० ग०

– – ⏑ – ⏑ – ⏑ ⏑ – – – ⏑ – – – ⏑ ⏑ ⏑

विपुलोपगीतिझङ्कारमुखरिते भ्रमरमालानाम् ।

१द्वि० २ज० ३द्वि० ४ज० ५स० ६ल० ७द्वि० ग०

⏑⏑ ⏑ – ⏑ ⏑ – ⏑ – – ⏑ – ⏑ ⏑

रेवातपोवने वस्तुमस्तु सततं मम प्रीतिः ॥

अथः एकलघुः सप्तविंशतिमात्रा च भवेत् तथा पूर्वार्द्धेऽपि चेत् तदा उपगीति-नामार्या इत्यर्थः। तत्र पथ्यापूर्वकोपगीतिमुदाहरति, गान्धर्वमित्यादि।—मुमुक्षुभिः मोक्षार्थिमुनिभिः गान्धर्वं गन्धर्वविद्यां सङ्गीतमित्यर्थः, मकरध्वजदेवस्य मदनस्य, जगद्विजयि लोकपरिजयि अस्त्रं शस्त्रम् इति एवं समवेक्ष्य दृष्ट्वा, ज्ञात्वा इत्यर्थः, उप समीपे गीतिर्गानं यत्र तादृशो देशः स्थानं त्यज्यते परिहीयते। अत्र 'रध्वज' इति 'मुक्षुभि' इति च दलद्वये तृतीयगणान्ते पादविश्रमणात् पथ्यापूर्वकत्वम्; तथा उभयदले एव 'ज' 'ज्य' इति एकलघुषष्ठगणत्वात् इयं पथ्योपगीतिः। अथ विपुला-पूर्वकत्वमस्या दर्शयति, विपुलेति।—भ्रमरमालानां षट्पदश्रेणीनां विपुलैः प्रबलैः उपगीतिझङ्कारैः गीतध्वनिभिः गुञ्जनैरिति यावत्, मुखरिते शब्दिते रेवातपोवने रेवाख्यनदीतटवर्त्ति-तपश्चरणयोग्यारण्यप्रदेशे वस्तुं स्थातुं, "वस्तुम्" इत्यत्र "वस्तुतः" इति पाठे—वस्तुतः यथार्थतः इत्यर्थः, तत्रत्यद्रव्यसम्पद्दर्शनादित्यर्थो वा; मे सततं सर्वदा प्रीतिः तुष्टिः अस्तु भवतु। अत्र दलद्वये गणत्रयान्ते न पादविरतिः, पुनः 'र' 'म' इति षष्ठैकलघुगणः समान एव दलद्वये वर्त्तते, अत इयं महा-

पथ्यामहाचपलोपगीत्युदाहरणम् ।—

१स० २ज० ३द्वि० ४ज० ५द्वि० ६स० ७भ० ग०

- - ᴗ - ᴗ - ᴗ - ᴗ ᴗ - ᴗ ᴗ ᴗ ᴗ - ᴗ - - ᴗ

विषयामिषाभिलाषं करोति चित्तं सदा चपलम् ।

१द्वि० २ज० ३द्वि० ४ज० ५द्वि० ६स० ७द्वि० ग०

ᴗ ᴗ - ᴗ - ᴗ ᴗ - ᴗ - ᴗ ᴗ - ᴗ ᴗ ᴗ

वैराग्यभावनानां तथोपगीत्या भवेत् स्वस्थम् ॥

महाविपुलामहाचपलोपगीत्युदाहरणम् ।—

१स० २ज० ३द्वि० ४ज० ५द्वि० ६स० ७द्वि० ग०

- ᴗ - ᴗ - ᴗ ᴗ - ᴗ - ᴗ ᴗ - ᴗ ᴗ ᴗ

विपुलोपगीति सन्त्यज्यतामिदं स्थानकं भिक्षो ! ।

१स० २ज० ३द्वि० ४ज० ५द्वि० ६स० ७द्वि० ग०

- ᴗ - ᴗ - ᴗ ᴗ - ᴗ - ᴗ ᴗ - ᴗ ᴗ ᴗ

विषयाभिलाषदोषेण बाध्यते चञ्चलं चेतः ॥ (ष)

विपुलापूर्विका उपगीतिर्नामार्य्या । पथ्यामहाचपलापूर्वकत्वमाह, विषयेत्यादि ।—चपलं चञ्चलं चित्तं मनः सदा सर्वदा विषयामिषेषु रूपादिषु भोग्यवस्तुषु अभिलाषं स्पृहां करोति । वैराग्यभावनानां विषयानासक्तिचिन्तनानाम् उपगीत्या अनुशीलनेन तथा तादृशं चित्तं स्वस्थं स्थिरीभूतं भवेत् । अत्र 'लाषं' 'नानाम्' इति उभयदले तृतीयगणान्ते पादविश्रमणात् तथा षष्ठगणस्यैकलघुरूपस्य 'स' 'भ' इत्यस्य तुल्यत्वात् तथा द्वितीयचतुर्थयोर्गणयोर्गुरुमध्यगतजगणत्वाच्च पथ्यामहाचपलोपगीतिर्नामार्य्येयम् । महाचपलामहाविपुलापूर्विकामुपगीतिं दर्शयति, विपुलेत्यादि ।—हे भिक्षो ! विपुला महती अतिभूमिङ्गता, उपगीतिः सङ्गीतं यत्र तत् इदं स्थानकं "स्थानकम्" इत्यत्र "स्वकचकम्" इति पाठे—स्वकटकं स्वाश्रयमित्यर्थः ; त्यज्यतां परिहीयतां, विषयेषु अभिलाष एव दोषः तेन चञ्चलं चपलं चेतः मनः बाध्यते । अत्र उभयदले एव गणत्रयान्ते पादो न विश्राम्यति, तथा द्वितीयचतुर्थगणौ गुरुमध्यगतौ जौ च स्तः, पुनः षष्ठगणस्य उभयत्रापि एकलघुरूपेण वर्त्तते अत इयं नामद्वयानुरूपलक्षणाक्रान्ता महाचपलामहाविपुलोपगीतिर्नामार्य्या ।

## उत्क्रमेणोद्गीतिः॥ २१ ॥

पूर्वोक्तात् क्रमाद्विपरीतक्रम उत्क्रमः। अयमर्थः,—आद्यमन्त्यं भवत्यर्द्धमन्त्यमर्द्धमादौ, सा उद्गीतिर्नामार्य्या। तत्र पथ्योद्गीत्युदाहरणम्।—

१भ० २द्वि० ३म० ४स० ५द्वि० ६ल० ७भ० ग०

⏑ – – ⏑ ⏑ ⏑ – – ⏑ – – ⏑ ⏑ ⏑ – ⏑ – – ⏑

व्याध इवोद्गीतिरवैः प्रथमं तावन्मनो हरसि।

१भ० २म० ३भ० ४द्वि० ५द्वि० ६ज० ७द्वि० ग०

⏑ – – – – ⏑ ⏑ – – ⏑ ⏑ ⏑ ⏑ – ⏑ – ⏑ ⏑ ⏑

दुर्नयकार! विश्राम्यसि पश्चात् प्राणेषु विप्रियैः शल्यैः॥

महाविपुलोद्गीत्युदाहरणम्।—

१द्वि० २ज० ३द्वि० ४ज० ५स० ६ल० ७भ० ग०

⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – – – ⏑ – ⏑ – – ⏑

एषा तवापरोद्गीतिरत्र विपुला परिभ्रमति।

---

(स) आर्य्याभेदमुद्गीतिं लक्षयति, उत्क्रमेणेति।—उत्क्रमेण वैपरीत्येन। उत्क्रममेव व्याचष्टे वृत्तिकारः, पूर्वोक्तादिति।—आद्यं प्रथमम् अर्द्धम् आर्य्यापूर्वार्द्धमित्यर्थः, गोपेतसप्तगणरूपं तत्र च षष्ठो गणः मध्यगुरुः सर्वलघुर्वा इत्येवंरूपमिति यावत्, अन्त्यम् उत्तरार्द्धगतं भवति चेत् तथा अन्त्यमर्द्धम् उत्तरार्द्धं गोपेतसप्तगणात्मकं तत्र च एकलघुषष्ठरूपम् आदौ प्रथमार्द्धे च भवति तदा उद्गीतिर्नामार्य्या, अयमेव पूर्वोक्तात् क्रमात् विपरीतक्रम इत्यर्थः, एतेन पूर्वार्द्धोत्तरार्द्धक्रमव्यत्यये उद्गीतिरिति लक्षणमायातम्। तत्र पथ्योद्गीतिमाह, व्याध इत्यादि।—दुर्नयकार! हे दुर्विनीत! प्रथमम् आदौ व्याध इव किरात इव उद्गीतिरवैः गीतध्वनिभिः मनः चित्तं हरसि आकर्षसि, पश्चात् तदनन्तरं विप्रियैः अहितकारिभिः शल्यैः अस्त्रविशेषैः प्राणेषु इन्द्रियेषु विश्राम्यसि। अत्र 'तिरवैः' 'श्राम्यसि' इत्युभयदलयोः तृतीयगणान्ते पथ्यावत् पादविरतिस्तथा पूर्वार्द्धे एकलघुः षष्ठो गणः, उत्तरार्द्धे च 'षु विप्रि' इति षष्ठो मध्यगुरुः जगणः अत इयं पथ्यापूर्विकोद्गीतिः नामार्य्या। महाविपुलामुद्गीतिं लक्षयति, एषेत्यादि।—अत्र तव ते अपरा अन्या विपुला महती उद्गीतिः

१द्वि० २ज० ३द्वि० ४सर्व० ५द्वि० ६ज० ७स० ग०

⏑ ⏑ – ⏑ – ⏑ ⏑ – – – – – ⏑ ⏑ – ⏑ – – – ⏑ ⏑

त्वद्वल्लभाऽपि यत्कीर्त्तिरखिलदिक्पालपार्श्वमुपयाति ॥

पथ्यामहाचपलोद्गीत्युदाहरणम् ।—

१द्वि० २ज० ३द्वि० ४ज० ५द्वि० ६ल० ७भ० ग०

⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ – – – ⏑ ⏑

उद्गीतिरत्र नित्यं प्रवर्त्तते कामचपलानाम् ।

१द्वि० २ज० ३द्वि० ४ज० ५द्वि० ६ज० ७द्वि० ग०

⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ ⏑

तस्मान्मुने ! विमुञ्च प्रदेशमेतं समेतमेताभिः ॥

महाविपुलामहाचपलोद्गीत्युदाहरणम् ।—

१स० २ज० ३द्वि० ४ज० ५द्वि० ६ल० ७भ० ग०

– – ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – – ⏑

विपुला पयोधरश्रोणिमण्डले चक्षुषोश्चपला ।

---

उद्वेगान्तं परिभ्रमति परिचलति, यत् त्वद्वल्लभा तव प्रिया अपि कीर्त्तिः यशः अखिल-दिक्पालपार्श्वम् अष्टलोकपालसन्निधानम् उपयाति अधिगच्छति। अत्र अपरा अन्यविधा विपुला उद्गीतिः तदाख्यार्य्याच्छन्दः परिभ्रमति प्रचलति यत्कीर्त्तिः यस्या उद्गीतेर्यशः अखिलदिक्पालपार्श्वं गच्छतीत्यर्थश्च ध्वन्यते। अस्या उभयदले गणत्रयान्ते न यतिः तथा प्रथमार्द्धे 'प' इति द्वितीयार्द्धे कलघवत् एकलघुः षष्ठो गणः, उत्तरार्द्धे च 'लपार्श्व' इति पूर्वार्द्धे जगणवत् मध्यगुरुः षष्ठो गणः अत इयं महाविपुलापूर्विकोद्गीतिः। अस्याः पथ्यापूर्वकमहाचपलात्वमुदाहरति, उद्गीतिरित्यादि।—हे मुने! अत्र अस्मिन् प्रदेशे कामचपलानां स्मरावेशचटुलानां नायिकानामित्यर्थः, उद्गीतिः उच्चैः सङ्गीतं नित्यं सर्वदा प्रवर्त्तते तस्मात् एताभिः नायिकाभिः समेतं युक्तम् एतं प्रदेशम् इदं स्थानं विमुञ्च परिहर। अत्र दलद्वये तृतीयगणान्ते 'नित्यं' 'मुञ्च' इत्यत्र पादविरतिः, तथा गुरुमध्यगतौ जगणौ द्वितीयचतुर्थौ च तथा उभयार्द्धयोः षष्ठगणौ च आर्य्यालक्षणविपरीतौ वर्त्तेते अत इयं पथ्यामहाचपलोद्गीतिः। महाविपुला-महाचपलापूर्विकामुद्गीतिमुदाहरति, विपुलेत्यादि।—पयोधरौ स्तनौ श्रोणिः नितम्बः तयोः मण्डलं तस्मिन् विपुला विशाला विपुलस्तननितम्बा इत्यर्थः,

१द्वि॰ २ग॰ ३द्वि॰ ४ग॰ ५द्वि॰ ६ग॰ ७अ॰ ग॰

⏑⏑ – ⏑ – ⏑⏑ ⏑ – ⏑ ⏑ ⏑ ⏑ – ⏑ – ⏑ – – ⏑

उद्गीतिशालिनी कामिनी च सा वर्णिनां मनो हरति॥ (स)

## अर्द्धे वसुगणा आर्य्यागीतिः॥ ३२॥

अष्टगणे प्रथमेऽर्द्धे सा आर्य्यागीतिर्नामार्य्या। अष्टमोऽपि गणश्चतुर्मात्रिको भवतीत्यर्थः। विशेषाभावात् द्वितीयमप्यर्द्धं तादृशमेव। अत्रापि षष्ठो गणो द्विविकल्प एव न लकारः। अर्द्धे इति वर्त्तमाने पुनरर्द्धग्रहणात् गणग्रहणाच्च इयमपि पथ्यादिलक्षणपूर्व्विका आर्य्यागीतिः। पथ्यार्य्यागीत्युदाहरणम्।—

तथा चक्षुषी: नयनयो: चपला चञ्चला, उद्गीतिशालिनी उच्चै: सङ्गीतपरायणा च सुरूपा कामिनी रमणी वर्णिनाम् अष्टविधमैथुनाभाववतां यतीनां "वर्णिनाम्" इत्यत्र "बालिनी" इति पाठे—सुकेशी इत्यर्थः; मनः चित्तं हरति आकर्षति। अत्र उभयदले गणत्रयान्ते न पादविरतिः महाचपलात्वञ्च द्वितीयचतुर्थौ गुरुमध्यगत-जगणौ तथा पूर्व्ववत् उभयार्द्धे षष्ठगणौ विपरीतौ वर्त्तेते अतः महाविपुला-महाचपला-पूर्व्विकेयमुद्गीतिः।

(ह) आर्य्याभेदमार्य्यागीतिमाह, अर्द्धे इत्यादि।—वसुगणे अष्टगणे। सूत्रार्थमाह वृत्तिकारः, अष्टगणे इति।—अष्टौ गणा यस्मिन् तस्मिन्नष्टगणात्मके आर्य्यायाः प्रथमार्द्धे परिकल्पिते सति सा पूर्व्वोक्तलक्षणा आर्य्या आर्य्यागीतिर्नाम भवति। चतुर्मात्रिकः चतस्रो मात्रा यस्य तादृशः। आर्य्याया हि पूर्व्वार्द्धे सगुरुकाः सप्तगणा भवन्ति इह तु पूर्णा अष्टौ गणाः, अन्तिमस्तु गणो द्विगुरुरेव अन्यदार्य्यापूर्व्वार्द्धतुल्यमिति भावः। द्वितीयार्द्धमपि तादृशमेव विशेषाकथनात्। आर्य्यापूर्व्वार्द्धे सप्तगणात्मके यथा षष्ठो गणः जगणात्मकः सर्व्वलघ्वात्मको वा विधेयः अष्टगणात्मकेऽपि षष्ठगणः तथैव कल्पनीयः, किन्तु आर्य्याया उत्तरार्द्धे यथा एकलघुः षष्ठगणः तथेह न विधातव्यः इत्याह, न लकार इति।—लकारः एकलघुः षष्ठो गणो न विधेय इत्यर्थः। ननु वसौ आर्य्या गीतिरिति सूत्रे कृते प्रस्तावादेव अर्द्धशब्दस्य गणशब्दस्य च लाभसम्भवे कथं पुनस्तदुपादानेन सूत्रगौरवस्वीकारः

१सर्वं० २सर्वं० ३द्वि० ४द्वि० ५द्वि० ६ज० ७द्वि० ८स०

– – – – – – – – – ∪ ∪ ∪ ∪ ∪ ∪ – ∪ – ∪ ∪ – – ∪

अजमजरममरमेकं प्रत्यक् चैतन्यमीश्वरं ब्रह्म परम् ।

१द्वि० २द्वि० ३स० ४स० ५द्वि० ६ज० ७द्वि० ८द्वि०

∪ ∪ ∪ ∪ – – ∪ – – ∪ ∪ ∪ – ∪ – ∪ ∪ ∪ ∪

आत्मानं भावयतो भवमुक्तिः स्याद्वितीयमार्य्यागीतिः ॥

महाविपुलार्य्यागीत्युदाहरणम् ।—

१स० २ज० ३स० ४ग० ५भ० ६सर्वं० ७सर्वं० ८स०

– – ∪ – ∪ – – – ∪ – ∪ – ∪ – – – – – – – – – – ∪

विषयाभिलाषमृगतृष्णिका ध्रुवं हरति हरिणमिव हतहृदयम् ।

१स० २ज० ३स० ४ज० ५द्वि० ६ज० ७सर्वं० ८द्वि०

– – ∪ – ∪ – – – ∪ – ∪ – ∪ ∪ – ∪ – – – – ∪ ∪

विपुलात्ममोक्षसुखकाङ्क्षिभिस्ततस्त्यज्यते विषयरससङ्गः ॥

---

इत्याह, अङ्गं इत्यादि ।—अस्याः अपि पूर्ववत् पथ्यादिपूर्वकत्वप्रदर्शनार्थं गौरवस्वीकारः इत्यभिप्रायः । पथ्याऽऽर्य्यागीत्युदाहरणमाह, अजमित्यादि ।—न जायते इत्यजस्तं जन्मरहितम्, अजरं जराविहीनम्, अमरं विनाशरहितम्, एकम् अद्वितीयं, प्रत्यक् पराचीनं, चैतन्यं चैतन्यस्वरूपम्, ईश्वरं षडैश्वर्य्यशालिनम्, आत्मानं परमात्मस्वरूपं, परं श्रेष्ठं, ब्रह्म भावयतः चिन्तयतः जनस्य भवमुक्तिः मोक्षः स्यात् भवेत् इति इयम् आर्य्या श्रेष्ठा, महाजनसम्मतत्वात्; यद्वा—आर्य्याणाम् आ सम्यक् गीतिः उक्तिः । अत्र दलद्वये एव त्रिषु गणेषु पादविश्रामः पथ्यावत्, तथा उभयोरष्टगणाश्च सन्ति प्रथमार्द्धान्ते एकगुरुकः, द्वितीयार्द्धावसाने द्विगुरुकश्च गणो वर्त्तते, पुनः 'न्यमौस्त' 'द्वितीय' इति षष्ठो जगणश्च, अत इयं पथ्यापूर्विकार्य्यागीतिर्नामार्य्या । महाविपुला-पूर्विकामार्य्यागीतिमुदाहरति, विषयेत्यादि ।—विषयेषु रूपादिषु अभिलाषः अनुराग एव मृगतृष्णिका मरीचिका हरिणमिव मृगमिव हतहृदयं पापचित्तं ध्रुवं निश्चितं हरति आकर्षति, ततः विपुलम् अतिशयम् आत्मनः मोक्षसुखं काङ्क्षितुं शीलं येषां तैः मुमुक्षुभिरित्यर्थः, विषयरससङ्गः विषयासक्तिः त्यज्यते, मरीचिकायां

पथ्याजघनचपलार्य्यागीत्युदाहरणम्।—

१द्वि० २ज० ३द्वि० ४स० ५द्वि० ६सर्व० ७स० ८स०

⏑ ⏑ – ⏑ – ⏑ ⏑ – – ⏑ ⏑ ⏑ – – – – – ⏑ – – ⏑

वाताहतोर्मिमालाचपलं सम्प्रेक्ष्य विषयसुखमल्पतरम्।

१द्वि० २ज० ३द्वि० ४ज० ५द्वि० ६ज० ७द्वि० ८स०

⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ – – ⏑

मुक्त्वा समस्तसङ्गं तपोवनान्याश्रयन्ति तेनात्मविदः॥

महाविपुलामहाचपलार्य्यागीत्युदाहरणम्।—

१स० २ज० ३द्वि० ४ज० ५द्वि० ६ज० ७सर्व० ८स०

– – ⏑ – ⏑ – ⏑ ⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – – – – – – ⏑

चपलानि चक्षुरादीनि चित्तहारो च हन्त! हतविषयगणः।

१द्वि० २ज० ३द्वि० ४ज० ५भ० ६सर्व० ७स० ८द्वि०

⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ – – – – – – – ⏑ ⏑ ⏑

एकान्तशीलिनां योगिनामतो भवति परमसुखसम्प्राप्तिः॥ (६)

इत्यार्य्याधिकारः।

---

सलिलभ्रमेण धावन्तो मृगा यथा सलिलमप्राप्य क्लिश्यन्ति तथा विषयभोगे एव सुखमिति बुद्ध्वा तदर्थं यतमानाः तत सुखमप्राप्य भग्नहृदयाः चिरं दुःखमेवानुभवन्ति इत्यर्थः। अत्र दलद्वयेऽपि गणत्रयान्ते पादो न विश्राम्यति तथा चष्टगणाश्च सन्ति षष्ठगणश्च प्रथमार्द्धे सर्वलघुः द्वितीयार्द्धे च मध्यगुरुः अत इयं महाविपुलापूर्विकार्य्यागीतिर्नामार्य्या। पथ्याजघनचपलापूर्विकामार्य्यागीतिमुदाहरति, वाताहतेत्यादि। —आत्मविदः तत्त्वज्ञाः विषयसुखम् इन्द्रियार्थानामुपभोगजनितसुखं वातेन वायुना आहता ताड़िता या ऊर्मिमाला तरङ्गश्रेणी तद्वत् चपलं चञ्चलम् अत एव अल्पतरं लघु सम्प्रेक्ष्य अकिञ्चित्करं बुद्ध्वा तेन तेनैव च हेतुना समस्तसङ्गं निखिलासक्तिं मुक्त्वा परित्यज्य तपोवनानि आश्रयन्ति तपस्यार्थं वनं गच्छन्ति। अत्र दलद्वये एव तृतीयगणान्ते विरतिः अष्टौ च गणाः, तथा उत्तरार्द्धे द्वितीयचतुर्थौ गणौ गुरुमध्यगौ च अत इयं पथ्या-जघनचपलापूर्विकार्य्यागीतिर्नामार्य्या। महाविपुला-महाचपलापूर्विकामार्य्यागीतिमुदाहरति, चपलानीत्यादि।—हन्त खेदे चक्षुरादीनि इन्द्रियाणि चपलानि चञ्चलानि, हतविषयगणश्च चित्तहारी हृदयाकर्षकः, अतः एकान्तशीलिनां विषयासक्तं परित्यज्य निर्जनप्रदेशमाश्रयतां योगिनां यतीनां परमसुखसम्प्राप्तिः नित्य-

अथ वैतालीयाधिकारः ।—

## वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवो-ऽन्ते र्लगाः ॥३३॥

ल इत्यनुवर्त्तते। यत्र अयुक्पादे प्रथमे तृतीये च, द्विःस्वराश्चतुर्दश लकारा भवन्ति, युक्पादे द्वितीये चतुर्थे च, द्विर्वसवः षोडश लकाराः तत् वैतालीयं नाम छन्दः। तेषां लां मध्ये उभयोरपि पादयोरन्ते रेफ-लकार-गकाराः कर्त्तव्याः। आद्ये पादे षड्लकाराः पश्चादवशिष्यन्ते, द्वितीये चाष्टौ ; एवं

---

सुखलाभः भवति। अष्टगणात्मकेऽस्मिन् दलद्वयेऽपि गणत्रये यतिः नास्ति तथा द्वितीय-चतुर्थौ गुरुमध्यगतौ जगणौ च स्तः, तृतीयो द्विगुरुः, षष्ठश्च मध्यगुरुः सर्वलघुश्च वर्त्तते, अत इयं महाविपुला-महाचपलापूर्विकार्य्यागीतिर्नामार्य्या। आर्य्यायाः पूर्वार्द्धविकल्पानाम् अष्टनगणे विकल्पाभावात् परस्परताडने जातोऽङ्कः द्वादशसहस्राण्यष्टौ च शतानि पूर्वार्द्धे, तथोत्तरार्द्धेऽपि, अन्योऽन्यहतौ च जाता मुख्यगीतिबह्वेदसङ्ख्या। अङ्कतोऽपि (१६३८४००००)। केचित्तु पूर्वार्द्धे द्वात्रिंशन्मात्रा उत्तरार्द्धे एकोनत्रिंशन्मात्रा आर्य्यागीतौ भवन्तीति मन्यन्ते, एतत्तु बहुमतविरुद्धतया सूत्राननुगुणतया तथा "मधुकरविटपानमिताक्षरपङ्क्तीर्बिभ्रतोऽथ विटपानमिताः। परिपाकपिशङ्गलतारजसा रोधश्चकासे कपिशं गलता ॥" इति माघप्रदर्शितार्य्यागीत्युदाहरणविरोधाच्च न श्रद्धेयम्। वृत्तरत्नाकरेऽपि स्फुटमभिहितमार्य्यागीतिलक्षणं यथा— "आर्य्यापूर्वार्द्धं यदि गुरुणैकेनाधिकेन निधने युक्तम्। इतरत्तद्वन्निखिलं भवति यदीयमुदितेयमार्य्यागीतिः ॥" इति।

(क) आर्य्याधिकारं परिसमाप्य साम्प्रतं मात्राच्छन्दोऽधिकारं प्रस्तोतुमाह, वैतालीयमित्यादि।—स्वराः इति निषादादिभेदेन स्वराणां सप्तसङ्ख्याकत्वात् सप्तसङ्ख्याप्रतिपादकाः। देहलीदीपकन्यायेन द्विरित्युभयत्रापि सम्बध्यते, ततश्च द्विगुणिताः सप्त चतुर्दश एव जायन्ते, द्विगुणिता वसवश्च षोडश इति। ल इति "लः समुद्रा गणः" (४।१२ पि०) इत्यस्मात् सूत्रात् सिंहावलोकितन्यायेन अनुवर्त्तनीयः। प्रथमे तृतीये च पादे चतुर्दशमात्रात्मके द्वितीये चतुर्थे च पादे षोडशमात्रात्मके वैतालीयं नाम छन्दो भवतीति सामान्यलक्षणम्। विशेषमाह, तेषामिति।—तेषां लां मध्ये पादचतुष्टयेऽपि मात्रान्त-

वैतालीयाद्धं सिध्यति। द्वितीयमप्यर्द्धं तादृशमेव। तत्रो-
दाहरणम्।—

र० ल० ग०

१।२ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४

क्षुत् क्षी ण श री र स ञ्च या

र० ल० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

व्य क्ती भू त शि रा ऽस्थि प ञ्ज राः।

र० ल० ग०

१।२ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४

के शैः प रु षै स्त वा र यी

र० ल० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

वै ता लीय त नुं वि त न्व ते॥

---

शेतभागे अयुजि षण्मात्राः युजि चाष्टमात्राः पूर्वं विहायावशिष्टमात्राणां स्थाने रगण-लघुगुरवः स्थापनीयाः; रगणस्य मध्यलघुतया पञ्चमात्रात्वं लघोरेकमात्रात्वं गुरोश्च द्विमात्रात्वमिति मात्राष्टकमेषां विन्यासादपहृतं भवतीति गम्यते। अयुक्पादस्य चतुर्द्दशमात्रात्वेन तदवसाने अष्टमात्राः परिहृताश्चेत् षण्मात्रा एवावशिष्यन्ते, युक्-पादस्य षोडशमात्रात्वेन च अष्टौ मात्रा इति दर्शयन्नाह,—पादे इत्यादि। पूर्वार्द्ध-पादद्वयवत् परार्द्धमपि इत्याह,—द्वितीयमित्यादि। इहार्य्यावदर्द्धे तात्पर्य्याभावादयुक्पाद-युक्पादयोरुल्लेखः। तत्रोदाहरणमाह, क्षुत्क्षीणेत्यादि।—क्षुत्क्षीणः क्षुधया क्षामतामापन्नः शरीरसञ्चयः देहानां स्थूलता येषां ते, तथा व्यक्तीभूताः प्रकाशीभूताः शिरास्थिपञ्जरा येषां ते तादृशाः, परुषैः रूक्षैः केशैरुपलक्षिताश्च तव अरयः शत्रवः वैतालीयां वेतालसम्बन्धिनीं तनुं शरीरं वितन्वते विस्तारयन्ति, शवाधिष्ठितभूतविशेषवत् प्रतिभासन्ते इत्यर्थः। अत्र 'क्षुत्क्षीणश' इति प्रथमपादस्य षण्मात्राया अन्ते 'रीरस' इति रगणः 'ञ्च' इति एकलघुः 'याः' इति गकारश्च वर्त्तते, तथा द्वितीयपादे 'व्यक्तीभूतशि' इति अष्टमात्राया अन्ते

अपि च।—

र० ल० ग०

१ २ ३।४ ५ ६।७।८ ९।१०।११ १२ १३।१४

त व त न्वि! कॅटा क्ष वी क्षि तैः

र० ल० ग०

१ २ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

प्र ह र द्भिः श्र व णा न्त गो च रैः।

र० ल० ग०

२ ३।४ ५ ६।७।८ ९ १०।११ १२ १३।१४

वि शि खै रि व ती क्ष्ण को टि भिः

र० ल० ग०

१ २ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

प्र ह तः प्रा णि ति दु ष्क रं ग तः॥

अपि च।—

र० ल० ग०

१ २ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४

श व शो णि त प ङ्क रा जि तं

---

'राक्षिप' इति रगणः 'स' इति लघुः 'रा:' इति गकारश्च। एवमुत्तरार्द्ध-पादद्वयेऽपि लक्षणमवगन्तव्यम्; एवञ्च प्रथमतृतीयपादयोः चतुर्दशमात्राः द्वितीयचतुर्थयोश्च षोडशमात्राः सिध्यन्ति। उदाहरणान्तरं दर्शयति, तवेत्यादि।—हे तन्वि! तीक्ष्णकोटिभिः तीक्ष्णाग्रैः विशिखैः शरैरिव श्रवणान्तगोचरैः आकर्णविश्रान्तैः प्रहरद्भिः आघातयद्भिः तव कटाक्षवीक्षितैः अपाङ्गदृष्टिभिः प्रहतः आघातितः, जन इति शेषः, दुष्करं गतः दुर्दशां प्राप्तः सन् प्राणिति कष्टेन जीवतीति भावः। इहापि पूर्ववत् लक्षणसन्निवेशः स्वयमूहनीयः। अन्यदुदाहरणमाह, शवेत्यादि।—शवानां मृतशरीराणां शोणितपङ्कैः रक्ताक्तैभिः

र० ल० ग०

१ २ ३।४ ५।६ ७ ८।९।१० ११ १२।१३ १४ १५।१६
पृ थ गा त्म ग्र थि तो र्द्ध मू र्द्ध जम्।

र० ल० ग०

१ २ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४
व पु र न्त र व ह्नि दी पि तं

र० ल० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
वै ता ली य मि दं वि लो क्य ताम्॥

वैतालीयमिति वेतालशब्दात् कृशाश्वादेराकृतिगणत्वात् अण्-प्रत्ययश्चातुरर्थिकः। अत्र पादग्रहणमिदं ज्ञापयति, यदार्य्यादीनां पादश्चतुर्भाग इति व्यवस्था नास्ति। (क)

---

अक्तिं व्याप्तं शोणितलिप्तम् अधिमांश्चधरस्थेत्यर्थः, "शवशोणितपङ्कचर्चितम्" इति पाठान्तरम्; तथा पृथगात्मभिः अन्त्रैः नाडीविशेषैः ग्रथितः निबद्धः ऊर्द्धः ऊर्द्धीभूतः मूर्द्धजः शिरोरुहः केशः इत्यर्थः यस्य तत् अन्तरवह्निना आभ्यन्तरीयाग्निना दीपितं प्रज्वलितम् इदं वैतालीयं वपुः भूताधिष्ठितशवविशेषशरीरं विलोक्यताम्। अत्रापि पूर्ववत् लक्षणसन्निवेशः। वैतालीयशब्दव्युत्पत्तिं दर्शयति, वैतालीयमितीति।— वेतालशब्दात् "वुञ्-अण्-क-ठजिल-सेनिर-ढञ्—" (४।२।८० पा०) इत्यनेन अणि सिद्धम्। "यस्याः पादे प्रथमे" इत्यादिना आर्य्यायां पादव्यवस्थामङ्गीकुर्वतां मतमभिलक्ष्योक्तम्याह, अत्रेति।—एतन्मते आर्य्यायां मुख्यतया प्रथमार्द्ध-द्वितीयार्द्धरूपेणैव व्यवस्था, पादव्यवस्था तु गौणतयेति भावः; एतत्तु प्रागेव विस्तरेण प्रदर्शितम। अत्र श्लोकानामुपरि प्रदत्तास्वङ्का मात्राबोधकाः, गुर्वक्षराणामुपरि द्वौ द्वौ लघ्वक्षराणामुपरि चैकैकः अङ्कः, प्रदत्तः। वृत्तस्यास्य विषमपादयोराद्यासु षण्मात्रासु अष्टौ विकल्पाः, यथा—१ ⏑⏑⏑⏑⏑⏑, २ ⏑⏑––⏑, ३ ––⏑⏑, ४ ––––––, ५ ⏑⏑⏑––, ६ ––⏑––, ७ ⏑––––, ८ ––––⏑। समपादयोराद्यास्वष्टमात्रासु त्रयोदश विकल्पाः, यथा—१ ⏑⏑⏑⏑⏑⏑, २ ⏑⏑⏑––, ३ ⏑⏑––⏑, ४ ⏑––⏑⏑, ५ ––⏑⏑⏑, ६ ⏑⏑–––, ७ ⏑––⏑––, ८ ⏑––––⏑, ९ ––––⏑⏑, १० ––⏑––⏑, ११ ⏑–––––, १२ ––⏑–––, १३ –––⏑––। ततोऽष्टभिस्त्रयोदश गुणिता-

## गौपच्छन्दसकम् ॥ ३४ ॥

अस्मिन् वैतालीये छन्दस्यन्ते गकारश्चेदधिको भवति, तदा औपच्छन्दसकं नाम छन्दः। तत्रोदाहरणम्।—

र० स० ग० ग०

१।२ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १५।१६

वा क्यै र्म धु रैः प्र ता र्य पू र्वं

र० स० ग० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६ १७।१८

यः प श्चा द भि स न्ध धा ति मि त्रम्।

र० स० ग० ग०

१।२ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १५।१६

तं दु ष्ट म तिं वि शि ष्ट गो ष्ठ्या-

र० स० ग० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६ १७।१८

मौ प च्छ न्द स कं व द न्ति वा ह्यम्॥

---

चतुरधिकं शतं वैतालीयस्यार्द्धे भेदाः, तावन्त एवापरार्द्धेऽपि ; परस्परहतौ च जाता दशसहस्राण्यष्टौ शतानि षोडश च। अङ्कतोऽपि १०८१६। इयमेवौपच्छन्दसकापातलिकयोः वक्ष्यमाणयोः सङ्ख्या।

(ख) वैतालीयभेदमौपच्छन्दसकमाह, गिति।—ग् गुरुः। अत्र पूर्वसूत्रादन्ते इत्यनुवर्त्तते। हत्तिकारकृतव्याख्यामाह, अस्मिन्निति।—अस्मिन् पूर्वोक्ते वैतालीये छन्दसि यद्यन्ते एकस्य गुरोः आधिक्यं वर्त्तते तदा औपच्छन्दसकमिति नामान्तरं लभते इत्यर्थः। प्रथमतृतीययोः पादयोः षोडशमात्रात्वं द्वितीयचतुर्थयोश्चाष्टादशमात्रात्वम् इति वैतालीयादस्य भेदः। उदाहरणमाह, वाक्यैरित्यादि।—यः पूर्वं प्रथमं मधुरैः मनोहरैः वाक्यैः मित्रं प्रियजनं प्रतार्य्य प्रलोभ्येत्यर्थः, पश्चात् तदनन्तरम् अभिसन्धाति प्रतारयति दुष्टमतिं दुष्टबुद्धिम् औपच्छन्दसकम् छद्मप्रलोभकं, कपटपटुं विषकुम्भं पयोमुखमिवेति भावः, तं तादृशं जनं विशिष्टगोष्ठ्यां

अपि च।—

र० ल० ग० ग०

१ २ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १५।१६

प र म र्म नि री क्ष णा नु र क्तं

र० ल० ग० ग०

१ २ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६ १७।१८

स्व य म त्य न्त नि गू ढ चि त्त वृ त्तिम्।

र० ल० ग० ग०

१ २ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १५।१६

अ न व स्थि त म र्थ लु ब्ध मा रा-

र० ल० ग० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६ १७।१८

दु प च्छ न्द कं ज ही हि मि त्रम्॥

उपच्छन्दःशब्दादरोहणादिपाठात् चातुरर्थिको वुञ्-प्रत्ययः। (ख)

## आपातलिका भ्गौ ग्॥ ३५॥

रेफ-लकार-गकाराणामपवादः। "द्विःस्वरा अयुक्पादे युग्वस्वोऽन्ते" इत्यनुवर्त्तते। पूर्वलक्षणयोरन्ते भकारो गकारो च भवतः, तत् वैतालीयमापातलिका नाम। तत्रोदाहरणम्।—

---

साधुजनसभायां वाच्यं बहिष्करणयोग्यं वदन्ति माधवः कथयन्ति। अत्र प्रथमतृतीययोः पादयोः षोडश मात्राः द्वितीयचतुर्थयोरष्टादश मात्राः सन्ति, अन्यत् पूर्ववत्। उदाहरणान्तरमाह, परेत्यादि।—परेषाम् अन्येषां मर्मनिरीक्षणे हृदयभावविज्ञाने अनुरक्तम् आसक्तं परच्छिद्रानुसन्धाननिरतं, स्वयम् अत्यन्तम् अतिशयं निगूढा गोपिता चित्तवृत्तिः येन तम्, अनवस्थितं चलचित्तम्, अर्थलुब्धं धनलोभपरतन्त्रं तथा चोपच्छन्दकम् उपच्छन्दः कुत्सिताभिप्रायः तद्युक्तमित्यर्थः, मित्रं बन्धुम् आरात् दूरात् जहीहि परित्यज।

(ख) वैतालीयभेदमापातलिकामाह, आपातलिकेति।—भ्गौ ग् इत्यत्र अन्ते

भ० ग० ग०

१।२ ३ ४ ५।६ ७।८ ९ १० ११।१२ १३।१४
पि ङ्ग ल के शी क पि ला क्षी

भ० ग० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
वा चा ला वि क टो न्न त द न्ती ।

भ० ग० ग०

१।२ ३।४ ५ ६ ७।८ ९ १० ११।१२ १३।१४
आ पा त लि का पु न रे षा

भ० ग० ग०

१ २ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
नृ प ति कु ले ऽपि न भा ग्य मु पै ति ॥

आपातलिका अस्थिरेत्यर्थः । (ग)

## शेषे परेण युङ् न साकम् ॥ ३६ ॥

अत्र वैतालीयाधिकारे येषां लकाराणां नियम उक्तस्तद्-

---

इति तथा प्रथमतृतीयपादयोश्चतुर्दश मात्राः द्वितीयचतुर्थयोः षोडश मात्रा इति यदुक्तं तदप्यनुवर्त्तनीयम् ; ततश्च पूर्वलक्षणावसाने एकः भकारः गकारौ च भवतश्चेत् तद्वैतालीयमापातलिकानाम स्यात् । पिङ्गलेत्यादि ।—पिङ्गलाः केशाः यस्याः सा, तथा कपिले अक्षिणी यस्याः सा, वाचाला बहुभाषिणी, विकटोन्नतदन्ती करालोन्नतदशना, आपातलिका अस्थिरा चपला इत्यर्थः, एषा रमणी नृपतिकुलेऽपि राजवंशे जाताऽपीत्यर्थः, भाग्यं सौभाग्यं न उपैति न प्राप्नोति ; इदञ्च आपातलिका नाम वैतालीयम् इत्यपि व्यज्यते । अत्र 'शी कपि' इति भगणः 'लाक्षी' इति गुरुद्वयं, 'टोन्नत' इति भगणः, 'दन्ती' इति गकारद्वयम्, एवं 'का पुन' इति भगणः 'रेषा' इति गुरुद्वयं, तथा 'भाग्यमु' इति भगणः, 'पैति' इति गुरुद्वयञ्च इति ।

व्यतिरिक्तो यो लकारवर्गः स शेषः ; तस्मिन्नियमः क्रियते,— युग्लकारः परेण सार्कं न मिश्रीकर्त्तव्यः, द्वितीयस्तृतीयेन, चतुर्थः पञ्चमेन, युक्पादे षष्ठश्च सप्तमेन। एवं वदता शेषाणां मिश्रीभावोऽप्यनुज्ञातः। अत्रोदाहरणं पूर्वोक्तमेव। (घ)

## षट् चामिश्रा युजि ॥ ३७ ॥

अत्र द्वितीयचतुर्थयोः पादयोः षड्लकारा अमिश्रा न कर्त्तव्याः, पृथक् पृथक् न प्रयोक्तव्या इत्यर्थः। प्रथमतृतीययोश्च पादयोः स्वरुचिः। तत्रोदाहरणं वैतालीये तावत्।—

र० ल० ग०

१ २ ३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४

स म र शि र सि स त्त्व ते हि षां

---

(घ) वैतालीये अवशिष्टमात्रानियममाह, शेषे इति।—शेषे उक्तातिरिक्त-लकारे ; वैतालीयच्छन्दसि “अन्ते र्लगाः” “गोपच्छन्दसकम्” “भ्मौ न्” इत्युक्त-लक्षणातिरिक्तमात्रासमूह एवात्र शेषशब्देन बोध्यते। अत्रेति।—युग्लकारः प्रथम-तृतीयपादयोः द्वितीयचतुर्थमात्रे इत्यर्थः, परेण तृतीयपञ्चममात्राभ्यां न मिश्रीकरणीयः, द्वितीयतृतीयकलयोः चतुर्थपञ्चमकलयोश्च एकेन गुरुणा नोपादानं विधेयमित्यर्थः। युक्पादे द्वितीयचतुर्थचरणे षष्ठसप्तमकलयोरेकेन गुरुणोपादानं न कार्य्य-मित्याशयः। उदाहरणं पूर्वोक्तमेव पिङ्गलकेशीत्यादि पूर्वसूत्रोक्तमुदाहरणमेव ; तथा च प्रथमपादे ‘पिङ्ग’ ‘लके’ इति तथा तृतीयपादे च ‘चापा’ ‘पात’ इति द्वितीयतृतीयकलयोः चतुर्थपञ्चमकलयोश्च एकेन गुरुणा न मिश्रीभावः तथा द्वितीयचतुर्थपादयोः ‘टा वि’ ‘लेऽपि’ इति षष्ठसप्तमकलयोरपि एकेन गुरुणा न मिश्रीभावः इति।

(ङ) नियमान्तरमाह, षड़िति।—अत्र पूर्वतो न इत्यनुवर्त्तनीयम् ; ततश्च युजि युग्मपादे द्वितीयचतुर्थयोः पादयोः इत्यर्थः, षट् मात्राः अमिश्राः पृथग्भूताः न विधेयाः इत्यर्थः। प्रथमतृतीययोस्तु पादयोर्नियमो नास्ति। तत्रोदाहरणं वैतालीये तावत् वैतालीये छन्दसि तस्योदाहरणं प्रदर्शयति, समरेत्यादि।—समरशिरसि रणमूर्द्धनि युद्धक्षेत्रस्य पुरोभागे अग्रस्थाने इत्यर्थः,

र० ल० ग०

१ २ ३ ४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

न व नि शि ता यु ध वृ ष्टि र प तः ।

र० ल० ग०

१ २ ३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४

कु व ल य द ल दी र्घ च क्षु षां

र० ल० ग०

१ २ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

प्र म दा नां न क टा क्ष वी क्षि तम् ॥

औपच्छन्दसके ।—

र० ल० ग० ग०

१ २ ३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १५।१६

प र यु व ति षु पु त्व भा व मा दौ

र० ल० ग० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६ १७।१८

कृ त्वा प्रा र्थ य ते पु नः प ति त्वम् ।

---

द्विषां प्रभूणां नवनिशितायुधवृष्टिः सद्यःशाणितशरवर्षणं सह्यते सोढुं शक्यते किन्तु पश्यतः पुरतः कुवलयदलदीर्घचक्षुषां नीलोत्पलदलवदायतनयनानां प्रमदानां रमणीनां कटाक्षवीक्षितं सकटाक्षदर्शनं न, सह्यते इति शेषः। अत्र प्रथमपादे 'समरशिरसि' तथा तृतीयपादे च 'कुवलयदल' इति षट् षट् मात्रा अमिश्रभावेन प्रयुक्ताः। द्वितीये 'नवनिशिता' इत्यत्र 'ता' इति मिश्रभावेन निवेशिता, तथा चतुर्थपादे 'प्रमदानाम्' इत्यत्र 'दानाम्' इति च मिश्रभावेन एव विहिता इति। औपच्छन्दसके छन्दसि अस्य उदाहरणं यथा, परेत्यादि।—परयुवतिषु परनारीषु आदौ पूर्वं पुत्त्वभावं पुत्रवत् व्यवहारं कृत्वा पश्चात् पुनः पश्चात् पतित्वं स्वामित्वं प्रार्थयते।

र० ल० ग० ग०

१ २ ३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १५।१६
इ द म प र मि हो प ते वि प्रे पा-

र० ल० ग० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६ १७।१८
दौ प च्छ न्दं स कं ख ल स्य वृ त्तम् ॥

आपातलिकायाम्।—

भ० ग० ग०

१ २ ३ ४ ५ ६ ७।८ ९ १० ११।१२ १३।१४
अ भि र म य ति कि न्न र क ण्ठी

भ० ग० ग०

१।२ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
हं स ग तिः श्र व णा य त ने त्रा।

भ० ग० ग०

१ २ ३ ४ ५ ६ ७।८ ९ १० ११।१२ १३।१४
वि श द क म ल को म ल गा त्री

---

इह इदम् अपरं खलस्य दुष्टस्य विशेषात् औपच्छन्दसकं कुत्सिताभिप्राययुक्तं वृत्तम्, आदौ पुत्रभावप्रदर्शनेन विश्वासमुत्पाद्य पश्चात् पतित्वप्रार्थनारूपं दुर्व्यवहारमित्यर्थः, उच्यते। अत्रापि प्रथमतृतीयपादे 'परयुवतिषु' 'इदमपरमि' इति अमिश्रमात्राः। द्वितीयचतुर्थयोस्तु 'कृत्वा प्रा' 'दौपच्छ' इति मिश्रमात्राः। आपातलिकायामुदाहरणं यथा, अभिरमयतीत्यादि।—किन्नरकण्ठी किन्नरवत् कण्ठः कण्ठस्वरः यस्याः सा मधुरभाषिणीत्यर्थः, हंसस्य गतिरिव गतिर्यस्याः सा मन्दमन्दसञ्चारिणी, श्रवणायतनेत्रा आकर्णविस्तृतनयनयुगला, विशदकमलकोमलगात्री निर्मलपद्मवत् सुकुमारशरीरा,

म० ग० ग०

१ २ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६

यु व ति रि यं हृ द यं त रु णा नाम् ॥ (ङ)

**पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः ॥ ३८ ॥**

इदानीं विशेषलक्षणमाह । "शेषे परेण युङ् न साकम्" (४।२६ पि०) इत्यनेन पञ्चमचतुर्थयोरेकीभावो निषिद्धः, सोऽनेन विधीयते । युजीत्यनुवर्त्तते । यदा युक्पादे पञ्चमेन लकारेण पूर्वः सङ्गच्छते, तदा प्राच्यवृत्तिर्नाम वैतालीयम् । शेषं यथाप्राप्तम् । तत्रोदाहरणम् ।—

र० ल० ग०

१ २ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४

वि पु ला र्थ सु वा च का क्ष राः

र० ल० ग०

१।२ ३ ४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

क स्य ना म न हृ र न्ति मा न सम् ?।

---

इयं युवतिः तरुणानां युवकानां हृदयं मानसम् अभिरमयति आनन्दयति । लक्षण-समन्वयः पूर्ववत् ।

(च) वैतालीयभेदं प्राच्यवृत्तिमाह, पञ्चमेनेति ।—पूर्वः चतुर्थः । प्राच्यवृत्तिः वैतालीयभेदस्य संज्ञा । यदेत्यादि ।—युक्पादे युग्मपादे द्वितीयचतुर्थपादयोरित्यर्थः, पञ्चमेन लकारेण पञ्चम्या मात्रया पूर्वः चतुर्थी मात्रा इत्यर्थः, यदि सङ्गच्छते एकेन गुरुणा चतुर्थपञ्चममात्रयोरुपादानं यदि स्यादित्यर्थः, तदा प्राच्यवृत्तिर्नाम । अत्र विषमयोः पूर्वोक्ता अष्टौ विकल्पाः; समयोश्चत्वारः, यथा—१ ⏑-⏑-⏑, २ ---⏑-⏑, ३ ⏑-⏑---, ४ ---⏑---। अष्टानां चतुर्भिर्हतौ द्वात्रिंशत् पूर्वार्द्धभेदाः, तावन्त एवोत्तरार्द्धे; परस्परहतौ भेदाश्चतुर्विंशत्यधिकसहस्रम् । अङ्कतोऽपि १०२४ । विपुलेत्यादि ।—विपुलार्थसुवाचकाक्षराः महदर्थप्रकाशकवर्णयुक्ताः,

र० ल० ग०

१ २ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४
र स भा व वि शे ष पे श लाः

० र० ल० ग०

१।२ ३ ४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
प्रा च्य वृ त्ति क वि का व्य स म्प दः॥ (च)

## अयुक् तृतीयेनोदीच्यवृत्तिः ॥ ३९ ॥

पूर्वः साकमित्यनुवर्त्तते। अयुक्पादे तृतीयेन लकारेण यदि पूर्वः सङ्गच्छते, तदा उदीच्यवृत्तिर्नाम वैतालीयम्। शेषं यथाप्राप्तमेव। तत्रोदाहरणम्।—

र० ल० ग०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४
अ वा च क म नू र्जि ता क्ष रं

---

रसभावविशेषपेशलाः रसानां शृङ्गारादीनां भावानां रत्यादीनाञ्च विशेषेण वैशिष्ट्येन पेशलाः मनोज्ञाः, प्राच्यवृत्तिकविकाव्यसम्पदः प्राच्यवृत्तीनां प्राचीनव्यवहारसम्पन्नानाम्; यद्वा—प्राच्याः शरावत्याः नद्याः पूर्वदक्षिणदेशवासिनः, तेषां वृत्तिरिव वृत्तिर्येषां तादृशानां कवीनां काव्यसम्पत्तयः कस्य जनस्य मानसं चित्तं न हरन्ति? नाकर्षन्ति नाम? अपि तु सर्वेषामेवेति भावः। अत्र द्वितीये पादे 'ना' तथा चतुर्थे पादे च 'वृ' इति चतुर्थपञ्चममात्रयोः एकेन गुरुणा मिश्रणात् प्राच्यवृत्तिर्नाम वैतालीयं छन्दः।

(छ) वैतालीयभेदमुदीच्यवृत्तिमाह, अयुगिति।—अयुगित्यत्र पादे इति शेषः। उदीच्यवृत्तिरिति वैतालीयस्य भेदविशेषः। इदमपि पूर्ववदपवादविधानार्थमेव। अयुक्पादे प्रथमे तृतीये च चरणे यदि पूर्वः द्वितीयलकारः तृतीयेन सार्कं सङ्गच्छते द्वितीयतृतीयमात्रयोरेकेन गुरुणा उपादानं भवेत इत्यर्थः, तदा तदेव वैतालीयम् उदीच्यवृत्तीति संज्ञां लभते। अत्रापि द्वौ विषमयोर्विकल्पौ, यथा—१ ⏑ ⏑ – –, २ ⏑ – – – –। समयोश्च पूर्वोक्तास्त्रयोदश; परस्परहतौ षड्विंशतिः पूर्वार्द्धभेदाः, तावन्त एवापरत्र; परस्परहतौ जाताः भेदाः षट् शतानि षट्सप्ततिश्च।

र० ल० ग०

१ २ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
श्रु ति दु ष्टं य ति क ष्ट म क्र मम्।

र० ल० ग०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४
प्र सा द र हि त ञ्च ने ष्य ते

र० ल० ग०

१ २ ३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
क वि भिः का व्य मु दी च्य वृ त्ति भिः॥(छ)

**आभ्यां युगपत् प्रवृत्तकम् ॥ ४० ॥**

आभ्यां पूर्वोक्तलक्षणाभ्यां युगपत् प्रवृत्ताभ्यां प्रवृत्तकं नाम वैतालीयम्। युक्पादे पञ्चमेन पूर्वः सङ्गच्छते, अयुक्पादे तृतीयेन द्वितीय इत्यर्थः। तत्रोदाहरणम्।—

---

अन्यतोऽपि ६७६। अवाचकमित्यादि।—उदीच्यवृत्तिभिः उत्तरकालिकव्यवहार-सम्पन्नैः, आधुनिककविविशिष्टैर्नव्यैरित्यर्थः; यद्वा—उदीच्याः शरावत्याः नद्याः पश्चिमोत्तरदेशवासिनः तेषां वृत्तिरिव वृत्तिर्येषां तादृशैः कविभिः अवाचकं तदाख्य-दोषयुक्तम् अनूर्जिताक्षरम् ओजःप्रकाशकवर्णरहितं श्रुतिदुष्टं श्रुतिकटुदोषयुक्तं यतिकष्टं यतिभङ्गदोषपूर्णम् अक्रमं तदाख्यदोषदुष्टं प्रसादरहितञ्च प्रसादगुणवर्जितञ्च काव्यं नेष्यते नाभिलष्यते। अत्र प्रथमपादे 'वा' इति द्वितीयतृतीयमात्रयोः तथा तृतीये पादे 'वा' इति द्वितीयतृतीयमात्रयोश्च एकत्र मिश्रणात् लक्षणसङ्गतिरिति दिक्।

(ज) वैतालीयभेदं प्रवृत्तकमाह, आभ्यामिति।—आभ्यां प्राच्यवृत्त्युदीच्यवृत्ति-भ्याम्। पूर्वोक्तलक्षणाभ्यां प्राच्यवृत्त्युदीच्यवृत्तिलक्षणाभ्यां युगपत् एकदा प्रवृत्ताभ्यां प्रवृत्तकनामकवैतालीयं भवति। एकदा प्रवर्त्तनमेव प्रतिपादयति, युगिति।—यदा द्वितीयचतुर्थपादे चतुर्थपञ्चममात्रायोगः प्रथमतृतीयपादे च द्वितीयतृतीयमात्रायोगः स्यात् तदा प्रवृत्तकमित्यर्थः। अत्र पूर्वोक्तविषमसमविकल्पानामन्योऽन्यवृत्तौ सङ्करा

र० ल० ग०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४
इ दं भ र त वं श भू भृ तां

र० ल० ग०

१।२ ३ ४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
श्रू य तां श्रु ति म नो र सा य नम्।

र० ल० ग०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४
प वि त्र म धि कं शु भो द यं

र० ल० ग०

१।२ ३ ४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
व्या स व क्त्र क थि तं प्र वृ त्त कम्॥ (ज)

## अयुक् चारुहासिनी ॥ ४१ ॥

यस्य सर्वे पादा अयुग्लक्षणयुक्तास्तद्वैतालीयं चारुहासिनी नाम। किं तल्लक्षणम्? चतुर्दशमात्रत्वं तृतीयेन पूर्वस्य योगः। तत्रोदाहरणम्।—

---

स्वयमूहनीया। इदमित्यादि।—श्रुतिमनोरसायनं श्रुत्या श्रवणेन मनसः चेतसः; यद्वा—श्रुतेः श्रवणेन्द्रियस्य मनसश्च रसायनम् आनन्दजननम् अधिकम् अत्यन्तं पवित्रं पुण्यजनकं शुभोदयं मङ्गलकरं व्यासवक्त्रकथितं व्यासमुखनिःसृतं भरतवंश-भूभृताम् इदं प्रवृत्तकं प्रवृत्तिः, वृत्तान्तवर्णनात्मकं काव्यमित्यर्थः, श्रूयताम् आकर्ण्यताम्; तथा एतल्लक्षणात्मकं वृत्तञ्च प्रवृत्तकाख्यं ज्ञेयम्। अत्र हि प्रथमे पादे 'दं' तृतीये 'वि' द्वितीये 'तां' चतुर्थे 'व' इत्येतेषु एकैकेन गुरुणा द्वे द्वे मात्रे निरूपिते।

(झ) वैतालीयस्य भेदान्तरं चारुहासिनीमाह, अयुगिति।—अयुक् इत्यत्र लक्षणान्विता चेदिति शेषः। तदेव विवृणोति, यस्येति।—अयुग्-लक्षणयुक्ताः

र० ल० ग०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४

म नाक् प्र सृ त द न्त दी धि ति:

र० ल० ग०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४

अ रो ष सि त ग ण्ड म ण्ड ला।

र० ल० ग०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४

क टा क्ष ल लि ता तु का मि नी

र० ल० ग०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४

म नो ह र ति चा रु हा सि नी॥ (भ)

## युगपरान्तिका ॥ ४२ ॥

युग्लक्षणयुक्तैश्चतुर्भि: पादैरपरान्तिका नाम वैतालीयम्। किं तल्लक्षणम्? षोडशमात्रत्वं पञ्चमेन पूर्वस्य योग:। तत्र उदाहरणम्।—

---

विषमपादेषु चतुर्दशमात्रया सन्निवेशिता: तथा मिश्रितद्वितीयतृतीयमात्राश्च। अथ विकल्पानामन्योऽन्यहतो भेदा: षट्पञ्चाशदधिके द्वे शते। अहतोऽपि २५६। मनागिति।—मनाक्प्रसृतदन्तदीधिति: ईषत्प्रकाशितदशनकिरणा, अरोषसितगण्डमण्डला कामावेशेनोत्फुल्लकपोलप्रदेशा, कटाक्षललिता मनोरमकटाक्षा, चारुहासिनी मनोज्ञहास्यवती कामिनी तु मन: चेत: हरति। एतल्लक्षणाक्रान्तं चारुहासिनीनामकं वैतालीयस्य मन: आकर्षति इत्यर्थश्च व्यज्यते। अत्र सर्वेषामेव पादानां चतुर्दशमात्रावत्त्वं तथा क्रमेण 'ना' 'रो' 'टा' 'नो' इत्येतेषु द्वितीया मात्रा तृतीयया मात्रया मिश्रिता चेति।

(भ) वैतालीयस्य सप्तमभेदमपरान्तिकामाह, युगिति।—युक् युक्पादलक्षणाक्रान्ता इत्यर्थ:। तदेव विवृणोति, युगिति।—यत्र सर्वे पादा: वैतालीयस्य

र० ल० ग०

१ २ ३ ४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

स्थि र वि ला स न त मौ क्ति का व ली

र० ल० ग०

१ २ ३ ४।५ ६ ७।८ ९।१० ११ १२।१३ १४ १५।१६

क म ल को म ला ङ्गी मृ गे क्ष णा।

र० ल० ग०

१ २ ३ ४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

ह र ति क स्य हृ द यं न का मि नः

र० ल० ग०

१ २ ३ ४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

सु र त के लि कु श ला ऽप रा न्ति का॥ (७)

इति वैतालीयाधिकारः।

---

द्वितीयचतुर्थपादमिथमेन षोडशमात्राः स्युः तथा पञ्चम्यः चतुर्थमात्रायुक्ताश्च सा अपरान्तिकेति। प्राच्यवृत्त्यादीनि पञ्च छन्दांसि वैतालीयोपच्छन्दसकापातलिका-पूर्वकत्वेन वेधा भवन्ति। भेदाः षट्पञ्चाशदधिकद्विशतम्। अङ्कतोऽपि २५६। वैतालीयाधिकारे दक्षिणान्तिकाद्यन्ये बहवो भेदा अन्यैरुक्ताः, आग्नेयच्छन्दःसारे तु वैतालीयाधिकारे अपरान्तिकान्ता एव भेदाः नान्ये तदतिरिक्ताः; यथा—"वैतालीयं द्विःस्वराः स्यादयुक्पादे समे युग्मः। वसवोऽन्ते रलगाश्च गौपच्छन्दसकं भवेत॥ भगगान्तापातलिका शेषे परेण पूर्ववत्। न साकं षट् चामिश्रा युक् प्राच्यवृत्तिः प्रदर्श्यते॥ पञ्चमेन पूर्वः साकं तृतीयेन सह चायुक्। उदीच्यवृत्तिराभ्यां स्यात् युगपञ्च प्रवृत्तकम॥ अयुक् चारुहासिनी स्यात् युगपरान्तिका भवेत॥" इति। स्थिरेत्यादि। —स्थिरविलासनतमौक्तिकावली स्थिरेण चाञ्चल्यविरहितेन विलासेन शृङ्गारचेष्टा-जनितभावविशेषेण नता मौक्तिकावली मुक्ताहारश्रेणी यस्याः सा तादृशी, कमल-कोमलाङ्गी पद्मपुष्पसदृशसुकुमारगात्री, मृगेक्षणा हरिणनेत्रसदृशचञ्चलायतनयना, सुरतकेलिकुशला सुरतक्रीडादक्षा, अपराऽन्तिका न परस्य अन्यस्य अन्तिके समीपे या स्था तादृशी अन्यसमीपवर्त्तिनीत्यर्थः, अनन्यानुरक्ता इति यावत्; यद्वा—अपरस्य अन्तिके

अथ मात्रासमाधिकारः ।

**गन्ता द्विर्वसवो मात्रासमकं नवमः ॥ ४३ ॥**

"वैतालीयम्" (४।३२ पि०) इत्यादिसूत्रात् समस्यन्त-पादग्रहणमनुवर्त्तते । ल इति सहाधिकारः । तेनायमर्थः,—यत्र पादे गन्ताः सन्तः षोड़श लकारा भवन्ति तन्मात्रासमकं नाम छन्दः । अन्ते द्वाभ्यामेको गुरुः कर्त्तव्यः, नवमश्च लकार एव । द्विर्वसव इति द्विगुणिता वसवो लकाराः षोड़श इत्यर्थः । "शेषे परेण युङ् न साकम्" (४।३६ पि०) इत्यनुवर्त्तनीयम् । तत्रोदाहरणम् ।—

---

समीपे या सा तादृशी अन्यसमीपस्था, परकीया इत्यर्थः, कामिनी कस्य कामिनः कामुकस्य हृदयं चेतः न हरति ? न आकर्षति ? अपि तु सर्वस्यैवेति भावः । अत्र सर्वेषां पादानां षोडशमात्रात्वेन तथा 'ता' 'को' 'क' 'कै' इत्येतेषु मिश्रितचतुर्थ-पञ्चममात्रात्वेन च अपरान्तिका नाम वैतालीयम् ।

(८) मात्रासमाधिकारं प्रणौति, गन्तेति ।—ग् अन्ते येषां ते गन्ताः गुर्वन्ताः । द्विरावृत्ताः वसवः द्विर्वसवः षोडशमात्रा इत्यर्थः । नवम इत्यत्र ल् इति शेषो बोध्यः । वैतालीयमिति ।—प्रकरणेऽस्मिन् "वैतालीयम्" इत्यादिसूत्रात् समनीविषमत्यन्तपादाधिकारः करणीयः । ल इति सहाधिकारः अधिकार-सामान्यात् "लः समुद्रा गणः" (४।१२ पि०) इत्यस्मात् सिंहावलोकितन्यायेन ल इत्यनुवर्त्तते इत्यर्थः । "सहाधिकारः" इत्यत्र "महाधिकारः" इति क्वचित् पाठः । एकेन गुरुणा अन्ते द्वे मात्रे भवत इत्याह,—अन्ते इत्यादि । "शेषे परेण युङ् न साकम्" इत्यनेन विषमपादे द्वितीयस्तृतीयेन चतुर्थः पञ्चमेन तथा समपादे च षष्ठः सप्तमेन न मिश्रीकर्त्तव्यः इति बोद्धव्यम् ; ततश्च यस्य चतुर्ष्वपि पादेषु षोड़श षोड़श मात्राः, प्रतिपादान्ते द्विकलो गुरुः, नवमी च मात्रा लघुरूपा, अयुक्पादे द्वितीया-तृतीययोश्चतुर्थीपञ्चम्योश्च मात्रयोः, युक्पादे च षष्ठीसप्तम्योर्मात्रयोर्नैकभावस्थिति-स्तन्मात्रासमकं नाम इति लक्षणम् । अत्र सर्वेषु मात्रासमेषु सर्वमात्रा परमात्रया युक्ता न कार्य्या इत्यपि सम्प्रदायः ; ततश्च प्रथमे अष्टमात्राश्चत्वारो गणविकल्पाः ; यथा—१ ऽ ऽ, २ --ऽ, ३ ऽ--, ४ ----। द्वितीये अष्टः ; यथा १ ऽऽ,

ल० ग०

१।२ ३।४ ५ ६ ७।८ ९ १० ११।१२ १३।१४ १५।१६
अ श्म श्रु मु खो वि रं लै दं न्तै-

ल० ग०

१।२ ३।४ ५।६ ७।८ ९ १० ११।१२ १३।१४ १५।१६
र्ग म्भी रा क्षो मि त ना सा ग्रः।

ल० ग०

१।२ ३।४ ५ ६ ७।८ ९ १० ११।१२ १३।१४ १५।१६
नि र्मां स ह नुः स्फु टि तैः के शै-

ल० ग०

१।२ ३।४ ५ ६ ७।८ ९ १० ११।१२ १३।१४ १५।१६
र्मा त्रा स म कं ल भ ते दुः खम्॥

---

२ ⏑ – –, ३ – – ⏑। मध्यगुरुसर्वलघू विप्रीकलक्षणात्मकत्वान्नेष्टौ भवतः। तृतीये चैकः; १ – – ⏑, नवमो लिति नियमादादिगुरुर्न भवति, मध्यगुरुसर्वलघू तु वानवासिकालक्षणस्पृष्टत्वात् न भवतः। चतुर्थे द्वौ; १ ⏑⏑, २ – – ⏑। गन्तत्वाभिधानान्नान्ये गणाः सम्भवन्ति। एतेषां विकल्पानामन्योऽन्यघाते प्रतिचरणं चतुर्विंशतिर्भेदाः। चतुर्णां चतुर्विंशत्यङ्कानामन्योऽन्यहतौ जाता वयो लक्षाः एकत्रिंशत् सहस्राणि सप्त शतानि षट्सप्ततिः सङ्ख्या। अङ्कतोऽपि ३३१७७६। अत्र मात्रासमाधिकारे लक्षणमेतत् सामान्यतः सर्वत्र बोध्यम्। अजश्मश्रुमुख इत्यादि।—अजश्मश्रुमुखः अजातश्मश्रुलाननः, विरलैः अल्पसङ्ख्यकैः दन्तैः दशनैः विशिष्टः, गम्भीराक्षः गम्भीरे कोटरप्रविष्टे अक्षिणी यस्य सः, मितं परिमितं, यत्किञ्चिन्मात्रं नासाग्रं यस्य सः चिपिटनास इत्यर्थः, निर्मांसहनुः मांसरहितत्वादुन्नतास्थिगण्डोपरिदेशः, स्फुटितैः शलितैः पतितैरित्यर्थः, केशैः शिरोरुहैरुपलक्षितः खलितो इत्यर्थः, जनः इति शेषः, मात्रा जनन्या समकं सार्द्धं दुःखं क्लेशं लभते प्राप्नोति, एतादृग्लक्षणवान् जनः कदापि न सुखी स्यादिति भावः। एतादृशलक्षणाक्रान्तं छन्दः मात्रासमकं नाम

"गन्ते" (१।१० पि०) इत्यनेनैवान्तस्य गुरुत्वे सिद्धे पुनर्गन्तग्रहणमातिदेशिकगुरुत्वनिवृत्त्यर्थम्। तेनात्र द्वौ लकारौ भङ्क्त्वा द्विमात्रिको गुरुः क्रियते इति वाक्यशेषः। (ठ)

## द्वादशश्च वानवासिका ॥ ४४ ॥

यस्य मात्रासमकस्य पादे द्वादशो लकारः स्वरूपेणावतिष्ठते, चकारान्नवमश्च, तन्मात्रासमकं वानवासिका नाम। तत्रोदाहरणम्।—

ल० ल० ग०

१।२ ३ ४ ५।६ ७।८ ९ १० ११ १२ १३।१४ १५।१६

म न्म थ चा प ध्व नि र म णी यः

ल० ल० ग०

१ २ ३ ४ ५।६ ७ ८ ९ १० ११ १२ १३।१४ १५।१६

सु र त म हो त्स व प ट ह नि ना दः।

---

इत्यपि व्यज्यते। श्लोकोपरि प्रदत्तचिह्नदर्शनेन लघुगसमन्वयः स्वयमेव करणीयः, एवमग्रेऽपि। पादान्तस्य गुरुसंज्ञा तु "गन्ते" इति सूत्रादेव विहिता, तत् कथं पुनर्गन्तग्रहणमित्याह, गन्ते इत्यादि।—गन्ते इत्यनेन तु लघोर्गुरुसंज्ञा अतिदिश्यते, तस्यातिदेशिकगुरुत्वस्यात्र न ग्रहणमित्यभिप्रायः। ततश्च किं स्यादित्यत आह,—तेनेत्यादि।

(ठ) मात्रासमकभेदं वानवासिकामाह, द्वादश इति।—स्वरूपेण लघुतया इत्यर्थः। तत्राद्ये गणे चतुःप्रस्तारः; यथा—१ ⏑⏑, २ -- ⏑, ३ ⏑ --, ४ ----। द्वितीये त्रयः; १ ⏑⏑, २ ⏑ --, ३ -- ⏑। तृतीये द्वौ; १ - ⏑ -, २ ----। चतुर्थेऽपि द्वौ; १ ⏑⏑, २ -- ⏑। एतेषामन्योऽन्यताडने भेदाः प्रतिपादम् अष्टचत्वारिंशत्। अन्योऽन्यहतौ जाता सङ्ख्या त्रिपञ्चाशल्लक्षाः अष्टौ सहस्राणि चत्वारि शतानि षोडश च। अङ्कतोऽपि ५३०८४१६। मन्मथेति।—मन्मथस्य कामस्य चापध्वनिना धनुःशब्देन रमणीयः मनोज्ञः, सुरतमहोत्सवस्य

ल० ल० ग०

१ २ ३।४ ५।६ ७।८ ९ १० ११ १२ १३।१४ १५।१६
व न वा स स्त्री स्त नि त वि घो षः

ल० ल० ग०

१।२ ३ ४ ५।६ ७।८ ९ १० ११ १२ १३।१४ १५।१६
क स्य न चि त्तं र म य ति पुं सः ?॥(ठ)

## विश्लोकः पञ्चमाष्टमौ ॥ ४५ ॥

द्वादशग्रहणं नवमग्रहणञ्च निवृत्तम्। यत्र चतुर्षु पादेषु पञ्चमाष्टमौ लकारौ तिष्ठतः, शेषं यथाप्राप्तं, तन्मात्रासमकं विश्लोको नाम। तत्रोदाहरणम्।—

ल० ल० ग०

१।२ ३।४ ५ ६ ७ ८ ९।१० ११।१२ १३।१४ १५।१६
आ त मु प र हि तं वि श्लो कं

---

कामक्रीडाकृपानन्दजनकव्यापारस्य यः पटहनिनादः ढक्काशब्दः तत्सदृशः, वनवासिनी या स्त्री तस्याः स्तनितविघोषः सशीत्कृध्वनिरिति यावत्, कस्य पुंसः पुरुषस्य चित्तं मानसं न रमयति? न प्रीणयति? अपि तु सर्वेषामेव इति भावः। अत्र अन्वयसमन्वयः सुकरः।

(ठ) मात्रासमकभेदं विश्लोकमाह, विश्लोक इति।—पञ्चमाष्टमौ, लघू इति शेषः। द्वादशग्रहणमिति।—पञ्चमाष्टमौ लघू इति विशेषसूत्रकरणात् द्वादशनवमयोः ग्रहणं निषिद्धमित्यर्थः। अत्राद्ये गणे चत्वारो विकल्पाः, यथा—१ ⏑⏑, २ – – ⏑, ३ ⏑ – –, ४ – – – –। द्वितीये द्वौ, १ – ⏑ –, २ – – – – –। तृतीयेऽपि द्वौ, १ ⏑⏑, २ ⏑ – – 1 मध्यगुर्वन्तगुरुसर्वलघुरूपं भेदत्रयन्तु मात्रासम-चित्रापादकत्वान्न भवति। चतुर्थे गुर्वन्तमेकमेव; १ ⏑⏑, २ ⏑⏑। एतेषां परस्परघाते द्वात्रिंशत् सन्ति पादभेदाः, एतेषां घाते जाता सङ्ख्या इह अत्राः षट्चत्वारिंशत् सहस्राधिकश्च शतानि षट्सप्ततिः। पञ्चतोऽपि १०४८५७६। आतमित्यादि।—हे भ्रातः!

ल० ल० ग०

१।२ ३ ४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६

दु र्न य क र ण का द र्थि त लो कम्।

ल० ल० ग०

१।२ ३।४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६

जा तं म हि त कु ले ऽप्य वि नी तं

ल० ल० ग०

१।२ ३।४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६

मि त्रं प रि ह र सा धु वि गी तम्॥ (ड)

## चित्रा नवमश्च ॥ ४६ ॥

यत्र नवमो लकार एवावतिष्ठते, चकारात् पञ्चमाष्टमौ च, तन्मात्रासमकं चित्रा नाम। तत्रोदाहरणम्।—

---

महितकुले पूजितवंशे, सद्वंशे इत्यर्थः, जातमुत्पन्नमपि गुणरहितं दयादाक्षिण्यादिगुणहीनं, पक्षे—माधुर्य्यादिगुणवर्जितं, तथा दुर्नयकरणेन नीतिविरुद्धकार्य्यसम्पादनेन कदर्थिताः उत्पीड़िताः लोका येन तं, पक्षे—नीतिहीनरचनया क्लेशिता लोका यत्र तम्, अविनीतं विनयविहीनं, पक्षे—उत्कटं, श्रुतिकटु इत्यर्थः, अत एव साधुविगीतं साधुजननिन्दितम्, उभयत्रापि समानं, विश्लोकं विगतयशस्कं, पक्षे—लक्षणच्युतं श्लोकम्, इवेति शेषः, मित्रं बन्धुं परिहर परित्यज, विश्लोकमिव सदोषं गुणहीनं मित्रं सर्वथा परित्यज इत्यर्थः। एवं-लक्षणं छन्दः विश्लोकाख्यं ज्ञेयमित्यपि व्यज्यते।

(ढ) मात्रासमकविशेषं चित्रामाह, चित्रेति।—नवम इत्यत्र ल इति शेषः। अत्र चतुर्णामपि पादानां पञ्चमाष्टमनवमेषु लघुः स्यात् शेषं पूर्ववत् तन्मात्रासमकं चित्रा-नामकं भवेदिति निष्कर्षः। अस्यामाद्ये गणे चत्वारो विकल्पाः; यथा—१ ⏑⏑, २ --⏑, ३ ⏑--, ४ ----। द्वितीये द्वौ; यथा—१ -⏑-, २ ----। तृतीये त्रयः, १ --⏑, २ -⏑-, ३ ----। चतुर्थे द्वौ, १ ⏑⏑, २ --⏑। अस्यामप्यत्र प्रतिपादं भेदसङ्ख्या अष्टाचत्वारिंशत्। अस्यामप्यनुष्ठाने मात्रा सङ्ख्या

ल० ल० ल० ग०

१ २ ३।४ ५ ६ ७ ८ ९ १० ११।१२ १३।१४ १५।१६

य दि वा ञ्छ सि प र प द मा रो ढुं

ल० ल० ल० ग०

१।२ ३।४ ५ ६ ७ ८ ९ १० ११ १२ १३।१४ १५।१६

मै त्रीं प रि ह र स ह व नि ता भिः।

ल० ल० ल० ग०

१।२ ३ ४ ५ ६ ७ ८ ९ १० ११।१२ १३।१४ १५।१६

मु ह्य ति मु नि र पि वि ष या स क्ता-

ल० ल० ल० ग०

१।२ ३।४ ५ ६ ७ ८ ९ १० ११।१२ १३।१४ १५।१६

चि न्ता भ व ति हि म न सो वृ त्तिः॥

नवम इत्यनुवर्त्तमानेऽपि पुनर्नवमग्रहणमुपचित्राप्रतिप्रसवार्थम्। (ढ)

## परयुक्तेनोपचित्रा ॥ ४७ ॥

परयुक्तेन दशमेन सहैकीभूतेन नवमेन उपचित्रा नाम।

---

५१०८४१६। यदीत्यादि।—यदि परपदं मोक्षपदम् आरोढुं प्राप्तुं वाञ्छसि तदा वनिताभिः स्त्रीभिः सह मैत्रीं परिहर परित्यज, विषयासक्तात् विषयेषु रूपादिषु आसक्तेः मुनिः संयतचित्तः मुमुक्षुः योगी अपि मुह्यति मोहमुपैति। कथमित्यत आह, चिन्तेति। —हि यतः मनसः चेतसः वृत्तिः व्यापारः चिन्ता बहुतरूपा भवति। नवम इति।—पूर्वतः नवमाधिकारे सिद्धे पुनरत्र नवमग्रहणम् उपचित्रालक्षणे प्रतिप्रसवार्थं पूर्वसूत्रे नवमनिषेधात् वक्ष्यमाण-परयुक्तेनेति पदस्य दशमार्थप्रतिपादनेन सङ्गतिकरणाय निषिद्धस्य तस्य पुनः प्राप्त्यर्थम्।

(ढ) उपचित्रालक्षणमाह, परयुक्तेनेत्यादि।—परयुक्तेन दशमयुक्तेन, नवमेनेति

पूर्वं लघुनियमेन लक्षणं प्रोक्तम्, इदन्तु गुरुनियमेनोच्यते।
तत्रोदाहरणम्।—

ग० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
य च्चि त्तं गु रु स क्त मु दा रं

ग० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
वि द्या भ्या स म हा व्य स न ञ्च।

ग० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
पृ थ्वी त ख्य गु णै रु प चि ता

ग० ग०

१।२ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
च न्द्र म री चि नि भै र्भ व ती यम् ॥ (ण)

---

शेषः। पूर्वसूत्रे नवमप्रस्तावादिह 'परयुक्तेन' इत्युक्तेः दशमयुक्तेन इत्यर्थो लभ्यते इत्याह, परयुक्तेनेत्यादि।—परेण दशमेन युक्तः नवमः मात्रास्वरूपश्चेत् गुरुरूपेकेन नवमदशम-मात्रा यदि स्यादित्यर्थः, तदा उपचित्रेति नाम मात्रासमकं भवेदित्यभिप्रायः। नवमस्य लघुमात्रतया तु पूर्वोक्तानि लक्षणानि विहितानि, दशमयुक्ततया पुनरिह गुरुमात्रिकेण नवमेन भवितव्यमित्यत आह,—पूर्वमित्यादि। जयदेवस्त्वेकादश-द्वादशादिमात्रास्वपि नियममाह, यथा—"अष्टभ्यो गौ स्यादुपचित्रा" इति; अष्टकलानन्तरं गुरुलघुयुगणा इत्यर्थः। अत्र तृतीयगणे द्वौ विकल्पौ, १ ᴗ ᴗ, २ ᴗ - -। अन्ये विकल्पा मात्रासमकवत्। अन्योऽन्यघाते प्रतिपादं भेदा अष्टाचत्वारिंशत्। अन्योऽन्यघाते सङ्ख्या प्राग्वत्। यदित्यादि।—यस्य चित्तं मानसं गुरुषु सक्तं लग्नं, तत्परमित्यर्थः, उदारं सरलं महच्च, तथा विद्याभ्यासे विद्याधिगमायां महत् अतिशयं व्यसनम् आसक्तिर्यस्य तत् तादृशञ्च भवेत्,

## एभिः पादाकुलकम् ॥ ४८ ॥

एषां पद्यानां मध्ये यैः कैश्चिदपि चतुर्भिः पादैः पादाकुलकं नाम। तत्र मात्रासमकविश्लोकवानवासिकोपचित्राणां पादैरुदाहरणम्।—

गु० गु०

१ २ ३।४ ५।६ ७ ८ ९ १० ११ १२ १३।१४ १५।१६
अ लि वा चा लि त वि क सि त चू ते (मा०)

---

तस्य गगनस्य चन्द्रमरीचिनिभैः चन्द्रकिरणसदृशैरतिधवलैः "यशांसि धवलता" इति कविसमयप्रसिद्धेरिति भावः, गुणैः दयादाक्षिण्यादिभिः इयं पृथ्वी पृथिवी उपचित्रा चित्रं विस्मयमुपगता विस्मयान्विता, चमत्कृता इति यावत्, भवति ; उद्दिष्टलक्षणाक्रान्तं छन्दश्च उपचित्रानाम भवति इत्यपि ध्वन्यते। अत्र चतुर्षु पादेषु मिश्रितनवमद्वादशमात्रातया लक्षणप्रवेशः।

(त) पूर्वोक्तलक्षणलक्षितानां परस्परमिलितानां छन्दसां यैः कैश्चिदपि चतुर्भिः पादैः पादाकुलकाख्यं सङ्करमाह, एभिरित्यादि।—एभिश्चतुर्भिरित्यर्थः। एषामित्यादि।—एषां पूर्वोक्तानां पद्यानां मात्रासमकविश्लोकादीनां पादैः कलितं तथा अनियतवृत्तपादचतुष्केऽपि नियतैकवृत्तलक्षणहीनं परिमाणे च षोडशमात्रपादत्वेन युक्तं यद्वृत्तं तत् पादाकुलकं नाम वृत्तमित्यर्थः। अत्र पद्यानां मात्रासमकादीनां परस्परसङ्करे अनन्ता एव भेदाः। तत्र द्वयोर्द्वयोः सङ्करे चत्वारिंशदधिकं शतं भेदा जायन्ते। तद्यथा— प्रस्तारमार्गेण

| | |
|---|---|
| १२३४ | |
| २३४५ | |

प्रत्येककोष्ठस्थाङ्कद्वयसङ्ख्याङ्कः वृत्तद्वयस्य सङ्करे वक्ष्यमाणोपजातिचतुर्दश चतुर्दश प्रतिकोष्ठं भेदा भवन्ति। एवञ्च प्रथमद्वितीययोः प्रथमतृतीययोः प्रथमचतुर्थयोः प्रथमपञ्चमयोः सङ्करे चत्वारश्चतुर्दशका मिलिताः षट्पञ्चाशत् (५६) भवन्ति ; तथा द्वितीयतृतीय-द्वितीयचतुर्थ-द्वितीयपञ्चमानां सङ्करे द्विचत्वारिंशत् (४२) ; तथा तृतीयचतुर्थ-तृतीयपञ्चमानां सङ्करे अष्टाविंशतिः (२८) ; तथा चतुर्थपञ्चमयोः सङ्करे चतुर्दशेति (१४) ; सर्वेषां मिलने शतमेकं चत्वारिंशच्च (१४०)। एवं त्रयाणां चतुर्णां सङ्करेऽप्यूह्याः। अलीत्यादि।—अलिभिः भ्रमरैः चालितः मुकुलितः विकसितः चूतः यस्मिन्

ल० ल० ग०

१।२ ३।४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६

का ले म द न स मा ग म दू ते। (वि०)

ल० ल० ग०

१।२ ३।४ ५।६ ७।८ ९ १० ११ १२ १३।१४ १५।१६

कृ त्वा का न्तां प रि हृ त सा र्थः (वा०)

ग० ग०

१।२ ३।४ ५ ६ ७।८ ९।१० ११ १२ १३।१४ १५।१६

पा दा कु ल कं धा व ति; पा न्थः॥ (उ०)

तथा विश्लोकोपचित्रा-मात्रासमकोपचित्राणां पादैः पादाकुलकम्। तत्रोदाहरणम्।—

ल० ल० ग०

१।२ ३।४ ५ ६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६

पुं स्को कि ल कृ त शो भ न गी ते (वि०)

---

तस्मिन्, मदनसमागमस्य कामाविर्भावस्य दूते दूतस्वरूपे काले वसन्ते इत्यर्थः, कान्तां दयितां स्मृत्वा विचिन्त्य परिहृतः परित्यक्तः सार्थः सहचरसमूहो येन सः तादृशः पान्थः विरही पादाकुलकं पादैः आकुलकम् आकुलपादं द्रुतपादसञ्चारं यथा तथा इत्यर्थः, धावति गच्छति; वसन्तकालस्य कामोद्दीपकत्वात् कान्तास्मरणेन उत्कण्ठितः द्रुतं स्वदेशं प्रति प्रस्थित इति भावः। अत्र चतुर्षु पादेषु "गन्ता द्विर्वसवः—" (४।४२ पि०) इत्यादिलक्षणात्मिका षोडशमात्रा अन्ते गुरुश्चास्ति, तथा प्रथमपादः नवममात्राया लघुत्वात् मात्रासमकलक्षणात्मकः, द्वितीयः पादः पञ्चमाष्टममात्रयोर्लघुत्वात् विश्लोकलक्षणवान्, तृतीयस्तु पादः नवमद्वादशमात्रयोर्लघुत्वात् वानवासिकालक्षणयुक्तः, तथा चतुर्थः पादः नवमदशममात्रयोरेकत्र गुर्वक्षरेऽवस्थिततयोपचित्रालक्षणसमन्वितः, अतः पादाकुलकत्वमस्येति ध्येयम्। पुंस्कोकिलेत्यादि।—पुंस्कोकिलैः पिकैः कृतं

ग॰ ग॰

१।२ ३ ४ ५ ६ ७।८ ९।१० ।११ १२ १३।१४ १५।१६

द क्षि ण प व न प्रे रि त शी ते। (उ॰)

ल॰ ग॰

१ २ ३ ४ ५।६ ७।८ ९ १० ११।१२ १३।१४ १५।१६

म धु स म ये ऽस्मिन् क्ष त वि श्लो कः (मा॰)

ग॰ ग॰

१।२ ३।४ ५ ६ ७।८ ९।१० ११ १२ १३।१४ १५।१६

पा दा कु ल कं नृ त्य ति लो कः॥ (उ॰)

मात्रासमकस्यैकेन पादेन, द्वाभ्यामुपचित्रायाः, विश्लोकस्यैकेन पादाकुलकम्। तत्रोदाहरणम्।—

ल॰ ग॰

१।२ ३।४ ५।६ ७।८ ९ १० ११।१२ १३।१४ १५।१६

चि त्तं भ्रा म्य त्य न व स्था नं (मा॰)

ग॰ ग॰

१।२ ३।४ ५ ६ ७।८ ९।१० ११ १२ १३।१४ १५।१६

पा दा कु ल क श्लो क स मा नम्। (उ॰)

---

शोभनं शीतं यस्मिन् तादृशे, दक्षिणपवनेन मलयवायुना प्रेरितः दूरीकृतः शीतः यस्मिन् तादृशे, अस्मिन् मधुसमये वसन्तकाले क्षतः विश्लोकः अयशः, कालस्य निन्दा इत्यर्थः, वियुक्तत्वादिति भावः; यद्वा—क्षतः विश्लोकः विरहजन्यपश्लोकः, उत्कण्ठितत्वादिति भावः, येन सः तादृशः लोकः प्रोषितजनः पादाकुलकं यथा तथा नृत्यति। पूर्ववदिहापि गुर्वन्ताः षोडशमात्राः सन्ति, प्रथमः पादः विश्लोकलक्षणवान्, द्वितीयचतुर्थपादौ उपचित्रालक्षणयुतौ, तृतीयश्च मात्रासमकलक्षणात्मकः इति। चित्तमित्यादि।—कस्यचित् विषयविरक्तस्य इयमुक्तिरियम्। न विद्यते अवस्थानम् एकत्र अवस्थितिर्यस्य तत् नियतचञ्चलमित्यर्थः, चित्तं मानसं कर्तृ, पादाकुलकश्लोकसमानं भ्राम्यति नानाविधेषु विषयेषु चलति,

ग० ग०

१।२ ३।४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
का यः क्वा य ति शा म्य ति श क्ति- (उ०)

ल० ल० ग०

१ २ ३ ४ ५ ६ ७ ८ ९।१० ११।१२ १३।१४ १५।१६
स्त द पि न म म प र लो के भ क्तिः॥ (वि०)

यथा पादाकुलकनाम्नः श्लोकस्य पादेष्वस्थिरता तथेत्यर्थः।

उपचित्रापादेनैकेन, वानवासिकापादेन, पुनरुपचित्रा-पादाभ्यां पादाकुलकम्। तत्रोदाहरणम्।—

ग० ग०

१ २ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
प रि त्य क्त स र्व प रि ज न लो कः (उ०)

ल० ल० ग०

१ २ ३ ४ ५।६ ७ ८ ९ १० ११ १२ १३।१४ १५।१६
प्र ति दि न व र्द्धि त गु रु त र शो कः। (वा०)

---

पादाकुलकश्लोकस्य यथा नानाविधच्छन्दोगामित्वम् अनियतत्वं तथा मानसस्यापि इत्यर्थः, तथा कायः देहः क्वायति शब्दायते, वार्द्धक्येन जर्जरत्वात् पदे पदे कार्तध्वनिमिव करोति, शक्तिः सामर्थ्यं श्यायति नश्यति, तदपि तथाऽपि परलोके श्रेष्ठजने तस्मिन् परमेश्वरे इत्यर्थः, मम भक्तिः अनुरागः न, भवति इति शेषः। अत्रापि पूर्ववत् गुर्वन्ताः षोडशमात्रात्मकाः चत्वारः पादाः सन्ति, तथा नवम-चतुर्थः प्रथमः पादः मात्रासमकलक्षणात्मकः, द्वितीयतृतीयौ नवमद्वादशमात्रयो-र्लघ्वात्मकविशिष्टौ उपचित्रालक्षणाक्रान्तौ, चतुर्थश्च पादः विश्लोकलक्षणान्वितः पञ्चमाष्टमलघुमात्रात्मकः। परित्यक्तेत्यादि।—परित्यक्तः परित्यक्तः सर्वः समस्तः परिजनवर्गः परिवारजनः येन सः, प्रतिदिनं वर्द्धितः वृद्धिं गतः गुरुतरः

ग० ग०

१।२ ३ ४ ५।६ ७ ८ ९।१० ११ १२ १३।१४ १५।१६
दुः ख वि व र्द्धि त लो च न वा रिः (७०)

ग० ग०

१।२ ३।४ ५ ६ ७।८ ९।१० ११ १२ १३।१४ १५।१६
पा दा कु ल कं या ति त वा रिः ॥ (७१)(त)

इति मात्रासमकाधिकारः ।

## गीत्यार्य्या लः ॥ ४९ ॥

यत्र पादे द्विर्वसवः षोडश लकारा भवन्ति, सा गीत्यार्य्या नाम जातिः । ल इत्यनुवर्त्तमाने पुनर्ल-ग्रहणं द्विमात्रिक-निवृत्त्यर्थम् । तत्रोदाहरणम् ।—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
म द क ल ख ग कु ल क ल र व मु ख रि णि

---

महान् शोको यस्य सः, तथा दुःखेन विवर्द्धितं लोचनवारि नेत्रजलं यस्य सः, तवारिः तव रिपुः पादाकुलकं पादयोश्चरणयोः आकुलकं यथा तथा याति । इहापि पूर्ववत् षोडशमात्रात्मकाः गुर्वन्ताः चत्वारः पादाः सन्ति । प्रथमतृतीयचतुर्थाः नवमद्वादशमात्रयोरेकत्वाव्यवस्थितिमन्तः उपचित्रापादाः, द्वितीयः नवमद्वादशलघुमात्राविशिष्टो वानवासिकापादो वर्त्तते । एतादृशविभिन्नलक्षणवत्पादात्मकं छन्दः पादाकुलकनामकं भवति इत्यपि व्यज्यते ।

(थ) मात्रासमकं परिसमाप्य साम्प्रतं गीत्यार्य्याभेदाः प्रस्तूयन्ते, गीत्यार्य्येति ।—"गन्ता द्विर्वसवः—" (४।४३ पि०) इत्यतो द्विर्वसवः इत्यधिकृत्य ल इत्यनेनान्वेतव्यम् ; ततश्च यत्र प्रतिपादं षोडश लकाराः स्युः सा गीत्यार्य्यानाम जातिः । ननु पूर्वतो यथा द्विर्वसव इत्यस्याधिकारः कृतः, तथा लकारस्यापि अधिकारः क्रियतां, किं ल इत्यनेन ? इत्याह, ल इत्यादि ।—पुनर्ल-ग्रहणं द्विमात्रिकनिवृत्त्यर्थं पूर्वत्र द्विमात्रिका अपि लकारा आसन्, इह तु केवलमेकमात्रिकत्वप्रतिपादनरूपविशेष-लकारप्रतिपत्त्यर्थमित्यभिप्रायः, एतेन चतुर्ष्वपि पादेषु लघ्वात्मकषोडशमात्राभिरुप-निबद्धा जातिः गीत्यार्य्याभिधेया इति लक्षणम् । वृत्तरत्नाकरे अचलधृतिरिति नामान्तरमस्या विज्ञेयम् । मदेत्यादि ।—मदेन मत्ततया कलाः मधुरा-

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
वि क सि त स र सि ज प रि म ल सु र भि णि।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
गि रि व र प रि स र स र सि म ह ति ख लु

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
र ति र ति श य मि ह म म हृ दि वि ल स ति॥

सर्व्वलघुच्छन्दसि गीत्यार्य्याशब्दस्य प्रवेशयितुमशक्यत्वात् तन्नाम नोक्तम्। (थ)

## शिखा विपर्य्यस्तार्द्धा ॥ ५० ॥

सैव गीत्यार्य्या विपर्य्यस्तार्द्धा यदा भवति तदा शिखाख्यां लभते। अयमर्थ:,—यत्रार्द्धं सर्व्वलघु भवति, अर्द्धञ्च सर्व्वगुर्व्विति। (द)

एवं तस्या एव विन्यासभेदेन संज्ञाद्वयमाह—

## ल: पूर्व्वश्चेज्ज्योति: ॥ ५१ ॥

पूर्व्वश्चेदर्द्धभाग: सर्व्वलघुर्द्वात्रिंशल्लकारो भवति, उत्तरश्च

---

स्फुटध्वनय: ये खगकुला: पक्षिसमूहा: तेषां कलरवेण कलकलध्वनिना मुखरिणि शब्दायमाने, विकसितानां प्रस्फुटितानां सरसिजानां पद्मानां परिमलेन गन्धेन सुरभिणि सुगन्धिनि, महति विशाले, इह गिरिवरस्य पर्वतश्रेष्ठस्य परिसरे पर्य्यन्तभुवि, प्रान्तदेशे इत्यर्थ:, यत् सर: सरोवरं तस्मिन् रति: प्रीति: मम हृदि मम मानसे अतिशयं यथा स्यात् तथा विलसति। अत्र चतुर्षु पादेषु षोडशमात्रा लघुरूपेणैवावतिष्ठन्ते, अत इयं गीत्यार्य्या।

(द) गीत्यार्य्याभेदं शिखामाह, शिखेति।—विपर्य्यस्तं विपरीतम् अर्द्धं यस्या: सा विपर्य्यस्तार्द्धा, पूर्व्वलक्षणलक्षिता गीत्यार्य्या यदि विपरीतार्द्धा स्यात्तदा शिखानामच्छन्दो भवेत्। वैपरीत्यमत्र पूर्व्वोत्तरार्द्धयो: गुरुलघुमूलकमेव। वैपरीत्यमेव दर्शयति,—यत्रेति।

(ध) तत्र वैपरीत्यं कीदृशं स्यादित्यपेक्षायामाह,—एकमिति। गुरुलघु-

सर्वगुरुः षोडशगकारस्तदा ज्योतिर्नाम शिखा भवति। तत्रो-दाहरणम्।—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
य दि सु ख म नु प म म प र म भि ल ष सि
१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२
प रि ह र यु व ति षु र ति म ति श य मि ह।

१ २ ३ ४ ५ ६ ७ ८
धा म ज्यो ति र्यो गा भ्या सात्
९ १० ११ १२ १३ १४ १५ १६
दृ ष्ट्वा दुः ख च्छे दं कु र्याः॥ (ग)

गश्चेत् सौम्या॥ ५२॥

तस्या एव शिखायाः पूर्वोऽर्द्धभागः सर्वगुरुः षोडशगकार-श्चेत् भवति, उत्तरश्च द्वात्रिंशल्लकार एव, तदा सौम्या नाम शिखा भवति। तत्रोदाहरणम्।—

---

विन्यासभेदेन ज्योतिःसंज्ञिकां शिखामाह, ल इति।—पूर्वः पूर्वार्द्धः। यदीत्यादि।—इह अस्मिन् संसारे यदि अपरम् अनुत्तमम् अनुपमम् अतुलनीयं नित्यमित्यर्थः, सुखम् अभिलषसि वाञ्छसि, तदा युवतिषु रतिम् अनुरागम् अतिशयम् अत्यन्तं यथा तथा परिहर परित्यज। योगस्य चित्तवृत्तिनिरोधरूपस्य अभ्यासात् पुनः पुनः आवृत्तेः आत्मनः परमात्मनः ज्योतिः दृष्ट्वा अवलोक्य दुःखस्य त्रिविधक्लेशस्य छेदम् अत्यन्तनिवृत्तिं कुर्य्याः। अत्र पूर्वार्द्धस्य सर्वलघुत्वात् परार्द्धस्य च सर्वगुरुत्वात् ज्योतिर्नाम शिखा।

(ग) पूर्ववद्विन्यासभेदेन सौम्यानामशिखामाह, ग इति।—अत्र पूर्वः इत्यनुवर्त्तते। अनङ्गक्रीडेति नामान्तरमस्या वृत्तरत्नाकरे। प्राकृतपिङ्गलादौ पुन-रन्यविधमेव शिखालक्षणम् उक्तं, यत्र प्रथमे दले अष्टाविंशतिमात्राः द्वितीये द्वात्रिंशन्मात्राः उभयदलान्ते च लघुः सा शिखानाम छन्दः। तथा च प्राकृतपिङ्गले— "मत्त अठाइस पढमे बीए बत्तीस मत्ताइ। चच पच षंते लहुआ मुद्धा सिक्खा विआणेहु॥" (१।१९७) "मात्रा अष्टाविंशतिः प्रथमे द्वितीये द्वात्रिंशन्मात्राः।

१ २ ३ ४ ५ ६ ७ ८
सौ म्यां दृ ष्टिं दे हि को पात्
९ १० ११ १२ १३ १४ १५ १६
दे हे ऽस्मा कं मा नं मु क्त्वा।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
श श ध र मु खि! सु ख मु प न य म म हृ दि
१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१ ३२
म न सि ज क ज म प ह र ल घु त र मि ह॥ (न)

चूलिकैकोनत्रिंशदेकत्रिंशदन्ते ग्॥ ५२॥

अर्द्धग्रहणमनुवर्त्तते। यत्र प्रथमेऽर्द्धे एकोनत्रिंशल्लकारा भवन्ति, द्वितीये चार्द्धे एकत्रिंशत्, तयोरन्ते द्वौ लकारावुन्मूल्य प्रत्येकमेको गुरुः क्रियते, तत् चूलिका नाम छन्दः। अन्ते गिति विशेषोपादानसामर्थ्यादन्येषां लघुत्वमुक्तं भवति, तेनाद्ये सप्तविंशतिर्लघवोऽन्ते गुरुरेको भवति। द्वितीयेऽप्येकोनत्रिंशल्लघवोऽन्ते गुरुश्चैकः। तत्रोदाहरणम्।—

---

पदं पदेऽन्ते लघुका गुर्वीं शिखां विजानीत॥" इति मम। एवं वाणीभूषणेऽपि, यथा—"द्विजवरमिह हि रसगुणितमुपनयतु तदनु जगणमवधेहि। खरगुणितमन्तरदलमपि कुरुवर फणिपतिमुखभणितरुचिरशिखेह॥" (१।८९) इति। तत्रैवोदाहरणं यथा—"नकुलवनमृदुपवनरयविहतविरहिमतसुरभिरेति। दयिततमविरहि मम हृदयमतिपतति सखि! यदि हतविधुरयमुदेति॥" (१।९०) इति। सौम्यामिति।—हे शशधरमुखि! चन्द्रमुखि! मानं मुक्त्वा कोपं त्यक्त्वा अस्माकं देहे शरीरे कोपात् प्रणयात् सौम्यां मनोज्ञां दृष्टिं देहि अर्पय। इह मम हृदि मम मनसि मनसिजरुजं कामसन्तापं लघुतरं शीघ्रं परिहर दूरीकुरु, सुखम् उपनय देहि; "सुखम्" इत्यत्र "मुखम्" इति पाठे—इह अस्मिन् मयि, मम समीपे इत्यर्थः, मुखमुपनय समानय। अत्र पूर्वार्द्धे सर्वगुरुत्वात् परार्द्धे च सर्वलघुत्वात् सौम्या नाम शिखेति।

(प) चूलिकानामच्छन्दोविशेषमाह, चूलिकेति।—एकोनत्रिंशदित्यत्र पूर्वार्द्धे, एकत्रिंशदित्यत्र च परार्द्धे इति शेषः। अर्द्धग्रहणमिति।—"शिखा विपर्य्यस्तार्द्धा"

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
र ति क र म ल य म रु ति शु चि श श ध र

ग०

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८।२९
ह त हि म म ह सि म धु स म ये।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
प्र व स सि प थि क ह त क! न नु क थ मि ह

ग०

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३०।३१
प रि हृ त यु व ति र ति च प ल त या॥

अन्ये पुनरन्यथैवेदं सूत्रमधीयते,—"चूलिकार्द्धमेकोनत्रिंशदन्ते ग्" इति। तेषामुभयोश्चाप्यर्द्धयोरेकोनत्रिंशन्मात्रा गुर्वन्ता भवन्ति। तत्रोदाहरणम्।—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
घ न प रि म ल मि ल द लि कु ल मु ख रि त-

(४।५० पि०) इत्यतः अर्द्धशब्दः अनुवर्तते। नतिरुचिरेति संज्ञान्तरमस्या वृत्तरत्नाकरे। वाणीभूषणादयः पुनरिमां चुलियालां मन्यन्ते, यथा—"दोहादलशेषे यदा पञ्चकलो विमलो हि विराजति। फणिपतिनृपतिः किल तदा चुलियालामिह तामुपगायति॥" (१।९३) इति। प्राकृतपिङ्गलेऽपि चुलियाला इत्येव नाम, यथा—"दोहासंखा संठवहु उप्परि पञ्चइ मत्त। अट्ठइसप्पइ वीस दुइ चुलियाला उक्किट्ठ॥" (१।१३१) संस्कृतं—"दोहासङ्ख्यां संस्थापयन्तु उपरि पञ्च मात्राः। अष्टादशोपरि विंशतिद्वयं चुलियाला ख्याता॥" इति। सर्वेषामेव मते अष्टापञ्चाशन्मात्रात्मकत्वमस्या अनुपमम्। रतिरिति।—रतिकरः प्रीतिकरः मलयमरुत् दक्षिणपवनः यत्र तस्मिन्, शुचिशशधरे विमलचन्द्रे, हतहिममहसि विगतशिशिरप्रभावे, मधुसमये वसन्तकाले, हे पथिकहतक! दुर्भाग्यपथिक! परिहृतयुवतिः सन् इह अस्मिन् ननु प्रश्ने अतिचपलतया अत्यन्तचञ्चलतया कथं प्रवससि? प्रवासे तिष्ठसि?। अत्र पूर्वार्द्धशेषाक्षरस्य परार्द्धशेषाक्षरस्य

ग०

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८,२९
नि खि ल क म ल कु व ल य व ने।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५
ज न य ति म म स खि श शि मु खि! मु द म ति-

ग०

१६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८।२९
श य मि ह म म म धु र य म धु ना॥

अर्द्धग्रहणादत्र पादव्यवस्था नास्ति। (फ)

इदानीं गणमात्राच्छन्दसां गुरुलघुसङ्ख्यापरिज्ञानार्थमिदमाह—

## सा ग् येन न समा लां ग्ल इति ॥ ५४ ॥

सा गुरुसङ्ख्या वेदितव्या, येन यावद्भिरक्षरैः लां लघूनां मात्राणां समाः समसङ्ख्या ग्लो न स्युरपि तु न्यूनसङ्ख्या एव। ग्ल इत्यक्षराण्यभिधीयन्ते, तेषां गुरुलघुस्वरूपत्वात्। अयमभि-

---

च गुरुत्वात् तथा अन्येषां लघुत्वात् चूलिकानाम छन्दः। अत्र मतान्तरप्रदर्शनार्थमाह, अन्येरित्यादि।—तेषामित्यत्र मते इति शेषः। जनेत्यादि।—हे शशिमुखि! हे चन्द्राननि! इह अस्मिन् वनपरिसरेण सान्द्रगन्धेन मिलन्तः समागच्छन्तः ये अलि-कुलाः भ्रमरवृन्दाः तैः मुखरितं शब्दितं निखिलं समस्तं कमलानां पद्मानां कुवलयानां नीलोत्पलानाञ्च यत् वनं तस्मिन्; "कुवलयवने" इत्यत्र "मलयपवने" इति पाठान्तरम्। अयं समागतः इत्यर्थः, मधुः वसन्तः अधुना साम्प्रतं मम मनसि चेतसि अतिशयं प्रभूतं मुदं हर्षं जनयति। अत्र द्वात्रयी गुर्वन्ता एकोनत्रिंशन्मात्रा इति। अत्र पादव्यवस्थाभावं दर्शयति,—अर्द्धग्रहणादिति।

(फ) यदि मात्रावर्णयोः सङ्ख्या विज्ञाता गुरुलघुसङ्ख्या च न ज्ञाता, तदा सा कथं ज्ञेया? इत्यत आह, सेति।—तत्पदेनात्र सङ्ख्या अभिप्रेता, तथाच वेदितव्या इत्यनुषङ्गिकया अन्वयः। यत्पदेन च अक्षरसङ्ख्याभिप्रेतमित्यतः इमौ वक्ष्यति,—

[illegible]र्थः,—आर्य्यादिषु शास्त्रे यावत्यो मात्रा उपदिष्टाः तावन्त्यक्षराणि यया सङ्ख्यया न पूर्य्यन्ते, सा तत्र गुरुसङ्ख्या वेदितव्या, अवशिष्टा लघुसङ्ख्या। तत्रायमुपयोगः,—यदा कदाचित् पृच्छति, चत्वारिंशदक्षरायामार्य्यायां कति गुरवः सम्पद्यन्ते, कति वा लघवः? इति; तदा सप्तपञ्चाशन्मात्रोपदिष्टायामार्य्यायां मात्रासङ्ख्यायाश्चत्वारिंशदक्षरसङ्ख्यामपनयेत्, तत्र ये अवशिष्यन्ते तान् गुरूनुपदिशेत्। ते च सप्तदशैव। शेषांस्तु त्रयोविंशतिलघूनुपदिशेत्। तद्यथा।—

१ २ ३ ४ ५।६ ७।८ ९।१० ११।१२
स्त न यु ग म श्रु स्ना तं
१ २ ३ ४ ५ ६ ७ ८

१३ १४।१५.१६ १७ १८ १९।२० २१ २२ २३ २४ २५।२६ २७।२८ २९।३०
स मी प त र व र्त्ति हृ द य शो का ग्नेः।
९ १० ११ १२ १३ १४ १५ १६ १७ १८ १९ २० २१

यावद्भिरिति। न्तः इति वर्णसूचको निर्देशः। ततश्चायमर्थः,—आर्य्यादिषु गणमात्रावृत्तेषु गुरुलघुरूपवर्णसङ्ख्यापरिज्ञानाय यावद्भिः वर्णैः लघुमात्रासमसङ्ख्याः भवेयुः तावत्सङ्ख्यका गुरवः शिष्टाश्च लघवः ज्ञेयाः। इति-शब्दोऽत्र अध्यायसमाप्तिसूचकः। अथ ग्रन्थकर्त्तुरभिप्रायं स्पष्टतः वक्तुमाह, तत्रायमित्यादि।—आर्य्यायां कति गुरवः कति वा लघवः सन्ति यदि कश्चित् पृच्छति तदा तन्निर्णयाय प्रथमतः आर्य्यामभिलिख्य मात्रासङ्ख्यां गणयेत्, ततश्चाक्षराणि गणयित्वा मात्राङ्कविन्यासाधः अक्षराङ्कपिण्डं स्थापयेत्, मात्रासङ्ख्यातोऽक्षरसङ्ख्याऽपनयने ये अङ्का अवशिष्यन्ते तावत्सङ्ख्यका गुरवः ज्ञेयाः। पुनश्चाक्षरसङ्ख्यातोऽपि तदवशिष्टगुरुसङ्ख्यामपनयेत्, तत्र ये अङ्का अवशिष्यन्ते तावत्सङ्ख्यकाश्च लघवो भवन्ति इति निष्कर्षः। अयमत्र साधनक्रमः,—यथा सप्तपञ्चाशन्मात्रायां चत्वारिंशदक्षरायामस्यामार्य्यायां मात्रासङ्ख्यातोऽक्षरसङ्ख्यायां वियुक्तायां सप्तदशाङ्कोऽवशिष्यते, अतः सप्तदश गुरवोऽत्र प्राप्यन्ते। पुनश्चत्वारिंशदक्षरसङ्ख्यातः सप्तदशगुरुसङ्ख्यायां वियुक्तायां त्रयोविंशत्यङ्कोऽवशिष्यते, अतस्तावन्तः लघवः इति। अङ्कतः तत् प्रदर्श्यते यथा—आर्य्यामात्रासङ्ख्याङ्कः ५७ तदक्षरसङ्ख्याङ्कः ४० तद्गुरुसङ्ख्याङ्कः १७। अक्षर-

३१ ३२ ३३ ३४ ३५।३६ ३७।३८ ३९।४० ४१।४२
च र ति वि मु क्ता हा रं
२२ २३ २४ २५ २६ २७ २८ २९

४३ ४४ ४५ ४६ ४७ ४८ ४९।५० ५१ ५२।५३ ५४।५५ ५६।५७ मात्राङ्काः।
व्र त मि व भ व तो रि पु स्त्री णाम् ॥ (फ)
३० ३१ ३२ ३३ ३४ ३५ ३६ ३७ ३८ ३९ ४० अक्षराङ्काः।

इति भट्टहलायुधकृतायां छन्दोवृत्तौ चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमोऽध्यायः ।

### वृत्तम् ॥ १ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः। यदित ऊर्द्धमनुक्रमिष्यामस्तद्वृत्तं वेदितव्यम्। तेन प्राक्तनं लौकिकं छन्दोजातं जाति-

---

सङ्ख्यात्मकः हार्य्याङ्कः ४० गुरुसङ्ख्यात्मकः हारकाङ्कः १७ लघुसङ्ख्यात्मकः लब्धाङ्कः २३। एतत्प्रक्रियया आर्य्यावैतालीयादिमात्राच्छन्दसां गुरुलघुपरिज्ञानं जायते।

स्तनयुगमित्यादि।— श्लोकोऽयं कादम्बर्य्याः। भवतः रिपुस्त्रीणां अनुदिनं स्तनयुगं हृदयशोकाग्नेः समीपतरवर्त्ति मानसे यः शोकः स एवाग्निः तस्य सन्निधाने अवस्थितं, पक्षे—व्रतादौ वह्निसमीपस्थितिः प्रसिद्धा, तथा अश्रुभिः नेत्रजलैः स्नातम् अभिषिक्तम्, अन्यत्र—स्नानपूतमित्यर्थः, तथा वि विगतः मुक्ताहारः मौक्तिककण्ठालङ्कारः यस्मात् तत् तादृशं, पक्षे—परिहृताहारञ्च, अतः व्रतं चरति इव। "वागर्थाविव सम्पृक्तौ" इत्यत्रापि चतुर्दशमात्रासु अष्टरूपां वर्णसङ्ख्यामपनीय अवशिष्टाः षड्गुरवः वर्णसङ्ख्याः, पूरकौ च द्वौ लघू इति।

इति श्रीमज्जीवानन्दविद्यासागरकृतायां पिङ्गलच्छन्दःसूत्रे हलायुधवृत्तौ सुखबोधिन्यां चतुर्थोऽध्यायः।

---

(क) पूर्वस्मिन्नध्याये लौकिके छन्दसि मात्रामात्रात्मकजातिच्छन्दोलक्षणं परिसमाप्य साम्प्रतं लघुगुर्व्वक्षरसङ्ख्यात्मकच्छन्दोलक्षणं विधातुमुपक्रमते, वृत्तमिति। —अयं वृत्ताधिकारः आशास्त्रपरिसमाप्तेः एतद्ग्रन्थसमाप्तिपर्य्यन्तम्। इतः ऊर्द्धम्

रित्युच्यते। इत उत्तरस्य वृत्तम्। तथा चोक्तं—"पद्यं चतुष्पदं तच्च वृत्तं जातिरिति द्विधा"। गायत्र्यादौ छन्दसि वर्त्तते इति वृत्तम्; तच्च स्थिरगुरुलघ्वक्षरविन्यासमिष्यते। पादेन संयोगात् पद्यम्। यथा आर्य्यादिच्छन्दःस्वपि पादव्यवस्था नास्तीति पादौ संयुक्तौ, वृत्ते पुनः पृथक् भवत इत्यर्थः, संयोगाभावात्। तथा चोक्तम्—"एकदेशस्थिता जातिर्वृत्तं गुरुलघुस्थितम्" इति। (क)

## सममर्द्धसमं विषमञ्च ॥ २ ॥

समसर्वावयवत्वात् समम्। यस्य चत्वारः पादा एकलक्षणयुक्तास्तत् समं वृत्तम्। शेषञ्च संज्ञानुरूपमेव। तत्रार्द्धे

---

अतःपरं यत् अनुक्रमिष्यामः कथयिष्यामः तत् सर्वं वृत्तं वेदितव्यं वृत्तनाम्ना ज्ञेयम्। तेन हेतुना प्राक्तनं पूर्वोक्तं लौकिकं छन्दोगातं जातिः, एतदनन्तरोक्तञ्च वृत्तमिति उच्यते अभिधीयते। छन्दसो द्विविधत्वं प्रमाणयितुं महाजनोक्तिं दर्शयति,—पद्यमित्यादि। वृत्तशब्दस्य व्युत्पत्त्यर्थं दर्शयति, गायत्र्यादाविति।—वृत-धातोः क्त-प्रत्ययेन सिद्धमिदं पदम्। तच्चेति।—तच्च वृत्तं स्थिराः नियताः गुरूणां लघूनाञ्चाक्षराणां विन्यासा यत्र तत् तादृशम्। पद्यशब्दस्य व्युत्पत्त्यर्थमाह, पादेनेति।—पादेन संयोगात् पादसम्बन्धात् पद्यमिति नामान्तरं भजते इत्यर्थः, वृत्तमिति शेषः। वृत्तावस्यां "यथा" इत्यारभ्य "संयोगाभावात्" इत्यन्तः ग्रन्थः बहुषु पुस्तकेषु दृश्यमानोऽपि प्रस्तुतानुपयोगित्वादसङ्गतार्थत्वाच्च न मनोरमतया प्रतिभाति, भाति च केनचित् प्रक्षिप्त इति सुधीभिर्विभावनीयम्। जातिवृत्तयोः पार्थक्यं दर्शयितुं प्रमाणमुपन्यस्यति, तथा चेति।—जातिः एकदेशः अक्षरैकदेशः मात्रास्वरूपः तत्र स्थिता युक्ता, जातिः मात्रात्मिका इत्यर्थः, गुरुलघुस्थितं गुरुलघुयुक्तं छन्दः वृत्तं वृत्तनाम्ना ख्यातम् इत्यर्थः। "स्थिता" इत्यत्र "स्थिरा" तथा "स्थितम्" इत्यत्र च "स्थिरम्" इति पाठे—एकदेशः मात्रा स्थिरः लक्षणघटको यस्याः तादृशी मात्राघटितलक्षणा जातिरित्यर्थः। तथा चोक्तं—"मात्राभिर्गणना यत्र सा जातिरिति कथ्यते" इति। तथा गुरुलघुस्थिरं गुरुश्च लघुश्च तौ स्थिरौ लक्षणघटकौ यस्य तत्, गुरुलघुवर्णघटितलक्षणं वृत्तमित्यर्थः।

(ख) वृत्तस्य सामान्यलक्षणमभिधाय सम्प्रति समार्द्धसम-विषमभेदेन तस्य त्रैविध्यं दर्शयति,—सममित्यादि। समादीनां व्युत्पत्तिप्रदर्शनपुरःसरं लक्षणार्थमाह; समेत्यादि।—समानपादचतुष्टयत्वात् समनामकमित्यभिप्रायः। शेषम् अर्द्धसमं

समे यत्र तदर्द्धसमम्। सर्वावयवेभ्योऽर्द्धाभ्याञ्च विगतं समं यत्र तद्विषमम्। एवं त्रिप्रकारमपि वृत्तजातमुक्तम्। (ख)

समं तावत्कृत्वःकृतमर्द्धसमम् ॥ २ ॥

सममिति समवृत्तसङ्ख्योच्यते। तयैव गुणितं तावत्कृत्वःकृतमुच्यते। एतदुक्तं भवति—समवृत्तसङ्ख्यागुणिते समवृत्तसङ्ख्यायाः पिण्डे या सङ्ख्या निष्पद्यते, तावत्सङ्ख्यमर्द्धसमं वेदितव्यम्। तत्र गायत्रे छन्दसि समवृत्तसङ्ख्या चतुःषष्टिः अष्टमाध्यायसिद्धा, तस्यां चतुःषष्टिसङ्ख्यागुणितायामर्द्धसमवृत्त-

विषमञ्चेत्यर्थः। वृत्तरत्नाकरेऽपि यथोक्तम्,—"अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः। तच्छन्दःशास्त्रतत्त्वज्ञाः समवृत्तं प्रचक्षते॥ प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत्। द्वितीयस्तुर्यवद्वृत्तं तदर्द्धसममुच्यते॥ यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम्। तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः॥" इति। तत्र समं तनुमध्यादि, अर्द्धसमं द्रुतमध्यादि, विषमं पदचतुरूर्ध्वादि; तत् सर्वमग्रे स्फुटीभविष्यति।

(ग) त्रिविधेषु तेषु समवृत्तसङ्ख्या तत्तदधिकारे सङ्ख्याङ्कैः प्रदर्शयिष्यते, अग्रे तावत् अर्द्धसमवृत्तसङ्ख्याज्ञानायाह, सममित्यादि।—समं समवृत्तसङ्ख्याङ्कं तावत्कृत्वःकृतं तत्परिमिताङ्केन गुणितं "सङ्ख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्" (५।४।१७ पा०) इत्यनेन तावत्-शब्दात् कृत्वसुच्-प्रत्ययेन सिद्धमिदम्। क्रियाऽभ्यावृत्तिः गुणनम्; ततश्च समवृत्तसङ्ख्याङ्के समवृत्तसङ्ख्याङ्केन गुणिते या सङ्ख्या भवेत् सा "समसमार्द्ध—" (५।५ पि०) इति वक्ष्यमाणसूत्रानुसारेण समोपचितार्द्धसमवृत्तस्य सङ्ख्या इति बोध्यः। किञ्च "राश्यूनम्" (५।६ पि०) इति वक्ष्यमाणसूत्रेण सहास्य सम्बन्धात् राशिशब्दस्य च मूलराश्यर्थकत्वात् गुणितसमसङ्ख्याङ्कात् मूलराशिभूताङ्के न्यूनीकृते यदङ्कम् अवशिष्टं तावत्सङ्ख्यकं शुद्धार्द्धसमवृत्तं भवेत्। इतौ तु यदङ्कं प्रदर्शितं तत् राश्यूनम् इत्यस्य विषयं परिहृत्य समोपचितानुसारेण प्रदर्शितम्। अर्द्धसमस्य नियममभिधाय दृष्टान्तेन द्रढयति, तत्रेत्यादि।—चतुर्विंशत्यक्षरपरिमित-गायत्रीच्छन्दसः चतुष्पादविभागदशायां षडेव भवन्ति पादाक्षराणि, प्रस्तारनियमेन षडक्षरप्रस्तारे नियमाद्वै समसङ्ख्याः चतुःषष्टिरेव भवेत्। प्रस्तारनियमस्तु अष्टमाध्याये "मिश्रौ" (८।२८ पि०) इत्यादि सूत्रचतुष्टयेन निरूपितः इत्यत उक्तमष्टमाध्यायसिद्धेति। सङ्क्षेपतोऽपि च अवगन्तुं शक्यते, यथा—षडक्षरपादे गायत्रीच्छन्दसि

सङ्ख्या सम्पद्यते—चत्वारि सहस्राणि षण्णवतिश्च। षड्गतोऽपि ४०९६। (ग)

प्रस्तारे क्रियमाणे गुर्वक्षरबोधिका: गजदन्तायमानवत् वक्रवक्ररेखा: प्रथमपङ्क्तौ स्थापनीया:। तस्याश्च प्रथमगुरोरधस्तात् द्वितीयपङ्क्तौ लघुं न्यस्य यथोपरि गुरव: तथाऽध: स्थापयेत्। यत्रोपरि गुरुस्तत्राधस्तादपि गुरु:, यत्र उपरि लघुस्तत्राधस्तादपि लघुरिति भाव:। यावत् सर्वलघुपङ्क्तिर्भवेत् तावदेव अमुं विधिं पुन: पुन: कुर्य्यात्। द्वितीयपङ्क्तौ प्रथमपङ्क्तिस्थादिगुरोरधस्ताल्लघौ लिखिते तृतीयपङ्क्तौ द्वितीयपङ्क्तिस्थद्वितीयगुरोरध: लघुं न्यसेत्। द्वितीयपङ्क्तिस्थप्रथमगुरोरधस्तात् किं देयम् इति प्रश्ने न्यूनस्थाने सर्वत्रैव गुरुमेव दद्यात्। एवं-क्रमेण विन्यासात् चतु:षष्टि-कोष्ठाभि: यावत् सर्वलघुका पङ्क्तिर्भवेत्, तावदेव अमुं विधिं कुर्य्यात्। तथा चोक्तं—"पादं सर्वगुरुं लिखेत् मुखगुरोश्चाधो लघुं न्यस्य च चाग्रं मूलगुरो: पुनर्लघुमधो शेषं पुन: पूर्ववत्। ऊने न्यस्य गुरूनशेषलघुकं पादश्च यावत् पुन: कार्य्योऽयं विधिरित्यचोक्तपदमू नारायण: प्रस्तुतिम्॥" इति। तेन च गायत्रीच्छन्दसि समवृत्तसङ्ख्या चतु:षष्टिरिति ज्ञायते। षडक्षरगायत्रीच्छन्दसि प्रस्तारसाधनक्रम: यथा,—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १। | ∪∪∪∪∪∪ | २। | -∪∪∪∪∪ | ३। | ∪-∪∪∪∪ | ४। | --∪∪∪∪ |
| ५। | ∪∪-∪∪∪ | ६। | -∪-∪∪∪ | ७। | ∪--∪∪∪ | ८। | ---∪∪∪ |
| ९। | ∪∪∪-∪∪ | १०। | -∪∪-∪∪ | ११। | ∪-∪-∪∪ | १२। | --∪-∪∪ |
| १३। | ∪∪--∪∪ | १४। | -∪--∪∪ | १५। | ∪---∪∪ | १६। | ----∪∪ |
| १७। | ∪∪∪∪-∪ | १८। | -∪∪∪-∪ | १९। | ∪-∪∪-∪ | २०। | ∪∪-∪-∪ |
| २१। | -∪-∪-∪ | २२। | ∪--∪-∪ | २३। | ---∪-∪ | २४। | ∪∪∪--∪ |
| २५। | -∪∪--∪ | २६। | ∪-∪--∪ | २७। | --∪--∪ | २८। | ∪∪---∪ |
| २९। | -∪---∪ | ३०। | ∪----∪ | ३१। | -----∪ | ३२। | ∪∪∪∪∪- |
| ३३। | -∪∪∪∪- | ३४। | ∪-∪∪∪- | ३५। | --∪∪∪- | ३६। | ∪∪-∪∪- |
| ३७। | -∪-∪∪- | ३८। | ∪--∪∪- | ३९। | ---∪∪- | ४०। | ∪∪∪-∪- |
| ४१। | -∪∪-∪- | ४२। | ∪-∪-∪- | ४३। | --∪-∪- | ४४। | ∪∪--∪- |
| ४५। | -∪--∪- | ४६। | ∪---∪- | ४७। | ----∪- | ४८। | ∪∪∪∪-- |
| ४९। | -∪∪∪-- | ५०। | ∪-∪∪-- | ५१। | --∪∪-- | ५२। | ∪∪-∪-- |
| ५३। | -∪-∪-- | ५४। | ∪--∪-- | ५५। | ---∪-- | ५६। | -∪---- |
| ५७। | ∪-∪--- | ५८। | -∪∪--- | ५९। | ∪-∪--- | ६०। | --∪--- |

## विषमञ्च ॥ ४ ॥

अर्द्धसमं तावत्कृत्वःकृतं विषमं भवति। एतदुक्तं भवति—अर्द्धसमवृत्तसङ्ख्या अर्द्धसमवृत्तसङ्ख्ययैव गुणिता विषमवृत्तसङ्ख्या सम्पद्यते—एका कोटिः सप्तषष्टिर्लक्षाणि सप्तसप्ततिसहस्राणि द्वे शते षोडशोत्तरे। अङ्कतोऽपि १,६७,७७,२,१६। (च)

---

६१। ⏑⏑---- ६२। -⏑--- ६३। ⏑----- ६४। ------।
एवञ्च षडक्षरप्रस्तारे समसङ्ख्याम् (६४) तेनैव (६४) चतुःषष्टिसङ्ख्याङ्केन गुणितं कुर्य्यात्, ततश्च (४०९६) षण्णवत्यधिकचतुःसहस्राणि भवन्ति, एतास्तु समोपचितार्द्धसमवृत्तस्य सङ्ख्या ज्ञेयाः, शुद्धार्द्धसमवृत्तस्य तु ततः चतुःषष्ट्यङ्कं न्यूनं विधाय अवशिष्टाः (४०३२) द्वात्रिंशदधिकचतुःसहस्राणि भवन्ति। अङ्कतोऽपि प्रदर्श्यते यथा—६४ × ६४ = ४०९६—६४ = ४०३२। एवं पञ्चाक्षरप्रस्तारेऽपि (३२) द्वात्रिंशत् समाङ्कं तेनैव (३२) गुणितं समोपचितार्द्धसमसङ्ख्या (१०२४) चतुर्विंशत्यधिकैकसहस्रं भवेत्; ततोऽपि (३२) द्वात्रिंशत्परिमिताङ्केऽपनीतेऽवशिष्टाः (९९२) द्विनवत्यधिकनवशतमिता भवन्ति शुद्धार्द्धसमसङ्ख्याः। एवंरीत्या एकाक्षरादिष्वपि समोपचितार्द्धसमसङ्ख्या शुद्धार्द्धसमसङ्ख्या च स्वयमेव ऊहनीया।

(च) एवमर्द्धसमसङ्ख्यामभिधाय विषमसङ्ख्यापरिज्ञानार्थमाह, विषमञ्चेति।—चकारेण पूर्वसूत्रात् तावत्कृत्वःकृतं तथा "सममर्द्धसमं विषमञ्च" (५।२ पि०) इति सूत्रात् अर्द्धसममित्यनुवर्त्तते। एतदेवाह वृत्तिकारः,—अर्द्धेति। पूर्ववदत्रापि "समसमार्द्ध—" तथा "राश्यूनम्" इत्यादिवक्ष्यमाणसूत्रविषयः स्मरणीयः; ततश्च प्रस्तारनियमेन अर्द्धसमवृत्तसङ्ख्यायाः तयैव सङ्ख्यया गुणने समार्द्धसमोपचितविषमवृत्तसङ्ख्या परिज्ञायते इति। तथा च—त्र्यक्षरप्रस्तारे समवृत्तसङ्ख्या (८) अष्ट, तयैव तस्या गुणने समोपचितार्द्धसमवृत्तसङ्ख्या (६४) चतुःषष्टिः, पुनः तयैव तस्या गुणने (४०९६) षण्णवत्यधिकं सहस्रचतुष्टयं समार्द्धसमोपचितविषमवृत्तसङ्ख्या ज्ञातव्या इति। एवञ्च तत्रैव त्र्यक्षरप्रस्तारे समोपचितार्द्धसमवृत्तसङ्ख्याचतुःषष्टितः (६४) मूलराशिभूताष्टसङ्ख्यायामपनीतायां (५६) षट्पञ्चाशत् भवन्ति शुद्धार्द्धसमवृत्तसङ्ख्याः, तथा समार्द्धसमोपचितविषमवृत्तसङ्ख्याषण्णवत्यधिकचतुःसहस्रेभ्यः (४०९६) मूलराशिभूतायां (६४) चतुःषष्टिसङ्ख्यायामपनीतायां (४०३२) चत्वारि सहस्राणि द्वात्रिंशच्च शुद्धविषमवृत्तसङ्ख्या ज्ञातव्या इति। एवं षडक्षरप्रस्तारेऽपि पुनः षण्णवत्युत्तर-

## समसमार्द्धसमोपचितम् ॥ ५ ॥

**चर्द्धसमं विषमञ्च यथाक्रमं समोपचितं समार्द्धसमाभ्याञ्चोपचितं वेदितव्यम् । (ङ)**

चतुःषष्ट्यक्षराणां समोपचितार्द्धसमवृत्तभेदानां मध्यात् विभिन्नलक्षणं भेदचतुष्टयं भेदत्रयं वा पूर्वपूर्वकभेदत्यागक्रमेणादाय विषमवृत्ते क्रियमाणे उक्तसङ्ख्यायास्तावद्वार-मावृत्तिः स्यात्, एवञ्च उक्तसङ्ख्यया सा गुणिता भवति, तथात्वे जाति समार्द्ध-समोपचितविषमवृत्तभेदा जायन्ते इति बोधार्थं गुणनप्रकारः प्रदर्श्यते यथा—४०९६ × ४०९६ = १,६७,७७,२,१६ । प्रदर्शितरीत्या शुद्धार्द्धसमवृत्तसङ्ख्याः ४०३२, शुद्धविषमवृत्तसङ्ख्याश्च १, ६७, ७२, १, २० भवन्तीति । उक्तरीत्या एकाक्षरादिष्वपि समोपचितार्द्धसमवृत्तसङ्ख्या समार्द्धसमोपचितविषमवृत्तसङ्ख्या शुद्धार्द्धसमवृत्तसङ्ख्या शुद्धविषमवृत्तसङ्ख्या च ऊहनीया ।

(ङ) उक्तयोरर्द्धसमविषमयोरुपचितत्वमाह, समेति।—"द्वन्द्वात् परः श्रूय-माणशब्दः प्रत्येकेनाभिसम्बध्यते" इति नियमादुपचितशब्दोऽत्र सम-समार्द्ध-समाभ्यामुभाभ्यामेव चन्वेतव्यः। एतदेव विशदयितुमाह, चर्द्धसममिति।—पूर्वोल्लिखितम् चर्द्धसमं समोपचितं समेन मूलराश्यङ्केन उपचितं युक्तं षडक्षरप्रस्तारे प्रदर्शितचतुःषष्ट्यङ्केन गुणितं न तु वक्ष्यमाणसूचेण न्यूनीकृत-मिति भावः। तथा विषममपि समार्द्धसमाभ्यामुपचितं भवेत्। विद्यार्थिनां बोधसौकर्यार्थमत्र एकाक्षरादिच्छन्दःसु समवृत्तादीनां सङ्ख्या चधो निवेश्यते, यथा—

| | समवृत्तसङ्ख्या | समोपचितार्द्ध-समसङ्ख्या | समार्द्धसमोपचित-विषमसङ्ख्या |
|---|---|---|---|
| १ । एकाक्षरे छन्दसि | २ | ४ | १६ |
| २ । द्व्यक्षरे ,, | ४ | १६ | २५६ |
| ३ । त्र्यक्षरे ,, | ८ | ६४ | ४,०९६ |
| ४ । चतुरक्षरे ,, | १६ | २५६ | ६५,५,३६ |
| ५ । पञ्चाक्षरे ,, | ३२ | १,०२४ | १०,४८,५,७६ |
| ६ । षडक्षरे ,, | ६४ | ४,०९६ | १,६७,७७,२,१६ |
| ७ । सप्ताक्षरे ,, | १२८ | १६,३,८४ | २६,८४,३५,४,५६ |
| ८ । अष्टाक्षरे ,, | २५६ | ६५,५,३६ | ४,२९,४९,६७,२,९६ |

## राश्यूनम् ॥ ६ ॥

तत् विषमार्द्धसमं वा राश्यूनं कर्त्तव्यं, मूलराशिः समुदायादपनेतव्य इत्यर्थः। तथा च—कोटिरेका सप्तषष्टि-र्लक्षाणि त्रिसप्ततिसहस्राणि विंशत्युत्तरं शतं शुद्धविषमवृत्त-सङ्ख्या। अङ्कतोऽपि १,६७,७३,१,२०। चत्वारि सहस्राणि द्वात्रिंशच्चेति शुद्धार्द्धसमसङ्ख्या। अङ्कतोऽपि ४०३२। उभय-शेषोऽयं राश्यूनमिति। (च)

---

प्रदर्शितप्रकारेण नवाक्षरादिष्वपि समवृत्त-समोपचितार्द्धसमवृत्त-समार्द्धसमो-पचितविषमवृत्तसङ्ख्या स्वयमेव ज्ञातव्या।

(च) उभयोरर्द्धसमविषमयोरुपचितत्वं प्रदर्श्य सम्प्रति अपचितत्वं प्रदर्शयितु-माह, राश्येति।—सूत्रमेतत् पूर्वसूत्राभ्यां सङ्गच्छते, तत्तु प्रागेव प्रदर्शितम्। समवृत्तसङ्ख्यापरिमाणादिकस्य प्रस्तारेण अष्टमाध्याये दर्शयिष्यति, इह सङ्क्षेपेण किञ्चित् प्रदर्शनपथ्या इति। राशिः मूलराशिः मूलसङ्ख्या इत्यर्थः, तया ऊनं हीनं राश्यूनं, विधेयम् इति शेषः; समुदायात् गुणिताङ्कात् मूलराशिः अपनेतव्य इत्यर्थः। उदाहरणेन तदेव स्पष्टयति, तथा चेति।—"विषमञ्च" (५।४ पि०) इति सूत्रे अङ्कतः (१६७७७२१६) समार्द्धसमोपचिता विषमवृत्तसङ्ख्या प्रदर्शिता। इह तु ततः (४०९६) समोपचितार्द्धसमवृत्तसङ्ख्याऽपनयने जाता कोटिरेका सप्तषष्टिर्लक्षाणि त्रिसप्ततिसहस्राणि विंशत्युत्तरं शतं शुद्धविषमवृत्तसङ्ख्या। एवं (४०९६) समोपचितार्द्धसमसङ्ख्यातः समसङ्ख्या चतुःषष्टिरपनीता चेत् शुद्धार्द्ध-समवृत्तसङ्ख्या (४०३२) जायते। शिष्याणां बोधसौकर्य्यार्थम् एकाक्षरादिवृत्तेषु समवृत्त-शुद्धार्द्धसमवृत्त-शुद्धविषमवृत्तानां सङ्ख्याः कोष्ठाभिः प्रदर्श्यन्ते। यथा—

| | समवृत्तसङ्ख्या | शुद्धार्द्धसमवृत्तसङ्ख्या | शुद्धविषमवृत्तसङ्ख्या |
|---|---|---|---|
| १। एकाक्षरे छन्दसि | २ | २ | १२ |
| २। द्व्यक्षरे „ | ४ | १२ | २४० |
| ३। त्र्यक्षरे „ | ८ | ५६ | ४,०३२ |
| ४। चतुरक्षरे „ | १६ | २४० | ६५,२,८० |
| ५। पञ्चाक्षरे „ | ३२ | ९९२ | १०,४७,५,५२ |
| ६। षडक्षरे „ | ६४ | ४,०३२ | १,६७,७३,१,२० |

## ग्लिति समानी ॥ ७ ॥

गकार-लकाराभ्यां यद्वृत्तं समाप्यते तत् समानी नाम। "पादस्यानुष्टुब्वक्त्रम्" (५।१० पिं०) इत्यतः सूत्रात् सिंहावलोकितन्यायेनानुष्टुब्ग्रहणमनुवर्त्तते। तेनाष्टाक्षरः पादो यावद्भिर्गकार-लकारैः पूर्य्यते, तावतामेव ग्रहणम्। तथोदाहरणम्।—

⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ –
वासवोऽपि विक्रमेण यत्समानतां न याति।
⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ –
तस्य वल्लभेश्वरस्य केन तुल्यता क्रियेत ? ॥

| | | | |
|---|---|---|---|
| ७। सप्ताक्षरे छन्दसि | १२८ | १६.२.५६ | २६.८४,१९,०७२ |
| ८। अष्टाक्षरे „ | २५६ | ६५,२.८० | ४,२९,४९,०१,७,६० |

प्रदर्शितरीत्या नवाक्षरादिवृत्तेष्वपि शुद्धार्द्धसमवृत्त-शुद्धविषमवृत्तयोः सङ्ख्या स्वयमेवावधातव्या इति। केचित्तु एकाक्षरादिच्छन्दसि या शुद्धार्द्धसमवृत्तसङ्ख्या तामेव सङ्ख्यां तयैव सङ्ख्यया गुणने याः सङ्ख्या जायन्ते, ततः मूलराशीभूतायाः शुद्धार्द्धसमवृत्तसङ्ख्याया अपनयने अवशिष्टसङ्ख्या एव शुद्धविषमवृत्तसङ्ख्या इति वदन्ति। यथा—द्व्यक्षरे छन्दसि शुद्धार्द्धसमवृत्तसङ्ख्या १२, अनयैव अस्या गुणने १४४ सङ्ख्या भवति, ततः १२ सङ्ख्यायाः मूलराशीभूताया अपनयने अवशिष्टा १३२ भवति, सैव शुद्धविषमवृत्तसङ्ख्या इति। यथा वा त्र्यक्षरे छन्दसि शुद्धार्द्धसमसङ्ख्या ५६, अनयैव अस्या गुणने ३१३६ सङ्ख्या भवति, ततः मूलराशीभूतायाः ५६ सङ्ख्याया वियोजने अवशिष्टा ३०८०, एषैव शुद्धविषमवृत्तसङ्ख्या इत्यादि।

(छ) समानीच्छन्दोलक्षणमाह, ग्लितीति।—ग् गुरुश्च ल् लघुश्च इति इत्येताभ्यां समानी तन्नामच्छन्दः, भवतीति शेषः। एतदेव विशदयति वृत्तिकारः,—गकारैरिति। ननु ग्लिति समानीत्युक्ते विशेषाभावात् कतिभिर्गुरुभिः कतिभिश्च लघुभिः समानी लभ्यते इत्याशङ्कायामाह, पादस्येत्यादि।—एवानुष्टुभि वृत्ते चतुर्ष्वपि पादेषु प्रथमाक्षरं गुरु द्वितीयाक्षरञ्च लघु इत्यादिक्रमेण गुरुलघू स्यातां सा समानीति संज्ञां लभते। वासव इति।—विक्रमेण पराक्रमेण वासवः इन्द्रः अपि यत्समानतां यस्य सादृश्यं न याति न प्राप्नोति तस्य वल्लभेश्वरस्य प्रभोः वल्लभाधिपस्य केन जनेन

अपि च ।—

ओं नमो जनार्दनाय पापसङ्गमोचनाय ।
दुष्टदैत्यमर्दनाय पुण्डरीकलोचनाय ॥ (छ)

## ल्गिति प्रमाणी ॥ ८ ॥

लकार-गकाराभ्यां यद्वृत्तं समाप्यते तत् प्रमाणी नाम । नाराचमित्यपरे । तस्योदाहरणम् ।—

सरोजयोनिरम्बरे रसातले तथाच्युतः ।
तव प्रमाणमीक्षितुं क्षमौ न तौ बभूवतुः ॥ (ज)

---

तुल्यता क्रियेत सदृशीक्रियेत ? तादृशस्य तु केनापि तुलना न युक्तेति भावः । अत्र चतुर्ष्वपि पादेषु प्रथमाक्षरस्य गुरुत्वं द्वितीयस्य लघुत्वं तृतीयस्य च गुरुत्वमित्येवं पर्यायेण विन्यासात् समानीलक्षणसङ्गतिरिति । अत्रेदं वक्तव्यम्—अपवादविधित्वात् "गन्ते" (१।१० पि०) इति सूत्रेण पादान्तस्य लघोः प्राप्तमपि गुरुत्वमनेन बाध्यते । अनुष्टुप्छन्दसां पादघटकीभूताष्टाक्षराणां वर्णप्रस्तारनियमेन प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताः षट्पञ्चाशदधिकद्विशततमा भेदाः भवन्ति । तासवो-ऽप्यौत्यादिश्लोकस्तु अष्टाक्षरप्रस्तारस्य एकसप्तत्युत्तरशततमभेदवान् । उदाहरणान्तरमाह, ओमिति ।—स्पष्टम् ।

(ज) प्रमाणीलक्षणमाह, ल्गिनीति ।—ल् लघुः ग् गुरुः । यत्र चतुर्ष्वपि प्रथमाक्षरं लघु, द्वितीयाक्षरं गुरु, तृतीयञ्च लघु, इत्यादिक्रमेण समानीलक्षणात् विपरीतलक्षणं तत् वृत्तं प्रमाणीति नाम्ना प्रसिद्धम् । अत्र च पर्यायेण लघोः अनन्तरं गुरु तदनन्तरं लघु इत्यादिक्रमेण पादपूर्त्तिः । सरोजेत्यादि ।—अम्बरे आकाशे सरोजयोनिः पद्मयोनिः ब्रह्मा, तथा रसातले पाताले अच्युतः नारायणः, विचरते इति शेषः, तौ तव प्रमाणम् ईक्षितुं द्रष्टुं क्षमौ समर्थौ न बभूवतुः । अष्टाक्षरप्रस्तारस्य पञ्चाशीतितमोऽयं भेदः ।

## वितानमन्यत् ॥ ९ ॥

आभ्यां समानी-प्रमाणीभ्यामन्यदष्टाक्षरपादं छन्दो वितानं नाम । तत्रोदाहरणम् ।—

तृष्णां त्यज धर्मं भज   पापे हृदयं मा कुरु ।
इष्टा यदि लक्ष्मीस्तव   शिष्टाननिशं संश्रय ।

द्वितीयञ्च ।—

हृदयं यस्य विशालं   गगनाभोगसमानम् ।
लभतेऽसौ मणिचित्रं   नृपतिर्मूर्द्धि वितानम् ॥

अन्यच्च ।—

कङ्कालमालभारिणं   कन्दर्पदर्पहारिणम् ।
संसारबन्धमोचनं   वन्दामहे त्रिलोचनम् ॥

(क) वितानलक्षणमाह, वितानमिति ।—अन्यत् भिन्नविधम् । एकगुरोरनन्तरमेको लघुस्तथा एकलघोरनन्तरमेको गुरुरिति लक्षणद्वयमुक्तं, ताभ्यामन्यत् द्वयोः गुर्वोरनन्तरं द्वौ लघू, तथा द्वयोः लघ्वोरनन्तरञ्च द्वौ गुरू, एवमादिलक्षणकं वृत्तं वितानंनामधेयं स्यादित्यभिप्रायः । तृष्णामित्यादि ।—यदि लक्ष्मीः सम्पत्तिः तव भवतः इष्टा वाञ्छनीया तदा तृष्णां त्यज, धर्मं भज, पापे पापकर्मणि हृदयं मानसं मा कुरु, अनिशं सर्वदा शिष्टान् साधून् संश्रय । अत्र आदौ द्वौ गुरू तदनन्तरञ्च द्वौ लघू, इत्यादिक्रमेण निर्देशात् वितानलक्षणसङ्गतिः । अष्टाक्षरप्रस्तारस्य पञ्चोत्तरद्विशततमोऽयं भेदः । अत्रापि पूर्वोक्तनियमेन पादान्तलघोः न गुरुत्वम् । वितानस्यानेकविधत्वादुदाहरणान्तरमाह, हृदयमित्यादि ।—यस्य नृपतेः हृदयं मानसं गगनाभोगसमानं विशालम्, आकाशमण्डलवद्बृहदतिमहदित्यर्थः, असौ नृपतिः राजा शिरसि मूर्द्धि मणिचित्रं रत्नखचितं वितानं चन्द्रातपं लभते प्राप्नोति । अत्रादौ लघुद्वयं ततश्च गुरुद्वयमित्यादिक्रमेण विन्यासादपरविधं वितानमित्यवगन्तव्यम् । अष्टाक्षरप्रस्तारस्य द्विपञ्चाशत्तमोऽयं भेदः । अपरोदाहरणमाह, कङ्कालेत्यादि ।—

## पादस्यानुष्टुब्वक्त्रम् ॥ १० ॥

पादस्येत्ययमधिकार आ-सप्तमाध्यायपरिसमाप्तेः। अनुष्टुब्वक्त्रमिति च प्राक् पदचतुरूर्द्ध्वात् अधिकृतं वेदितव्यम्। (ञ)

## न प्रथमात् स्नौ ॥ ११ ॥

प्रतिषेधार्थं सूत्रमिदम्। अत्र वक्त्रजातौ पादस्य प्रथमात् वर्णादूर्द्ध्वं सगण-नगणौ ( - - ⌣ ) ( - - - ) न कर्त्तव्यौ। (ट)

## द्वितीयचतुर्थयो रश्च ॥ १२ ॥

द्वितीयचतुर्थयोश्च पादयोः प्रथमादूर्द्ध्वं रेफोऽपि ( ⌣ - ⌣ ) न कर्त्तव्य इत्युपदेशः। (ठ)

## वाऽन्यत् ॥ १३ ॥

सगण-नगणाभ्यामन्यत् मगणादित्रिकषट्कमध्ये यत् किञ्चित् त्रिकान्तरं वा कर्त्तव्यम्। (ड)

---

पञ्चाशदधिकद्विशतपरिमिता, अत एव समानीप्रमाणीभ्यामन्यत् वितानमित्युक्तवता सूत्रकारेणास्य अनेकप्रकारता सूचिता इति। अन्यथा वितानस्य एकविधत्वे इत्यर्थः।

(ञ) साम्प्रतं वक्त्राधिकारं वक्तुं प्रक्रमते, पादस्येति।—अधिकारसूत्रमिदम्; सप्तमाध्यायसमाप्तिपर्य्यन्तं पादाधिकारो वेदितव्यः। तथा अनुष्टुब्वक्त्रमिति च "प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्द्ध्वम्" (५।२१ पि०) इति वक्ष्यमाणसूत्रात् प्राक् पूर्व-पर्य्यन्तमित्यर्थः; ततः परमस्याधिकारस्याविषय इति भावः।

(ट) वक्त्रच्छन्दसि कांश्चिन्नियमानाह, नेति।—स्पष्टम्।

(ठ) द्वितीयेति।—स्पष्टम्।

(ड) प्रथमाक्षरादूर्द्ध्वं सगण नगणाभ्यामन्यत्र चतुर्ष्वपि पादेषु नास्ति कश्चिन्नियम इत्येवं प्रतिपादयितुमाह, वेति।—वा-शब्दः व्यवस्थितविभाषार्थः। अत्र वक्त्रसमूहे

## य चतुर्थात् ॥ १४ ॥

'य' इति लुप्तविभक्तिको निर्देशः। पादस्य चतुर्थादक्षरा-दूर्द्धं यकारः ( - ⏑ ⏑ ) प्रयोक्तव्यः। सर्वेषामुदाहरणम्।—

ग० य० य० ग० ग० य० य० ल०

- - ⏑ ⏑ - ⏑ ⏑ - - - ⏑ ⏑ - ⏑ ⏑ ⏑

नवधाराम्बुसंसिक्त-वसुधागन्धिनिःश्वासम्।

---

पादमात्रे प्रथमाक्षरात् परं सगण-नगणाभ्यामन्यत् मगणादित्रिकषट्कमध्ये त्रिक-षट्काः त्रित्वविशिष्टगणानां षट्सङ्ख्यका गणाः "मस्त्रिगुरुस्त्रिलघुश्च नकारः" इत्यादिलक्षणानां गणानां सगण-नगणभिन्ना म-भ-ज-य-र-त-स्वरूपा ये षड्गणाः इत्यर्थः, तेषां मध्ये यत् किञ्चित् त्रिकान्तरं त्रिगुर्वादिरूपं गणान्तरं कर्त्तव्यम्। अत्र सगणेत्यादिवृत्तिस्तु वृत्तिकृता प्रथमतृतीयपादविषयमधिकृत्यैव उक्ता, द्वितीयचतुर्थपादयोः प्रथमाक्षरादूर्द्धं सगण-नगणवत् रगणस्यापि निषेधात्; एवञ्च द्वितीयचतुर्थयोः सगण-नगण-रगणेभ्यः अन्यत त्रिकपञ्चकमध्ये यत् किञ्चित् त्रिकान्तरं कर्त्तव्यमित्यूहनीयम्। द्वितीयेत्यादिसूत्रानन्तरं वाऽन्यदिति सूत्राभिधानस्याय-मेवाभिप्रायः।

( ढ ) नियमान्तरमाह, य इति।—प्रतिपादं चतुर्थात् अक्षरात परं नियमेन यगणो विधेयः इत्यर्थः। इह आद्ये पादे प्रथमस्थाने गुरुलघुरूपौ द्वौ विकल्पौ, द्वितीयतृतीयचतुर्थस्थाने न-सनिषेधात् शेषाः षड्गणाः, पञ्चमषष्ठसप्तमस्थाने एको य एव, अष्टमस्थाने च द्वौ, अन्योऽन्यघाते चतुर्विंशतिः, एवं द्वितीयादिपादत्रयेऽपि प्रत्येकं चतुर्विंशतिः, तेषां परस्परहतौ जाता त्रयी लक्षा एकत्रिंशत् सहस्राणि सप्त शतानि षट्सप्ततिः सङ्ख्या। अङ्कतोऽपि ( ३३१७७६ )। एषा सङ्ख्या प्रत्येकं पथ्यावक्त्रादिषु त्रिष्वपि ज्ञेया। द्वितीयचतुर्थपादयोः द्वितीयतृतीयचतुर्थस्थाने रगणस्यापि निषेधात् समयोः प्रत्येकं विंशतिर्भेदाः, विषमयोश्चतुर्विंशतिरेव; तेषामन्योऽन्यघाते जाता सङ्ख्या लक्षद्वयं त्रिंशत् सहस्राणि चत्वारि शतानि। अङ्कतो-ऽपि ( २३०४०० )। अपरञ्च अवेदमपि अर्त्तव्यं यत्—समानी-प्रमाणीभ्यामन्यतमं यं कमप्येकं भेदमादाय क्रियमाणं वृत्तं वितानमामकं भवति, ताभ्यां त्रिभिः चतुर्भिर्वा विभिन्नलक्षणैः अनुष्टब्भेदैः उपनिबध्यमानं वृत्तं वक्त्रगात्यन्तर्गतमनुष्टुप् भवतीति।

ग० ज० य० ग० ल० त० य० ग०

∪ – ∪ – – ∪ ∪ ∪   – ∪ ∪ – – ∪ ∪ ∪

किञ्चिदुन्नतघोणाग्रं मही कामयते वक्त्रम् ॥

तथा ।—

ग० भ० य० ल० ल० ग० य० ग०

∪ ∪ – – – ∪ ∪ –   – ∪ ∪ ∪ – ∪ ∪ ∪

नीलोत्पलवनेष्वद्य चरन्त्यश्चारुसंरावाः ।

ग० भ० य० ग० ल० भ० य० ग०

∪ ∪ ∪ ∪ – ∪ ∪ ∪   – ∪ ∪ ∪ – ∪ ∪ ∪

रामाः कौषेयसंवीताः प्रनृत्यन्तीव कादम्बाः ॥

---

एतेनानुष्टुप्छन्दोमात्रं विषमवृत्तं जायते इति । महीति ।—मही पृथिवी नवधाराम्बुभिः अभिनवसञ्जातवर्षाजलैः संसिक्ता आर्द्रा या वसुधा भूमिः तस्या गन्ध इव गन्धो यस्य तादृशो निश्वासो यत्र तत् तादृशं, मुखेन मृत्तिकाविदारणादिति भावः; किञ्चिदुन्नतं घोणाग्रं नासाग्रं यत्र तत् तादृशं, घोणीत्यपरपर्य्यायस्य वराहस्य प्रशस्तघोणावत्त्वात्; वक्त्रं मुखं, वराहरूपिणो विष्णोरिति भावः, कामयते प्रार्थयति । अत्र चतुर्ष्वपि पादेषु प्रथमाक्षरात् परं सगण-नगणौ न विहितौ तथा चतुर्थाक्षरात् परं यगणश्च यथाविधि विहितः, अपि च द्वितीयचतुर्थयोः पादयोः प्रथमाक्षरात् परं रगणो नास्ति, अत इदं वक्त्रनामकानुष्टुप्छन्दो विज्ञेयम् । अस्य प्रथमपादः अष्टाक्षरप्रस्तारभेदेषु अष्टचत्वारिंशदुत्तरशततमः, द्वितीयः विंशतितमः, तृतीयः सप्तविंशतितमः, चतुर्थश्च षड्विंशतितमो भवति । उदाहरणान्तरं यथा नीलोत्पलेत्यादि ।—अद्य नीलोत्पलवनेषु चरन्त्यः भ्रमन्त्यः चारुसंरावाः मधुरभाषिण्यः, कौषेयसंवीताः क्रिमिकोषजवसनपरिधानाः, नीलाम्बरधारिण्यः इत्यर्थः, रामाः रमण्य इव चारुसंरावाः मधुरनिक्वणाः, कादम्बाः कलहंसाः, प्रनृत्यन्ति नृत्यं कुर्वन्ति । "प्रनृत्यन्तीव" इत्यत्र "प्रनृत्यन्त्य" इति पाठे—तादृश्यः रामाः प्रनृत्यन्तः कादम्बाश्च, तुल्या इव लक्ष्यन्ते इति शेषः । अत्रापि पूर्ववत् प्रतिपादस्य प्रथमाक्षरात् परं सगण-नगणौ न स्तः, द्वितीयचतुर्थयोः पादयोः प्रथमाक्षरात् परं

तथा।—

ग० र० य० ग० ग० भ० य० ग०

दुर्भाषितेऽपि सौभाग्यं प्रायः प्रकुरुते प्रीतिः।

ग० र० य० ग० ग० म० य० ग०

मातुर्मनो हरन्त्येव दौर्वालित्योक्तिभिर्बालाः॥ (क)

## पथ्या युजो ज्॥ १५॥

चतुर्थादिति वर्त्तते। यत्र वक्त्रे युजः पादस्य चतुर्थाक्षरादूर्ध्वं जकारः ( - ᴗ - ) प्रयुज्यते, तद्वक्त्रं पथ्या नाम। यस्यापवादः। तत्रोदाहरणम्।—

---

नगणोऽपि नास्ति, तथा चतुर्थात् परं यथालक्षणं यगणश्च वर्त्तते, अपि च भगण-मगणौ च यथासम्भवं विद्येते, अत इदं पूर्वतः किञ्चित् विभिन्नरूपं वक्त्रनामकं छन्द इति ज्ञेयम्। अष्टाक्षरप्रस्तारस्य नवपञ्चाशदुत्तरशततमभेदत्वात् अस्य प्रथमः पादः, द्वितीयचतुर्थौ अष्टादशौ, तृतीयश्च सप्तदशो भवतीति बोध्यम्। उदाहरणान्तरमाह, दुर्भाषितेऽपीत्यादि।—प्रीतिः स्नेहः दुर्भाषितेऽपि कटूक्तौ अपि प्रायः बाहुल्येन सौभाग्यं सुभगत्वं, सौख्यमित्यर्थः, प्रकुरुते जनयति। एतदेव दृष्टान्तेन समर्थयति, मातुरिति।—बालाः शिशवः दौर्वालित्योक्तिभिः अप्रियैर्वचनैरपि दुर्वाक्यैरपीति भावः, मातुः जनन्याः, मनः चित्तं, हरन्त्येव आकर्षन्त्येव। वक्त्रच्छन्दसि द्वितीयचतुर्थपादयोरेव प्रथमाक्षरादूर्ध्वं रगणस्य निषिद्धतया प्रथमतृतीयपादयोः प्रथमाक्षरात् परं तद्विधानस्य अनिषिद्धत्वादत्र रगणो विद्यते। अन्यत् वक्त्रलक्षणमपि अक्षीणमस्ति अतः इदमनुष्टुब्वक्त्रनामकं छन्दः। अत्र प्रथमः पादः अष्टाक्षरस्यैकाशीतितमभेदत्वात्, द्वितीयः एकोनत्रिंशत्, तृतीयः एकोनपञ्चाशदधिक-शततमभेदत्वात्, चतुर्थश्च सप्तदश इति।

(ख) "य चतुर्थात्" इत्यस्यापवादेन वक्त्रविशेषं पथ्यावक्त्रमाह, पथ्येति।—युजः युग्मपादस्य, द्वितीयचतुर्थपादयोरित्यर्थः। पूर्वसूत्रात् 'चतुर्थात्' इति सम्बन्धि-

ग० ल० य० ज० ग० भ० ज० ल०

नित्यं नीतिनिषण्णस्य राज्ञो राष्ट्रं न सीदति ।

ल० य० य० ग० ग० भ० ज० ग०

न हि पथ्याशिनः काये जायन्ते व्याधिवेदनाः ॥(ख)

## विपरीतैकीयम् ॥ १६ ॥

उक्तलक्षणात् विपरीतलक्षणा एकीयमते पथ्या भवति । यथा ।—

---

कर्त्तव्यमित्याह, चतुर्थादिति ।—जकारः ज-गणः । यस्य य-गणस्य । नित्यमित्यादि ।—नित्यं सर्वदा नीतिनिषण्णस्य नीतिस्थितस्य नीतिशास्त्रानुसारेण व्यवहरतः इत्यर्थः, राज्ञः नृपतेः राष्ट्रं राज्यं न सीदति न नश्यति, अनुच्छेद्यं भवतीति भावः । तत्र दृष्टान्तमाह, न हीति ।—पथ्याशिनः हितं भुक्तवतः, जनस्येति शेषः, काये शरीरे व्याधिवेदनाः रोगजनितदुःखानि न जायन्ते नोत्पद्यन्ते । अत्र पूर्वोक्तरीत्या यथायथं स-न-र-गणस्य निषेधात् तथा द्वितीयचतुर्थयोः पादयोश्चतुर्थवर्णात् परं ज-गणस्य च विद्यमानत्वात् पथ्यावक्त्रनामकमिदं छन्दः इति ज्ञेयम् । अत्र प्रथमः पादः अष्टाक्षरप्रस्तारभेदेषु चिपञ्चाशदधिकशततमः, द्वितीयः नवोत्तरत्रिशततमः, तृतीयः विंशतिः, चतुर्थश्च एकाशीतितमः इति । अपेदं वक्तव्यं—वक्त्रजातौ स-नं-र-गणानां पूर्वोक्तनिषेधः सर्वत्रैव पालनीयः, य-गणस्य च बाधकान्तराभावात् तद्विधौ अस्थिरत्वमिति, अत एव छन्दोमञ्जर्यादौ "पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः । षष्ठं गुरु विजानीयादित्यनुष्टुभलक्षणम् ॥" इत्यत्र द्वितीयचतुर्थपादयोः सप्तमस्य लघुत्वमिति दिक् ।

(ख) मतान्तरीयं पथ्यावक्त्रलक्षणमाह, विपरीतेति ।—एकस्य इदं मतम् एकीयम् एकस्याचार्यस्य मतमेतदित्यभिप्रायः । "वृद्धाच्छः" (४।२।११४ पा०) इति छः । विपरीतलक्षणा प्रथमतृतीययोः पादयोः चतुर्थाक्षरात् परो ज-गणः द्वितीयचतुर्थयोश्च पादयोः चतुर्थवर्णात् परो य-गणः प्रयुज्येत चेत् तदा विपरीता पथ्या

म० य० ज० ग० ग० म० य० ग०

ᵕ – ᵕ ᵕ – ᵕ – ᵕ    ᵕ ᵕ ᵕ ᵕ – ᵕ ᵕ ᵕ

भर्तुराज्ञानुवर्त्तिनी    या स्त्री स्यात् सा स्थिरा लक्ष्मीः ।

म० य० ज० ग० ग० म० य० ग०

ᵕ – ᵕ ᵕ – ᵕ – ᵕ    – – ᵕ ᵕ – ᵕ ᵕ ᵕ

स्वप्रभुत्वाभिमानिनी    विपरीता परित्याज्या ॥ (त)

## चपलाऽयुजो न् ॥ १७ ॥

अयुक्पादस्य यदा चतुर्थादक्षरादूर्द्धं नकारो भवति, युक्पादे य एवावतिष्ठते, तदा चपला नाम सा अनुष्टुब्वक्त्रम् । तस्योदाहरणम् ।—

म० य० न० ग० म० य० य० ग०

ᵕ – ᵕ ᵕ – – – ᵕ    ᵕ – ᵕ ᵕ – ᵕ ᵕ ᵕ

क्षीयमाणाम्रदशना    वक्त्रनिर्मांसनासाग्रा ।

---

भवति । तस्योदाहरणमाह, भर्तुरिति ।—या स्त्री या रमणी भर्तुः स्वामिनः आज्ञानुवर्त्तिनी आदेशपालिका सा स्त्री स्थिरा अचञ्चला लक्ष्मीः, लक्ष्मीतोऽप्यचञ्चला सा ततोऽप्यधिकगुणवतीति भावः । या खलु स्वस्याः निजायाः प्रभुत्वविषये अभिमानिनी मानवती स्वतन्त्रा इत्यर्थः, सा विपरीता अलक्ष्मीस्वरूपा, अतः परित्याज्या वर्जनीया इत्यर्थः । अत्र प्रथमतृतीयपादे "नुवर्त्ति" "भिमानि" इति चतुर्थाक्षरात् परं ज-गणस्य, तथा द्वितीयचतुर्थपादे च "स्थिराल" "परित्या" इति य-गणस्य च पूर्वतः वैपरीत्येन सन्निवेशात् विपरीतपथ्यावक्त्रनामकमनुष्टुप्छन्दः इति बोध्यम् । अस्य प्रथमः पादः अष्टाक्षरप्रस्तारभेदेषु व्यशीतितमः, द्वितीयः ससदश, तृतीयः व्यशीतितमः, चतुर्थश्च विंशतितमः इति ज्ञेयम् ।

(थ) वक्त्रभेदं चपलामाह, चपलेति ।—अयुजः अयुग्मपादस्य । इहापि पूर्वतः "चतुर्थात्" इति अनुवर्त्तनीयम्, एवञ्च प्रथमतृतीयपादयोः चतुर्थाक्षरात् परं न-गणः तथा द्वितीयचतुर्थयोश्च य-गणश्चेत् तदा चपला नाम छन्दः स्यात् । क्षीयमाणेत्यादि ।—क्षीयमाणं दशनानाम् अग्रं यस्याः सा, तथा वक्त्रात् आरभ्य

न० य० न० न० स० य० य० न०

कन्यका वाक्यचपला लभते धूर्त्तसौभाग्यम् ॥ (थ)

विपुला युग्लः सप्तमः ॥ १८ ॥

अधिकारोऽयम्। "य चतुर्थात्" ( ५।१४ पि० ) इत्यनेन सर्वत्र यकारे प्राप्ते यदा युक्पादे सप्तमो वर्णो लघुर्भवति, तदा विपुला नाम। ननु पथ्यालक्षणान्तर्भूतत्वात् पुनरुक्तमेतत्। नैवम्। विपुलावर्गस्येदानीमारभ्यमाणत्वात्तद्विनाऽनुपपत्तेः। तत्र युक्पादे सप्तमेन लघुनाऽवश्यमेव भवितव्यं, प्रथमतृतीययोश्च। एतावता यकारस्यापवादः। तथा च वक्ष्यति—"सर्वतः सैतवस्य" इत्यादिना। पथ्यायान्तु यकार एवावतिष्ठते। ( द )

---

वक्रेण सह इति वा, निर्मांसं नासाग्रं यस्याः सा शुष्कमुखनासिका इत्यर्थः, तथा वाक्येषु चपला चपलभाषिणीत्यर्थः, कन्यका धूर्त्तानां शठानां सौभाग्यं सुभगत्वं प्रियत्वं लभते प्राप्नोति। अत्र पूर्वोक्तवक्त्रलक्षणेन सह प्रथमतृतीयपादयोः चतुर्थाक्षरात् परं न-गणः, द्वितीयचतुर्थयोश्च य-गण एव वर्त्तते, अतः चपलावक्त्रनामकमनुष्टुप्छन्दः। प्रथमः पादोऽस्य अष्टाक्षरप्रस्तारभेदेषु पञ्चदशाधिकशततमः, द्वितीयः एकोनविंशतिः, तृतीयः पञ्चदशाधिकशततमः, चतुर्थश्च विंशतिः।

( द ) वक्त्रभेदविपुलाधिकारमवतारयति, विपुलेति।—अधिकारसूत्रमिदम्। युग्लोः युग्मपादयोः लः लघुः युग्लः। पथ्यया सहास्याः सादृश्यमाशङ्कते, नन्विति। —युग्मपादे सप्तमो वर्णो लघुर्भवति इति विपुलालक्षणं, पथ्यायामपि युग्मे चतुर्थाक्षरादनन्तरं ज-गणविधानात् सप्तमस्य लघुत्वं, ततश्च "पथ्या युजो ज्" इत्यनेन सहाभिन्नार्थत्वादस्य पुनरुक्तवत् प्रतीतिरिति। समादधाति, नैवमिति। —पथ्यायां युक्पादे सप्तमलघुत्वं ज-गणेनैव इत्येवं नियमः, अस्यान्तु ज-स-भ-न-गणानां येन केनापि सप्तमस्य लघुता इति न पौनरुक्त्यम्; तथाऽपि ज-गणपक्षे पौनरुक्त्यमिति चेत्, तर्हि तत्र नामान्तरमेव इति बोद्धव्यम्। समाधानान्तरार्थं सैतवमतमवतारयति, युक्पादे इत्यादि।—युक्पादे अयुक्पादे च सर्वत्रैव सप्तमः।

## सर्वतः सैतवस्य ॥ १९ ॥

सैतवस्य आचार्य्यस्य मतेन युक्पादे अयुक्पादे च सप्तमो लकार एव कर्त्तव्यः । तस्योदाहरणम् ।—

ग० ज० भ० ग०  भ० भ० ज० ग०

⏑ – ⏑ – – ⏑ – ⏑  ⏑ ⏑ – – – ⏑ – ⏑

सैतवेन यथाऽर्णवं  तीर्णो दाशरथात्मजः ।

ग० भ० भ० ग०  ल० न० ज० ग०

⏑ ⏑ – – – ⏑ – ⏑  – ⏑ ⏑ ⏑ – ⏑ – ⏑

रक्षःक्षयकरीं पुनः  प्रतिज्ञां स्वेन बाहुना ॥ (ध)

---

लघुना भवितव्यमिति सैतवमतं, पथ्यायाश्च अयुक्पादे चतुर्थाक्षरात् परं य-गण एव, अत एव उभयोर्भेद इति भावः । अत्र "अवश्यमेव भवितव्यं, प्रथमतृतीययोश्च" इत्यनेन एवं बोधयति यत्—अयुक्पादे कदाचित् सप्तमलघुत्वस्य व्यभिचारोऽपि भवितुमर्हति, युक्पादे तु अवश्यमेव लघुना भवितव्यमिति वृत्तिकारस्याशयः । प्रथमतृतीययोश्च इत्यस्य सूत्रेण लघुना भवितव्यमित्यनेनान्वयः । एतावता सप्तमेन लघुना इत्युक्त्या यकारस्य अपवादः पथ्यालक्षणे प्रथमतृतीयचरणे य गणो विहितः इह तु तत्रापि ज-त-न-भ-गणानामन्यतमस्य दृष्टत्वात् य-गणस्यापवाद इत्यभिप्रायः ।

(ध) विपुलायाः युग्मपादे सप्तमलघुत्वे व्यवस्थान्तरमवतारयति, सर्वत इति ।—सर्वतः सर्वेष्वपि पादेषु । एवञ्च चतुर्ष्वपि पादेषु सप्तमलघुत्वे नियमिते चतुर्थाक्षरात् परं ज-त-भ-न-गणानामन्यतमस्य प्रयोगो विधेय इति फलितम् । तथा चार्षेयच्छन्दःसारे—"विपुला युग्मः सप्तमः सर्वं लत् सैतवस्य च । भो नो वा विपुलाऽनेका वक्त्रजातिः समीरिता ॥" इति । एतेन चतुर्ष्वपि पादेषु सप्तमलघुत्वे विपुला, युक्पादे सप्तमलघुत्वे अयुक्पादे च सप्तमगुरुत्वे पथ्या इति सैतवमतम् । अत्र प्रतिपादं भेदाः षण्णवतिः, तेषां परस्परहतौ संख्या अष्टौ कोटयः एकोनपञ्चाशल्लक्षाः चतुस्त्रिंशत् सहस्राणि षट्शती षट्पञ्चाशच्च । अङ्कतोऽपि ( ८४९३४६५६ ) ।

सैतवेनेत्यादि ।—दाशरथात्मजः रामः अर्णवं समुद्रं सैतवेन सेतुरूपेण यथा वर्त्मना सेतुनेत्यर्थः, तीर्णः, तथा रक्षःक्षयकरीं रावणविनाशकारिणीं प्रतिज्ञां अर्णवं पुनः स्वेन स्वकीयेन बाहुना भुजेन तीर्णः उत्तीर्णवान् । अत्र सर्वेषु पादेष्वेव सप्तम-

## भ्रौ न्तौ च ॥ २० ॥

सर्वतः सैतवस्येति निवृत्तम्। "चपलाऽयुजो न्" (५।१७ पि०) इत्यस्मादयुग्ग्रहणमनुवर्त्तते। "विपुला युग्मः सप्तमः" (५।१८ पि०) इति सर्वमनुवर्त्तते। अयुक्पादे यदा चतुर्थाक्षरात् परतो यकारं बाधित्वा भकार-रेफ-नकार-तकारा विकल्पेन भवन्ति, तदा असौ विपुला नाम। तत्र भकारेण विपुलोदाहरणम्।—

ल० र० भ० ग० ल० म० ज० ग०
- ᴗ - ᴗ ᴗ - - ᴗ - ᴗ ᴗ ᴗ - ᴗ - ᴗ
इयं सखे! चन्द्रमुखी स्मितज्योत्स्ना च मानिनी।
ग० र० भ० ग० ग० ज० ज० ग०
ᴗ ᴗ - ᴗ ᴗ - - ᴗ ᴗ - ᴗ - - ᴗ - ᴗ
इन्दीवराक्षी हृदयं दन्दहीति तथापि मे ॥

---

लघुतया विपुलालक्षणसङ्गतिः। अस्य च प्रथमः पादः षष्टाक्षरप्रस्तारभेदेषु एकनवतितमः, द्वितीयतृतीयौ त्रिनवतितमौ, चतुर्थश्च द्वाशीतितमो ज्ञेयः।

(भ) विपुलाया लक्षणमाह, भ्रौ इति।—भ-र-न-त-गणा इत्यर्थः। यत्र प्रथमतृतीयपादयोः चतुर्थाक्षरात् परं भ-र-न-त-गणानामन्यतमः द्वितीयचतुर्थयोश्च चतुर्थाक्षरात् परं ज-त-म-भ-गणानामन्यतमः भवति सा विपुलेति ज्ञेयम्। एवञ्च विपुलावर्गे युग्मपादे सप्तमस्य लघुत्वं नियतमेव, अयुग्मे च तत्र वैकल्पिकमिति मन्तव्यम्। केचित्तु "सर्वतः" इति पदमत्रापि अनुवर्त्तयन्ति। इयमित्यादि।—हे सखि! इयं प्रत्यक्षीभूता नायिका चन्द्रमुखी चन्द्र इव मुखं यस्याः तादृशी अत्यन्तमनोहारिणी, स्मितज्योत्स्ना स्मितं मन्दहासं ज्योत्स्नेव यस्याः सा तथाभूता, न पुनः कोपनमुखीति भावः, तथा मानिनी मानवती, न पुनः स्त्रीचातुर्य्यानभिज्ञा इति भावः, तथा इन्दीवरे इव अक्षिणी यस्याः सा तादृशी, तथाऽपि सर्वथा हृदयग्राहिणी अपि मे हृदयं मदीयं मनः दन्दहीति भृशं पीडयति। अत्र सर्वेषां लक्षणानां क्रियमाणत्वात् तथा प्रथमतृतीयपादयोः चतुर्थाक्षरात् परं य-गणापवादक-

अयुज इति जातिपक्षे द्वयोरपि पादयोर्ग्रहणम् । व्यक्तिपक्षे पुनरेकस्य ।" एकपक्षे पुनः प्रथमस्य तृतीयस्य वा । तथा च महाकवीनां प्रयोगाः ।—

ग० र० भ० ग०    ग० य० ज० ग०
– ⏑ –⏑ ⏑ – – ⏑    ⏑ – ⏑ ⏑ – ⏑ – ⏑
वटे वटे वैश्रवणः    चत्वरं चत्वरे शिवः ।

ग० य० य० ग०    ग० भ० ज० ग०
⏑ –⏑ ⏑–⏑ ⏑ ⏑    ⏑⏑ – – – ⏑ – ⏑
पर्वते पर्वते रामः    सर्वत्र मधुसूदनः ॥

ग० भ० य० ग०    ग० य० ज० ग०
⏑ ⏑ – – – ⏑ ⏑ ⏑    ⏑ – ⏑ ⏑ – ⏑ – ⏑
देवः स जयति श्रीमान्    दण्डधारो महीपतिः ।

ग० र० भ० ग०    ग० म० ज० ल०
⏑ ⏑ – ⏑ ⏑ – – ⏑    ⏑ – ⏑ – – ⏑ – –
यस्य प्रसादात् भुवनं    शाश्वते पथि तिष्ठति ॥

---

भ-गणस्य द्वितीयचतुर्थयोश्च न-गणस्य निवेशनात् भ-विपुलापूर्वकं वक्त्रनामकानुष्टुब्वृत्तमिदम् । किञ्चायुक्पादे उभयत्र भ-गणस्य सत्त्वादिदं जातिपक्षीयं भ-विपुलोदाहरणमित्यपि प्रत्येतव्यम् । जातिपक्षं व्यक्तिपक्षञ्च समाश्रित्य लक्षणं विहितमिति दर्शयितुमाह, अयुज इत्यादि ।—"सकलव्यक्तौ लक्षणस्य चरितार्थत्वं जातिः" "प्रतिव्यक्ति लक्षणानि भिद्यन्ते इति व्यक्तयः" । जातिपक्षस्वीकारस्थले अयुजः द्वयोः पादयोः प्रथमतृतीययोः पादयोः ग्रहणं स्वीकारः । व्यक्तौ तु एकस्य पादस्य प्रथमस्य तृतीयस्य वा ग्रहणम् । उदाहरणानि यथा, वटे इत्यादि । —वटे वटे प्रतिवटं वैश्रवणः कुवेरः, चत्वरे चत्वरे प्रतिचत्वरं शिवः, पर्वते पर्वते प्रतिपर्वतं रामः, तथा मधुसूदनः सर्वत्र, तिष्ठति इति शेषः । अस्य च प्रथमः पादः अष्टाक्षरप्रस्तारेषु द्व्यधिकशततमः, द्वितीयः चाशीतितमः, तृतीयः एकोनविंशः, चतुर्थश्च विनवतितमो भवति । देव इति ।—सः प्रसिद्धः महीपतिः श्रीमान् दण्डधारी देवः राजाख्यभूपतिः जयति सर्वोत्कर्षेण वर्त्तताम्, यस्य नृपतेः प्रसादात् अनुग्रहात् पालन-

ल० र० भ० ग० ल० त० ज० ग०
− ∪ − ∪ ∪ − − ∪ − ∪ ∪ − − ∪ − ∪
उपस्थितं प्राञ्जलिना विनीतेन गरुत्मता।
ग० र० भ० ग० ग० त० ज० ग०
∪ ∪ − ∪ ∪ − − ∪ ∪ ∪ ∪ − − ∪ − ∪
नारायणं स्तौमि सदा भक्तानां भयनाशनम्॥

इत्यादि।

इदानीं रेफविपुलोदाहरणम्।—

ग० र० र० ग० ल० भ० ज० ग०
∪ ∪ − ∪ ∪ − ∪ ∪ − ∪ − − − ∪ − ∪
लक्ष्मीपतिं लोकनाथं रथाङ्गधरमीश्वरम्।
ग० र० र० ग० ल० य० ज० ग०
∪ ∪ − ∪ ∪ − ∪ ∪ − − ∪ ∪ − ∪ − ∪
यज्ञेश्वरं शार्ङ्गपाणिं प्रणमामि नयोतनुम्॥

---

ध्रुवात् ध्रुवं शाश्वते सनातने पथि, आचारमार्गे इत्यर्थः, तिष्ठति। प्रथमः पादोऽस्य अष्टाक्षरप्रस्तारेषु एकोनविंशतमः, द्वितीयः चतुर्शीतितमः, तृतीयः एकोत्तरशततमः, चतुर्थश्च अष्टाविंशोत्तरशततमभेदवानिति। अत्र श्लोकद्वये वक्त्रादिलक्षणस्य तथा प्रथमस्य प्रथमे पादे द्वितीयस्य च तृतीये पादे चतुर्थाक्षरात् परं भ-गणस्य विद्यमानत्वात् व्यक्तिपक्षे भ-विपुलापूर्वकं वक्त्रनामकमनुष्टुप्छन्दः इदमिति बोध्यम्। व्यक्तित्वाभावयोः एकैकस्मिन् अयुक्पादे एव चतुर्थाक्षरात् परं भ-गणसन्निवेशादिति। जातिपक्षे उदाहरणान्तरं दर्शयति, उपस्थितमित्यादि।—विनीतेन विनयवता प्राञ्जलिना बद्धपाणिना गरुत्मता गरुडारोहणेन उपस्थितं समागतं भक्तानां भक्तिमनुरागवतां जनानां भयनाशनं भीतिहारिणं नारायणं सदा स्तौमि। अस्य च प्रथमपादः अष्टाक्षरप्रस्तारेषु द्व्यधिकशततमः, द्वितीयः नवतितमः, तृतीयः एकोत्तरशततमः, चतुर्थश्च एकोननवतितमः। किञ्च अत्र वक्त्रादिलक्षणस्य सत्त्वात् तथा प्रथमतृतीययोरुभयोरपि पादयोः चतुर्थाक्षरात् परं भ-गणस्य सत्त्वात् जातिपक्षे भ विपुलापूर्वकानुष्टुब्वक्त्रस्योदाहरणमिदम्। लक्ष्मीपतिमित्यादि।—लक्ष्मीपतिं श्रियः पतिं लोकानां नाथं रथाङ्गधरं चक्रधरं यज्ञेश्वरं शार्ङ्गपाणिं तदाख्यधनुर्हस्तं

व्यक्तिपक्षे प्रथमे पादे ।—

ल० र० र० ग०   ग० म० ज० ग०

– ⌣ – ⌣ ⌣ – ⌣ ⌣   ⌣ ⌣ ⌣ ⌣ – ⌣ – ⌣

महाकविं कालिदासं   वन्दे वाग्देवतागुरुम् ।

ग० म० य० ल०   ग० ज० ज० ग०

⌣ ⌣ ⌣ ⌣ – ⌣ ⌣ –   ⌣ – ⌣ – – ⌣ – ⌣

यज्ज्ञाने विश्वमाभाति   दर्पणे प्रतिबिम्बवत् ॥

तृतीये पादे ।—

ग० य० य० ग० ग० त० ज० ग०

⌣ – ⌣ ⌣ – ⌣ ⌣ ⌣ ⌣ ⌣ ⌣ – – ⌣ – ⌣

कामिनीभिः सह प्रीतिः कस्मै नाम न रोचते ।

ल० य० र० ल० ग० ज० ज० ग०

– – ⌣ ⌣ ⌣ – ⌣ – ⌣ – ⌣ – – ⌣ – ⌣

यदि न स्याद्वारिवीचि-चञ्चलं हतजीवितम् ॥

---

तथा नवीतनुं वेदत्रयमूर्त्तिम् ; "नवीं तनुम्" इति पाठान्तरम् ; ईश्वरं नारायणं प्रणमामि । अष्टाक्षरप्रस्तारेषु अस्य प्रथमतृतीयपादौ सप्तविंशतमौ, द्वितीयः चतुर्नवतितमः, चतुर्थश्च चतुरशीतितमो ज्ञेयः । त्रिषाम अयुक्पादे उभयोरपि चतुर्थाक्षरात् परं र-गणस्य विद्यमानत्वात् तथा वक्त्रादिलक्षणस्य सत्त्वाच्च जातिपक्षीय-मिदं र-विपुलापूर्वकवक्त्रनामानुष्टुप्छन्दस उदाहरणम् । महाकविमिति ।—वाचां वाक्यानां देवता वाणी सा एव गुरुर्यस्य तं सरस्वतीशिष्यमित्यर्थः, महाकविं कविश्रेष्ठं कालिदासं वन्दे पूजयामि, यस्य कवेः ज्ञाने विश्वम् इदं जगत् दर्पणे आदर्शे प्रतिबिम्बवत् आभाति दीप्यते । अस्य प्रथमः पादः अष्टाक्षरप्रस्तारेषु अष्टाविंशतमः, द्वितीयः एकाशीतितमः, तृतीयः पञ्चचत्वारिंशदधिकशततमः, चतुर्थश्च एकनवतितम इति । अत्यस्याव वक्त्रादिलक्षणसत्त्वात् तथा प्रथमपादे चतुर्थाक्षरात् परं रगणस्य, तथा तस्य च एकस्मिन् अयुक्पादे एव सत्त्वाच्च व्यक्तिपक्षीयं र-विपुलापूर्वकं वक्त्रनामकमनुष्टुप्छन्द इदम् । कामिनीभिरित्यादि ।—यदि हतजीवितं वारिवीचिचञ्चलं जलोर्मिवत् चपलमपि न स्यात् न भवेत्, तदा

इदानीं नकारविपुलोदाहरणम्।—

ग० र० न० ग०  ग० य० ज० ग०
⏑ ⏑ – ⏑ – – – ⏑  ⏑ – ⏑ ⏑ – ⏑ – ⏑
यस्या विभाति विपुला  मन्मथस्थानपिण्डिका।
ग० य० न० ग०  ग० त० ज० ग०
⏑ – ⏑ ⏑ – – – ⏑  ⏑ ⏑ ⏑ – – ⏑ – ⏑
या चतुःषष्टिचतुरा  सा स्त्री स्यान्नृपवल्लभा॥

तथैव भारविः।—

ल० र० न० ग०  ल० त० ज० ग०
– ⏑ – ⏑ – – – ⏑  – ⏑ ⏑ – – ⏑ – ⏑
युयुत्सुनेव कवचं  किमामुक्तमिदं त्वया ?।
ल० र० न० ग०  ग० ज० ज० ग०
– ⏑ – ⏑ – – – ⏑  ⏑ – ⏑ – – ⏑ – ⏑
तपस्विनो हि वसते  केवलाजिनवल्कले॥

---

कामिनीभिः स्त्रीभिः सह प्रीतिः हर्षः, हर्षसम्भोग इत्यर्थः, कस्मै जनाय न रोचते ? नाम सम्भावनायां, सर्वस्मै एव रोचते इति भावः। अष्टाक्षरप्रस्तारेषु अस्य प्रथमः पादः एकोनविंशतिः, द्वितीयः एकोननवतितमः, तृतीयः चतुःषष्ट्यधिकशततमः, चतुर्थश्च एकनवतितमः। किञ्च इह वक्त्रादिलक्षणस्य तथा तृतीये पादे चतुर्थाक्षरात् परं र-गणस्य सत्त्वात्, तथा तस्य च एकस्मिन्नयुक्पादे एव विद्यमानत्वाच्च व्यक्तिपक्षीयं र-विपुलापूर्वकमनुष्टुप्छन्द इदम्। यस्या इत्यादि।—यस्याः विपुला प्रशस्ता मन्मथस्थानपिण्डिका नितम्बदेशः विभाति, या च चतुःषष्टिचतुरा चतुःषष्टिकलासु शिक्षिता, सा स्त्री नृपवल्लभा राजमहिषी स्यात्। अस्य प्रथमः पादः अष्टाक्षरप्रस्तारेषु सप्तदशोत्तरशततमः, द्वितीयः अशीतितमः, तृतीयः पञ्चदशाधिकशततमः, चतुर्थश्च एकोननवतितमः इति। किञ्चात्र वक्त्रादिलक्षणस्य तथा प्रथमतृतीयपादयोरुभयोरपि चतुर्थाक्षरात् परं न-गणस्य विद्यमानतया जातिपक्षीयं न-विपुलापूर्वकानुष्टुक्-छन्दोदाहरणमिदम्। युयुत्सुनेत्यादि।—रैवतकाद्रौ तपश्चरन्तमर्जुनं प्रति छद्मवेशधारिणः इन्द्रस्योक्तिरियम्। हे तपस्विन्! त्वया युयुत्सुना योद्धुमिच्छता जनेन

व्यक्तिपक्षे कालिदासः।—

ल० म० न० ग० ग० म० ज० ग०
– ⏑ ⏑ ⏑ – – – ⏑ ⏑ ⏑ ⏑ ⏑ – ⏑ – ⏑
अनाकृष्टस्य विषयैः विद्यानां पारदृश्वनः।

ग० ज० य० ग० ग० त० ज० ग०
⏑ – ⏑ – – ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ – – ⏑ – ⏑
तस्य धर्मरतेरासीत् वृद्धत्वं जरसा विना॥

ल० ज० य० ग० ग० त० ज० ग०
– – ⏑ – – ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ – – ⏑ – ⏑
तव मन्त्रकृतो मन्त्रैः दूरात् प्रशमितारिभिः।

म० म० न० ग० ग० ज० ज० ग०
⏑ ⏑ ⏑ ⏑ – – – ⏑ ⏑ – ⏑ – – ⏑ – ⏑
प्रत्यादिश्यन्त इव मे हृष्टलक्ष्यभिदः शराः॥

इव इदं कवचं किं कथम् आमुक्तं परिहितम्? हि यतः तपस्विनः यतयः केवलाजिनवल्कले वसते मृगचर्मादिकं वृक्षत्वचञ्च परिदधति इति। अस्य प्रथमः पादः अष्टाक्षरप्रस्तारेषु चतुःषष्टितमः, द्वितीयः नवतितमः, तृतीयः अष्टादशाधिकशततमः, चतुर्थश्च एकनवतितम इति। वृत्तलक्षणादिकञ्च अत्रापि पूर्ववदिति। अनाकृष्टस्येत्यादि।—विषयैः रूपादिभिः अनाकृष्टस्य अनासक्तस्य विद्यानां पारदृश्वनः शास्त्रपारगामिनः धर्मरतेः धर्मशीलस्य तस्य दिलीपस्य जरसा विना वार्द्धक्यमन्तरेणापि वृद्धत्वं वार्द्धक्यम् आसीत्। रघुवंशस्यायम्। अस्य प्रथमः पादः अष्टाक्षरप्रस्तारेषु चतुर्दशोत्तरशततमः, द्वितीयः एकाशीतितमः, तृतीयः सप्तविंशतितमः, चतुर्थश्च एकोननवतितमः इति। किञ्च अत्र वक्त्रादिलक्षणस्य तथा प्रथमे पादे चतुर्थाक्षरात् परं न-गणस्य, तस्य च एकस्मिन्नेवायुक्पादे वर्त्तमानत्वात् व्यक्तिपक्षीयं न-विपुलापूर्वक-वक्त्रनामकानुष्टुब्वृत्तोदाहरणमिदम्। तवेति।—दूरात् प्रशमिताः निवारिताः अरयः शत्रवो यैः तथाभूतैः मन्त्रकृतः तव मन्त्रैः हृष्टलक्ष्यभिदः दर्शनमात्रलक्ष्यमात्रविदारणसमर्थाः मे मम शराः प्रत्यादिश्यन्ते इव। रघुवंशीये

इदानीं तकारविपुलोदाहरणम्।—

ग० म० त० ग० ल० भ० ज० ग०

⏑ ⏑ ⏑ ⏑ ⏑ ⏑ – ⏑ – ⏑ – – – ⏑ – ⏑

वन्दे देवं सोमेश्वरं जटामुकुटमण्डितम्।

ग० भ० त० ग० ल० भ० ज० ग०

⏑ ⏑ – – ⏑ ⏑ – ⏑ – ⏑ – – – ⏑ – ⏑

खट्वाङ्गधरं चन्द्रमः-शिखामणिविभूषितम्॥

व्यक्तिपद्ये।—

ग० र० त० ग० ग० ज० ज० ग०

⏑ ⏑ – ⏑ ⏑ ⏑ – ⏑ ⏑ – ⏑ – – ⏑ – ⏑

वन्दे कविं श्रीभारविं लोकमन्तमसश्छिदम्।

ल० म० य० ल० ग० त० ज० ग०

– ⏑ ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑ ⏑ – – ⏑ – ⏑

दिवा दीपा इवाभान्ति यस्याग्रे कवयोऽपरे॥

---

इहापि लक्षणसङ्गतिः पूर्ववत्। वन्दे इत्यादि।—जटामुकुटमण्डितं जटा एव मुकुटं शिरोभूषणं तेन शोभितं, खट्वाङ्गधरं तदाख्यास्त्रविशेषपाणिं, चन्द्रमा एव शिखामणिः तेन विभूषितं, देवं सोमेश्वरं महादेवं वन्दे। अस्य प्रथमः पादः अष्टाक्षरप्रस्तारेषु पञ्चषष्टितमः, द्वितीयचतुर्थौ चतुर्नवतितमौ, तृतीयश्च सप्तसप्ततितमः इति। किञ्चात्र वक्त्रादिलक्षणस्य तथा प्रथमतृतीययोरुभयोरपि पादयोः चतुर्थाक्षरात् परं त-गणस्य विद्यमानत्वात् जातिपथ्येयं त-विपुलापूर्वकवक्त्रनामकानुष्टुप्छन्द इदम्। वन्दे इत्यादि।—लोकानां जनानां सन्तमसच्छिदम् अज्ञानान्धकारध्वंसकारिणं कविं श्रीभारविं वन्दे अहम् अर्चयामि। यस्य कवेः अग्रे पुरतः अपरे अन्ये कवयः दिवा दिवसे दीपाः प्रदीपा इव आभान्ति मन्दतया दीप्यन्ते, दिवसे दिनमणि-किरणोद्भासितस्थाने प्रदीपाः यथा प्रभाहीना भवन्ति, तथा तस्यापि कविप्रवरस्य पुरतः अन्ये कवयः निष्प्रभा जाता इति भावः। अष्टाक्षरप्रस्तारेषु अस्य प्रथमपादः एकोनसप्ततितमः, द्वितीयः एकनवतितमः, तृतीयः षट्चत्वारिंशदधिकशततमः,

तथाऽन्येषामपि प्रयोगः।—

ग० म० य० ग०		ग० य० ज० ग०

⏑ – ⏑ – – ⏑ ⏑ ⏑		⏑ – ⏑ ⏑ – ⏑ – ⏑

लोकवत् प्रतिपत्तव्यो		लौकिकोऽर्थः परीक्षकैः।

ग० भ० त० ज०		ल० य० ज० ग०

⏑ ⏑ – – ⏑ ⏑ – –		– – ⏑ ⏑ – ⏑ – ⏑

लोकव्यवहारं प्रति		सदृशौ बालपण्डितौ॥

इदानीं चकाराकृष्टं मकारविपुलोदाहरणम्।—

ग० र० म० ग०		ग० य० ज० ग०

⏑ ⏑ – ⏑ ⏑ ⏑ ⏑ ⏑		⏑ – ⏑ ⏑ – ⏑ – ⏑

सर्वातिरिक्तं लावण्यं		बिभ्रती चारुविभ्रमा।

ग० र० म० ल०		ग० न० ज० ग०

⏑ ⏑ – ⏑ ⏑ ⏑ ⏑ –		⏑ ⏑ ⏑ ⏑ – ⏑ – ⏑

सौलोकसृष्टिस्त्वन्यैव		निःसामान्यस्य वेधसः॥

चतुर्थश्च एकोनत्रिंशत्तमः इति। किञ्च अत्र वक्त्रादिलक्षणस्य तथा प्रथमे पादे चतुर्थात् अक्षरात् परं त-गणस्य, तस्य च एकस्मिन् अयुजि एव सत्त्वात् व्यक्तिपक्षीयं त विपुलापूर्वकवक्त्रनामानुष्टुप्श्लोकोदाहरणमिदम्। लोकवदिति।—परीक्षकैः सदसद्विचारनिपुणैः, अपीति शेषः, लौकिकः अर्थः लौकिकविषयः लोकाचार इत्यर्थः, अदोषोऽपीति भावः, लोकवत् साधारणजनवत् प्रतिपत्तव्यः स्वीकर्त्तव्यः ग्राह्य इत्यर्थः; बालपण्डितौ मूर्खविद्वांसौ उभावपि लोकव्यवहारं प्रति लोकाचारप्रतिपालनविषये सदृशौ तुल्याधिकारिणावित्यर्थः। अष्टाक्षरप्रस्तारेषु अस्य प्रथमः पादः सप्तविंशतितमः, द्वितीयः षडशीतितमः, तृतीयः पञ्चाधिकद्विशततमः, चतुर्थश्च चतुरशीतितमः इति। अत्र इह वक्त्रादिलक्षणस्य तथा तृतीयपादे चतुर्थाक्षरात् परं त-गणस्य, तस्य च एकस्मिन् अयुजि एव सद्भावात् व्यक्तिपक्षीयं त-विपुलापूर्वकानुष्टुब्वक्त्रच्छन्दस इदमुदाहरणम्। इदानीमिति।—"भ्रौ न्तौ च" इति सूत्रस्य विषयभूतानां भगण-रगण-नगण-तगणानामुदाहरणानि प्रदर्श्य, इदानीं चकाराकृष्टं च इति पदेन प्राप्तं म-गणविपुलोदाहरणं दर्शयति, सर्वेत्यादि।—सर्वातिरिक्तं सर्वातिशायि लावण्यं सौन्दर्यविशेषं बिभ्रती धारयन्ती चारुविभ्रमा मनोज्ञविलासवती, एषा इति शेषः, निःसामान्यस्य असाधारणस्य वेधसः विधातुः, न तु सामान्यस्रष्टुरिति भावः, अन्या

व्यक्तिपक्षे श्रीकालिदासः।—

ल० र० म० ग० ल० य० ज० ग०
– ⏑ – ⏑ ⏑ ⏑ ⏑ ⏑ – – ⏑ ⏑ – ⏑ – ⏑
मनोऽभिरामाः शृण्वन्तौ रथनेमिस्वनोन्मुखैः।
ग० य० य० ग० ल० म० ज० ग०
⏑ – ⏑ ⏑ – ⏑ ⏑ ⏑ – ⏑ ⏑ ⏑ – ⏑ – ⏑
षड्जसंवादिनीः केका द्विधा भिन्नाः शिखण्डिभिः॥
ल० र० म० ग० ग० त० ज० ग०
– ⏑ – ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ – – ⏑ – ⏑
अथ प्रदोषे दोषज्ञः संवेशाय विशाम्पतिम्।
ग० त० य० ग० ल० य० ज० ग०
⏑ ⏑ ⏑ – – ⏑ ⏑ ⏑ – – ⏑ ⏑ – ⏑ – ⏑
सूनुः सूनृतवाक् स्रष्टुः विससर्जोर्दितश्रियम्॥

अपरविधेव स्त्रीलोकसृष्टिः रमणीसृजनं, यो विधिः स्त्रीसाधारणं सृजति, असाधारणसौन्दर्य्यादियं तस्य विधेः सृष्टिर्न, असामान्यः कश्चिद्द्वितीयविधिरिमामसृजदिति भावः। अष्टाक्षरप्रस्तारेषु अस्य प्रथमः पादः पञ्चमः, द्वितीयः व्यशीतितमः, तृतीयः नवत्रिंशदधिकः शततमः, चतुर्थश्च एकाशीतितम इति। किञ्च इह वक्त्रादिलक्षणस्य तथा प्रथमतृतीययोरुभयोरपि पादयोः चतुर्थात् अक्षरात् परं म-गणस्य विद्यमानत्वात् जातिपक्षीयं म-विपुलापूर्वकवक्त्रनामानुष्टुब्वृत्तोदाहरणमिदम्। मनोऽभिरामा इत्यादि।—रथनेमिस्वनोन्मुखैः रथचक्रशब्देन ऊर्द्ध्वमुखैः शिखण्डिभिः मयूरैः द्विधा भिन्नाः षड्जसंवादिनीः षड्जस्वरानुकारिणीः अत एव मनोऽभिरामाः मनोहारिणीः केकाः ध्वनीः शृण्वन्तौ सुदक्षिणादिलीपौ। रघुवंशीयस्यास्य प्रथमः पादः अष्टाक्षरप्रस्तारेषु षष्ठः, द्वितीयः चतुरशीतितमः, तृतीयः एकोनविंशः, चतुर्थश्च द्व्यशीतितम इति। किञ्चात्र वक्त्रादिलक्षणस्य तथा प्रथमपादस्य चतुर्थाक्षरादूर्द्ध्वं म-गणस्य, तस्य च एकस्मिन्नेव अयुजि विद्यमानत्वाच्च व्यक्तिपक्षीयं म-विपुलापूर्वकवक्त्रनामानुष्टुब्वृत्तोदाहरणमिदम्। अथेति।—अथ अनन्तरं दोषज्ञः विद्वान् सूनृतवाक् प्रियसत्यभाषी स्रष्टुः सूनुः वशिष्ठः प्रदोषे निशामुखे रात्रौ इति यावत्, ऊर्दितश्रियं

तृतीयपादे—

ल० र० य० ग०　　ग० भ० ज० ग०

- ᴗ - ᴗ - ᴗ ᴗ ᴗ　　ᴗ ᴗ - - - ᴗ - ᴗ

अदूरवर्त्तिनीं सिद्धिं　　राजन् ! विगणयात्मनः ।

ल० र० म० ग०　　ग० ज० ज० ग०

- ᴗ - ᴗ ᴗ ᴗ ᴗ ᴗ　　ᴗ - ᴗ - - ᴗ - ᴗ

उपस्थितेयं कल्याणी　　नाम्नि कीर्त्तित एव यत् ॥

ग० म० य० ग०　　ग० म० ज० ग०

ᴗ ᴗ ᴗ ᴗ - ᴗ ᴗ ᴗ　　ᴗ ᴗ ᴗ ᴗ - ᴗ - ᴗ

श्लाघ्यस्त्यागोऽपि वैदेह्याः　　पत्युः प्राग्वंशवासिनः ।

ल० र० म० ग०　　ग० म० ज० ग०

- ᴗ - ᴗ ᴗ ᴗ ᴗ ᴗ　　ᴗ ᴗ ᴗ ᴗ - ᴗ - ᴗ

अनन्यजानेः सैवासीत्　　यस्माज्जाया हिरण्मयी ॥

---

प्रवृद्धश्रियं विशाम्पतिं नराधिपं संवेशाय निद्रायै विससर्ज प्रेषयामास । रघुवंशीयस्यास्यापि प्रथमः पादः अष्टाक्षरप्रस्तारेषु षष्ठः, द्वितीयः एकोननवतितमः, तृतीयः पञ्चविंशतितमः, चतुर्थश्च चतुरशीतितम इति । शिष्टावापि पूर्वश्लोकवत् सर्वलक्षणसङ्गतिरिति । अदूरवर्त्तिनीमिति ।—हे राजन् ! आत्मनः सिद्धिं साफल्यम् अदूरवर्त्तिनीं समीपवर्त्तिनीं विगणय विजानीहि ; यत् यतः कल्याणी मङ्गलमूर्त्तिः इयं धेनुः नन्दिनी, नाम्नि कीर्त्तिते एव नामोच्चारणमात्रेणैव उपस्थिता समागता । अस्य प्रथमः पादः अष्टाक्षरप्रस्तारेषु द्वाविंशतितमः, द्वितीयः त्रिनवतितमः, तृतीयः षष्ठः, चतुर्थश्च एकनवतितम इति । शिष्टान् पूर्वपूर्ववत् वक्त्रादिलक्षणस्य तथा तृतीयपादस्य चतुर्थाक्षरादूर्द्धं न-गणस्य, तस्य च एकस्मिन्नेव अयुजि विद्यमानत्वाच्च न-विपुलापूर्वकमनुष्टुब्वक्त्रस्योदाहरणमिदम् । श्लाघ्य इति ।—वैदेह्याः सीतायाः त्यागोऽपि, पत्या इति शेषः, श्लाघ्यः प्रशंसनीयः, यस्मात् प्राग्वंशवासिनः हविर्गृहात् पूर्वभागस्थप्रकोष्ठस्थायिनः, यज्ञदीक्षितस्य इत्यर्थः, अनन्यजानेः न अन्या सीताभिन्ना जाया यस्य तादृशस्य पत्युः रामस्य हिरण्मयी स्वर्णमयी सा एव सीता एव जाया पत्नी आसीत्, नान्या इति भावः । अष्टाक्षरप्रस्तारेषु अस्य प्रथमः पादः

सकारेणापि क्वचिद्विपुला दृश्यते। यथा—

ल० भ० य० ग० ल० त० ज० ग०

- ∪ - - - ∪ ∪ ∪ - ∪ ∪ - - ∪ - ∪

जिते तु लभते लक्ष्मीं मृते चापि वराङ्गनाः।

ल० य० स० ग० ग० त० ज० ग०

- - ∪ ∪ - - ∪ ∪ ∪ ∪ ∪ - - ∪ - ∪

क्षणविध्वंसिनि काये का चिन्ता मरणे रणे ?॥

सङ्कीर्णाश्च विपुलाप्रकारा दृश्यन्ते। तथा चान्यैरुक्तम्।—

ल० भ० म० ग० ल० य० ज० ग०

- ∪ ∪ ∪ - - - ∪ - - ∪ ∪ - ∪ - ∪

क्वचित्काले प्रसरता क्वचिदापत्य विघ्नता।

ल० र० भ० ग० ल० म० ज० ग०

- ∪ - ∪ ∪ - - ∪ - ∪ ∪ ∪ - ∪ - ∪

शुनेव सारङ्गकुलं त्वया भिन्नं द्विषां कुलम्॥

---

सप्तदश, द्वितीयः एकाशीतितमः, तृतीयः षष्ठः, चतुर्थश्च व्यशीतितम इति। वृत्तादिलक्षणसङ्गतिश्च अत्र पूर्वश्लोकवत् ज्ञातव्या इति। भकाराकृष्टं म-गणोदाहरणं प्रदर्श्य सम्प्रति चकारेणैव प्राप्तं स-गणविपुलोदाहरणं दर्शयितुमाह,—सकारेणेति। जिते इत्यादि।—काये देहे क्षणविध्वंसिनि क्षणभङ्गुरे सति रणे युद्धे मरणे मृत्युविषये का चिन्ता ? चिन्ता नैव कर्त्तव्या। तत्र हेतुमाह,—जिते युद्धे जयलाभे कृते सति, लक्ष्मीं श्रियं सम्पत्तिं, मृते चापि वराङ्गनाः श्रेष्ठाङ्गनाः, लभते प्राप्नोति। अस्य प्रथमः पादः अष्टाक्षरप्रस्तारेषु विंशतमः, द्वितीयः नवतितमः, तृतीयः द्वापञ्चाशत्तमः, चतुर्थश्च एकोननवतितम इति। किञ्च इह वक्त्रादिलक्षणस्य तथा तृतीयपादे चतुर्थवर्णात् परं स-गणस्य, तस्य च एकस्मिन्नेव अयुजि सत्त्वात् व्यक्तिपथीयं स-विपुलापूर्वकं वक्त्रनामकमनुष्टुपछन्दः इति बोध्यम्। क्वचिदित्यादि।—क्वचित् कुत्रचित् स्थाने काले उपयुक्तसमये प्रसरता, क्वचित् कुत्रचित् स्थाने आपत्य समागत्य विघ्नता विघ्नं कुर्वता त्वया शुना सारमेयेण सारङ्गकुलमिव हरिणसमूह इव द्विषां शत्रूणां कुलं भिन्नं विनाशितम्। अष्टाक्षरप्रस्तारेषु अस्य प्रथमपादः

इत्यादयो विपुला विकल्पाः सङ्कीर्णाश्चानुकोटिशः काव्येषु दृश्यन्ते। सर्वासां विपुलानां चतुर्थो वर्णः प्रायेण गुरुर्भवतीत्याम्नायः। (न)

[इत्यनुष्टुब्वक्त्राधिकारः]।

अथ पदचतुरूर्ध्वाधिकारः।

**प्रतिपादं चतुर्वृद्ध्या पदचतुरूर्ध्वम्॥ २१॥**

चतुर्णामक्षराणां वृद्धिश्चतुर्वृद्धिः। अनुष्टुभः पादादूर्ध्वं प्रतिपादं चतुरक्षरवृद्ध्या यत् वृत्तं निष्पद्यते तत् पदचतुरूर्ध्वं नाम। तत्रोदाहरणम्।—

१ २ ३ ४ ५ ६ ७ ८

त स्याः क टा क्ष वि क्षे पैः

---

चतुर्दशोत्तरशततमः, द्वितीयः चतुरशीतितमः, तृतीयः द्व्यधिकशततमः, चतुर्थश्च द्व्यशीतितम इति। किञ्चात्र प्रथमे पादे चतुर्थाक्षरात् परं न-गणस्य तथा तृतीये भ-गणस्य वर्त्तमानत्वात् तयोश्च एकैकस्मिन्नेव अयुजि सत्त्वाच्च व्यक्तिपक्षीयं न-भ-विपुलापूर्वकमनुष्टुब्वक्त्रनामकं छन्द इदमिति। गणद्वयघटितविपुलावत्त्वात् सङ्कीर्णविपुलोदाहरणमिदम्। चतुर्थवर्णस्य तु गुरुत्वं लघुत्वं वा इति सन्देहमपाकुर्वन्नाह, सर्वासामिति।—प्रायेण गुरुरित्यनेन क्वचित् लघुरपि इति साम्प्रदायिकाः।

(प) अनुष्टुबधिकारं परिसमाप्य साम्प्रतं विषमवृत्तान्तर्गतं पदचतुरूर्ध्वाधिकारं प्रस्तौति, प्रतिपादमिति।—चतुर्वृद्ध्या चतुरक्षरवृद्ध्या। चतुर्वृद्ध्या इत्यनेन कस्मात् चतुर्वृद्ध्या इत्याशङ्कायामाह, अनुष्टुभ इत्यादि।—अनुष्टुभः पादादूर्ध्वम् इति वचनसामर्थ्यादेव प्रथमे पादे वृद्धिर्न प्रसज्येत, अपि तु द्वितीयादावेव। ततश्च प्रथमे पादे अनुष्टुभी नियमेनाष्टाक्षराणि स्थापनीयानि, द्वितीयपादे द्वादशाक्षराणि, तृतीये षोडश, चतुर्थे च विंशत्यक्षराणि स्थापनीयानि, एतादृशलक्षणात्मकं वृत्तं पदचतुरूर्ध्वं नाम भवेदित्यर्थः। आपीडच्छन्दःसारेऽप्युक्तं यथा—"भवेत् पदचतुरूर्ध्वं चतुर्वृद्ध्या पदेषु च" इति। एतत्प्रदर्शनार्थं पदचतुरूर्ध्वोदाहरणानामुपरि विन्यस्ताङ्केभ्यः अष्ट-द्वादश-षोडशाङ्केभ्यः परं पुनरेकादिचतुःपर्य्यन्तानामङ्कानामावृत्तिर्द्रष्टव्या। चतुर्णां पादानां वैषम्याच्च विषमवृत्तेऽन्तर्भावोऽस्य। गुरुलघुविवेचनन्तु वृत्तिकारमतमङ्गीकृत्य

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
क म्पि त त नु कु टि लै र ति दी र्घैः।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
त क्ष क द ष्ट इ वे न्द्रि य शू न्यः अ त चै त न्यः
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
प द च तु रू र्ध्वं न च ल ति पु रु षः प त ति स ह सै व॥
अत्र गुरुलघुविभागो नेष्यते। (प)

---

न विधेयमेव। अत्राह नारायणभट्टः,—"अत्र चैकद्वित्रिचतुष्काणां परस्परताड़नया पादानां परस्परसङ्करे शङ्खचक्रगदापद्मानां परस्परसङ्करे विष्णुरचनाया इव चतुर्विंशतिभेदा भवन्ति। तत् प्रस्तारतो यथा—८, १२, १६, २०। ८, १६, १२, २०। ८, २०, १६, १२। ८, १२, २०, १६। ८, १६, २०, १२। ८, २०, १२, १६। १२, ८, १६, २०। १२, १६, ८, २०। १२, २०, १६, ८। १२, ८, २०, १६। १२, १६, २०, ८। १२, २०, ८, १६। १६, १२, ८, २०। १६, ८, १२, २०। १६, २०, ८, १२। १६, १२, २०, ८। १६, ८, २०, १२। १६, २०, १२, ८। २०, १२, १६, ८। २०, ८, १६, १२। २०, १२, ८, १६। २०, १६, ८, १२। २०, १६, १२, ८। २०, ८, १२, १६। अत्रैकैकपङ्क्तिस्थितकोष्ठकचतुष्टयस्थिताङ्कसमानाक्षरकमिकपादैरेकैको भेदो ज्ञेयः। तत्र प्रथमभेदे मूलस्थितमुदाहरणम्। द्वितीये तु ममैव यथा—लोभं त्यज विलयं ८ लाभालाभावुभौ भावय समानौ भव धीरः १६। यत्नाद्गुरुजनगौरवमाचर १२ यदि तवास्मिन्नमुष्मिंश्च लोके यशो विश्रामलभाशास्यं स्यात् २०॥ इदमेवोदाहरणं पादव्यत्ययेनेतरेषु द्वाविंशतिभेदेषु योज्यम" इति।

तस्याः इत्यादि।—नायिकायाः कटाक्षवर्णनमिदम्। तस्याः नायिकायाः कम्पिता तनुः शरीरं यैस्तैः अथ च कुटिलैः वक्रैः; विशेषणद्वयस्य कर्मधारयसमासस्वीकारात् साधुः; तथा अतिदीर्घैः प्रसारिभिः, कटाक्षविक्षेपैः अपाङ्गदृष्टिभिः पुरुषः तक्षकेण भुजङ्गविशेषेण दष्टः आहतः इव इन्द्रियशून्यः अवशेन्द्रियः, तथा अपगतचैतन्यः अपगतं नष्टं चैतन्यं ज्ञानं यस्य तथाभूतः सन् पदचतुरूर्ध्वं चतुर्णां पदानाम् अधिकं न चलति न गच्छति, सहसा झटिति एव पतति च, भूमौ इति शेषः। महासर्पदष्टो यथा अवशेन्द्रियः अपगतचैतन्यश्च सन् चितुःपदाधिकं गन्तुं न समर्थः भूमौ पतति च, तथा सुन्दरीकटाक्षाहतोऽपि अधिकं चलितुं न क्षमः पतति

## गावन्तः आपीड़ः ॥ २२ ॥

गकारौ द्वावन्ते चेद्भवतश्चतुर्णामपि पादानां, तत् पदचतुरूर्द्ध्वमापीड़संज्ञकं भवति। अन्ते गुरुद्वयग्रहणादत्र शेषाणां लघुत्वमभ्यनुज्ञातं सूत्रकारेणेति मन्यामहे। तत्रोदाहरणम्।—

गं० गं०
१ २ ३ ४ ५ ६ ७ ८
कु सु मि त स ह का रे

गं० गं०
१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
ह त हि म म हि म शु चि श शा ङ्के।

गं० गं०
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
वि क सि त क म ल स र सि म धु स म ये ऽ स्मि न्

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १
प्र व स सि प थि क ह त क! य दि भ व ति त व

गं० गं०
२ ३ ४
वि प त्तिः ॥ (फ)

---

च भूमौ इत्यर्थः। अत्र प्रथमे पादे अष्टाक्षराणि, द्वितीये द्वादशाक्षराणि, तृतीये षोडशाक्षराणि, तथा चतुर्थे पादे विंशत्यक्षराणि, एवं प्रतिपादं क्रमेण चतुरक्षरवृद्ध्या पदचतुरूर्द्ध्वं नाम वृत्तमिदमिति बोध्यम्।

(फ) नियमभेदेन पदचतुरूर्द्ध्वस्य संज्ञान्तरं दर्शयति, गावित्यादि।—गौ गुरुद्वयम्। चतुर्णां पादानां पूर्वोक्तनियताक्षराणां चतुश्चरणानामन्ते अवसाने गकारौ गुरुद्वयं चेद्भवतः तत् छन्दः आपीड़संज्ञकं स्यात्। तथा च आग्नेयच्छन्दःसारे—"गुरुद्वयान्त आपीड़ः" इति। कुसुमितेत्यादि।—वसन्तवर्णनमिदम्। हे पथिकहतक! हे दुर्भाग्यपात्र! कुसुमितः पुष्पितः सहकारः चूतवृक्षो यांश्मन् तथाविधे, तथा हतेन नष्टेन हिममहिम्ना शिशिरप्रभावेण हेतुना शुचिः उज्ज्वलः यशाङ्कः चन्द्रो यस्मिन् तादृशे, विकसितं प्रस्फुटितं कमलं पद्मं यस्मिन् तथाविधं सरः यश्मिन् तादृशे, अस्मिन् मधुसमये वसन्तकाले, यदि प्रवससि पत्नीं विहाय विदेशवासमङ्गीकरोषि, त्वामिति शेषः, तदा तव विपत्तिः अनिष्टं भवति। इहापि पूर्ववत्

## आदौ चेत् प्रत्यापीड़ः ॥ २३ ॥

गकारौ द्वावादौ चेद्भवतश्चतुर्णामपि पादानां, तदा तत् पदचतुरूर्द्ध्वं प्रत्यापीड़संज्ञं भवति। अत्रापि पूर्ववच्छेषाणां लघुत्वमेव। तत्रोदाहरणम्।—

गं० गं०
१ २ ३ ४ ५ ६ ७ ८
चि त्तं म म र म य ति

गं० गं०
१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
का न्तं व न मि द मु प गि रि न दि।

गं० गं०
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
कू ज न्म धु क र क ल र व कृ त ज न धृ ति

गं० गं०
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
पुं स्को कि ल मु ख रि त सु र भि कु सु म चि त
१ २ ३ ४
त रु त ति ॥ (ब)

---

प्रतिपादं चतुरक्षरवृद्धेः तथा प्रतिपादान्ते गुर्वोर्द्वयोरन्येषाञ्च लघूनां सन्निवेशात् आपीडसंज्ञकं पदचतुरूर्द्ध्वं नाम वृत्तमिदमिति बोध्यम्।

(ब) नियमविशेषेण पदचतुरूर्द्ध्वस्य प्रत्यापीडाख्यं संज्ञान्तरं दर्शयति, आदाविति। —आदौ पादानां प्रथमे। अत्रापि गौ इति अनुवर्त्तनीयम्। तथा चाग्नेये— "प्रत्यापीडो गगादिकः" इति। चित्तमित्यादि।—कूजन्तः गुञ्जनं कुर्वन्तः ये मधुकराः भ्रमराः तेषां कलरवैः मधुरध्वनिभिः कृता जनिता जनानां धृतिः तुष्टिः यत्र तत्; "धृति" इत्यत्र "धुति" इति पाठे—धुतिः कम्पनं, सात्त्विकभावविशेष इत्यर्थः; तथा पुंस्कोकिलैः पिकैः मुखरिताः शब्दिताः सुरभिकुसुमैः सुगन्धिपुष्पैश्चिताः व्याप्ताः तरूणां वृक्षाणां ततयः पङ्क्तयो यत्र तत् तादृशम्, उपगिरिनदि गिरेः पर्वतस्य नदी गिरिनदी, उप समीपे गिरिनदी यस्य तत्; वनविशेषणमिदम्; यद्वा—गिरिनद्या

## प्रत्यापीड़ो गावादौ च॥ २४॥

चकारोऽन्त इति समुच्चयार्थः। तस्यैव पदचतुरूर्द्ध्वस्यान्ते आदौ च यदि गकारौ भवतस्तदाऽपि प्रत्यापीड़ एव भवति। तत्रोदाहरणम्।—

ग० ग० ग० ग०
१ २ ३ ४ ५ ६ ७ ८
का न्ता व द न स रो जं
ग० ग० ग० ग०
१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
हृ द्यं घ न सु र भि म धु र सा ढ्य म्।
ग० ग० ग० ग०
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
पा तु र ह सि स त त म भि ल ष ति म नो मे
ग० ग०
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
कि ञ्चि न्मु कु लि त न य न म वि र त म णि त
ग० ग०
१ २ ३ ४
र म णी य म्॥

तदेवं द्विप्रकारः प्रत्यापीड़ो भवति। (भ)

---

उप समीपम् उपगिरिनदि गिरिनदीसन्निहितं कान्तं मनोज्ञम् इदं वनं मम चित्तं मानसं रमयति। अत्र पदचतुरूर्द्ध्वलक्षणं सर्वं वर्त्तते, विशेषतस्तु प्रतिपादादौ द्वौ गुरुवर्णौ स्तः अन्ते च लघवः सन्ति, अतस्तु प्रत्यापीड़नामकं पदचतुरूर्द्ध्वं वृत्तमिदमिति।

(भ) अपरविधं प्रत्यापीड़लक्षणमाह, प्रत्यापीड़ इत्यादि।—च इति समुच्चयार्थः। चकारेण किं समुच्चिनोति इत्याशंकायामाह, चकार इत्यादि।—चतुर्णां पूर्वोक्त-नियताक्षराणां पादानाम् आदावन्ते च नियमेन गुरुद्वयं, तथा अन्ये च लघवश्चेत् तदाऽपि प्रत्यापीड़ः स्यात्। कान्तेत्यादि।—हृद्यं हृदयग्राहि, घनसुरभि सान्द्रतर-सुगन्धयुक्तं, मधुरसाढ्यम् मधुतरसपूर्णं, किञ्चिन्मुकुलितानि नयनानि यत्र तत् तादृशं,

**प्रथमस्य विपर्य्यासे मञ्जरीलवल्यमृतधाराः ॥२५॥**

आपीड़ग्रहणं निवृत्तम्। तेनैव समं लघ्वक्षराण्यनुष्ठानञ्च। तदेव पदचतुरूर्द्धं प्रथमस्य पादस्य विपर्य्यासे मञ्जरीलवल्यमृतधाराभिधानं भवति। प्रथमस्य पादस्य द्वितीयेन विपर्य्यासे मञ्जरी। प्रथमस्य तृतीयेन विपर्य्यासे लवली। प्रथमस्य चतुर्थेन विपर्य्यासेऽमृतधारा। तत्र मञ्जर्य्युदाहरणम्।—

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
ज न य ति म ह तीं प्री तिं हृ द ये

१ २ ३ ४ ५ ६ ७ ८
का मि नां चू त म ञ्ज री।

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
मि ल द लि च क्र च ञ्चु प रि चु म्बि त के श रा

---

तथा अविरतमणितेन सततं सुरतकालिकाव्यक्तशब्दविशेषेण रमणीयं मनोहरं कान्तावदनसरोजं रहसि निर्जने पातुं मे मनः कथं सततं सर्वदा अभिलषति इच्छति। अत्र पदचतुरूर्द्धलक्षणपूर्वकं प्रत्येकपादा[दौ] अन्ते च गुरुद्वयस्य मध्ये च लघुवर्णानां सन्निवेशात् इदमपरविधं प्रत्यापीड-नामकं पदचतुरूर्द्ध छन्दः। तदेवमिति।—प्रथमाक्षरद्वयस्य गुरुत्वे एकविधः प्रथमाक्षरद्वयस्य अन्त्याक्षरद्वयस्य च गुरुत्वे अपरविधः इति द्विविधः प्रत्यापीडः।

(म) नियमविशेषेण पदचतुरूर्द्धस्य मञ्जर्य्यादिसंज्ञाविशेषानाह, प्रथमस्येति।—प्रथमस्य प्रथमपादस्य। विपर्य्यासे वैपरीत्ये। आपीड़ेति।—आपीडाधिकारो लघुवर्णाधिकारश्च निवृत्तः। प्रथमस्य पादस्य अष्टाक्षररूपस्य द्वितीयेन द्वादशाक्षररूपेण विपर्य्यये प्रथमपादस्य द्वादशाक्षरतायां द्वितीयस्य चाष्टाक्षरतायां मञ्जरीत्यर्थः। एवमेव प्रथमपादस्य तृतीयपादेन विपर्य्यये लवली। प्रथमपादस्य चतुर्थपादेन विपर्य्यये च अमृतधारानाम वृत्तं भवेत्। एवञ्च प्रथमपादस्य द्वितीयत्वे द्वितीयस्य प्रथमत्वे मञ्जरी, प्रथमस्य तृतीयत्वे तृतीयस्य च प्रथमत्वे लवली, प्रथमस्य चतुर्थत्वे चतुर्थस्य प्रथमत्वे च अमृतधारा इति विवेकः। जनयतीत्यादि।—मिलन्तः सङ्गताः ये अलयः षट्पदाः तेषां चक्रं समूहः तस्य चञ्चुभिः मुखाग्रदेशैः परिचुम्बिताः केशराः

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
को म ल म ल य वा त प रि न र्त्ति त त रु शि ख र स्थि ता ॥

लवल्युदाहरणम् ।—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
वि र ह वि धु र हू ण का ङ्ग ना क पो लो प मं

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
प रि ण ति ध रं पी त पा ण्डु च्छ वि ।

१ २ ३ ४ ५ ६ ७ ८
ल व ली फ लं नि दा घे

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २
भ व ति ज ग ति हि म क र शी त ल म ति स्वा दू ष्णा

३ ४
ह र म् ॥

अमृतधारोदाहरणम् ।—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६ १ २ ३ ४
प रि वा ञ्छ सि क र्ण र सा य नं स त त म मृ त धा रा भिः

यस्याः तादृशी, तथा कोमलेन मृदुना मलयवातेन दक्षिणानिलेन परिनर्त्तितेषु सञ्चालितेषु तरूणां वृक्षाणां शिखरेषु अग्रदेशेषु स्थिता चूतमञ्जरी आम्रमुकुलं कामिनां कामुकानां हृदये मानसे महतीं विपुलां प्रीतिम् आनन्दं जनयति । अत्र पदचतुरूर्द्ध्वलक्षणलक्षिताः पादाः सन्ति, किन्तु पदचतुरूर्द्ध्वीयाष्टाक्षरात्मकप्रथमपादस्य द्वितीयतया द्वितीयस्य च द्वादशाक्षरात्मकस्य प्रथमतया निवेशनात् पदचतुरूर्द्ध्वभेदमञ्जरीनामवृत्तमिदम् । विरहेत्यादि ।—विरहेण कान्तविच्छेदेन विधुराः कातराः याः हूणकाङ्गनाः हूणदेशीयाः स्त्रियः तासां कपोलाः गण्डदेशाः उपमा यस्य तादृशं परिणतिधरं परिपक्वं पीतपाण्डुच्छवि पीतमिश्रकेतकीरजःसन्निभकान्ति लवलीफलं निदाघे ग्रीष्मे, जगति अतिस्वादु अतिमधुरं चन्द्रवत् हिमकरवत् शीतलम्, अत एव उष्णाहरं तापनाशनं भवति । अत्र पदचतुरूर्द्ध्वलक्षणात्मकपादेषु षोडशाक्षरात्मकतृतीयपादस्य प्रथमत्वेन अष्टाक्षरात्मकप्रथमपादस्य च तृतीयत्वेन निवेशात् पदचतुरूर्द्ध्वे लवलीनामकं छन्दः इति बोध्यम् । परिवाञ्छतीत्यादि ।—

१ २ ३ ४ ५ ६ ७ ८ १ २ ३ ४
य दि हृ दि वा प र मा न न्द र स म् ।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १ २ ३ ४
चे तः ! शृ णु ध र णी ध र वा णी म मृ त म यीं
१ २ ३ ४ ५ ६ ७ ८
त त् का व्य गु ण भू ष ण म् ॥

केचिदापीडादिष्वपि पादविपर्य्यासे सति मञ्जर्य्यादिनामानी-च्छन्ति । ( म )

[ इति पदचतुरूर्द्ध्वाधिकारः ] ।

---

हे चेतः! यदि अमृतधाराभिः पीयूषप्रवाहैः कर्णरसायनं श्रोत्रप्रीतिं, वा अथवा, हृदि मनसि परमानन्दरसं ब्रह्मास्वादसुखं परिवाञ्छसि अभिलषसि, तत् तदा काव्यगुणानां माधुर्य्यादीनां भूषणम् अलङ्कारस्वरूपाम् अमृतमयीं पीयूषरूपां, विष्णुकथायाः मोक्षप्रदत्वादिति भावः, धरणीधरवाणीं विष्णुकथां शृणु आकर्णय । पक्षे अर्थान्तरमपि ध्वन्यते—अमृतधाराभिः तन्नामधेयच्छन्दोभिः यदि कर्णरसायनं, हृदि परमानन्दरसमनुभवितुं वा इच्छसि तदा धरणीधरस्य पिङ्गलनागस्य वाणीं छन्दोलक्षणात्मकं वाक्यं शृणु इति । अत्रापि पदचतुरूर्द्ध्वलक्षणात्मकेषु पादेषु विंशत्यक्षरात्मकचतुर्थपादः प्रथमत्वेन तथा अष्टाक्षरात्मकप्रथमपादस्य चतुर्थपादत्वेन निर्दिष्टः, अतः पदचतुरूर्द्ध्वम् अमृतधाराभिधानमिदं छन्दः । हलायुधेन ( ५।२५ ) सूत्रस्य वृत्तौ "आपीडप्रकरणं निवृत्तम्; तेनैव समं लघ्वक्षराभ्यनुज्ञानञ्च" इत्यनेन स्वमतं प्रदर्शितम् । इदानीं मतान्तरप्रदर्शनार्थमाह, केचिदित्यादि ।—एषां मते तु मञ्जर्य्यादिसूत्रस्य वृत्तौ हलायुधेन "आपीडग्रहणम्—" इत्यादि यदुक्तं, तदसमीचीनमिति । सूत्रकृता तु अत्र स्पष्टतया कोऽपि विशेषो नाभिहितः ; किञ्च, "प्रथमस्य विपर्य्यासे—" इत्यादिसूत्र-पर्य्यालोचनया एतदेव प्रतीयते यत मञ्जर्य्यादीनां पादविपर्य्यासमात्रे एव तात्पर्य्यं, न तु गुरुलघुरूपाक्षराणामभ्यनुज्ञानानभ्यनुज्ञानयोरिति । एवञ्च पदचतुरूर्द्ध्वभेदापीडा-दीनां गुरुलघुनियमविधानेन यत्र आपीडादीनां पादविपर्य्यासे मञ्जर्य्यादिच्छन्दांसि भवन्ति तत्र आपीडवत् मञ्जर्य्यादिष्वपि गुरुलघुविधानमव्याहतं, यत्र च पदचतुरूर्द्ध्वस्य पादविपर्य्यासे तानि भवन्ति तत्र गुरुलघुनियमाभाव इति तु तेषां मतम् । "अप्रतिषिद्धं परमतमनुमतमेव" इति न्यायात् हलायुधस्यापि अनुमतमेव मतमेतदिति प्रतिभाति । एतदेव अभिप्रेत्य वृत्तरत्नाकरकृता उक्तं—"प्रथममितरचरणसमुत्थं, त्ययति स यदि

लक्ष्म। इतरदितरगदितमपि यदि च तुर्य्यं, चरणयुगलकमविकृतमपरमिति कलिका सा॥" इति। अस्य नारायणभट्टीका व्याख्या यथा—"प्रथमं तुर्य्यं प्रथमचरणः इतरचरणसमुत्थं स्थानम् इतरद्द्वितीयचरणगतं लक्ष्म लक्षणं श्रयति, इतरदपि द्वितीयमपि इतरगदितं प्रथमगदितं श्रयति च यदि अपरं चरणद्वयकं तृतीयचतुर्थरूपम् अविकृतं यथास्थितम् इत्येवंविधः स आपीड एव सा प्रसिद्धा कलिका। यद्वा—स आपीडः प्रथमं प्रथमस्थाने प्रथमपादे द्वितीयपादलक्षणं श्रयति सा कलिका द्वादशाक्षराष्टाक्षरषोडशाक्षरविंशत्यक्षरपादैः क्रमेण घटिता इति फलितार्थः। पैङ्गले तु एतस्याः मञ्जरी नाम" इति। तथा—"द्विगुरुकयुतसकलचरणान्ता, मुखचरणगतमनुभवति च तृतीयम्। चरणमिह हि लक्ष्म, प्रकृतमखिलमपि यदिदमनुभवति लवली सा॥" इति। अस्य नारायणभट्टव्याख्या यथा—"तृतीयश्चरणः मुखचरणगतं प्रथमचरणस्थं लक्षणमनुभवत्यवलम्बते, अपरं पादत्रयं प्रकृतम् अखिलं लक्ष्म आपीडलक्षणञ्च यदि तदा लवली नाम, क्रमेण द्वादशाक्षरषोडशाक्षराष्टाक्षरविंशत्यक्षरपादा लवलीत्यर्थः" इति। तथा—"प्रथममधिवसति यदि तुर्य्यं, चरमचरणपदमवसितगुरुयुग्मम्। अखिलमपरमुपरिगतमिति ललितपदयुक्ता, तदियममृतधारा॥" इति। अस्य नारायणी व्याख्या—"प्रथमतुर्य्यं प्रथमश्चरणः चरमचरणपदं चतुर्थचरणस्थानं प्राप्नोति चतुर्थो भवतीत्यर्थः, अपरमिखिलं प्रथमचरणत्रयम् आपीडप्रथमपादोपरिगतद्वितीयादिपादसमं तदिदं छन्दः अमृतधारा नाम। द्वादशषोडशविंशत्यष्टाक्षरपादक्रमेण भवतीति सङ्कलितार्थः। यद्यपि वृत्तिकारेण प्रथमस्य तृतीयत्वे तृतीयस्य प्रथमत्वे लवली, प्रथमस्य चतुर्थत्वे चतुर्थस्य च प्रथमत्वे अमृतधारा इति षोडशद्वादशाष्टविंशत्यक्षरपादक्रमेण विंशति द्वादश-षोडशाष्टाक्षरपादक्रमेण च वर्योदशैकोनविंशतिभेदयोरेते संज्ञे इति मञ्जर्य्यभावेऽपि तयोर्विशेष उक्तः, उदाहरणे च तथैव कृते, तथाऽपि "प्रथमस्य विपर्य्यासे मञ्जरीलवल्यमृतधारा" इति सूत्रस्य साधारणत्वात् प्रथमपादमात्रविपर्य्यासोक्तेरितरेषां क्रमोऽभ्यनुज्ञया वा सूत्रस्य मूलकारोक्त एवार्थस्तात्पर्य्याटेवमुक्तम्। आपीडवत् पदचतुरूर्ध्वेऽपि पादव्यत्यासे मञ्जर्य्यादा भेदा ज्ञेयाः" इति। एतेन मञ्जर्य्यादयः पदचतुरूर्ध्वभेदापीडलक्षणान्तर्गताः केवलपदचतुरूर्ध्वलक्षणान्तर्गताश्च इति वृत्तरत्नाकरकारमतं स्फुटमेव प्रतीयते। लक्ष्यदर्शनानुरूपमेव लक्षणं सम्भवति, उक्तलक्षणलक्षितश्लोकत्रये च आपीडलक्षणं यथायथमस्ति, अपरञ्च, मञ्जरी( कलिका )लवल्यमृतधारालक्षणानामपि प्रवेशात् तत्तन्नामधेयान्येतानि छन्दांसि इति। वाग्भटच्छन्दःसारेऽप्युक्तं—"गुरुद्वयान्त आपीडः प्रत्यापीडो गवादिगः। प्रथमस्य विपर्य्यासे मञ्जरी लवली क्रमात्॥ भवेदमृतधाराख्या—"

**उद्गतामेकतः स्जौ स्लौ न्सौ ज्गौ, भ्नौ ज्लौ ग्, स्जौ स्जौग् ॥ २६ ॥**

इति । एतेनापि आपीडपादविपर्य्यासेनैव मञ्जर्य्यादयः इति प्रतीयते । अत्र च केनचित् अर्वाचीनेन हलायुधनारायणयोरुभयोरेव मतमशुद्धमित्युक्तम् ; तथा च—"अत्र हलायुधेन निजवृत्तौ यदुक्तं 'केचिदापीड़ादिष्वपि पादविपर्य्यासे सति मञ्जर्य्यादिनामानीच्छन्ति' इति, तदसमञ्जसम् । आपीडप्रत्यापीड़ादौ आदावन्ते आद्यन्तयोश्च गुरुद्वयानन्तरं शेषाणां मध्यगतानाञ्च लघुनियमकरणात् शेषाणां मध्यगतानाञ्च लघुत्वकरणं सूत्रयोर्मध्ये गुर्वनियमप्रसङ्गे आद्यन्तग्रहणादेव ज्ञापितम् । मञ्जर्य्यादौ तु पदचतुरूर्द्ध्ववत् लघुगुर्वनियमाभाव इति प्राक् प्रतिपादितम् । किञ्च, मञ्जरीसूत्रे 'आपीडग्रहणं तेनैव सह लघुगुर्वनियमस्य निवृत्तः' इति निजग्रन्थे एव परस्परविरोधापत्तिस्तेन निदर्शिता । अत आपीड़ादौ मञ्जर्य्याद्यारोपणमयुक्तम्" इति । विदुषाऽनेन नारायणभट्टोऽपि अवहसितः, यथा—"यत्तु वृत्तरत्नाकरटीकाकृता रामेश्वरभट्टसूनुना नारायणभट्टेन निजटीकायामुक्तम् 'आपीडवत् पदचतुरूर्द्ध्वेऽपि पादव्यत्यासे मञ्जर्य्याद्या भेदाः' इति, तत्तु बुद्धिमान्द्यमूलकमेव । मञ्जर्य्यादीनान्तु पदचतुरूर्द्ध्ववत् गुरुलघ्वनियमाभावः एव नितरामापीडभेदकः । वस्तुतस्तु सम्यगेतत् हलायुधनारायणभट्टयोः कथनं सूत्रविरुद्धमिति मत्वा सर्वैरप्युपेक्ष्यम्" इति । परन्तु विद्वत्प्रवरेणानेन एतत्तु न प्रदर्शितं यत् हलायुधेन कुत्र आपीड़ादौ मञ्जर्य्यादिकमारोपितम् ? तेन तु परमतमेव प्रदर्शितं न तु स्वमतम् । अन्यच्च—"मञ्जर्य्यादौ तु पदचतुरूर्द्ध्ववत् लघुगुर्वनियमाभावः" इत्यादि तेन यदभिहितं तत्र न किञ्चित् साधकप्रमाणं प्रदर्शितम् । अत्र च सूत्रकारस्य स्पष्टोक्तेरभावात् एवमेव प्रतीयते यत् आपीड़ाद्यनन्तरमेव "प्रथमस्य—" इत्यादिसूत्रविधानात् आपीड़ादिपादविपर्य्यासे एव मञ्जर्य्यादिकं, तथा आपीडादीनामपि पदचतुरूर्द्ध्वान्तर्गतत्वात् पदचतुरूर्द्ध्वपादविपर्य्यासेऽपि । यदि पदचतुरूर्द्ध्वपादविपर्य्यासमात्र एव मञ्जर्य्यादिकं सूत्रकाराभिमतं भवेत्, तर्हि तदनन्तरमेव "प्रथमस्य—" इत्यादि सूत्रं तेन निवेशितं स्यादिति । एतदेव विचिन्त्य हलायुधेनापि पूर्वोक्तमतान्तरं न दूषितम् इति । यत्तु तेन स्ववृत्तौ "आपीडग्रहणम्—" इत्यादि प्रथमत उक्तं, तत् पदचतुरूर्द्ध्वस्यैव अधिकृतत्वेन प्राधान्याभिप्रायादिति । एवञ्च प्रमाणप्रदर्शनाभावेऽपि अर्वाचीनविदुषा यत् प्राचीनानां कदनं कृतं, तत्र कदर्थयत एव बुद्धिभ्रमः उत वा हलायुधनारायणपादानामिति निर्णेतुं सर्वथैवासमर्था वयमिति ।

*पाद इति प्रकृतमनुवर्त्तते । यत्र प्रथमे पादे सकार-जकार-सकार-लकारैर्दशाक्षराणि भवन्ति, द्वितीये पादे नकार-सकार-जकार-गकारैर्दशैव, तृतीये पादे भकार-नकार-जकार-लकार-गकारैरेकादशैव, चतुर्थे पादे सकार-जकार-सकार-जकार-गकारैस्त्रयोदशैव, तत् वृत्तमुद्गता नाम । तत्रो-दाहरणम् ।—

स० ज० स० ल० न० स० ज० ग०

- - ᴗ - ᴗ - - - ᴗ - - - - - - ᴗ - ᴗ - ᴗ

मृगलोचना शशिमुखी च रुचिरदशना नितम्बिनी ।

भ० न० ज० ल० ग० स० ज० स० ज० ग०

ᴗ - - - - - - ᴗ - - ᴗ - - ᴗ - ᴗ - - - ᴗ - ᴗ - ᴗ

हंसललितगमना ललना परिणीयते यदि भवेत् कुलोद्गता ॥

यत्र सूत्रे गकारो लकारो वा श्रूयते, तत्र तेनैव वृत्तस्य पादः समाप्यते । उद्गतामिति कर्मविभक्तिश्रवणात् पठेत्

(अ) पदचतुरूर्द्ध्वाधिकारं परिसमाप्य साम्प्रतमुद्गताधिकारमारभते, उद्गते-त्यादि ।—एकतः एकं कृत्वा, प्रथमं द्वितीयेनैक्यं विधाय इत्यर्थः ; यद्वा—एकत इति एकशब्दो भावप्रधानः तृतीयार्थे च तसिः, ऐक्येन, अपृथग्भावेनेत्यर्थः । अन्यत् वृत्तौ स्पष्टम् । मृगेत्यादि ।—मृगस्य लोचने इव लोचने आयतचञ्चले चक्षुषी यस्याः सा, शशिमुखी चन्द्रानना, तथा रुचिराः मनोज्ञाः दशनाः दन्ताः यस्याः सा, नितम्बिनी प्रशस्तनितम्बशालिनी, हंसवत् ललितं सुभगं गमनं चलनं यस्याः सा एतादृशी सुलक्षणा ललना रमणी यदि कुलोद्गता सद्वंशसम्भूता भवेत् तदा परिणीयते विवाहयोग्या भवति । अत्र च लक्षणानुरूपाः सर्वे गणाः सन्ति इति उद्गतानाम वृत्तम् । सूत्रे केवलं गणनिर्देशेन पादावराणां विशेषज्ञाना-भावात् कुत्र पादविरतिरिति संशयनिराकरणार्थमाह वृत्तिकारः, यत्रेत्यादि ।—सूत्रे यत्र यस्मिन् स्थाने गकार-लकारान्यतमवर्णोपादानं दृश्यते तत्र पादसमाप्ति-रित्यर्थः, यथा 'सजौ' इत्यत्र लकारश्रवणात् प्रथमपादज्ञानं, तथा 'जगौ' इत्यत्र च गकारश्रवणात् द्वितीयपादसमाप्तिः, तथा पुनः 'जलौ ग्' इत्यत्र च

इत्यध्याहार्य्यम्। एकत इति प्रथमं पादं द्वितीयेन सहाविलम्बेन पठेदित्यर्थः। "उपस्थितप्रचुपितं पृथगाद्यम्—"( ५।२९ पि०) इत्यतः सिंहावलोकितन्यायेनाद्यग्रहणमनुवर्त्तनीयम्। तेनाद्यमेव पादमेकतः पठेत्। एकतः इति ल्यब्लोपे पञ्चमी। (य)

## तृतीयस्य सौरभकं र्नौ भ्गौ ॥ २७ ॥

तृतीयस्येति ग्रहणात् तस्या उद्गताया एवान्ये त्रयः पादा गृह्यन्ते। तृतीयपादे तु विशेषः। तृतीये पादे रेफ-नकार-भकार-गकारैर्दशाक्षराणि भवन्ति, तत् सौरभकं नाम। तत्रोदाहरणम्।—

स० ज० स० ल० न० स० ज० ग०

– – ⏑ – ⏑ – ⏑ – – ⏑ – – – – – ⏑ – ⏑ – ⏑

विनिवारितोऽपि नयनेन तदपि किमिहागतो भवान्।

---

गकारदर्शनात् तृतीयपादान्तः, एवं 'स्जौ ग्' इत्यत्र च गकारदर्शनात चतुर्थपादसमाप्तिरिति दिक्। सूत्रेऽस्मिन् क्रियापदादर्शनात् उद्गतामिति कर्मविभक्तेरन्यथानुपपत्तेः पठेदित्यध्याहृतक्रियया अस्यान्वयः। एकतः इत्यनेन प्रथमं पादमिति कथं लभ्यते इत्यत आह, उपस्थितेति।—उपस्थितप्रचुपितमित्यादिवक्ष्यमाणसूत्रादधिकर्त्तव्यमित्यर्थः। अधिकारस्य वक्ष्यमाणसूत्रात् कथं सम्भवति इत्यत आह, सिंहेति।—"गोयूथः सिंहदृष्टिश्च मण्डूकप्लुतिरेव च। गङ्गास्रोतःप्रवाहश्च अधिकारश्चतुर्विधः॥" इत्युक्तेषु चतुर्विधेषु अधिकारेषु सिंहदृष्टिन्यायेन इति भावः। अन्वर्ता गणतश्च विषमवृत्तमिदम्, अतः परमपि तदेव ज्ञेयम्। अस्य छन्दसः चत्वारः पादाः दशैकादशवर्णादशाक्षरप्रस्तारस्य भेदविशेषाः अवगन्तव्याः। कः कतमो भेदः इति तु सर्व्वानुष्टुब्वज्ज्ञातव्यम्।

(र) उद्गताभेदं सौरभकमाह, तृतीयस्येति।—तृतीयस्य तृतीयपादस्य र-न-भ-ग-गणघटितदशाक्षरत्वे अन्येषां पादानाञ्च उद्गतालक्षणलक्षितत्वे सौरभकमिति फलितम्। विनिवारित इति।—भवान् नयनेन नेत्रेण, विनिवारितोऽपि निषिद्धोऽपि, तदपि तथाऽपि पुनरपीत्यर्थः, इह अत्र, किं कथम्, आगतः उपस्थितः ?

र० न० भ० ग० स० ज० स० ज० ग०

∪ - ∪ - - - ∪ - - ∪ - - ∪ ,- ∪ - - - ∪ - ∪ - ∪

एतदेव तव सौरभकं यदुदीरितार्थमपि नावबुध्यते ॥ (र)

## ललितं नौ सौ ॥ २८ ॥

तस्या एव उद्गतायास्तृतीयपादस्थाने यदा नौ सौ भवतः तदा ललितं नाम वृत्तम् । तत्रोदाहरणम् ।—

स० ज० स० ल० न० स० ज० ग०

- - ∪ - ∪ - - - ∪ - - - - - - - ∪ - ∪ - ∪

सततं प्रियंवदमनूनममलहृदयं गुणोत्तरम् ।

न० न० स० स० स० ज० स० ज० ग०

- - - - - - - - ∪ - - ∪ - - ∪ - ∪ - - - - ∪ - ∪ - ∪

सुललितमतिकमनीयतनुं पुरुषं त्यजन्ति न तु जातु योषितः ॥

(ल)

---

उदीरितार्थम् उक्तार्थमपि यत् न अवबुध्यते न ज्ञायते, भवतीति शेषः, तव एतदेव सौरभकं सौन्दर्य्यम् । अत्र तृतीयपादेतरपादा उद्गतालक्षणान्विताः, तृतीयस्य पादः यथोक्तगणोपेतः दशाक्षरः, अतः सौरभकं नाम छन्द इदमिति बोध्यम् ।

(ल) उद्गताभेदं ललितमाह, ललितमिति ।—अत्रापि तृतीयस्य इति अनुवर्त्तनीयम् ; नगणद्वय-सगणद्वयघटिततृतीयपादत्वे उद्गतालक्षणघटितेतरपादत्वे च ललितं नाम छन्दः इत्यर्थः । सततमित्यादि ।—योषितः रमण्यः सततं निरन्तरं प्रियं प्रीतिप्रदं वचनं वदतीति तथाभूतम्, अनूनम् अहीनम्, उदारचरितमित्यर्थः, अमलहृदयं निर्म्मलमानसं गुणोत्तरं गुणश्रेष्ठं सुललितं सुमनोहरं तथा अतिकमनीयतनुं कोमलशरीरं पुरुषं जातु कदाचित् न तु नैव त्यजन्ति मुञ्चन्ति । अत्र तृतीयः पादः नगणद्वय-सगणद्वयघटितद्वादशाक्षरः, अन्ये च पादाः उद्गतालक्षणान्विताः, अतः ललितं नाम वृत्तमिदम् ।

उपस्थितप्रचुपितं पृथगाद्यं म्सौ ज्भौ गौ,
स्नौ ज्रौ ग्, नौ स्, नौ न् ज्यौ ॥ २९ ॥

यत्र प्रथमे पादे मकार-सकार-जकार-भकारा गकारौ च भवतः, द्वितीये सकार-नकार-जकार-रेफा गकारश्च, तृतीये नकारौ सकारश्च, चतुर्थे त्रयो नकारा जकार-यकारौ च, तदुपस्थितप्रचुपितं नाम वृत्तं भवति। तत्रोदाहरणम्।—

म० स० ज० भ० ग० ग०

रामा कामकरेणुका मृगायतनेत्रा

स० न० ज० र० ग०

हृदयं हरति पयोधरावनम्रा।

न० न० स०

इयमतिशयसुभगा

न० न० न० ज० य०

बहुविधनिधुवनकुशला ललिताङ्गी ॥

(ख) साम्प्रतं विषमवृत्तेषु उपस्थितप्रचुपिताधिकारः प्रस्तूयते, उपस्थितेत्यादि। —आद्यं प्रथमं चरणं पृथक् पृथक्कृत्वा पठनीयं, न तु उद्गतावत् एकत इत्यर्थः। पृथगाद्यमित्यनेन आद्यं चरणं केवलः पृथक् पठनीयम्, अन्यत् चरणत्रयमेकीकृत्य पठनीयं, न तु तेषु प्रतिचरणं विरामः कार्य्यः इति प्रतीयते ; एवञ्च "श्लोकार्द्धे तु विशेषतः" इति यतिविषयकनियमस्यापवादविधिरयम् इति बोध्यम्। आद्यं चरणं पृथक् पठनीयं, न तु उद्गतावत् द्वितीयेन एकीकृत्य, अन्यत् चरणत्रयं यथानियमं पठनीयमिति तु नारायणभट्टस्याभिप्रायः। रामेति।—मृगस्य कुरङ्गस्य आयते दीर्घे नेत्रे इव नेत्रे यस्याः सा, पयोधराभ्यां स्तनाभ्याम् अवनम्रा पीनतुङ्गतया भारेणेव अवनता इत्यर्थः, अतिशयसुभगा अत्यन्तप्रियतमा, बहुविधे निधुवने

पृथगाद्यमिति उद्गतामेकतः पठेदित्यनुवृत्तिशङ्कानिरासार्थम्। अत्र तृतीयपादव्यवस्था सकारस्य विभज्य पाठलिङ्गात्। (व)

**वर्द्धमानं नौ स्नौ न्सौ ॥ ३० ॥**

तृतीयस्येत्यनुवर्त्तते। तस्मिन् उपस्थितप्रचुपिते तृतीयस्य पादस्य स्थाने यदा नकारौ सकार-नकारौ पुनर्नकार-सकारौ च भवतस्तदा वर्द्धमानं नाम वृत्तं भवति। तत्रोदाहरणम्।—

---

नानाविधकामव्यापारे कुशला निपुणा, ललिताङ्गी सुकुमारशरीरा, कामकरेणुका कामकृत्यव्यापारे मत्तकरिणीव प्रगल्भा इयं रामा योषित् हृदयं मनः हरति आकर्षति। अत्र चतुर्णामेव पादानाम् उपस्थितप्रचुपितलक्षणोक्त-मादिगणघटितत्वात् उपस्थितप्रचुपिताख्यं वृत्तमिदम्। सूत्रे पृथगाद्यमिति कथं प्रयुक्तम्? इत्याह, पृथगिति।—उद्गतासूत्रे यथा एकत इत्यनेन प्रथमं पादं द्वितीयपादेन सह अविलम्बेन पठेदित्यभिहितं तथा इहापि अनुवृत्तिः तस्यानुवर्त्तनं भवतु इति या आशङ्का सम्भावना तस्याः निरासार्थं निवृत्त्यर्थं पृथगाद्यमित्युक्तम्। ननु उद्गतासूत्रे "यत्र सूत्रे गकारः लकारः वा श्रूयते, तत्र तेन एव वृत्तस्य पादः समाप्यते" इति वृत्तिकारोक्त्या अत्र 'गौ' 'ग्' इति गकारदर्शनेन प्रथमद्वितीयपादव्यवस्था अवगम्यते, गकार-लकार-दर्शनाभावात् तृतीयपादपरिज्ञाने क उपायः? इत्याह, अत्रेति।—"नौ स्" इत्यत्र सकारस्य विभज्य पाठलिङ्गात् पृथक् निर्देशादेव अत्र सूत्रे तृतीयपादव्यवस्था ज्ञातव्या, नकारद्वय-सकारेण तृतीयपादः पठनीय इत्यभिप्रायः। क्वचित् पुस्तके "अत्र तृतीयपादव्यवस्था नास्ति सकारस्य विभागपाठलिङ्गात्" इति पाठान्तरं दृश्यते। एवेन प्रथमपादस्य चतुर्दशाक्षरत्वे द्वितीयस्य त्रयोदशाक्षरत्वे तृतीयस्य नवाक्षरत्वे चतुर्थस्य पञ्चदशाक्षरत्वे च तथा प्रथमपादस्य पृथक् पाठे द्वितीयादिपादत्रयाणामविरतपाठे उपस्थितप्रचुपितनामकं वृत्तमिति लक्षणमायातमिति दिक्।

(व) उपस्थितप्रचुपितविशेषवर्द्धमानवृत्तमाह, वर्द्धमानमिति।—"नौ" इत्यादिषु "तृतीयस्य—" (पृ२७ पि०) इति सूत्रात् तृतीयस्य इति पदमनुवर्त्तते। एतदेवाह वृत्तिकारः, तृतीयस्येति।—पूर्वतः मण्डूकप्लुत्या तृतीयस्य इहाधिकारः इति भावः। ततश्च न-न-स-न न-स-गणघटिततृतीयपादत्वे उपस्थितप्रचुपितलक्षणात्मकापरपादत्रयत्वे च वर्द्धमानं नाम वृत्तमिति लक्षणम्।

म० स० ज० भ० ग०ग०

बिम्बोष्ठी कठिनोन्नतस्तनभावनताङ्गी

स० न० ज० र० ग०

हरिणीशिशुनयना नितम्बगुर्वी।

न० न० स० न० न० स०

मदकलकरिगमना परिणतशशिवदना

न० न० न० ज० य०

जनयति मम मनसि मुदं मदिराक्षी॥ (अ)

शुद्धविराडृषभं तजराः॥ ३१॥

तस्मिन्नेव उपस्थितप्रचुपिते यदा तृतीयस्य पादस्य स्थाने तकार-जकार-रेफा भवन्ति, तदा शुद्धविराडृषभं नाम वृत्तं भवति। तत्रोदाहरणम्।—

बिम्बोष्ठीति।—बिम्बवत् ओष्ठं यस्याः सा बिम्बोष्ठी बिम्बफलवत् रक्तोष्ठीत्यर्थः, कठिनाभ्यां कठोराभ्याम् उन्नताभ्यां तुङ्गाभ्याञ्च स्तनाभ्यां कुचाभ्यां स्तनभारेणेत्यर्थः, अवनतम् अङ्गं शरीरं यस्याः तथाभूता, तथा हरिणीशिशोः नयने इव आयतचञ्चले नयने यस्याः सा, नितम्बगुर्वी विशालनितम्बा, मदकलः मदमत्तः यः करी हस्ती तस्य गमनमिव गमनं यस्याः सा गजेन्द्रवदलसगमना इत्यर्थः, परिणतः पूर्णः यः शशी चन्द्रः सः इव वदनं मुखं यस्याः सा, तथा मदिरस्य मत्तखञ्जनस्य अक्षिणीव अक्षिणी यस्याः एवम्भूता कान्ता मम मनसि मुदं हर्षं जनयति। अत्र तृतीयेतरपादाना-मुपस्थितप्रचुपितलक्षणाक्रान्तत्वात् तृतीयस्य च न-न स-न-न-स-गणघटितत्वात् वर्द्धमानं नाम वृत्तमिदमिति।

(अ) उपस्थितप्रचुपितविशेषशुद्धविराडृषभच्छन्दोलक्षणमाह, शुद्धेति।—इहापि पूर्ववत् तृतीयस्य अनुवर्त्तनम्। तस्मिन्निति।—तृतीयपादे यदा त-ज-राख्या गणाः भवेयुः, अपरपादत्रयञ्च उपस्थितप्रचुपितवत् भवति, तदा तदुपस्थितप्रचुपितं शुद्धविराडृषभमिति संज्ञान्तरं लभते इत्यर्थः। छन्दोन्तरे तु "शुद्धविराडार्षभम्

म० स० ज० भ० ग०ग०

⏑ ⏑⏑ - - ⏑ - ⏑ - ⏑ - - ⏑ ⏑

कन्येयं कनकोज्ज्वला मनोहरदीप्तिः

स० न० ज० र० ग०

- - ⏑ - - - - ⏑ - ⏑ - ⏑⏑

शशिनिर्मलवदना विशालनेत्रा ।

त० ज० र०

⏑ ⏑ - - ⏑ - ⏑ - ⏑

पीनोरुनितम्बशालिनी

न० न० न० ज० य०

- - - - - - - - ⏑ - - ⏑ ⏑

सुखयति हृदयमतिशयं तरुणानाम् ॥

उपस्थितप्रचुपितादीनामस्मिन् प्रवेशयितुं न शक्यन्ते संज्ञाः, इति नोक्ताः । (ष)

---

इति संज्ञान्तरमस्य । केचित्तु अस्य प्रथमे पादे यतौ चार्षभं, प्रतिपादं यतौ शुद्धविराडा-दिकं तदेवेति यतिभेदात् छन्दोद्वयमेव पृथक् वदन्ति । कन्येयमिति ।—कनकोज्ज्वला कनकवत् स्वर्णवत् उज्ज्वला दीप्तिशालिनी गौराङ्गी इत्यर्थः; मनोहरदीप्तिः सुन्दर-कान्तिः, शशिनिर्मलवदना चन्द्रवन्निर्मलमुखी, विशाले आयते आकर्णविश्रान्ते इत्यर्थः, नेत्रे चक्षुषी यस्याः सा, तथा पीनोरुनितम्बशालिनी पीनाभ्यां स्थूलाभ्याम् ऊरु-नितम्बाभ्यां शालते शोभते या सा तादृशी इयं कन्या ललना तरुणानां युवजनानां हृदयं मानसम् अतिशयम् अत्यन्तं सुखयति आनन्दयति । अत्र तृतीयपादेतर-पादाः उपस्थितप्रचुपितलक्षणात्मकाः, तथा तृतीयपादः त-ज-र-गणयुक्तः, अतः शुद्ध-विराडृषभनामकं वृत्तमिदम् । प्राक् सर्वत्रैव उदाहरणश्लोके छन्दोनाम कौशलेन श्लोकांशतया सन्निवेशितमस्ति, उपस्थितप्रचुपितादीनां अयाचां वृत्तानामुदाहरणे तु नास्ति, तत्र हेतुमाह, उपस्थितेति ।—अस्मिन् "दामा" इत्याद्युदाहरणपद्ये उप-स्थितप्रचुपितादीनां संज्ञाः नामानि प्रवेशयितुं न शक्यन्ते अपरापरवृत्तानामुदाहरणे यथा वृत्तानां नामानि सन्निविष्टानि, अत्र तु तथा सन्निवेशयितुं न शक्यानि इत्यर्थः, इति इत्यतः नोक्ता न कथिताः । अत्राह नारायणभट्टः,—"संज्ञाया वृत्तेऽप्रवेशा-दुक्ते नीतिरियं प्रथमे पादे यतिरिति" ।

## अर्द्धे ॥३२॥

पूर्वमुच्चावचानि छन्दांस्युक्तानि, इदानीं नियमेनोच्यन्ते। अर्द्धे इत्यधिकारोऽयमाध्यायपरिसमाप्तेः। यदित ऊर्द्धमनुक्रमिष्यामः, अर्द्ध एव तत् वेदितव्यम्। (ख)

## उपचित्रकं सौ स्लौ ग्, भौ भ्गौ ग् ॥३३॥

यस्य प्रथमे पादे सकारास्त्रयो लकार-गकारौ च, द्वितीये भकारास्त्रयो गकारौ च भवतस्तदुपचित्रकं नाम वृत्तम्। अर्द्धशब्दस्य समप्रविभागवचनत्वाद्द्वितीयमप्यर्द्धं तादृशमेव। तत्रोदाहरणम्।—

स० स० स० ल०ग० भ० भ० भ० ग०ग०

- - ⏑ - - ⏑ - - ⏑ - ⏑ ⏑ - - ⏑ - - ⏑ - - ⏑ ⏑

उपचित्रकमत्र विराजते चूतवनं कुसुमैर्विकसद्भिः।

स० स० स० ल०ग० भ० भ० भ० ग०ग०

- - ⏑ - - ⏑ - - ⏑ - ⏑ ⏑ - - ⏑ - - ⏑ - - ⏑ ⏑

परपुष्टनिघुष्टमनोहरं मन्मथकेलिनिकेतनमेतत् ॥ (ह)

---

(ख) विषमवृत्तं समाप्य साम्प्रतम् अर्द्धसमवृत्ताधिकारं प्रस्तौति, अर्द्धे इति।—अर्द्धे श्लोकार्द्धे। अधिकारसूत्रमिदम्। सूत्रार्थमाह, पूर्वमित्यादि।—उच्चावचानि अनेकविधानि, अनियताक्षरघटितपादवन्तीत्यर्थः। अर्द्धे इत्यधिकारः आध्यायपरिसमाप्तेः पञ्चमाध्यायपरिसमाप्तिं यावत्।

(ह) अधिकारसंज्ञां विधाय सम्प्रति अर्द्धसमविशेषोपचित्रकलक्षणमाह, उपचित्रकमित्यादि।—यत्र प्रथम-तृतीयपादे स-स-स-गणोत्तरं लघुगुरू भवतः, तथा द्वितीय-चतुर्थचरणे भ-गणत्रयोत्तरं गुरुद्वयं भवेत् तदुपचित्रकनाम वृत्तमिति फलितार्थः। अर्द्धसमवृत्तेषु "अर्द्धे" इत्यनेन एकार्द्धस्य व्यवस्था प्रदर्शिता, द्वितीयार्द्धस्य का व्यवस्था? इत्यत आह, अर्द्धशब्दस्येति।—अर्द्धसमवृत्तेषु प्रथमार्द्धवत् द्वितीयार्द्धमपि भवेदेव, इत्यतः सर्वत्र प्रथम-द्वितीयपादोक्तरीत्यैव तृतीय-चतुर्थपादयोरपि व्यवस्था ज्ञातव्या, एवञ्च प्रथमेन तृतीयः द्वितीयेन च चतुर्थः पादः तुल्यः इति बोध्यम्। उपचित्रकमिति।—अत्र अस्मिन् स्थाने विकसद्भिः प्रस्फुटद्भिः कुसुमैः पुष्पैः उपचित्रकं

द्रुतमध्या भौ भ्गौ ग् न्जौ ज्यौ ॥ ३४ ॥

यस्य प्रथमे पादे त्रयो भकारा गकारौ च, द्वितीये नकार-जकारौ जकार-यकारौ च, तत् द्रुतमध्या नाम वृत्तम्। अत्रापि प्रथमद्वितीयाविव तृतीयचतुर्थौ पादौ। तत्रोदाहरणम्।—

भ० भ० भ० ग०ग० न० ज० ज० य०

ᴗ – – ᴗ – – ᴗ – – ᴗ ᴗ – – – – ᴗ – – ᴗ – – ᴗ ᴗ

यद्यपि शीघ्रगतिर्मृदुगामी बहुधनवानपि दुःखमुपैति।

भ० भ० भ० ग०ग० न० ज० ज० य०

ᴗ – – ᴗ – – ᴗ – – ᴗ ᴗ – – – – – ᴗ – – ᴗ – – ᴗ ᴗ

नातिशयत्वरिता न च मन्दा नृपतिगतिः कथिता द्रुतमध्या॥(क)

---

विचित्रं, मनोज्ञमित्यर्थः, परपुष्टानां कोकिलानां विघुष्टैः शब्दैः मनोहरं सुभगं, मन्मथस्य कामस्य, केलिनिकेतनं क्रीडागृहस्वरूपम् एतत् चूतवनम् आम्रकाननं विराजते शोभते। अत्र उपचित्रकवृत्तस्य प्रथमपादवत्तृतीयः पादः, द्वितीयपादवत् चतुर्थपादश्च, अतः उपचित्रकलक्षणयोगात् तथा अर्द्धसमलक्षणयोगाच्च अर्द्धसमवृत्तेषु उपचित्रकनाम वृत्तमिदम्। एतदनुसारिणा केदारभट्टेनापि वृत्तरत्नाकरे उपचित्रकलक्षणमभिहितं, यथा—"विषमे यदि सौ स-ल-गा दले भौ युजि भाद्गुरुकावुपचित्रम्" इति। तथा चापि छन्दःसारेऽपि—"उपचित्रकं स-स-स-ला गोऽथ भौ भ-भ-गा गय" इति लक्षणम्।

(क) द्रुतमध्यालक्षणमाह, द्रुतमध्येति।—स्पष्टम्। यस्येति।—यस्य अर्द्धसम-वृत्तस्य प्रथम-तृतीयचरणे भ-गणत्रयोत्तरं द्वे अक्षरे गुरुणी भवेतां, तथा द्वितीय-चतुर्थ-चरणे क्रमेण न-ज-ज-य-गणाः स्युस्तस्य द्रुतमध्या इति नाम इति फलितम्। यद्यपी-त्यादि।—यद्यपि शीघ्रा त्वरिता गतिः यस्य सः शीघ्रगतिः, अथवा मृदु लघु गन्तुं शीलं यस्यासौ तादृशः, कश्चित् भवेदिति शेषः, तदा सः बहुधनवान् विपुलैश्वर्य्य-युक्तोऽपि दुःखं क्लेशम् उपैति अनुभवति, अतिद्रुतगामी अतिलघुगामी वा धनी अपि न सुखं लभते इति भावः। तदा कीदृशी गतिर्वाञ्छिता? इत्याह, नातिशयेति।—नृपतिगतिः राजगमनं, धनवतां गतिरिति यावत्, नातिशयत्वरिता नातिद्रुता तथा

## वेगवती सौ स्गौ, भौ भ्गौ ग् ॥ ३५ ॥

यस्य प्रथमे पादे त्रयः सकारा गकारश्चैकः, द्वितीये भकारास्त्रयो गकारौ च भवतस्तत् वेगवती नाम वृत्तम् । तत्रोदाहरणम् ।—

स० स० स० ग० भ० भ० भ० ग०ग०

– – ∪ – – ∪ – – ∪ ∪ ∪ ∪ – – ∪ – – ∪ – – ∪ ∪

तव मुञ्ज नराधिप ! सेनां वेगवतीं सहते समरेषु ।

स० स० स० ग० भ० भ० भ० ग०ग०

– – ∪ – – ∪ – – ∪ ∪ ∪ – – ∪ – – ∪ – – ∪ ∪

प्रलयोर्म्मिमिवाभिमुखीं तां कः सकलक्षितिभृन्निवहेषु ? ॥ (ख)

---

न च मृद्वी नातिलघुका, किन्तु द्रुतमध्या नातिद्रुता नातिमृद्वी किन्तु मध्यविधद्रुता इत्यर्थः, कथिता उक्ता, पण्डितैरिति शेषः ; एवमुदाहरणात्मिका च द्रुतमध्या तन्नामकं वृत्तम् इत्यपि सूच्यते इत्यभिप्रायः । अत्र पादान्तलघोः गुरुत्वनियमेन "उपैति" इत्यत्र 'ति' इति पदस्य ह्रस्वत्वेऽपि गुरुत्वातिदेशात् य-गणत्वं, किञ्च प्रथमः तृतीयेन द्वितीयः चतुर्थेन च सह साम्यं भजन् अर्द्धसमविशेषद्रुतमध्यानाम वृत्तमित्यवधेयम् ।

(ख) वेगवतीलक्षणमाह, वेगवतीति ।—यत्र अयुक्पादे स-गणत्रयं गुरुश्च भवेत्, तथा युक्पादे भ-गणत्रयानन्तरं द्वौ गुरू भवेतां तत्र वेगवती इति नाम । तवेत्यादि ।—हे नराधिप ! मुञ्ज ! तदाख्यनृपते ! समरेषु युद्धेषु वेगवतीम् अप्रतिहततेजस्कां, स्रोतोऽधिकाम् इति च ध्वन्यते ; प्रलयोर्म्मिमिव प्रलयकाले या ऊर्म्मिः पयोधिवीचिः तामिव तत्सदृशीम्, अभिमुखीं स्वाभिमुखमायान्तीं तां प्रसिद्धां तव सेनां सकलक्षितिभृन्निवहेषु निखिलराजसमूहेषु ; सकलपर्वतेषु इत्यपि ध्वन्यते ; मध्ये कः जनः सहते ? सोढुं शक्नोति ? न कोऽपीति भावः । इह "समरेषु" "निवहेषु" इत्युभयत्र पादान्तलघोरातिदेशिकगुरुत्वम् । आग्नेयच्छन्दःसारे वेगवतीलक्षणं यथा—"वेगवती स-स-स-गा भ-भ-भ-गा गदिता" इति ।

भद्रविराट् तजौ रगौ, मसौ जगौ ग् ॥३६॥

यस्य प्रथमे पादे तकार-जकारौ रेफ-गकारौ च, द्वितीये मकार-सकार-जकारा गकारौ च, तत् भद्रविराट् नाम वृत्तम् । तस्योदाहरणम् ।—

त० ज० र० ग० म० स० ज० ग०ग०

⏑ ⏑ – – ⏑ – ⏑ – ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ – – ⏑ – ⏑ – ⏑ ⏑

यत्पादतले चक्रास्ति चक्रं हस्ते वा कुलिशं सरोरुहं वा ।

त० ज० र० ग० म० स० ज० ग०ग०

⏑ ⏑ – – ⏑ – ⏑ – ⏑ ⏑ ⏑ ⏑ ⏑ – – ⏑ – ⏑ – ⏑ ⏑

राजा जगदेकचक्रवर्त्ती स्याच्च भद्रविराट् समश्नुतेऽसौ ॥

अस्यौपच्छन्दसकान्तःपातित्वेऽपि विशेषसंज्ञार्थमर्द्धसमाधिकारे पाठः । (ग)

---

(ग) अर्द्धसमवृत्तेषु भद्रविराड्लक्षणमाह, भद्रविराडिति ।—वृत्तौ स्पष्टम् । यदित्यादि ।—यस्य पादतले चक्रं चक्राकारचिह्नं वा अथवा हस्ते पाणौ कुलिशं वज्रं, सरोरुहं पद्मं वा चकास्ति शोभते, हस्तपादतले एतानि चिह्नानि यस्य वर्त्तन्ते इत्यर्थः, असौ जगदेकचक्रवर्त्ती सार्व्वभौमः राजा स्यात् भवेत्, तथा भद्रेषु साधुषु श्रेष्ठेषु वा विशेषेण राजते इति तादृशः असौ शं कुशलं सर्व्वविधमिति भावः, समश्नुते लभते । ननु अस्यापि अयुक्पादे गणचतुर्दशमात्रात्मकस्य युजि च गणषोडशमात्रात्मकस्य औपच्छन्दसिकस्य लक्षणप्रवेशात् औपच्छन्दसिकत्वे कथं पुनः पृथङ्नामलक्षणादिक-मुक्तमित्याह, अस्येति ।—नामद्वयप्रतिपादनार्थमर्द्धसमाधिकारे अस्य पाठः कृतः, वस्तुतस्तु पूर्व्वोक्ते "औपच्छन्दसिकम्" (४।३४पि०) इत्यस्य "वाक्यैर्मधुरैः" इत्याद्युदा-हरणे एते गणाः सन्ति, अस्योदाहरणे "यत्पादतले" इत्यादावपि च पूर्व्वोक्ता अष्टाचतुर्दशषोडशमात्रा वर्त्तन्ते, एवञ्च मात्रानियमपक्षे "औपच्छन्दसिकम्" इति, गणनियमपक्षे च "भद्रविराड्" इति नाम इत्यर्थः ; अतः नाम्नैव केवलं भेदः, न तु लक्षणे इति निष्कर्षः ।

## केतुमती स्जौ स्गौ, भ्रौ न्गौ ग् ॥ ३७ ॥

यस्य प्रथमे पादे सकार-जकारौ सकार-गकारौ च, द्वितीये भकार-रेफ-नकारा गकारौ च, तत् केतुमती नाम वृत्तम्। तत्रोदाहरणम्।—

स० ज० स० ग० भ० र० न० ग०ग०

- - ᴗ - ᴗ - - - ᴗ ᴗ ᴗ - - ᴗ - ᴗ - - - ᴗ ᴗ

हृतभूरिभूमिपतिचिह्नां युद्धसहस्रलब्धजयलक्ष्मीम्।

स० ज० स० ग० भ० र० न० ग० ग०

- - ᴗ - ᴗ - - - ᴗ ᴗ ᴗ - - ᴗ - ᴗ - - - ᴗ ᴗ

सहते न कोऽपि वसुधायां केतुमतीं नरेन्द्र! तव सेनाम् ॥ (घ)

## आख्यानिकी तौ ज्गौ ग्, ज्तौ ज्गौ ग् ॥ ३८ ॥

यस्य प्रथमे पादे तकारौ जकारौ गकारौ च, द्वितीये जकार-तकारौ जकारौ गकारौ च, तदाख्यानिकी नाम वृत्तम्। तत्रोदाहरणम्।—

त० त० ज० ग०ग० ज० त० ज० ग०ग०

ᴗ ᴗ - ᴗ ᴗ - - ᴗ - ᴗ ᴗ - ᴗ - ᴗ ᴗ - - ᴗ - ᴗ ᴗ

भृङ्गावलीमङ्गलगीतनादैर्जनस्य चित्ते मुदमादधाति।

त० त० ज० ग०ग० ज० त० ज० ग०ग०

ᴗ ᴗ - ᴗ ᴗ - - ᴗ - ᴗ ᴗ - ᴗ - ᴗ ᴗ - - ᴗ - ᴗ ᴗ

आख्यानिकी च स्मरजन्मयात्रा-महोत्सवस्याश्रवणे क्षणान्ते॥
आख्यानिकी वार्त्ताहारिकोच्यते। (ङ)

---

(घ) केतुमतीलक्षणमाह, केतुमतीति।—वृत्ती सर्वं स्पष्टम्। हृतेत्यादि।—हे नरेन्द्र! राजन्! वसुधायां धरायां हृतभूरिभूमिपतिचिह्नां हृतानि बलात् गृहीतानि भूरिभूमिपतीनां बहुनरपतीनां चिह्नानि छत्रचामरादीनि यया तथाभूता, तथा युद्धसहस्रेण लब्धा प्राप्ता जयलक्ष्मीर्यया तां तादृशीं केतुमतीं पताकावतीं तव सेनां सेनानां पराक्रममित्यर्थः, कोऽपि न सहते सोढुं न शक्नोति। पूर्ववत् लक्षणप्रवेशः विधेयः।

(ङ) आख्यानिकीमाह, आख्यानिकीति।—प्रथम-तृतीयपादयोः त-त-

**विपरीताख्यानिकी ज्तौ ज्गौ ग् तौ ज्गौ ग् ॥२६॥**

यस्य प्रथमे पादे जकार-तकारौ जकारो गकारौ च, द्वितीये तकारौ जकारो गकारौ च, तद्विपरीताख्यानिकी नाम वृत्तम्। तत्रोदाहरणम्।—

ज० त० ज० ग०ग० त० त० ज० ग०ग०

– ᴗ – ᴗ ᴗ – – ᴗ – ᴗ ᴗ ᴗ ᴗ – ᴗ ᴗ – – ᴗ ᴗ ᴗ

अलं तवालीकवचोभिरेभिः स्वार्थं प्रिये ! साधय कार्य्यमन्यत्।

ज० त० ज० ग०ग० त० त० ज० ग०ग०

– ᴗ – ᴗ ᴗ – – ᴗ – ᴗ ᴗ ᴗ ᴗ ᴗ – ᴗ ᴗ – – ᴗ – ᴗ ᴗ

कथं कथावर्णनकौतुकं स्यादाख्यानिकी चेद्विपरीतवृत्तिः॥

एतयोश्च वक्ष्यमाणोपजात्यन्तर्गतत्वेऽपि विशेषसंज्ञार्थमर्द्धसमाधिकारे पाठः। (च)

---

ज-गणोत्तरं गुरुद्वयत्वे तथा द्वितीय-चतुर्थपादयोः ज-त-ज-गणोत्तरं गुरुद्वयत्वे सति आख्यानिकी। भद्रेत्यादि।—आश्रवणे कर्णमूले, स्मरजन्मयात्रामहोत्सवस्य स्मरजन्मनि कामप्रादुर्भावे यः यात्रामहोत्सवः अर्चनोत्सवव्यापारः, "यात्रा स्यात् यापनोपाये गतौ देवार्चनोत्सवे" इति विश्वः; "यात्रा" इत्यत्र "पात्र" इति पाठान्तरम्; तस्य कथन्ती शब्दं कुर्वती वार्त्तां हरन्ती इत्यर्थः, अत एव आख्यानिकी वार्त्ताहारिणी दूतीस्वरूपिणी इति यावत्, भृङ्गावली भ्रमरपङ्क्तिः मङ्गलगीतनादैः कल्याण-सूचकसङ्गीतध्वनिभिः जनस्य लोकस्य चित्ते मनसि मुदं प्रीतिम् आदधाति जनयति। वृत्तमिदम् अक्षरगणनया समं गणतश्च अर्द्धसममेव। एतां पुनः आख्या-निकीमुपजातिमपि वदन्ति इन्द्रवज्रोपेन्द्रवज्रालक्षणात्मकत्वात्। उपजातिप्रकारस्यैका-दशभेदान्तर्गतश्चायमिति सुधीभिर्विभाव्यम्।

(च) विपरीताख्यानिकीमाह, विपरीतेति।—वैपरीत्यञ्चास्य आख्यानिकीवृत्तस्य प्रथमपादोक्तगणानां द्वितीयपादे द्वितीयपादोक्तगणानाञ्च प्रथमपादे पठनादवगन्तव्य-मिति। अलमित्यादि।—हे प्रिये! तव एभिः अलीकवचोभिः निरर्थकवाक्यैः अलं निष्प्रयोजनं, स्वार्थं निजप्रयोजनकं, स्वकीयम् अन्यत् अपरं कार्य्यं साधय कुरु। चेत् यदि आख्यानिकी वार्त्ताहारिणी, विपरीतवृत्तिः प्रतिकूलाचारिणी, भवेदिति शेषः, तदा कथावर्णनकौतुकं कथं स्यात्? यथामतौ च—विपरीतवृत्तिः आख्यानिकी

**हरिणप्लुता सौ स्लौ ग्, न्भौ भ्रौ ॥४०॥**

यस्य प्रथमे पादे सकारास्त्रयो लकार-गकारौ च, द्वितीये नकार-भकारौ भकार-रेफौ च, तद्वृत्तं हरिणप्लुता नाम। तत्रोदाहरणम्।—

स० स० स० ल०ग० न० भ० भ० र०

‒ ‒ ᴗ ‒ ‒ ᴗ ‒ ‒ ᴗ ‒ ᴗ ‒ ‒ ‒ ᴗ ‒ ‒ ᴗ ‒ ‒ ᴗ ‒ ᴗ

तव मुञ्ज नराधिप! विद्विषां भयविवर्जितकेतुलघीयसाम्।

स० स० स० ल०ग० न० भ० भ० र०

‒ ‒ ᴗ ‒ ‒ ᴗ ‒ ‒ ᴗ ‒ ᴗ ‒ ‒ ‒ ᴗ ‒ ‒ ᴗ ‒ ‒ ᴗ ‒ ᴗ

रणभूमिपराङ्मुखवर्त्मनां भवति शीघ्रगतिर्हरिणप्लुता॥ (क)

**अपरवक्त्रं नौ र्लौ ग्, न्जौ ज्रौ ॥४१॥**

यस्य प्रथमे पादे नकारौ रेफ-लकार-गकाराश्च, द्वितीये नकार-जकारौ जकार-रेफौ च, तद्वृत्तमपरवक्त्रं नाम।

---

आख्यानिकीच्छन्दसः विपरीतरूपेण विरचिता विपरीताख्यानिकीनाम स्यात्। पूर्ववदिदमपि चरणतः समं गणतश्चार्द्धसमं, तथा अत्रापि उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिः, उपजातिप्रस्तारस्य षष्ठोऽयं भेदः। ननूपजातिभेदान्तर्गतत्वेऽपि किमर्थं पुनरनयोः संज्ञाऽन्तरविधानम्? इत्याह, एतयोरित्यादि।—विशेषसंज्ञा नामविशेषः तदर्थं नामान्तरप्रख्यापनार्थमित्यर्थः।

(क) हरिणप्लुतालक्षणमाह, हरिणप्लुतेति।—यस्य प्रथमे पादे त्रयः स-गणाः एको लघुः एको गुरुश्च स्यात्, तथा द्वितीये पादे एको न-गणः ततो भ-गणद्वयं तदनन्तरमेको लघुमध्यगणः स्यात् तत् हरिणप्लुता नाम छन्दः इति ज्ञेयम्। तवेत्यादि।—हे नराधिप मुञ्ज! भयेन विवर्जिताः परित्यक्ताः केतवः पताकाः यैः तादृशाः अत एव लघीयांसः क्षुद्राः कापुरुषाः इत्यर्थः, तेषां, तथा रणभूमेः युद्धक्षेत्रस्य पराङ्मुखं विपरीतदिग्वर्त्ति वर्त्म येषां तेषां युद्धक्षेत्रगामिपथं सन्त्यज्य विपरीतपथगामिनामित्यर्थः, तव विद्विषां रिपूणां शीघ्रगति, द्रुतगमनं, पलायनमित्यर्थः, हरिणप्लुता मृगस्य प्लुतगतिवत् प्लुता उल्लम्फनयुक्ता इत्यर्थः, भवति; पुस्तकान्तरे तु—एतादृशलक्षणयुक्तं छन्दः हरिणप्लुतानामकम् इति।

(ख) अपरवक्त्रलक्षणमाह, अपरवक्त्रमिति।—ग्रन्थकारेण एवं स्पष्टीकृतम्।

तत्रोदाहरणम् ।—

न० न० र० ल०ग० न० ज० ज० र०

- - - - - - ᴗ - ᴗ - ᴗ - - - ᴗ - - ᴗ - ᴗ - ᴗ

सकृदपि कृपणेन चक्षुषा नरवर ! पश्यति यस्तवाननम् ।

न० न० र० ल०ग० न० ज० ज० र०

- - - - - - - ᴗ - ᴗ - ᴗ - - - - ᴗ - - ᴗ - ᴗ - ᴗ

न पुनरपरवक्त्रमीक्षते स हि सुखितोऽर्थिजनस्तथाविधः ॥

अस्य वैतालीयान्तर्गतत्वेऽपि विशेषसंज्ञार्थमिहोपन्यासः ।(ञ)

**पुष्पिताग्रा नौ र्यौ, न्जौ ज्रौ ग् ॥ ४२ ॥**

यस्य प्रथमे पादे नकारौ रेफ-यकारौ च, द्वितीये नकार-जकारौ जकार-रेफौ गकारश्च, तद्वृत्तं पुष्पिताग्रा नाम ।

तत्रोदाहरणम् ।—

---

सकृदपीत्यादि ।—हे नरवर ! राजन् ! यः अर्थिजनः याचकलोकः, कृपणेनापि दीनेनापि याच्ञाजनितलज्जोपाधिमीलितप्रायेणापि इत्यर्थः, चक्षुषा नेत्रेण सकृत् एकवारं तवाननं त्वदीयं मुखं पश्यति, तथाविधः कृपणेनापि चक्षुषा सकृत् तव मुखदर्शनपरः स हि अर्थिजनः सुखितः सन्तुष्टः सन्, प्रभूतार्थलाभादिति भावः, न पुनरपरस्य अन्यस्य वक्त्रं मुखम् ईक्षते अवलोकयति ; त्वन्मुखावलोकनेनैव कृतार्थत्वात् अन्यत्र गमनप्रयोजनमेव तस्य नास्ति इति भावः। युगयुक्पादयोरन्ततो गणानाञ्च परस्परं साम्यदर्शनादर्द्धसमवृत्तान्तर्गतत्वमस्यापि बोध्यम् ; तथा अयुक्पादयोश्चतुर्दश मात्राः अन्ते च र-ल-गाः, द्वितीया-तृतीययोः चतुर्थी-पञ्चम्योश्च मात्रयोरेकत्रानवस्थितिः, युक्पादयोः षोडश मात्राः षष्ठी-सप्तम्योश्च मात्रयोः नैकत्रावस्थानम्, अतः इदं वैतालीयमपि भवति । यद्यपि युक्पादान्ते र-ल-गा न पतिताः, तथाऽपि "एकदेश-विकृतमनन्यवत्" इति न्यायेनास्य वैतालीयत्वमक्षतमेव । अत एव छन्दोमञ्जर्याम्—"वैतालीयं पुष्पिताग्राचेत्तस्यापरवक्त्रकम्" इत्युक्तम् । तथा वृत्तरत्नाकरेऽपि "वदन्त्य-परवक्त्राख्यं वैतालीयं विपश्चितः" इति । हलायुधोऽपि तदेव समालोच्याह, अस्येत्यादि ।—विशेषसंज्ञाऽर्थम् अपरवक्त्रेतिनामकरणार्थमित्यर्थः ।

(ञ) पुष्पिताग्रालक्षणमाह, पुष्पिताग्रेति ।—प्रथम-तृतीयपादयोः न-न-र-य-युक्तं, द्वितीय-चतुर्थयोश्च न-ज-ज-र-ग-युक्तं यत् भवेत् तत् पुष्पिताग्रानाम वृत्तमिति

न० न० र० य० न० ज० ज० र० ग०

- - - - - ⌣ - ⌣ - ⌣ ⌣ - - - - - ⌣ - - ⌣ - ⌣ - ⌣ ⌣

समसितदशना मृगायताक्षी स्मितसुभगा प्रियवादिनी विदग्धा।

न० न० र० य० न० ज० ज० र० ग०

- - - - - - - ⌣ - ⌣ - ⌣ ⌣ - - - - - ⌣ - - ⌣ - ⌣ - ⌣ ⌣

अपहरति नृणां मनांसि रामा भ्रमरकुलानि लतेव पुष्पिताग्रा॥

इयमप्यौपच्छन्दसकान्तर्गता विशेषसंज्ञाज्ञापनार्थमत्रोच्यते।(ञ)

## यवमती र्‌जौ र्‌जौ, ज्‌रौ ज्‌रौ ग्॥ ४३॥

यस्य प्रथमे पादे रेफ-जकारौ भूयोऽपि रेफ-जकारौ भवतः,

निष्कर्षः। समेत्यादि —समानि निम्नोन्नतादिदोषरहितानि सितानि धवलानि च दशनानि दन्ताः यस्याः सा, तथा मृगायताक्षी मृगस्य हरिणस्य आयते विस्तृते अक्षिणीव अक्षिणी यस्याः सा, स्मितेन मृदुहसितेन सुभगा प्रियदर्शना, प्रियवादिनी मधुरभाषिणी, विदग्धा वाक्चतुरा, रामा रमणी, पुष्पिताग्रा पुष्पितः सञ्जातकुसुमः अग्रः शिखरदेशः यस्याः तादृशी, कुसुमिताग्रभागा लता भ्रमरकुलानि षट्पद-समूहानिव नृणां मानवानां मनांसि चेतांसि, अपहरति आकर्षति ; तथा पुष्पिताग्रा-ख्यम् इदमपि नृणां मनांसि अपहरति इत्यपरार्थश्च व्यज्यते। अत्र गणतोऽक्षरतश्च प्रथमेन तृतीयस्य द्वितीयेन चतुर्थस्य च पादस्य सादृश्यदर्शनात् अर्द्धसमान्तर्गतत्वं, तथा अस्य अयुक्पादयोः षोडश मात्राः युक्पादयोश्चाष्टादश मात्राः, किञ्च चतुर्थी-पञ्चम्योः मात्रयोः नैकत्रावस्थितिः, प्रतिपादं शेषषडक्षरेषु र-गणो लघुः गुरुद्वयञ्च न्ते, अत इदमौपच्छन्दसकमपि भवति। एतदनुसारिणा वृत्तरत्नाकरकृताऽपि "पुष्पिताग्राभिधं केचिदौपच्छन्दसिकं तथा" इत्युक्तम्। अत एव हलायुधेनापि "इयमप्यौपच्छन्दसकान्तर्गता" इत्याद्युक्तम्। पूर्ववत् अत्रापि विशेषसंज्ञाकरणमेव प्रयोजनमिति भावः।

(ञ) यवमतीलक्षणमाह, यवमतीति।—अर्थः सर्वं विशदम्। ननु छन्दो-मञ्जरी वृत्तरत्नाकरयोः यवमतीलक्षणे "स्यादयुग्मके र्‌जौ र्‌जौ समे चेत् ज्‌रौ ज्‌रौ गः यवात् परा मतीयम्" इत्यनेन अयुक्पादे रगण-जगण-रगण-जगणा भवन्ति

द्वितीये जकार-रेफौ पुनर्जकार-रेफौ गकारश्च, तद्वृत्तं यवमती नाम। अत्र सम्प्रदायात् पादव्यवस्था। तत्रोदाहरणम्।—

र॰ ज॰ र॰ ज॰

∪ – ∪ – ∪ – ∪ – ∪ – ∪ –

पद्मकन्तु कोमले करे विभाति

ज॰ र॰ ज॰ र॰ ग॰

– ∪ – ∪ – ∪ – ∪ – ∪ – ∪ ∪

प्रशंस्यमत्स्यलाञ्छनं पदे च यस्याः।

र॰ ज॰ र॰ ज॰

∪ – ∪ – ∪ – ∪ – ∪ – ∪ –

सा यवान्विता भवेद्धनाधिका च

ज॰ र॰ ज॰ र॰ ग॰

– ∪ – ∪ – ∪ – ∪ – ∪ – ∪ ∪

समस्तबन्धुपूजिता प्रिया च पत्युः॥

यवान्विता यवमतीत्यर्थः। (ज)

---

इत्युक्तम्, अत्र तु अयुक्पादे रगण-जगण-रगण-जगणानां सन्निवेशो दृश्यते, तदस्मिन् गणविरोधे का गतिरिति चेत् "गन्ते" इति सूत्रमेव काचित् गतिरित्यवगन्तव्यम्; सूत्रोक्त-जगणस्य मध्यगुरुः आद्यन्तौ लघू, छन्दोमञ्जर्याद्युक्त-यगणस्य आदिवर्णो लघुः मध्यान्तौ च गुरू, एवं सति ज-गणीयान्त्याक्षरस्य "गन्ते" इति नियमेन गुरुत्वातिदेशे छन्दोमञ्जर्याद्युक्त-यगणेन सह अविरोध एव इति। पद्मकमित्यादि।— यस्याः रमण्याः कोमले करे हस्ते पद्मकं पद्माकृतिचिह्नं, पदे चरणे च प्रशंस्यमत्स्यलाञ्छनं प्रशस्तमत्स्याकारचिह्नं विभाति शोभते, सा यवान्विता बहुयवशालिनी धनाधिका च बहुधना च तथा समस्तबन्धुपूजिता सकलसखिजनसमादृता पत्युः प्रिया च भवेत; यवान्विता यवमतीनाम छन्दश्च स्यात् इत्यपि ध्वनिः। पूर्ववदिहापि अर्थसमलक्षणापत्तिः स्वयं बोध्यः।

## शिखैकोनत्रिंशदेकत्रिंशदन्ते ग् ॥ ४४ ॥

यस्य प्रथमे पादे एकोनत्रिंशदक्षराणि भवन्ति, द्वितीये चैकत्रिंशत्, द्वयोरपि पादयोरन्ते प्रत्येकं गुरुः, तद्वृत्तं शिखा नाम। अर्द्धाधिकाराद्द्वितीयमप्यर्द्धं तादृशमेव। अन्ते गिति नियमार्थमेतत्, अन्ते एव गुरुर्नान्यत्र; तेनायुक्पादे अष्टाविंशतिर्लघवोऽन्ते गुरुरेकः। युक्पादे त्रिंशल्लघवोऽन्ते गुरुश्चैकः। तत्रोदाहरणम्।—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४
अ भि म त ब कु ल कु सु म घ न प रि-

१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९
म ल मि ल द लि मु ख रि त ह रि ति म धौ

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५ १६
स ह च र म ल य प व न र य त र लि त-

१७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१
स र सि ज र ज सि म न सि श य वि त ते।

---

(ट) अर्द्धसमाधिकारे शिखानाम वृत्तमाह, शिखेति।—यत्र प्रथमतृतीयपादयोः अष्टाविंशतिर्लघवः अन्ते एको गुरुः तथा द्वितीयचतुर्थयोश्च त्रिंशल्लघवः अन्ते एको गुरुः तत् शिखानाम वृत्तमित्यर्थः। "गन्ते" इत्यनेनैव अन्तस्य गुरुत्वे लब्धे कथं पुनः सूत्रे "अन्ते ग्" इत्युक्तम्? इत्याह, अन्ते इति।—नियमार्थं शिखायामयुक्पादे एकोनत्रिंशदक्षराणां युक्पादे च एकत्रिंशदक्षराणां विधानं कृतं, ततश्च अनियतभावेन यत्र कुत्रापि गुरुवर्णस्य लघुवर्णस्य वा विन्यासो न कार्य्यः, केवलम् अन्ते एव गुरुवर्णः संस्थापनीयः इति विधानार्थमित्यर्थः। अन्ते गिति नियमार्थतां प्रदर्श्य समाधानमाह—तेनेति। आग्नेयच्छन्दःसारोक्तलक्षणे तु अस्य गुरुलघुव्यवस्था स्पष्टीकृत्य प्रदर्शिता, यथा—"—शिखा। अष्टाविंशतिला गान्ता त्रिंशल्लान्तगतो युजि॥" (६।६) इति। अभिमतेत्यादि।—अभिमतं वाञ्छितं यत् बकुलकुसुमं तस्य घनेन सान्द्रेण परिमलेन गन्धेन मिलन्तः समागच्छन्तः ये अलयः षट्पदाः तैः मुखरिताः शब्दिताः हरितः दिशः यत्र तस्मिन्, मधुकराणां सर्वदा सहायत्वेन सञ्चरतां, वसन्त एव दक्षिणानिल-

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३
वि क सि त वि वि ध कु सु म सु ल भ-
१४ १५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९
सु र भि श र म द न नि ह त स क ल ज ने
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५
ज्व ल य ति म म हृ द य म वि र त मि ह
१६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१
सु त नु! त व वि र ह द ह न वि ष म शि खा॥ (ट)

## खञ्जा महत्ययुजीति॥ ४५॥

इयमेव शिखा पूर्वोक्ते महति बह्वक्षरे पादे अयुजि सति पारिशिष्यादितरस्मिंश्च युजि सति खञ्जा नाम छन्दो भवति।

सञ्चारात्; मलयपवनानां दक्षिणानिलानां रयेण वेगेन तरलितानि चञ्चलितानि सरोरुहजानां पद्मानां रजांसि परागा यत्र तादृशे, मनसिशयविततै मनसिशयस्य कामदेवस्य विततः विस्तारः, प्रभाव इत्यर्थः, यत्र तादृशे, "मनसिशयविततै" इत्यत्र "शयतरणिविततै" इति पाठे—शये आशये, मनसि इत्यर्थः, तरणिः अंशुः, प्रकाश इत्यर्थः, यस्य स शयतरणिः कामः तस्य विततः यत्र तादृशे इत्यर्थः; विकसितेन विविधेन कुसुमेन सुलभः सुरभिः सुगन्धो यस्य तथाभूतः शरो यस्य तादृशेन मदनेन कामेन निहतः विनष्टप्राय इत्यर्थः, आयत्तीकृत इति यावत्; "निहत" इत्यत्र "निहित" इति पाठे—निक्षिप्तः, पातित इत्यर्थः, सकलजनो यत्र तस्मिन् तादृशे मधौ वसन्तकाले हे सुतनु! तव विरहदहनविषमशिखा वियोगानलविषम-ज्वाला मम हृदयं मानसम् अविरतं सर्वदा ज्वलयति तापयति। अत्र प्रथम-तृतीय-पादयोः अष्टाविंशतिलघ्वक्षराणामन्ते चैकगुरोः सन्निवेशात् साकल्येन एकोनत्रिंश-दक्षरतया तथा द्वितीय-चतुर्थपादयोः त्रिंशल्लघ्वक्षराणामन्ते चैकगुरोः सन्निवेशात् मिलित्वा चैकत्रिंशदक्षरतया शिखानाम अर्द्धसमवृत्तमिदम्। चतुर्थोध्यायस्थेन चूलिकालक्षणेन सह केवलमेकमात्राधिक्यतया अस्य भेदः।

(ठ) खञ्जालक्षणमाह, खञ्जेति।—महति इत्यत्र अक्षरे इति शेषः। पूर्व-लक्षणलक्षिता शिखा यदि विपर्य्यस्तपादा भवेत् तदा खञ्जानाम वृत्तं स्यात्। तदैव

अयमर्थः,—एकत्रिंशदक्षरो विषमः पादः कर्त्तव्यः, एकोनत्रिंशदक्षरश्च समः पादः। शेषं यथाप्राप्तमेव। ततोदाहरणम्।—

१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५
अ प ग त घ न वि श द द श दि शि हृ त-
१६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१
ज न दृ शि प रि ण त क ण क पि ल क ल मे
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४
प्र वि क सि त स म कु सु म भ र प रि-
१५ १६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९
म ल सु र भि त म रु ति श र दि स म ये।
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५
शु चि श शि म हँ सि वि हृ त स र सि रु हि
१६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९ ३० ३१
मु दि त म धु लि हि वि म लि त ध र णि त ले
१ २ ३ ४ ५ ६ ७ ८ ९ १० ११ १२ १३ १४ १५
कि म प र मि ह क म ल मु खि! सु ख म नु-
१६ १७ १८ १९ २० २१ २२ २३ २४ २५ २६ २७ २८ २९
भ व ति म म हृ द य क म ल म धु ना॥

अर्द्धसमवृत्ताधिकारो निवृत्तः। (ठ)

इति भट्टहलायुधकृतायां छन्दोवृत्तौ पञ्चमोऽध्यायः॥५॥

स्पष्टयितुमाह, इयमेवेति।—इतरस्मिन् स्वल्पाक्षरे, एकोनत्रिंशदक्षरे इत्यर्थः, प्रथमतृतीययोः पादयोः त्रिंशल्लघुत्वे अन्त्यस्य च गुरुत्वे सति तथा द्वितीयचतुर्थयोश्च पादयोः अष्टाविंशतिलघुत्वे अन्त्यैकगुरुत्वे च सति खञ्जेति निष्कर्षः। तथा चाग्रे—"खञ्जा तद्विपरीता स्यात्" (६।६) इति। अपगतेत्यादि।—कमलमुखि! हे पद्मानने! अपगतेन अपसृतेन घनेन मेघेन विशदाः निर्मलाः दश दिशः यस्मिन् तादृशे, तथा हृतम् अपहृतम्, आकृष्टमित्यर्थः, सौन्दर्यातिशयादिति भावः, जनानां लोकानां दृक् दृष्टिः यस्मिन् तादृशे, परिणतेन परिपक्वेन कणेन धान्यांशेन, "कणोऽतिसूक्ष्मे

# अथ षष्ठोऽध्यायः ।

## यतिर्विच्छेदः ॥ १ ॥

विच्छिद्यते विभज्यते पदपाठोऽस्मिन्निति विच्छेदः विश्रामस्थानं, स च यतिरित्युच्यते । नन्वत्र शास्त्रे यतिशब्देन व्यवहाराद्दर्शनान्निरर्थकं संज्ञाकरणम् ? नैष दोषः ; यतिरित्य-

---

धान्यांश" इति मेदिनी ; कपिलः पिङ्गलवर्णः कलमः धान्यविशेषः यस्मिन् तादृशे, प्रविकसितानां समानां सकलानां, विविधानामित्यर्थः, "सर्वसाधुसमानेषु समं स्यात्" इति मेदिनी ; कुसुमानां पुष्पाणां भरेण अतिशयेन, "भरोऽतिशयभारयोः" इति मेदिनी ; परिमलेन सुगन्धेन सुरभितः सुगन्धीकृतः मरुत् वायुः यस्मिन् तादृशे, शुचि उज्ज्वलं, मेघावरणापगमादिति भावः, शशिनः चन्द्रस्य महः तेजो यस्मिन् तादृशे, विकृतं प्रस्फुटितं सरसिरुहं पद्मं यस्मिन् तादृशे, तथा मुदितः हृष्टः मधुलिट् भ्रमरो यस्मिन् तादृशे, विमलितः वर्षाजनितक्लेदाद्यभावात् निर्मलीभूतः धरणीतलः यस्मिन् तादृशे, शरदि समये शरत्काले इह अस्मिन् स्थाने त्वत्सन्निधौ मम हृदयकमलम् अधुना अपरम् अन्यविधं किं सुखम् अनुभवति ? एवंविधं सकलसुखाधारे शरदि तव संयोगादपरं किमनिर्वचनीयमानन्दं मे मानसमनुभवितुं शक्नोतीति भावः । शिखायां प्रथम तृतीयौ पादौ एकोनत्रिंशदक्षरौ द्वितीयचतुर्थौ चैकत्रिंशदक्षरौ स्तः, इह तु तद्विपरीत्येन प्रथम तृतीयौ पादौ एकत्रिंशदक्षरौ द्वितीय-चतुर्थौ च एकोनत्रिंश-दक्षरौ, अतः खञ्जानाम अर्द्धसमं वृत्तमिति ।

इति श्रीमज्जीवानन्दविद्यासागरकृतायां पिङ्गलच्छन्दःसूत्रे हलायुधकृतौ सुखबोधिन्यां पञ्चमोऽध्यायः ।

---

(क) विषमार्द्धसमवृत्तयोर्निर्वचनं विधाय साम्प्रतं समवृत्तनिर्देशाय यति-निर्णयमाह, यतिरित्यादि ।—यम्यते विरम्यते जिह्वा यत्र इति यतिः । विच्छिद्यते इति ।—विभज्यते पृथक्तया प्रतीयते पदपाठः पदानामावृत्तिः यस्मिन् इति विच्छेदः, जिह्वायाः इष्टविरामस्थानं यतिः कथ्यते । उक्तञ्च छन्दोमञ्जर्यां

मादिराचार्य्यपारम्पर्य्यागता संज्ञेयं तनुमध्यादिवत्। तस्याः शिष्यव्युत्पत्त्यर्थमर्थकथनं यतिर्विच्छेद इति, तस्माददोष इति। अस्ति च लोके शास्त्रान्तरेषु च यतिसंज्ञाव्यवहारः। अपि चायं यतिरित्यधिकार आ-सप्तमाध्यायपरिसमाप्तेः समुद्रेन्द्रिय-

—"यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते। सा विच्छेदविरामाद्यैः पदैर्वाच्या निजेच्छया॥" इति। आग्नेयेऽपि यतिलक्षणमङ्गीकृतं यथा—"यतिर्विच्छेद इत्युक्तः" (७।१) इति। "यतिः स्त्री पाठविच्छेदे" इति मेदिनी। यतेः प्रयोजनमाह काव्यकल्पलतायाम्—"एवं यथा यथोद्वेगः सुधियां नोपजायते। तथा तथा मधुरता-निमित्तं यतिरिष्यते॥" इति। इयञ्च यतिर्लक्षणस्वरूपाद्भिन्नाऽपि गुणालङ्कारादपेक्षया अन्तरङ्गत्वात् सूत्रकारैर्लक्षणमध्ये निवेशिता न तु लक्षणस्वरूपतया, वृत्तलक्षणस्य मात्रागुरुलघुनियामकत्वात्, अस्यास्तु विरामात्मकत्वात्। अत एव वामनेन—"न वृत्तदोषात् पृथक् यतिदोषो वृत्तस्य यत्यात्मकत्वात्" (२ अधि० २अ० ५सू० का० सू० वृ०) इत्याशङ्क्य "न, लक्षणः पृथक्त्वात्" (२अधि० २अ० ६सू० का० सू० वृ०) इति परिहृतमिति। यद्यपि शास्त्रान्तरेषु यतिशब्दस्य व्यवहारो दृश्यते, तथाऽपि शास्त्रेऽस्मिन् तद्व्यवहारादर्शनात् कथं तल्लक्षणावसर इत्याह—नन्विति। एवं स्थितेऽपि आचार्य्यपरम्परया यतिशब्दस्य प्रयोगदर्शनात् समाधानं विदधाति, यतिरिति।—इयञ्च यतिः श्रुतिसौकर्य्यार्थं नियतस्थानेषु कर्त्तव्या; तथा च दण्डी—"श्लोकेषु नियतस्थानं पदच्छेदं यतिं विदुः। तदपेतं यतिभ्रष्टं श्रवणोद्वेजनं यथा॥" इति। अन्यत्राप्युक्तम्—"अनुक्तयतिकेऽप्येवं कार्य्या श्रुतिसुखा यतिः" इति। एवञ्च आचार्य्यपारम्पर्य्यागतत्वमस्या अनुमतः प्रसिद्धेयं संज्ञा। "अनादिः" इत्यत्र "आगमादिषु" इति पाठान्तरम्। ननु यदि प्रसिद्धैव तदा एतल्लक्षणेन वा किमित्यत आह—तस्या इत्यादि। अस्तीत्यादि।—शास्त्रान्तरेषु सैतवादिप्रणीतग्रन्थेषु। सैतवानां पादान्ते यतिः कर्त्तव्या, भरतमुनेर्मते श्वासविरतिरेव यतिस्थानं, केवलं श्वेतमाण्डव्यमते यत्यभावः, तथा च छन्दोमञ्जर्य्यां—"श्वेतमाण्डव्यमुख्यास्तु नेच्छन्ति मुनयो यतिम्" इति। नारायणभट्टस्तु—"शुक्लाम्बरादयस्तु पदान्त एव यतिमाहुः, भरतादयस्तु यतिमेव नेच्छन्ति" इत्याह। न केवलं शिष्यव्युत्पत्तिरेव प्रयोजनं, प्रयोजनान्तरमप्यस्तीत्याह, अपि चेति।—शास्त्रान्तरसिद्धायाश्चास्याः सप्तमाध्यायपर्य्यन्तमधिकारार्थञ्च सूत्रमिदं कृतमित्यर्थः। तस्याश्च केन सह सम्बन्धः? इत्यपेक्षायामाह, समुद्रेति।—समुद्रादिपदैरस्या अन्वयः इत्यभि-

इमादित्यादिषूपतिष्ठते। समुद्रादिशब्दाः साकाङ्क्षत्वात् यतिरित्यनेनैव सम्बध्यन्ते, यतिशब्दस्याधिकरणव्युत्पत्त्या समुद्राद्यवच्छिन्नेष्वक्षरेषु यतिः कर्त्तव्या इत्यर्थः सिध्यति। अत्रैषा यत्युपदेशोपनिषद्भवति।—

यतिः सर्वत्र पादान्ते श्लोकार्द्धे तु विशेषतः।
समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके॥
क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत्।
यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ॥

प्राय:। समुद्रेन्द्रियरसादित्यादिषु समुद्राश्च इन्द्रियाणि च रसाश्च आदित्याश्च तदादिषु, तत्र समुद्राश्चत्वारः, इन्द्रियाणि पञ्च, रसाः षट्, आदित्याः द्वादश, आदिपदात् वस्वः मुनयः इत्यादीनामपि ग्रहणं, यथा "पुटो गौ मयौ वसुसमुद्राः" इत्यत्र वसवः अष्टौ, समुद्राः चत्वारः, ततश्च अष्टसु चतुर्षु चाक्षरेषु यतिर्विधेया इत्यर्थः। कथमन्वयसिद्धिरित्यत आह—समुद्रादीत्यादि। कथं तत्र प्राप्यते इत्याह—यतिशब्दस्येत्यादि। विशेषतो यतिनियमनं तत्र तत्र सूत्रे सूत्रकारैर्निर्द्धारितमेव, वृत्तिकारस्तु आचार्य्यपरम्परागतनियमप्रदर्शनेन श्रुतिसौकर्य्यार्थं प्रयोक्तव्यायाः यतेः नियतस्थानानि सामान्यतया प्रदर्शयितुमाह, अत्रैषेत्यादि।—एषा "यतिः सर्वत्र" इत्यादिना वक्ष्यमाणा, यत्युपदेशे कुत्र यतिः कार्य्या इत्युपदेशे उपनिषत् पूर्वाचार्य्यपारम्पर्य्यसिद्धो नियमः। का सा उपनिषत्? इत्याह, यतिरित्यादि।—पादान्ते श्लोकतुरीयांशावसाने सर्वत्रैव यतिः कार्य्या, श्लोकार्द्धे तु विशेषतः विशेषरूपेण, श्लोकार्द्धे सन्धेरभावात् स्पष्टविभक्तित्वाच्च विशेषरूपेण यतिः कार्य्या। कश्चित् नव्यच्छन्दोज्ञः "समुद्रादि···भवेत" इत्यत्र "क्वचित पादत्रयस्यान्ते सा मता विषमादिषु। दृश्यते पदमध्येऽपि शक्कर्य्यादौ समस्थले॥" इति पाठं पठति। तथा समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके परिस्फुटापरिस्फुटविभक्तियुक्ते समुद्रादिपदान्ते समुद्रः वसुः इत्यादिरूपपदस्यावसाने, चतुरष्टाक्षरादिविरामस्थाने इत्यर्थः। किञ्च समुद्रादिपदान्ते च इत्यत्र च-कारात् स्वतन्त्रतयाऽपि व्यक्ताव्यक्तविभक्तिके पादान्ते इत्यर्थो बोध्यः; एतत्तु "व्यक्ताव्यक्तविभक्तिके इति यतिः सर्वत्र पादान्ते इत्यनेन सम्बध्यते" इत्यनेन स्वयमेवाग्रे वक्ष्यति। क्वचिदिति।—समुद्रादौ या यतिः सा पदमध्येऽपि क्वचिद्भवतीत्यर्थः, समुद्रादौ विरामस्थले पदशेषो न चेद्भवति तदा

पूर्वान्तवत् स्वरः सन्धौ क्वचिदेव परादिवत्।
दृष्टव्यो यतिचिन्तायां यणादेशः परादिवत्॥
नित्यं प्राक्पदसम्बन्धाश्चादयः प्राक्पदान्तवत्।
परेण नित्यसम्बन्धाः प्रादयश्च परादिवत्॥ (क)

"यतिः सर्वत्र पादान्ते" इत्यस्योदाहरणम्।—

विशुद्धज्ञानदेहाय इत्यादि। (ख)

तस्यैव प्रत्युदाहरणम्।—

नमस्तस्मै महादेवाय शशाङ्कार्द्धधारिणे इत्येवमादि। (ग)

"श्लोकार्द्धे तु विशेषतः" इत्यत्र सन्धिकार्य्याभावः स्पष्टविभक्तिकत्वञ्च विशेषः। तत्रोदाहरणम्।—

पदभङ्गं विधायापि तत्र यतिः कर्त्तव्या इति भावः। नन्वनेकवर्णस्थले पदमध्येऽपि पदभङ्गं विधाय यतिं विदध्यात्, यद्येकाक्षरे सा भवेत्तदा किं विधेयमित्यत आह, यदीत्यादि।—यदि पदस्य यत्यपेक्षया पूर्वापरौ भागौ एकवर्णकौ एकाक्षरौ न स्यातां न भवेतां तदा पूर्वविधिः प्रवर्त्तनीयः इत्यर्थः। यतिविषयभूतस्य पदद्वयस्य सन्धौ एकीभावे किं कर्त्तव्यमित्यपेक्षायामाह, पूर्वान्तवदिति।—सन्धौ सति योऽयं पूर्वापरयोरेकादेशः स्वरः सवर्णदीर्घादिः स पूर्वान्तवत् क्वचित् सन्धेयपदयोः पूर्वपदस्यान्तवद्भवति, क्वचिच्च परपदस्य आदिवद्भवति इत्यर्थः। दृष्टव्य इति।—यण् इति य-व-र लानां संज्ञा, तथाभूतः आदेशः यतिव्यापारे परादिवत् परपदस्यादिवत्। नित्यमित्यादि।—चादयः उपसर्गाः प्राक्पदान्तवत् पूर्वपदस्यान्तभागवत् नित्यं प्राक्पदसम्बन्धाः पूर्वपदेन सह सम्बन्धयुक्ताः, तथा प्रादयः उपसर्गाः परादिवत् परपदस्यादिरिव परेण परपदेन नित्यसम्बन्धाः।

(ख) एषामुदाहरणानि क्रमशः प्रदर्श्यन्ते, विशुद्धज्ञानेत्यादि।—अत्र पादान्ते विरतिः।

(ग) व्यावृत्तिं दर्शयति, तस्यैवेति।—प्रत्युदाहरणन्तु—यत्र हि दुष्यतेऽव्यञ्जनं तदेवात्र ज्ञेयमिति। नम इत्यादि।—अत्र प्रथमपादान्तभूते "वा"कारे यतेरभावः, द्वितीयपादादिभूते "य"कारे च यतिरिति "यतिः सर्वत्र पादान्ते" इत्यस्याविषयतया दुष्टयतित्वात् प्रत्युदाहरणमिति बोध्यम्।

(घ) श्लोकार्द्धे इत्यादि।—स्पष्टविभक्तिकत्वं समासलुप्तविभक्तिकभिन्नत्वे

नमस्यामि सदोद्भूत-मिन्धनीकृतमन्मथम्।
ईश्वराख्यं परं ज्योति-रज्ञानतिमिरापहम्॥

अत्र ईश्वराख्यमित्यस्य पूर्व-मकारेण सह संयोगो न कर्त्तव्यः। (च)

समासे प्रत्युदाहरणम्।—

सुरासुरशिरोरत्न-स्फुरत्किरणमञ्जरी,-
पिञ्जरीकृतपादाब्जद्वन्द्वं वन्दामहे शिवम्॥ (ङ)

"समुद्रादिपदान्ते च व्यक्ताव्यक्तविभक्तिके।" तत्र श्रूयमाण-विभक्त्यन्तं व्यक्तविभक्तिकम्। समासान्तर्भूतविभक्त्यन्तमव्यक्त-विभक्तिकम्। तत्रोदाहरणम्।—

---

स्ति विहितविभक्त्यन्तत्वम्; तेन "हल्ङ्याब्भ्यः—" (६।१।६८ पा०) इति सुब्लोपेऽपि स्पष्टविभक्तिकत्वमक्षतमेवेति। नमस्यामीत्यादि।—सदा सर्वदा उद्भूतं स्वप्रकाशरूपं, तथा इन्धनीकृतः मन्मथः कामो येन तं, तथा अज्ञानमेव तिमिरं तदपहन्ति यत्, परं प्रधानं ज्योतिः तेजःस्वरूपम् ईश्वराख्यम् ईश्वरसंज्ञकं शिवं नमस्यामि। अत्र "मन्मथम्" इत्यस्य स्पष्टविभक्तिकत्वात् तथा चान्तिमेन मकारेण सह "ईश्वराख्यम्" इत्यत्र तृतीयपादादिभूतेकारस्य सन्धिकार्य्याभावाच्च श्लोकार्द्धे विशेषतः यतिरिति बोध्यम्। यद्यप्यत्र पादान्ते 'तम' इत्यत्र यतिर्भवितुमर्हति तथाऽपि समस्ततया अव्यक्तविभक्तिकपादान्तत्वेन श्लोकार्द्धे एव यतिः कार्य्या। एतेन अव्यक्त-विभक्तिकपादान्ते यतिर्न शोभते इति निष्कर्षः।

(ङ) सुरासुरेत्यादि।—सुराणामसुराणाञ्च शिरोरत्नानां स्फुरन्ती या किरण-मञ्जरी तया पिञ्जरीकृतं पिङ्गलवर्णीकृतं पादाब्जद्वन्द्वं चरणपद्मयुगलं यस्य तं शिवं वन्दामहे, वयमिति शेषः। इह पूर्वार्द्धस्य परार्द्धेन सह समस्यमानतया अस्पष्ट-विभक्तिकत्वेन श्लोकार्द्धे मञ्जरी इत्यत्र यत्यभावात् प्रत्युदाहरणमिदमिति भावः।

(च) समुद्रादीति।—अपरान्वयित्वेन शाब्दबोधविषयत्वमेव श्रूयमाण-विभक्तित्वम्; यथा—वारि पिबतीत्यादौ सुप्ताम्-पदार्थकर्मत्वे वारिपदार्थान्वयः शाब्दबोधविषयः, न तु राजपुरुषः वारिपानम् इत्यादौ सुप्तषष्ठ्यर्थयोः स्वामित्व-कर्मत्वयोः राजपदार्थ-वारिपदार्थयोरन्वयः शाब्दबोधविषयः, श्रवणजन्यज्ञानत्वस्य शाब्दबोधत्वस्यापि स्फोतेः प्रकारतावच्छेदकतया; यथा—आत्मा वाऽरे! श्रोतव्यः

यच्चश्चक्रे, जनकतनया-स्नानपुण्योदकेषु इत्यादि । (च)

"व्यक्ताव्यक्तविभक्तिके" इति "यतिः सर्वत्र पादान्ते" इत्यनेनापि सम्बध्यते । तत्रोदाहरणम् ।—

वशीकृतजगत्कालं, कण्ठेकालं नमाम्यहम् ।
आदिनन्दाकलाशेष-शशिलेखाशिखामणिम् ॥

अपि च ।—

नमस्तुङ्गशिरश्चुम्बि-चन्द्रचामरचारवे ।
त्रैलोक्यनगरारम्भ-मूलस्तम्भाय शम्भवे ॥ (छ)

"क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् ।
यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥"

---

ज्ञातव्य इत्यादि । यच्च इत्यादि ।—सप्तदशाक्षरैकपादात्मकमन्दाक्रान्तावृत्तमिदम् । अत्र आदौ चतुर्थाक्षरे ततः षष्ठाक्षरे ततश्च सप्तमाक्षरे यतिः ; तेषु "यच्चश्चक्रे" इति चतुर्थाक्षरे व्यक्तविभक्तिका यतिः, "जनकतनया" इति षष्ठाक्षरे तु या यतिः, सा परपदेन समस्यमानत्वात् अव्यक्तविभक्तिकस्थला इति बोध्यम् । अत्रेदमवश्यमनुस्मरणीयं यत् —कतिपयेषु शिखरिणी-मन्दाक्रान्तादिषु रसरुद्रादियतिव्यवस्थितिमत्सु छन्दःसु रसादौ, कतिपयेषु अनुष्टुबिन्द्रवज्रादिषु वृत्तविशेषेषु च पादान्ते एव यतिर्विधेया इति ।

(छ) वशीकृतेत्यादि ।—वशीकृतो जगत्कालो येन तम्, आदिनन्दाकला नन्दानाम्नी प्रथमा कला षोडशभागैकभागरूपः शेषः यस्य तादृशो यः शशी असम्पूर्णश्चन्द्र इत्यर्थः, तस्य लेखा रेखा शिखामणिर्यस्य तम् ; "आदिनन्दा" इत्यत्र "महाकालम्" इति पाठान्तरम् ; कण्ठेकालं नीलकण्ठं शिवम् अहं नमामि । अत्र प्रथमपादान्ते व्यक्तविभक्तिका तृतीयपादान्ते च अव्यक्तविभक्तिका यतिरिति । नम इत्यादि ।—तुङ्गस्य उन्नतपर्वतस्य, कैलासस्येति यावत्, शिरः चुम्बतीति तादृशः, कैलासशिखरस्पर्शीत्यर्थः, यश्चन्द्रः तथा चामरं बालव्यजनं, तद्वत् चारवे मनोहराय, चन्द्रादिवत् सुशुभ्रविग्रहाय, त्रयाणां लोकानां समाहारस्त्रिलोकी, त्रिलोकी एव त्रैलोक्यं, तदेव नगरं तस्यारम्भे निर्माणे मूलस्तम्भाय मूलस्तम्भस्वरूपाय शम्भवे शिवाय नमः । अत्र प्रथमे तृतीये च पादे समासान्तरत्वात् अव्यक्तविभक्तिका यतिरिति ।

तत्रोदाहरणम्।—

पर्य्याप्तं तप्तचामी-करकटकतटे श्लिष्टशीतेतरांशौ इत्यादि।

तथा।—

कूजोत्कोयष्टिकोला-हलमुखरभुवः प्रान्तकान्तारदेशाः इत्यादि।

तथा।—

कामो हस्ताग्रसंवा-हनमपि तुलिता-दीन्द्रसारद्विपोऽसौ इत्यादि।

तथा।—

वैरिस्त्रीणां तथोच्चा-रितरुचिरक्रचाश्चाननानाश्चतुर्णाम् इत्यादि।

तथा।—

खड्गे पानीयमाह्ला-दयति च महिषं पक्षपाती पृथक्कः इत्यादि। (ज)

समुद्रादाविति किम्? पदमध्ये यतिः पादान्ते मा भूत्। तत् यथा।—

(ज) पर्य्याप्तमित्यादि।—स्रग्धरावृत्ते पादमध्ये प्रतिसप्तमाक्षरं यतिरिति नियमात् अत्र चामीकरपदमध्ये सप्तमाक्षरे "मी"कारे यतिः। कूजदिति।—कूजदित्यादौ कोलाहलपदमध्ये सप्तमाक्षरे "ला"कारे यतिः। काम इति।—काम इत्यादौ संवाहनपदमध्यस्थसप्तमाक्षरे "वा"कारे यतिः। "द्विप:" इत्यत्र "द्विषः" इति पाठान्तरम्। वैरिस्त्रीणामिति।—वैरिस्त्रीणामित्यादौ च उच्चारितेति पदमध्यस्थे "च्चा"कारे सप्तमाक्षरे यतिः करणीया। खड्गे इति।—खड्गे इत्यादौ सप्तमाक्षरे आह्लादयति इति पदमध्यस्थे "ह्ला"कारे यतिः। "खड्गे" इत्यत्र "यज्ञे" इति पाठान्तरम्।

(झ) प्रत्युदाहरणं दर्शयितुमाह, समुद्रादाविति।—समुद्रादौ इत्युक्तेरिदं प्रयोजनं यत्—पादान्तयतिः पदमध्ये न साधुरिति। अयं भावः,—समुद्रादिपदादौ

प्रणमत भवबन्धक्लेशनाशाय नारा-

यणचरणसरोजद्वन्द्वमानन्दहेतुम्। इत्यादि।

पूर्वोत्तरभागयोरेकाक्षरत्वे तु पदमध्ये यतिर्दुष्यति।

तत्रोदाहरणम्।—

"एतस्या ग-ण्डतलममलं गाहते चन्द्रकक्षाम्" इत्यादि।

"एतस्या रा-जति सुमुखमिदं पूर्णचन्द्रप्रकाशम्" इत्यादि।

तथा।—

"सुरासुरशिरोनिघृ-ष्टचरणारविन्दः शिवः" इत्यादि। (झ)

---

पदमध्येऽपि यतिर्भवेत्, यदि नैतदुच्यते तदा पदान्तत्वापेक्षिता यतिः "क्लेशनाशाय नारा" इत्यत्र अपदान्तभूते पदमध्यस्थपादान्ते मा भूदिति समुदायो इति वक्तव्यम्। प्रणमतेत्यादि।—आनन्दहेतुं परमानन्दजनकं नारायणचरणसरोजद्वन्द्वं विष्णुपादपद्मयुगलं भवबन्धक्लेशनाशाय संसारबन्धनदुःखविनाशनार्थं प्रणमत नमस्कुरुत, यूयमिति शेषः। अत्र मालिनीवृत्तघटिते प्रणमत इत्यादौ पादान्ते नारायणपदमध्यस्थ "रा"पदे यतिरसाधुरिति। पूर्वापरभागयोरेकवर्णत्वस्य दुष्टयतिकत्वात् तदेव प्रत्युदाहर्तुमाह, पूर्वेत्यादि।—पूर्वोत्तरभागयोः निर्दिष्टयतेः पूर्वापरांशयोः एकाक्षरत्वे यत्युक्तसङ्ख्यापूर्त्यर्थं यः वर्णः पूर्वभागात् समाकृष्यते, यो वा शब्दाङ्कसम्पादनार्थञ्च परभागात् समाकृष्यते, ईदृशी एकवर्णस्थला यतिः दुष्यति कष्टेन सम्पाद्यते इति। अयमाशयः,—चतुरक्षराद्यात्मकयतेः पूर्वभागे परभागे वा कस्यचित् पदस्य एकमक्षरं निवेश्य परभागे शेषाक्षरसन्निवेशे यतिभङ्गो भवेदिति। एतस्या इत्यादि।—एतस्याः कामिन्याः अमलं निर्मलं गण्डतलं चन्द्रस्य कक्षां सादृश्यं गाहते आश्रयति। अत्र "एतस्याः" इत्येकं पदं, "गण्डतलम्" इति चापरं पदं, मन्दाक्रान्तावृत्तान्तर्गतपादतया चतुर्थाक्षरे यतिर्विधेया, सा तु गण्डतलपदादेकाक्षरं 'ग'काररूपमाकृष्य पूरणीया; अत एव गण्डतलपदस्य पूर्वभागीयैकाक्षर-गकाराकर्षणेन पूर्वभागैकवर्णतया विहिता यतिः न समीचीना। एतस्या राजतीत्यादि।—एतस्याः रमण्याः पूर्णचन्द्रप्रकाशं पूर्णिमाशशधरसममनोज्ञम्, इदं सुमुखं शोभनमाननं राजति शोभते। अत्रापि चतुरक्षरे यतिविधानार्थं राजतीति पदात् पूर्वभागीयैकवर्णं "रा"कारं समाकृष्य चतुर्थाक्षरे यतिः पूरणीयेति दोषतामापद्यते। सुरासुरेत्यादि।—सुरासुराणां शिरोभिः निघृष्टं नितरां घृष्टमित्यर्थः, चरणारविन्दं

"पूर्वान्तवत् स्वरः सन्धौ क्वचिदेव परादिवत्।"

अस्यार्थः,—योऽयं पूर्वपरयोरेकादेशः स्वरसन्धौ विधीयते, स क्वचित् पूर्वस्यान्तवद्भवति, क्वचित् परस्यादिवत्। तथा च पाणिनेः स्मरणम्—"अन्तादिवच्च" (६।१।८५पा०) इति। तत्र पूर्वान्तवद्भावे उदाहरणम्।—

"स्यादस्थानो-पगतयमुनासङ्गमेवाभिरामा।"

"जम्भारातीभकुम्भो-द्भवमिव दधतः" इत्यादि।

---

पादपद्मं यस्य तादृशः शिवः। वसुनवकयतिकपृथ्वीलक्षणघटितेऽस्मिन् यत्युत्तरभागस्यास्य 'छ' इत्यस्य एकाक्षरत्वात् अष्टमाक्षरे 'छ'कारे यतिरतिकष्टसाध्येति एतादृशी दुष्टा यतिर्न विधेया इत्यभिप्रायः। इह केचित् पूर्वोत्तरभागयोरेकाक्षरत्वे दुष्टायाः यतेः धातुनामप्रत्ययाव्ययभागभेदेन चतुर्विधत्वमाहुः, पूर्वापरभागीयैकवर्णस्य धातुत्वे नामत्वे प्रत्ययत्वे तथा अव्ययत्वे तेषामुदाहरणानि च कल्पयन्ति। स्वमते तथाऽङ्गीकारे "एतस्मा गच्छ" इत्यादौ गच्छतस्पदस्य "ग"कारस्य नामत्वेन तदुदाहरणसिद्धिः। "राजति" इत्यत्र राजधातोः "रा"कारस्य धातुत्वात् तस्योदाहरणत्वम्। प्रत्ययोदाहरणं यथा—"स्वीकुर्वन्ति हि सुधियः प्रकुर्वते च" इत्यत्र 'न्ति' इत्यस्य प्रत्ययत्वात् उदाहरणसिद्धिः। "रामेश वा प्रतिदिनमुदिताब्दो रमे शम्भुनामा" इत्यत्र 'वा' इत्यस्य अव्ययत्वात् उदाहरणत्वमिति। काव्यालङ्कारसूत्रे तु धातुनामभागभेदेन यतिभ्रष्टत्वं द्विविधमेव उक्तम्; तथा च—"तद्धातुनामभागभेदे स्वरसन्ध्यकृते प्रायेण" (२ अधि० २ अ० ४ सू०) इति।

(ञ) पूर्वान्तवदित्यादि।—पूर्वपरयोरेकादेशः सवर्णदीर्घादिः। स्यादित्यादि।—अस्थाने उपगतः प्राप्तः यमुनया सह सङ्गमः संयोगः यया सा इव अभिरामा मनोज्ञा स्यात् इत्यर्थः, तत्र कृष्णवर्णत्वात् गङ्गाजलस्य च स्वच्छत्वादिति भावः। अत्र "स्यादस्थानो" इत्यत्र त+उ इति सन्धौ निष्पन्ने "नो" इति पदे पदमध्यस्थाऽपि यतिः ओकारस्य पूर्वान्तवद्भावेन पूर्वपदघटकीभूताक्षरावयवत्वस्य स्वीकारात् पदान्तवत्त्वेन मन्दाक्रान्ताच्छन्दसः चतुर्थाक्षरे यतिरिति भावः। जम्भारातीत्यादि।—मयूरभट्टविरचितसूर्यशतकीयस्रग्धरावर्णनात्मकश्लोकोऽयम्। सम्पूर्णश्लोकस्तु—"जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं रक्ताः सक्तैरिवौघैरुदयगिरितटीधातुधाराद्रवस्य। आयान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्ये

तथा ।—

दिक्कालाद्यनवच्छिन्ना-नन्तचिन्मात्रमूर्त्तये ।

स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥ इत्यादि ।

पदादिवद्भावे उदाहरणम् ।—

स्कन्धं विन्ध्याद्रिबुद्ध्या, निकषति महिष-स्याहितोऽस्तं प्रयास्यन् । इत्यादि ।

शूले शूलन्तु गाढं प्रहर हर हृषी-केशकेशोऽपि वक्र-श्चक्रेणाकारि किं ते इत्यादि ।

---

भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥" ( सू० श० १म० ) इति । जम्भस्य दैत्यविशेषस्य अरातिः शत्रुः इन्द्रः तस्य इभः हस्ती ऐरावत इत्यर्थः, तस्य कुम्भोद्भवं कुम्भस्थमित्यर्थः, सान्द्रं घनं सिन्दूररेणुं सिन्दूररजः दधत इव धारयन्त इव दृश्यमानाः, उदयाद्रिरित्यादि उदयाचलप्रान्ते या धातूनां गैरिकादीनां धारा श्रेणिः तस्याः द्रवस्य निस्रावस्य ओघैः समूहैः सार्द्धं संलग्नैरिव रक्ताः रक्तवर्णाः, तुल्यकालं समकालम् उदयचलनमात्रमित्यर्थः, आयान्त्या आगच्छन्त्या, स्फुरन्त्येति यावत्, कमलवनरुचा इव पद्मवनकान्त्येव अरुणाः रक्ताः, भुवनं भासयन्तः प्रकाशयन्तः अभिनवाः भानवीयाः सौराः भानवः किरणाः वः युष्माकं विभूत्यै भूयासुः भवन्त्वित्यर्थः । त्रिमुनियतियुते स्रग्धराच्छन्दसि अस्मिन् "जम्भारातीभकुम्भो" इत्यत्र "म्भो" इति सप्तमाक्षरे पदमध्यस्थाऽपि यतिः ओकारस्य पूर्वान्तवद्भावात् पूर्वपदघटकीभूताक्षरावयवत्वस्य ओकारेण पदान्तत्वसिद्धेः अदुष्टा इति । उदाहरणान्तरमाह, दिक्कालेत्यादि ।—दिक्कालादिभिः अनवच्छिन्ना अनन्ता चिन्मात्रा बोधस्वरूपा च मूर्त्तिर्यस्य तस्मै, तथा स्वानुभूतिः आत्मप्रत्यक्षम् एव एकम् अद्वितीयं मानं प्रमाणं यस्य तस्मै, शान्ताय शमगुणप्रधानाय तेजसे तेजःस्वरूपाय परमात्मने नमः । इहापि छिन्न+अनन्त इति पदद्वयसन्धौ दीर्घीभूते 'न्ना' इत्यत्र पूर्वान्तवद्भावात् यतिरिति । स्कन्धमित्यादि ।—अस्तं प्रयास्यन् गमिष्यन् आहितः विन्ध्याद्रिबुद्ध्या महिषस्य स्कन्धं निकषति । "अस्तं प्रयास्यन्" इत्यत्र "असुमहार्षीत्" इति पाठान्तरम् । इह त्रिमुनियतियुते स्रग्धरावृत्ते पूर्वपदावयवस्यापि महिषस्य 'स्य' इति पदस्य अहितपदेन सन्धौ दीर्घीकृते 'स्या' इत्यक्षरे दीर्घैकादेशस्य शुन्यवच्छिन्नतृतीयव्यक्षरसङ्ख्यासम्पूरकत्वात् परादिवद्भावः इति । शूले इत्यादि ।—

अत्र हि स्वरस्य परादिवद्भावे व्यञ्जनमपि तदङ्गत्वात्तदादिवत् भवति। "यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ" इत्यन्तादिवद्भावविधावपि सम्बध्यते। तेन—

अस्या वक्त्रा-ब्जमवजितपू-र्णेन्दुशोभं विभाति

इत्येवंविधा यतिर्न भवति। (ञ)

"यणादेशः परादिवत्" इत्यस्योदाहरणम्।—

विततघनतुषारक्षोदशुभ्रांशुपूर्णा-
स्वविरलपदमालां श्यामलामुल्लिखन्त इत्यादि। (ट)

---

"हृषीकेशकेशोऽपि" इत्यत्र हृषीकाणाम् इन्द्रियाणाम् ईशः इति व्युत्पत्त्या हृषीक+ईशः इति पदद्वयसन्धौ हृषीकेश इति सिद्धेः ककारस्य परादिवद्भावेन मुख्यवृत्त्यवलम्बतीयपर्वस्वरसङ्ख्यासम्पूरकत्वात् 'षी'पदे यतिरिति। "वक्त्रः" इत्यत्र "चक्रः" तथा "ते" इत्यत्र "नः" इति पाठान्तरम्। अत्रेत्यादि।—अत्र "स्वान्तम्" "शूलम" इत्युदाहरणे। "स्वरस्य" इत्यत्र "स्वरूपस्य" इति पाठे—स्वरूपस्य "अहित" "ईश" इत्यादिरूपस्याक्षरस्य। तदङ्गत्वात् स्वरानुगतत्वात् तदादिवत् परादिवत्। यदि पूर्वापरावित्यादि।—"क्वचित्तु पदमध्येऽपि" इत्यादौ यथा "यदि" इत्यादिवाक्यानां सम्बन्धस्तथा अन्तादिवद्भावविधावपि "पूर्वान्तवत् स्वरः सन्धौ" इत्यादिवाक्येऽपि तत् वाक्यं सम्बध्यते। एतत्प्रयोजनं प्रतिपादयितुमाह, तेनेति।—मन्दाक्रान्ताछन्दोघटितेऽस्मिन् श्लोके "वक्त्राब्जम" इत्यतः "वक्त्रा"पदमाकृष्य "अस्या वक्त्रा" इति चतुरक्षरे, तथा "जमवजितपूर्णेन्दु" इत्यत्र च "पू" इति षडक्षरे यतिः विहिता, उभयत्रापि पूर्वभागस्य एकाक्षरात्मकत्वात् एवंविधा यतिर्न युक्तेत्यभिप्रायः।

(ट) यणादेश इति।—"इको यणचि" (६।१।७७ पा०) इति सूत्रेण इकः स्थाने यो यण् स्यात् तस्यैव ग्रहणम्। विततेत्यादि।—अष्टसप्ताक्षरयतिके मालिनीछन्दोघटिते अस्मिन् "पूर्णासु+अविरलपदमालाम्" इत्यत्र सन्धौ उकारस्थाने वकारागमरूपस्य यणादेशस्य परादिवद्भावविधानात् यणादेशेन जातस्य "स्व" इत्यस्य परेण सम्बन्धः, ततश्च "क्षोदशुभ्रांशुपूर्णा" इति सप्तमाक्षरे यतिः सिद्धा; एवञ्च पदान्तत्वसहचरिता यतिरत्र न सञ्जाता; अत एतादृशस्थलेऽपि पदमध्ये यत्युपदंशाक आशङ्काया प्रवर्त्तनमिति भावः।

"नित्यं प्राक्पदसम्बन्धाश्चादयः प्राक्पदान्तवत्"। तेभ्यः पूर्वा यतिर्न कर्त्तव्येत्यर्थः। तत्रोदाहरणम्।—

स्वादु स्वच्छं सलिलमपि च प्रीतये कस्य न स्यात्? इत्यादि। (ठ)

नित्यं प्राक्पदसम्बन्धा इति किम्? अन्येषां पूर्वपदान्तवद्भावो मा भूत्। तत् यथा।—

मन्दायन्ते न खलु सुहृदा-मभ्युपेतार्थकृत्या इत्यादि।

तथा।—

इत्यौत्सुक्या-दपरिगणयन् गुह्यकस्तं ययाचे इत्यादि। (ड)

---

(ठ) नित्यमित्यादि।—चादय इत्यत्र चादिपदेन "वा तु हि" इत्यादीनां ग्रहणम्। तेभ्यः चादिभ्यः। एतेन एवं बोद्धव्यं यत्, यस्मिन् कस्मिंश्चित् श्लोके चादीनां तथा विन्यासः कर्त्तव्यः, यथा तेभ्यः पूर्वं यतिर्न कर्त्तव्या भवेदिति। स्वादिति।—अपि प्रश्ने, स्वादु मधुरं, स्वच्छं निर्मलञ्च, सलिलं जलं कस्य जनस्य प्रीतये तृप्तये, न स्यात् न भवेत्?। चतु-षट्-सप्ताक्षरयतिके मन्दाक्रान्ताच्छन्दसि अस्मिन् "सलिलमपि च" इति सप्ताक्षरं "चकारे" एव यतिर्जाता न तु तत्पूर्वत्र।

(ड) "नित्य प्राक्पदसम्बन्धाः" इत्यादिविधानस्य सार्थक्य प्रदर्शयितुं शङ्कामुत्थापयति, नित्यं प्रागित्यादि।—अन्येषां चादिभिन्नानाम् अव्ययानां पूर्वपदान्तवद्भावः पूर्वस्य पदस्यान्त इव भावः मा भूत् न कर्त्तव्यः इत्यर्थः। एतेन एतदुक्तं भवति यत्—चादिभिन्नानामव्ययानाम चादिवद्भावो न निषिद्धः, ततश्च यत्र कुत्रचित् श्लोके पदान्तं तान्यव्ययानि तथा विन्यस्यानि यथा तेषां पूर्वपदान्तवद्भावो न भवेदिति। मन्दायन्ते इत्यादि।—सुहृदां बन्धूनाम् अभ्युपेतार्थकृत्याः अभ्युपेता अङ्गीकृता अर्थस्य प्रयोजनस्य कृत्या क्रिया यैस्ते अभ्युपेतसुहृदर्थाः, न खलु मन्दायन्ते न हि विलम्बन्ते। मेघं प्रति यक्षस्योक्तिरियं। चतुः-षट्-सप्ताक्षरयतिके मन्दाक्रान्तावृत्तघटिते मन्दायन्ते इत्यादि श्लोके "न" इत्यव्ययस्य चादिभिन्नत्वात् "मन्दायन्ते" इति पूर्वपदेन सह अन्तवद्भावो न जातः इति। अपरमाह, इतीत्यादि।—इति एवम् औत्सुक्यात् इष्टार्थोद्युक्तत्वात् अपरिगणयन् अविचारयन् गुह्यकः यक्षः तं मेघं ययाच प्रार्थितवान्। इह "अपरिगणयन्" इत्यत्र "परि" इत्यव्ययस्य पूर्वपदान्तवद्भावो नास्ति, किन्तु परपदेन सम्बन्धः। किञ्चात्रोदा-

"परेण नित्यसम्बन्धाः प्रादयश्च परादिवत्"। तेभ्यः परा यतिर्न भवतीत्यर्थः। तत्रोदाहरणम्।—

दुःखं मे प्र-क्षिपति हृदये दुःसहस्त्वद्वियोग इत्यादि। (ढ)

परेण नित्यसम्बन्धा इति किम्? कर्मप्रवचनीयेभ्यः पराऽपि यतिर्यथा स्यादिति। तत्रोदाहरणम्।—

प्रियं प्रति स्फुरत्पादे मन्दायन्ते न खल्विति।

श्रेयांसि बहुविघ्नानि भवन्ति महतामपि इत्यादि।

अयन्तु चादीनां प्रादीनाञ्चैकाक्षराणामनेकाक्षराणां वा पादान्ते यतावन्तादिवद्भाव इष्यते, न त्वनेकाक्षराणां पादमध्ये

हरणे, स्वरस्य परादिवद्भाववत् व्यञ्जनस्यापि परादिवद्भावो दृश्यते, यथा—चोत्सुक्यात् + अपरि इति सन्धौ "द्" इति व्यञ्जनस्य परादिवद्भावात् चतुर्थाक्षरे यतिरिति।

(ढ) परेणेति।—तेभ्यः प्राद्युपसर्गेभ्यः। दुःखमित्यादि।—दुःसहः अत्यन्तासहनीयः त्वद्वियोगः तव विरहः मे हृदये मम मनसि दुःखं क्लेशं प्रक्षिपति ददातीत्यर्थः। अत्र चतुरक्षरयतिके मन्दाक्रान्तावृत्तघटिते अस्मिन् "दुःखं मे" इति अक्षरचतुष्टयानन्तरं "प्र" इत्यक्षरे प्राप्ताऽपि यतिः परादित्वान्न क्रियते, परन्तु प्र इत्युपसर्गः क्षिपति इत्यनेनैव उच्चार्य्यते। अथेदं वक्तव्यं—प्रादय इति एकस्वरोपसर्गोपलक्षणम्; ततश्च "देवदेव जगन्नाथाभिवन्दे त्वां सनातनम्" इत्यादौ अभेरकारस्य पूर्वपदान्तवद्भावेऽपि न यतिभङ्गः।

(ण) "परेण नित्यसम्बन्धाः" इत्यस्य सोदाहरणां व्यावृत्तिं दर्शयति, परेण नित्यसम्बन्धा इतीति।—कर्मप्रवचनीयेभ्यः क्रियाद्योतकेभ्यः पराऽपि यतिः यथा भवेदिति। प्रियमिति।—प्रियं प्रति स्फुरत्पादे न खलु मन्दायन्ते। "न खल्विति" इत्यत्र "नखल्विषः" इति पाठान्तरम्। श्रेयांसीति।—महतां श्रेष्ठजनानामपि श्रेयांसि शुभानि बहुविघ्नानि प्रभूतविपत्सङ्कुलानि भवन्ति। इह "न खल्विति" तथा "महतामपि" इत्यत्र कर्मप्रवचनीयेभ्यः परा यतिरिति। अयमित्यादि।—अयम् अन्तादिवद्भावः एकाक्षराणाम् अनेकाक्षराणां वा चादीनां तथा प्रादीनाञ्च पादान्ते यतौ विधेयः, न तु पादमध्ये यतौ अनेकाक्षराणां चादीनां प्रादीनाञ्चेत्यर्थः। "अनेकाक्षराणाम्" इत्यत्र "एकाक्षराणाम्" इति पाठान्तरम्। नारायणभट्टस्तु

यतौ ; तत्र हि पदमध्येऽपि चामीकरादिष्विव यतेरभ्यनुज्ञातत्वात् । तत्र चादीनामुदाहरणम् ।—

प्रत्यादेशा-दपि च मधुनो विस्मृतभ्रूविलासम् इत्यादि ।

प्रादीनामुदाहरणम् ।—

दूरारूढ़प्रमोदं हसितमिव परि-स्पष्टमाशासखीभिः इत्यादि । (थ)

न पर्य्यन्तोऽस्ति वृत्तानां प्रस्तारगणनाविधौ ।
पूर्वाचार्य्यकृतं वृत्त-चिह्नं किञ्चिदिहोच्यते ॥ (त)

तत्र उक्थायां छन्दसि वृत्तम् ।—

---

—"अयन्तु अनेकाक्षराणां चादीनां प्रादीनाञ्चादिवद्भावः पादान्तयताविष्यते । एकाक्षराणान्तु पादान्तयतौ पादमध्ये समुद्रादियतौ च ; तदुक्तं कविकल्पलतायाम्—एकस्वरोपसर्गेण विच्छेदः श्रुतिसौख्यकृत्" इत्याह । तत्र हि अनेकाक्षराणां पादमध्ये चामीकरादिषु "पर्य्याप्तं तप्तचामीकरकटकतटे" इत्यादिषु इव यतेरभ्यनुज्ञातत्वात् "यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ" इत्यादिना पूर्वापरभागयोरेकवर्णत्वाभावेन प्राक्स्वीकारात् तादृशयतिरिष्टैवेति भावः । प्रत्यादेशादिति ।—अपि च किञ्च मधुनः मद्यस्य प्रत्यादेशात निराकरणात् विस्मृतः भ्रुवोर्विलासः भ्रूभङ्गः येन तत् तथोक्तम । अत्र तु "अपि च मधुनो" इति रसयतिस्थले 'च'कारस्य मध्ये वर्त्तमानत्वेन समुद्रादिपदान्तत्वाभावान न पूर्वपदान्तवद्भावः, पदान्ते तस्य स्वीकारात् । दूरेति ।—"परिस्पष्टम्" इत्यत्र "परिश्लिष्टम्" इति पाठान्तरम । त्रिमुनियतिके स्रग्धरावृत्तघटिते अस्मिन् "हसितमिव परि" इत्यत्र "परि" इत्युपसर्गस्य न परादिवद्भाव., अनेकाक्षराणां पादमध्ये यतौ तस्य निषेधादिति ।

(त) एवं यतिनियममुक्त्वा सम्प्रति प्रस्तारभेदेन असङ्ख्येयवृत्तेषु कतिचित् वृत्तलक्षणमुपपादयितुं स्वगर्वं परिहरति, न पर्य्यन्तोऽस्तीत्यादि ।—प्रस्तारगणनाविधौ वक्ष्यमाणलक्षणकप्रस्तारगणनायां वृत्तानाम एकाक्षरादारभ्य षड्विंशत्यक्षरपादपर्य्यन्तं लक्षणेन निरूपितानां छन्दसां पर्य्यन्तः अवधिः नास्ति न विद्यते, कैरपि पूर्वाचार्य्यैस्तेषां प्रत्येकशो नामोल्लेखपूर्वकं प्रयोगः कृत इति कुत्रापि न दृश्यते, निखिलप्रस्तारभेदानां मध्ये केषाञ्चिदेव वृत्तानां नामोल्लेखः परिदृश्यते, न तु सर्वेषामिति भावः । ननु एवं चेत् त्वया यानि वृत्तानि प्रदर्शितानि तेषामेव प्रामाणिकत्वे

## गः श्री ॥ २ ॥

यस्य पादे एको गुरुः भवति, तत् श्रीर्नाम वृत्तम्। तत्रोदाहरणम्।—

---

किं प्रमाणमित्याह, पूर्वेति।—इह खल्वस्मिन् ग्रन्थे पूर्वाचार्य्यकृतं प्रवरपण्डिताग्रगण्य-सम्पादितं किञ्चित् वृत्तात्मकं छन्दोलक्षणम् उच्यते निरूप्यते, पूर्वाचार्य्यैः वृत्तप्रस्तार-भेदेषु कतिपयानां विशिष्टभेदानामेव प्रयोगः कृतः, अतस्तेषामेवात्र नामलक्षणादिकं प्रदर्श्यते इति भावः। एतेन—केश्चित् यदि अनुक्तनामादिकस्य कस्यापि वृत्तभेदस्य प्रयोगः क्रियते तत्र न कोऽपि निषेधः, प्रस्तारविधेर्वर्त्तमानत्वात् तत्र प्रमाणाभाव इत्यपि न वक्तुं युज्यते, अतोऽत्र कथयितुरिच्छायाः स्वातन्त्र्यमेव प्रदर्शितमित्यपि बोध्यम्। अत्रेदं बोद्धव्यं—केचिदेकाक्षरं श्रीवृत्तमारभ्य पञ्चाक्षरपङ्क्तिच्छन्दःपर्य्यन्तं सूत्रं पिङ्गलेनानुक्तं, तनुमध्यादिकमेव वृत्तं पिङ्गलकृतमित्यवधारयन्तः तत एव ग्रन्थारम्भं व्याचक्षते; एतेषु पञ्चाक्षरपर्य्यन्तानां छन्दसां पिङ्गलेनानुक्तौ एषा युक्तिः प्रदर्श्यते यत्, ग्रन्थेऽस्मिन् वैदिकच्छन्दोवर्णनावसरे गायत्रीमारभ्यैव वैदिकच्छन्दांसि प्रदर्शितानि, अतश्च लौकिकच्छन्दांस्यपि गायत्रीमारभ्यैव कृतानि न तु उक्थादिमारभ्येति। किञ्च "उक्थादिपञ्चकं केश्चित गायत्र्येव कथ्यते" इति कात्यायनोक्तिमनुसृत्य उक्थादि-च्छन्दःपञ्चकं गायत्र्यन्तर्गतमेव इत्यपि मन्यते। अपरञ्च, पुराणादिषु तथा महाकवीनां काव्येष्वपि च उक्थादीनां प्रयोगादर्शनात न तानि सूत्रकारेण प्रदर्शितानीति च तेषामभिप्रायः। नारायणभट्टेनाप्युक्तं—"नोक्ता उक्थादिभेदा ये ग्रन्थगौरवभीतितः। तांस्तथा शब्दचिह्नेन वदामोऽन्यत्र दर्शनात्॥ न च सुप्रतिष्ठान्तानां पञ्चानां जातीनां सूत्रानुक्तत्वात् निर्मूलतेति वाच्यम्; "द्विकौ ग्लौ" (८।२० पि०) इति प्रस्तारकथने "परे पूर्णमिति" (८।२४ पि०) इतिरूपप्रस्तारकथने च सूत्रकारेणापि दर्शितत्वात्। बहुतरप्रचाराभावात्तु गाथाभेदवत् लक्षणानुक्तेति निरूपयति" इति। वयन्तु हस्तलिखितपुस्तकविशेषे तथा वृत्तरत्नाकरादिषु एतेषां सूत्राणां सन्निवेशदर्शनात् पुनरेकाक्षरवृत्तमारभ्यैव लक्षणं पिङ्गलेन सन्निविष्टमिति मन्यामहे।

(ख) तत्रभवान् पिङ्गलाचार्य्यः उक्थाधिकारे एकाक्षरवृत्तलक्षणं विदधन् "मङ्गलमध्यानि शास्त्राणि प्रथन्ते" इति पतञ्जलिवचनात् श्रीशब्दप्रयोगेण ग्रन्थस्य मङ्गलमध्यतामिच्छन् श्रीवृत्तलक्षणमाह, गः इति।—गः गुरुः। एकाक्षर-पादायामुक्थायां प्रतिपादम् एकाक्षरस्य गुरुत्वे श्रीर्नाम वृत्तं भवति।

ग० ग०  ग० ग०

श्रीस्ते । मा गात् ॥ (थ)

अत्युक्थायाम् ।—

गौ स्त्री ॥ ३ ॥

यस्य पादे द्वौ वर्णौ गुरू भवतः, तत् स्त्रीनाम वृत्तम् ।

तत्रोदाहरणम् ।—

ग० ग० ग० ग०  ग० ग० ग० ग०

अन्यस्त्रीभिः । सङ्गस्त्याज्यः ॥ ( द )

मध्यायाम् ।—

---

श्रीरिति ।—ते तव श्रीः लक्ष्मीः मा गात् न गच्छतु । अत्र चतुर्ष्वपि पादेषु एकैकाक्षरस्य गुरुत्वात् लक्षणसमन्वयः । अत्रेदं बोद्धव्यं—वर्णप्रस्तारनियमेन एकाक्षरोक्थाच्छन्दसः प्रस्तारे क्रियमाणे भेदद्वयं ( ᴗ । - ) सम्भवति, तत्र प्रथमो भेदः श्रीरिति नाम्ना ख्यातम् । वृत्तभेदसङ्ख्यापरिज्ञानञ्च एवं कर्त्तव्यं—वृत्तपादस्थाक्षराणामुपरि अधो वा एक-द्वि-चतुरादिद्विगुणक्रमेण सङ्ख्याङ्काः स्थापनीयाः, तत्र यानि लघ्वक्षराणि तेषामुपर्य्यधो वा स्थापितानामङ्कानां संयोगे या सङ्ख्या जायते, तया पुनरेकसङ्ख्यां संयोजयेत्, एवं निष्पन्ना सङ्ख्या एव तद्वृत्तभेदसङ्ख्या ज्ञातव्या इति । प्रस्तारप्रपञ्चन्तु अष्टमाध्याये दर्शयिष्यामः ।

( द ) द्व्यक्षरपादात्मिकायामत्युक्थायां स्त्रीवृत्तमाह, गौ-इति ।—गौ गुरुद्वयम् । गुर्वक्षरद्वयस्य पादत्वे सति स्त्रीनाम वृत्तम् । अन्येति ।—स्पष्टम् । अत्र प्रतिपादं गुरुद्वयस्य सत्त्वात् लक्षणसङ्गतिरिति । द्व्यक्षरपादायामत्युक्थायां प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताः चत्वारो भेदाः ( ᴗ ᴗ । - ᴗ । ᴗ - । - - ) भवन्ति, तत्र प्रथमो भेदः स्त्रीनाम वृत्तमिति । प्राकृतपिङ्गल-वाणीभूषणादौ अस्य वृत्तस्य "कामः" इति नाम । तत्र तत्र एतदतिरिक्तं महीप्रभृतिसंज्ञकमन्यदपि भेदत्रयं प्रदर्शितं, ते च—यत्र पूर्वं लघुः ततो गुरुः तन्मही नाम ; यथा—"लगो मही ।

## मो नारी ॥ ४ ॥

यस्य पादे मकारत्रयं भवति, तत् नारीनाम वृत्तम्। तस्योदाहरणम्।—




सर्वासां, नारीणाम्। भर्त्ता स्या-दाराध्यः ॥ (ध)

प्रतिष्ठायाम्।—

---

मही कही ॥" (२।८ प्रा० पि०)। संस्कृतं—"लगौ यत्र। मही कथिता ॥" इति। यत्र पूर्वो गुरुस्ततो लघुः, तत् सारुनामकं स्यात्; यथा—"सारु एह। गो वि रेह ॥" (२।१७ प्रा० पि०)। संस्कृतं—"सारुरेषः। गुर्वादितीयो रेखा ॥" इति। यत्र लघुद्वय तत् मधुनामकम्; यथा—"लहु जुआ। महु धुअ ॥" (२।६ प्रा० पि०)। संस्कृतं—"लघु युगम्। मधु ध्रुवम् ॥" इति।

(ध) त्र्यक्षरपादायां मध्यायां नारीवृत्तलक्षणमाह, म इति।—यत्र प्रतिपादं त्रिवर्णो गुरुस्तत् नारी नाम त्र्यक्षरं वृत्तं भवेत्। सर्वासामित्यादि।—स्पष्टम्। अत्र गुर्वक्षरत्रयघटितपादत्वात् लक्षणसङ्गतिः बोध्या। मध्याच्छन्दःपादघटकी-भूतानां त्र्यक्षराणां प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ता अष्टौ भेदा (∪∪∪। -∪∪। ∪-∪। --∪। ∪∪-। -∪-। ∪--। ---) जायन्ते, तेषु प्रथमो भेदः नारीवृत्तमिति। प्राकृतपिङ्गल-वाणीभूषणयोस्तु अस्याः "तालो" इति नाम। तत्र तत्र प्रियादिसंज्ञकम् अन्यदपि सप्तविधं वृत्तम् अस्मिन्नधिकारे दृश्यते। यत्तु तत्र प्रियानाम वृत्तं तत् छन्दोमञ्जरी वृत्तरत्नाकरयोः "मृगी" इति नाम्ना ख्यातम्। यत्र प्रथमं लघुरेकः ततः गुरुद्वयं, तत् शशीनामच्छन्दः; यथा—"ससी जो जणीओ। फणींदो भणीओ ॥" (२।१६ प्रा० पि०)। संस्कृतं—"शशी यो जनितः। फणीन्द्रेण भणितम् ॥" इति। यत्र गुर्वन्तः त्रिवर्णः तद्रमणाख्यं छन्दः। यथा—"सगणो रमणो। सहिओ कहिओ ॥" (२।१८ प्रा० पि०)। संस्कृतं—"सगणो रमणः। सख्यः कथितम् ॥" इति। यत्र अन्तलघुर्गणः तद्वृत्तं पञ्चालाख्यं स्यात्; यथा—"तक्कार जं दिट्ठ। पंचाल उक्किट्ठ ॥" (२।२० प्रा० पि०)। संस्कृतं—"तकारो यत्र दृष्टः। पञ्चाल उत्कृष्टः ॥" इति। यत्र गुरुमध्यगणो भवेत् तत् वृत्तं मृगेन्द्रनामकं

## ग्मौ चेत् कन्या ॥ ५ ॥

यस्य पादे एको गुरुः, ततश्च मगणः, तत् वृत्तं कन्यानाम। तत्रोदाहरणम्।—

ग० म० ग० म० ग० म० ग० म०

दाराः कन्याः पुत्राः बन्धः। एवं ज्ञात्वा युक्तं कार्य्यम् ॥ (न)

सुप्रतिष्ठायाम्।—

## पङ्क्तिर्भ्गौ ग् ॥ ६ ॥

यस्य पादे भगणो गुरुद्वयञ्च भवति, तत् पङ्क्तिर्नाम वृत्तम्। तत्रोदाहरणम्।—

---

स्यात्; यथा—"णरेंद ठवेहु। मिएंद करेहु॥" (२।२२ प्रा० पि०)। संस्कृतं—नरेन्द्रं स्थापयन्तु। मृगेन्द्रं कुर्वन्तु॥" इति। यत्र गुर्वादिगणस्तत् मन्दरनामकं वृत्तं भवेत्; यथा—"भो जहि सो सहि। मंदर सुंदर॥" (२।२४ प्रा० पि०)। संस्कृतं यथा—"भो यत्र स सखि। मन्दरः सुन्दरम्॥" इति। यत्र त्रिलघ्वात्मको वर्णस्तत् कमलं नाम वृत्तम्; यथा—"कमल पभण। सुमुहि! णगण॥" (२।२६ प्रा० पि०)। संस्कृतं—"कमलं प्रभण। सुमुखि नगणः॥" इति।

(न) चतुरक्षरपादायां प्रतिष्ठायां कन्यावृत्तमाह, ग्मौ इति।—प्रतिपादे गुरुचतुष्टयात्मकं वृत्तं कन्यानाम स्यात्। दारा इत्यादि।—बन्धः बन्धनस्वरूपः, मुक्तिप्रतिबन्धक इत्यर्थः। प्रतिष्ठापादघटकीभूतानां चतुरक्षराणां प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताः षोडश भेदा जायन्ते, तेषु प्रथमो भेदः कन्यावृत्तमिति। प्राकृतपिङ्गले वाणीभूषणे च अस्याः "तीर्णा" इति नाम। किञ्च तत्र तत्र चतुरक्षरच्छन्दसः "धारी नगाणी" च इति अपरौ द्वौ भेदौ प्रदर्शितौ, ग्रन्थगौरवभयात् तयोः लक्षणे न प्रदर्श्येते। अन्ये च भेदाः सुधीभिः स्वयमूहनीयाः।

(प) पञ्चाक्षरपादसुप्रतिष्ठायां पङ्क्तिच्छन्दोलक्षणमाह,—पङ्क्तिरिति।

भ० ग० ग० भ० ग० ग०

ᴗ – – ᴗ ᴗ ᴗ – – ᴗ ᴗ

पर्वतशीर्षे, जाम्बवपङ्क्तिः।

भ० ग० ग० भ० ग० ग०

ᴗ – – ᴗ ᴗ ᴗ – – ᴗ ᴗ

पक्वफलानां, भारविनम्रा॥ (प)

तत्र गायत्रे छन्दसि वृत्तम्।—

## तनुमध्या त्यौ॥ ७॥

यस्य पादे तकार-यकारौ, तत् तनुमध्या नाम वृत्तम्।

तत्रोदाहरणम्।—

त० य० त० य०

ᴗ ᴗ – – ᴗ ᴗ ᴗ ᴗ – – ᴗ ᴗ

धन्या त्रिषु नीचा, कन्या तनुमध्या।

त० य० त० य०

ᴗ ᴗ – – ᴗ ᴗ ᴗ ᴗ – – ᴗ ᴗ

श्रोणीस्तनगुर्वी, भूयात् पतिभोग्या॥

पर्वतेति।—जाम्बवपङ्क्तिः जम्बूवृक्षश्रेणी। अत्र प्रतिपादं भगणस्य गद्वयस्य च वर्त्तमानत्वात् पङ्क्तिर्नाम छन्दः इति। सुप्रतिष्ठापादघटकीभूतानां पञ्चाक्षराणां प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताः द्वात्रिंशद्भेदा जायन्ते, तत्र सप्तमो भेदः पङ्क्तिनामच्छन्दः इति। प्राकृतपिङ्गल-वाणीभूषणयोरस्याः "हंसः" इति नाम। अत्र तत्र च पञ्चाक्षरच्छन्दसः द्वात्रिंशद्भेदेषु एतदतिरिक्ताः सम्मोहा-हारी-यमकाख्याः अन्ये त्रयो भेदा एव प्रदर्शिताः इति।

(फ) षडक्षरपादायां गायत्र्यां तनुमध्यालक्षणमाह, तनुमध्येति।—अन्त्यलघुरेको गणः तदनन्तरमादिलघुरेको गणश्च यत्र स्यात् तत् तनुमध्यानाम वृत्तम्। धन्येति।—त्रिषु नाभ्युदरललाटेषु नीचा निम्नभावयुक्ता, निम्ननाभिः कृशोदरी अप्रशस्तललाटा चेत्यर्थः, तनु क्षीणं मध्यं कटिदेशः यस्याः सा, श्रोणीस्तनगुर्वी नितम्बाभ्यां कुचाभ्याञ्च विशाला, अत एव धन्या श्रेष्ठा कन्या पतिभोग्या स्वामिप्रिया इत्यर्थः, भूयात्। अन्यार्थञ्च—तनुमध्या कन्या इव इयं वृत्तभेदान्तर्गता तनुमध्या धन्या

अत्र पादान्ते विशेषेण विश्रामः कर्त्तव्य इत्याम्नायः । (क)

उष्णिहि ।—

## कुमारललिता ज्सौ ग् ॥ ८ ॥

यस्य पादे जकार-सकारौ गकारश्च, तद्वृत्तं कुमारललिता नाम । विभिश्चतुर्भिश्च यत्युपदेशं वर्णयन्ति । तत्रोदाहरणम् ।—

ज० स० ग० ज० स० ग०

- ⏑ - - - ⏑ ⏑ - ⏑ - - - ⏑ ⏑

यदीय-रतिभूमौ, विभाति, तिलकाङ्कः ।

ज० स० ग० ज० स० ग०

- ⏑ - - - ⏑ ⏑ - ⏑ - - - ⏑ ⏑

कुमार-ललिताऽसौ, कुला-न्यटति नारी ॥

कवीनामत्यन्तहृदयहारितया आदरणीया पतिभोग्या "कविता वनितामाया" इत्यादिस्मरणात् कवितापतिभिः कविभिः भोग्या भूयात् । गायत्रीच्छन्दःपादघटकीभूतानां षडक्षराणां प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्तास्तु:षष्टि ( ६४ ) भेदा भवन्ति, तत्र त्रयोदशभेदः (१३) तनुमध्याख्यः । अत्र पादान्ते यतिः । छन्दोमञ्जर्यां गायत्रीच्छन्दसः तनुमध्या-शशिवदना-सोमराजीति भेदत्रयमात्रं प्रदर्शितम् । प्राकृत-पिङ्गलादौ पुनरस्य शेषाद्याख्याः कतिपये भेदाः प्रदर्शिताः, अन्ये च विस्तृतिभयादुपेक्षिताः ।

( ख ) सप्ताक्षरपादायाम् उष्णिहि कुमारललितालक्षणमाह—कुमारेति । लक्षणे यतेर्विशेषनियमो न विहितः, अतः तत्प्रदर्शनायाह—विभिरित्यादि । यदीयेत्यादि ।—यदीयरतिभूमौ यस्याः योनिदेशे तिलकाङ्कः तिलचिह्नं विभाति विराजते, कुमारललिता अनूढजनप्रिया, असौ एवंविधा नारी रमणी कुलानि अटति पातयति ; पक्षे—एतादृशी रमणीव कुमारललिताख्यं वृत्तं कुलानि देशानां कुलानि अटति गच्छति, सर्वेषां प्रियत्वात् सर्वत्र विचरति । उष्णिक्छन्दःपाद-घटकीभूतानां सप्ताक्षराणां प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताः अष्टाविंशत्यधिक-शतभेदा (१२८) भवन्ति, तत्र त्रिंशत्तमो (३०) भेदः कुमारललिताख्यया विख्यातः । अत्र पादस्य आदौ तृतीयाक्षरे ततः सप्तमाक्षरे च यतिः । चतुर्थे तु पादे

अत्र केचित् द्वाभ्यां पञ्चभिश्च यतिमिच्छन्ति । तत्रोदाहरणम् ।—

ज० स० ग० ज० स० ग०

- ᴗ - - - ᴗ ᴗ - ᴗ - - - ᴗ ᴗ

इदं, वदनपद्मं, प्रिये !, तव विभाति ।

ज० स० ग० ज० स० ग०

- ᴗ - - - ᴗ ᴗ - ᴗ - - - ᴗ ᴗ

इह, व्रजति मुग्धे !, मनो, भ्रमरतां मे ॥ (ब)

अनुष्टुभि ।—

**माणवकाक्रीड़ितकं भ्तौ ल्गौ ॥ ९ ॥**

यस्य पादे भकार-तकारौ लकार-गकारौ च, तन्माणवकाक्रीड़ितकं नाम वृत्तम् । तत्रोदाहरणम् ।—

भ० त० ल० ग० भ० त० ल० ग०

ᴗ - - ᴗ ᴗ - - ᴗ ᴗ - - ᴗ ᴗ - - ᴗ

माणवका-क्रीड़ितकं, यः कुरुते, वृद्धवयाः ।

---

"कुलान्यटति" इत्यादौ 'न्य' इति तृतीयाक्षरे यतिकष्टात् 'ला' इति द्वितीये तदनन्तरं 'टो' इति पञ्चमाक्षरे यतिर्विहिता, "द्वाभ्यां पञ्चभिश्च" इति मतान्तरात् । तदेव मतान्तरं दर्शयितुमाह—अत्रेति । इदमिति ।—हे प्रिये ! तव इदं वदनपद्मं मुखकमलं विभाति प्रकाशते । हे मुग्धे ! हे सुन्दरि ! मे मनः मदीयं चेतः इह तव वदनपद्मे भ्रमरतां षट्पदत्वं व्रजति गच्छति । प्रतिपादमत्र द्वितीयाक्षरे तदनन्तरञ्च पञ्चमाक्षरे यतिः । वृत्तरत्नाकरादौ मधुमती-मदलेखा-हंसमालादयोऽस्य प्रपञ्चाः कृताः । प्राकृतपिङ्गलादौ समानिका-सुवास-करहञ्चौ-शीर्षरूपकाख्यः चतुर्विधश्चाव भेदः प्रदर्शितः ।

(भ) अष्टाक्षरपादेऽनुष्टुबधिकारे छन्दांसि निरूपयितुमादौ माणवकाक्रीड़ितकमाह—माणवकेत्यादि । माणवकाक्रीड़ितकमित्यादि ।—यः वृद्धवयाः स्थविरः

भ० त० ल० ग० भ० त० ल० ग०

ᴗ – – ᴗ ᴗ – – ᴗ ᴗ – – ᴗ ᴗ – – ᴗ

हास्यमसौ, याति जने, भिक्षुरिव, स्त्रीचपल: ॥

अत्र चतुर्भिश्चतुर्भिश्च यतिरित्याम्नाय: । (भ)

## चित्रपदा भौ गौ ॥ १० ॥

यस्य पादे भकारौ गकारौ च भवत:, तच्चित्रपदा नाम वृत्तम् । तत्रोदाहरणम् ।—

भ० भ० ग० ग० भ० भ० ग० ग०

ᴗ – – ᴗ – – ᴗ ᴗ ᴗ – – ᴗ – – ᴗ ᴗ

यस्य मुखे प्रियवाणी, चेतसि सज्जनता च ।

भ० भ० ग० ग० भ० भ० ग० ग०

ᴗ – – ᴗ – – ᴗ ᴗ ᴗ – – ᴗ – – ᴗ ᴗ

चित्रपदाऽपि च लक्ष्मी-स्तं पुरुषं न जहाति ॥

अत्र पादान्ते यति: । (म)

---

माणवकाक्रीडितकं बालकवत् खेलनं कुरुते, असौ वृद्धो जन:, स्त्रीचपल: रमणी-लोलुप:, वारवनितान्यासक्त इति भाव: ; भिक्षुरिव याचक इव, निर्धन इव इति यावत्, जने जनसमीपे हास्यम् उपहासास्पदतां याति गच्छति । चतुर्थाक्षरे अष्टमाक्षरे च यति: । अनुष्टुप्छन्द:पादघटकीभूतानामष्टाक्षराणां प्रस्तारे क्रियमाणे षट्पञ्चाशदधिकद्विशतविधा: ( २५६ ) भेदा जायन्ते, तत्र त्र्यधिकशततमो ( १०३ ) भेद: माणवकाक्रीडितकम् ।

( म ) अनुष्टुभि चित्रपदाच्छन्दो लक्षयति—चित्रपदेति । यस्येति ।—यस्य मुखे आनने प्रियवाणी मधुरवाक्यं, चेतसि हृदये च सज्जनता साधुता, वर्तते इति शेष:, लक्ष्मी: चित्रम् अद्भुतम्, एकत्र स्थातुमशक्यत्वात् इति भाव:, पदं पादविक्षेप: यस्या: सा तादृशी अपि चञ्चलचरणाऽपि, तं तथाविधं पुरुषं न जहाति न परित्यजति । इह द्वितीयचतुर्थपादान्ते लघुवर्णयो: "गन्ते" इति गुरुत्वातिदेश: । अष्टाक्षरप्रस्तारभेदेषु पञ्चपञ्चाशत्तमो (५५) भेद: चित्रपदेति ।

## विद्युन्माला मौ गौ ॥ ११ ॥

यस्य पादे मकारौ गकारौ च, तद्विद्युन्माला नाम वृत्तम्। तत्रोदाहरणम्।—

म० म० ग० ग०
◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡
विद्युन्माला-लोलान् भोगान्,
म० म० ग० ग०
◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡
मुक्त्वा मुक्तौ, यत्नं कुर्य्यात्।
म० म० ग० ग०
◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡
ध्यानोत्पन्नं, निःसामान्यं,
म० म० ग० ग०
◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡
सौख्यं भोक्तुं, यद्याकाङ्क्षेत्।

अत्र चतुर्भिश्चतुर्भिश्च यतिरित्याम्नायः। (य)

---

(य) अनुष्टुब्भेदं विद्युन्मालां लक्षयति, विद्युदिति।—यत्र अष्टावेव वर्णा गुरवो भवन्ति सा विद्युन्माला कथिता इत्यर्थः। विद्युन्मालेति।—यदि ध्यानेन भगवच्चिन्तनेन उत्पन्नं सञ्जातं निःसामान्यम् असाधारणं सौख्यं परमानन्दं भोक्तुं लब्धुम् आकाङ्क्षेत् इच्छेत्, तदा विद्युन्मालालोलान् सौदामनीवच्चपलान् भोगान् इन्द्रियभोग्यपदार्थान् मुक्त्वा त्यक्त्वा, मुक्तौ मोक्षपथि, यत्नं चेष्टां, कुर्य्यात् विदध्यात। अत्र चतुरक्षरे चतुरक्षरे यतिः कर्त्तव्या। तथा च कालिदासः,—"सर्वे वर्णा दीर्घा यस्यां विश्रामः स्याद्वेदैर्वेदैः। विद्वद्वृन्दैर्वीणापाणि व्याख्याता सा विद्युन्माला॥" इति। तथा वाणीभूषणेऽपि—"उक्ता यस्यामष्टौ वर्णाः पादे पादे सर्वे दीर्घाः। विश्रामः स्यात्तुर्य्ये तुर्य्ये विद्युन्माला निर्दिष्टा सा॥" इति। अष्टाक्षरप्रस्तारस्य प्रथमो (१) भेदः विद्युन्मालाख्यं वृत्तमिदमिति। प्राकृतपिङ्गल-वाणीभूषणादौ पुनरष्टाक्षरप्रस्तारस्य

## हंसरुतं म्नौ गौ ॥ १२ ॥

यस्य पादे मगण-नगणौ गकारौ च भवतः, तद्वृत्तं हंसरुतं नाम। तत्रोदाहरणम्।—

म० न० ग० ग० म० न० ग० ग०

∪ ∪ ∪ - - - ∪ ∪ ∪ ∪ ∪ - - - ∪ ∪

अभ्यागामिशशिलक्ष्मी-मञ्जीरक्वणिततुल्यम्।

म० न० ग० ग० म० न० ग०ग०

∪ ∪ ∪ - - - ∪ ∪ ∪ ∪ ∪ - - - ∪ ∪

तीरे राजति नदीनां, रम्यं हंसरुतमेतत् ॥ (र)

बृहत्याम्।—

## भुजगशिशुसृता नौ म् ॥१३॥

यस्य पादे नकारौ मकारश्च भवति, तद्वृत्तं भुजगशिशुसृता नाम। तत्रोदाहरणम्।—

---

प्रमाणिका-मल्लिका-तुङ्गा-कमलाख्याः चत्वारो भेदाः सलक्षणं प्रदर्शिताः, विस्तृति-भिया एतेषां लक्षणं न लिखितमत्र।

(र) अनुष्टुबवशेषं हंसरुताख्यं वृत्तं लक्षयति, हंसेति।—अत्र पादान्ते यति-र्विच्छेदः। अभ्यागामीत्यादि।—नदीनां तीरे तटे, अभ्यागामिनः आगमनशीलस्य उदयं गच्छत इति यावत्, शशिनश्चन्द्रस्य लक्ष्म्याः स्त्रियाः मञ्जीरक्वणितेन नूपुर-ध्वनिना, तुल्यं सदृशं, रम्यं मनोज्ञम् एतत् हंसरुतं हंसशब्दः राजति शोभते। अष्टाक्षरप्रस्तारस्य सप्तपञ्चाशत्तमो (५७) भेदः हंसरुताख्यं वृत्तम्। केचन सूत्रमिदं बृहत्यामुक्तवन्तः, परन्तु वृत्तस्यास्य अष्टाक्षरत्वात् तथा वृत्तरत्नाकरादौ अनुष्टुभि एव पाठाच्च तत्रैव निवेशनमुचितमिति मत्वा वयमत्र पठामः। सूत्रमिदं मूले न दृश्यते। अनुष्टुभि ग्रन्थान्तरोक्ता भेदा नात्र गौरवभयात् प्रदर्शिताः। अत्रेदमवधेयम्—अनुष्टुभि यस्य समस्य विषमस्य अर्द्धसमस्य वा वृत्तस्य विशेषसंज्ञा न कृता, तदेव वितानमिति सामान्यनाम्ना व्यवहर्त्तव्यम्।

(ल) नवाक्षरपादबृहत्यधिकारे छन्दांसि विदधन् भुजगशिशुसृतालक्षण-

म० म० म० म० म० म०

- - - - - - ◡ ◡ ◡ - - - - - - ◡ ◡ ◡

इयमधिकतरं, रम्या, विकचकुवलय-श्यामा ।

म० म० म० म० म० म०

- - - - - - ◡ ◡ ◡ - - - - - - ◡ ◡ ◡

रमयति हृदयं, यूनां, भुजगशिशुसृता, नारी ॥

वक्रगतिरित्यर्थः, शिशुशब्दस्य सार्थकत्वात् । अन्यैरप्युक्तम् ।—

अभ्यस्तता नु तरणीगतिवक्रभावा-

न्नुन्मूलिताः फणिशिशोर्भवताऽपराधाः ? इति ।

अत्र सप्तभिर्द्वाभ्याञ्च यतिरित्याम्नायः । (ल)

---

माह,—भुजगेति । "भुजगशिशुसृता" इत्यत्र "भुजगशिशुभृता" इति वृत्तरत्नाकरादौ पाठः । क्वचित् "भुजगशिशुवृता" क्वचित् वा "भुजगशिशुयुता" इति पाठावपि दृश्येते । अत्र सप्तमाक्षरे नवमाक्षरे च यतिः । इयमित्यादि ।—विकचकुवलयवत् प्रस्फुटितनीलोत्पलवत् श्यामा श्यामवर्णा रम्या मनोज्ञा भुजगशिशुसृता बालभुजङ्गवत् वक्रगामिनी इयं नारी यूनां तरुणानां हृदयं चेतः अधिकतरम् अतिशयं यथा तथा रमयति आनन्दयति । पक्षान्तरे—नारीव भुजगशिशुसृताख्यमिदं वृत्तं यूनां हृदयम् आनन्दयति इत्यर्थः । बृहतीच्छन्दःपादघटकीभूतानां नवाक्षराणां प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताः द्वादशाधिकपञ्चशतमिताः (५१२) भेदा भवन्ति, तत्र च चतुःषष्टितमो (६४) भेदः भुजगशिशुसृताऽस्तीति । भुजगशिशुसृताशब्देन वक्रगतिः कथं लभ्यते ? कथं वा शिशुशब्दस्य ग्रहणं, भुजगशब्देनैव वक्रगतिलाभात् ? इति शिशुशब्दप्रयोगे हेतुं दर्शयितुमाह, शिशुशब्दस्येति ।—भुजगापेक्षया भुजगशिशूनामतीव वक्रगमनशीलत्वेन शिशुशब्दस्य प्रयोगः । शिशुशब्दप्रयोगस्य अदुष्टतां समर्थयितुम् अन्यकविप्रयोगं दर्शयति, अभ्यस्ततेति ।—तरणीगतेः नौचलनस्य वक्रभावात् कुटिलगतेः, "तरणी" इत्यत्र "तरुणी" इति पाठे तु—रमणीगतिकौटिल्यमित्यर्थः ; अभ्यस्तता भवता फणिशिशोः सर्पशिशोः अपराधाः वक्रगमनरूपाः उन्मूलिताः उत्पाटिताः नु ? इहापि अन्यकविभिः फणिशिशुशब्दः एव प्रयुक्तः, न तु फणिशब्द इति भावः ।

## हलमुखी र्नौ स् ॥ १४ ॥

यस्य पादे रेफ-नकार-सकारा भवन्ति, तद्वृत्तं हलमुखी नाम। तत्रोदाहरणम्।—

र० न० स० र० न० स०

⏑ - ⏑ - - - - - ⏑ ⏑ - ⏑ - - - - - ⏑

गण्डयो-रतिशयकृशं, यन्मुखं, प्रकटदशनम्।

र० न० स० र० न० स०

⏑ - ⏑ - - - - - - ⏑ ⏑ - ⏑ - - - - - ⏑

आयतं, कलहनिरतं, तां स्त्रियं, त्यज हलमुखीम् ॥

अत्र त्रिभिः षड्भिश्च यतिरित्याम्नायः। (व)

पङ्क्तौ।—

## शुद्धविराड् म्सौ ज्गौ ॥ १५ ॥

यस्य पादे मकार-सकार-जकार-गकारा भवन्ति, तद्वृत्तं शुद्धविराट् नाम। तत्रोदाहरणम्।—

---

(व) नवाक्षरप्रस्तारान्तर्गतं हलमुखीनामकं वृत्तं लक्षयति, हलमुखीति।—र्नौ स् रगण-नगण-सगणाः। गण्डयोरिति।—यस्याः स्त्रियाः मुखं वदनं गण्डयोः कपोलयोः अतिशयकृशम् अत्यन्तक्षीणं, शुष्ककपोलमित्यर्थः, तथा प्रकटाः वहिर्गताः दशनाः दन्ताः यस्य तत् दन्तुरं, तथा आयतं दीर्घं, कलहनिरतं विवादासक्तञ्च भवेत् तां तादृशीं हलमुखीम् उन्नतदन्ततया दीर्घाकारतया च लाङ्गलाकारमुखीं स्त्रियं रमणीं त्यज वर्जय। नवाक्षरप्रस्तारस्य एकपञ्चाशदधिकद्विशततमो (२५१) भेदः हलमुखीनाम्ना ख्यातः। प्राकृतपिङ्गलादौ महालक्ष्मी-सारङ्गिका-पाइत्ता-कमल-बिम्ब-तोमर-रूपामाली इति नवाक्षरपादच्छन्दसः समस्तभेदाः प्रदर्शिताः, परन्तु ग्रन्थविस्तृतिशङ्कया न ते अत्र निवेशिताः।

(श) दशाक्षरपादे पङ्क्तिच्छन्दसि शुद्धविराड्वृत्तं लक्षयति—शुद्धेति।

म० स० ज० ग० म० स० ज० ग०

विश्वं तिष्ठति कुक्षिकोटरे, वक्त्रे यस्य सरस्वती सदा ।

म० स० ज० ग० म० स० ज० ग०

अस्मद्वंशपितामहो गुरु-र्ब्रह्मा शुद्धविराट् पुनातु नः ॥

अत्र पादान्ते यतिः । ( अ )

## पणवो म्नौ य्गौ ॥ १६ ॥

यस्य पादे मकार-नकार-यकार-गकारा भवन्ति, तद्वृत्तं पणवो नाम । तत्रोदाहरणम् ।—

म० न० य० ग० म० न० य० ग०

मीमांसारस-मम्तं पीत्वा, शास्त्रोक्तिः पटु-रितरा भाति ।

म० न० य० ग० म० न० य० ग०

एवं संसदि, विदुषां मध्ये, जल्पामो जय-पणवस्थत्वात् ॥

अत्र पञ्चभिः पञ्चभिर्यतिरित्याम्नायः । ( ब )

---

विश्वमित्यादि ।—यस्य कुक्षिकोटरे उदरगह्वरे विश्वं जगत्, तथा वक्त्रे मुखे च सदा सर्वस्मिन् समये, सरस्वती वाणी, तिष्ठति वर्त्तते, सः अस्मद्वंशपितामहः अस्माकं कुलोद्भूतानां पितामहः, गुरुः पूज्यः शुद्धविराट् आदिपुरुषः ब्रह्मा नः अस्मान् पुनातु पवित्रीकरोतु । दशाक्षरपादानां पङ्क्तिच्छन्दसां प्रस्तारे क्रियमाणे जायमानेषु सर्वगुर्वादिसर्वलघ्वन्तेषु चतुर्विंशत्यधिकसहस्रसङ्ख्याकभेदेषु ( १०२४ ) पञ्चचत्वारिंशदधिकत्रिशततमभेदात्मकम् ( ३४५ ) इदं शुद्धविराडाख्यं वृत्तमिति ।

( ब ) दशाक्षरपादे पङ्क्तिच्छन्दसि पणवाख्यं वृत्तमाह—पणव इति । मीमांसेति ।—जयपणवस्थत्वात् जयार्थं यः पणवस्थः "बाजो" इति भाषा ; तस्य भावः तस्मात् संसदि सभायां विदुषां पण्डितानां मध्ये एवं जल्पामः कथयामः

## रुक्मवती भ्मौ स्गौ ॥ १७ ॥

यस्य पादे भकार-मकार-सकार-गकारा भवन्ति, तद्वृत्तं रुक्मवती नाम। तत्रोदाहरणम्।—

भ० म० स० ग० भ० म० स० ग०

∪ - - ∪ ∪ ∪ - - ∪ ∪ ∪ - - ∪ ∪ ∪ - - ∪ ∪

पादतले पद्मोदरगौरे, राजति यस्या ऊर्द्धगरेखा।

भ० म० स० ग० भ० म० स० ग०

∪ - - ∪ ∪ ∪ - - ∪ ∪ ∪ - - ∪ ∪ ∪ - - ∪ ∪

सा भवति स्त्री लक्षणयुक्ता, रुक्मवती सौभाग्यवती च॥

अत्र पादान्ते यतिः। ( स )

## मयूरसारिणी र्जौ र्गौ ॥ १८ ॥

यस्य पादे रेफ-जकारौ रेफ-गकारौ च, तद्वृत्तं मयूरसारिणी नाम। तत्रोदाहरणम्।—

यत्—अमृतम् अमृतवदुपादेयं मीमांसारसं तदाख्यग्रन्थार्थसारमित्यर्थः, पीत्वा आस्वाद्य, स्थितस्य जनस्य इति शेषः, इतरा अन्या शास्त्रोक्तिः शास्त्रीयवचनं पटुः परिस्फुटा सती भाति दीप्यते ; मीमांसाशास्त्रपाठमन्तरेण शास्त्रान्तरज्ञानं न सम्पूर्णं जायते, अतः मीमांसाशास्त्रमेव शास्त्रान्तरप्रवेशद्वारमिति भावः। "गन्ते" इत्यनेन 'ति' इत्यस्य गुरुत्वातिदेशः। दशाक्षरप्रस्तारस्य एकविंशत्यधिकशततमो ( १२१ ) भेदः पणवाख्यं वृत्तमिदमिति।

( स ) दशाक्षरपादरुक्मवतीसंज्ञकं वृत्तान्तरमाह—रुक्मवतीत्यादि। पादेत्यादि।—यस्याः रमण्याः पद्मोदरगौरे पद्मस्य अभ्यन्तरवत् गौरवर्णे पादतले चरणतले ऊर्द्धगरेखा ऊर्द्धदेशप्रसारिणी रेखा चिह्नविशेषः राजति शोभते, लक्षणयुक्ता शुभलक्षणवती सा स्त्री रुक्मवती विपुलस्वर्णादिविशिष्टा, महाधनवतीत्यर्थः, तथा सौभाग्यवती च सौभाग्यशालिनी च, पतिप्रिया चेत्यर्थः, भवति। छन्दोमञ्जर्यादौ "रूपवती" "चम्पकमाला" इति नामद्वयं पाठान्तरत्वेन दृश्यते। दशाक्षरप्रस्तारस्य नवनवत्यधिकशततमो ( १९९ ) भेदः रुक्मवतीनामवृत्तमिदमिति।

( ह ) दशाक्षरपादच्छन्दःसु मयूरसारिणीवृत्तं लक्षयति—मयूरेत्यादि॥

र० ज० र० ग० र० ज० र० ग०

— ⏑ — ⏑ — ⏑ — ⏑ — — — ⏑ — ⏑ — ⏑ — ⏑ — —

या वनान्तराण्युपैति रन्तुं, या भुजङ्गभोगभुक्तचित्ता।

र० ज० र० ग० र० ज० र० ग०

— ⏑ — ⏑ — ⏑ — ⏑ — — — ⏑ — ⏑ — ⏑ — ⏑ — —

या द्रुतं प्रयाति सन्नतांसा, तां मयूरसारिणीं विजह्यात्॥

अत्र पादान्ते यतिः। (छ)

## मत्ता म्भौ स्गौ॥ १९॥

यस्य पादे मकार-भकार-सकार-गकाराः, तद्वृत्तं मत्ता नाम। तत्रोदाहरणम्।—

म० भ० स० ग० म० भ० स० ग०

— — — — ⏑ ⏑ ⏑ ⏑ — — — — — — ⏑ ⏑ ⏑ ⏑ — —

स्वैरालापैः, श्रुतिपुटपेयै-र्गीतक्रीडा-सुरतविशेषैः।

म० भ० स० ग० म० भ० स० ग०

— — — — ⏑ ⏑ ⏑ ⏑ — — — — — — ⏑ ⏑ ⏑ ⏑ — —

वासागारे, कृतसुरतानां, मत्ता नारी, रमयति चेतः॥

अत्र चतुर्भिः षड्भिश्च यतिरित्याम्नायः। (क)

---

येत्यादि।—या रन्तुं क्रीडितुं वनान्तराणि अरण्यमध्यानि, उपैति गच्छति ; मयूरी अपि रन्तुं वनान्तरं गच्छति, या भुजङ्गभोगभुक्तचित्ता भुजङ्गानां जाराणां भोगे उपभोगे, जारसम्भोगे भुक्तम् आविष्टं चित्तं मनो यस्याः सा, मयूरी अपि भुजङ्गानां सर्पाणां भोगे देहे, आहारे वा भुक्तं चित्तं यस्याः सा तादृशी ; "भुक्त" इत्यत्र "सक्त" इति पाठान्तरं सुगमार्थम् ; या च सन्नतौ अवनतौ अंसौ स्कन्धौ यस्याः तथाविधा सती द्रुतं प्रयाति धावति इत्यर्थः, मयूरी अपि द्रुतगमनकाले ग्रीवामवनम्य गच्छति ; मयूरसारिणीं मयूरं सर्तुम् अनुसर्तुम् अनुकर्तुमित्यर्थः, शीलं यस्याः सा तादृशीं मयूरानुकारिणीं तां स्त्रियम्, अथवा—मयूरं सरति अनुगच्छति या सा तां मयूरीमित्यर्थः, विजह्यात् परित्यजेत्। वृत्तमिदं दशाक्षरप्रस्तारस्य एकसप्तत्युत्तरशततमो (१७१) भेदः इति।

(क) दशाक्षरपादपङ्क्त्यधिकारे मत्तावृत्तं दर्शयति—मत्तेति। स्वैरेत्यादि।

## उपस्थिता त्जौ ज्गौ ॥ २० ॥

यस्य पादे तकार-जकारौ जकार-गकारौ च, तद्वृत्तं उपस्थिता नाम। तत्रोदाहरणम्।—

त० ज० ज० ग० त० ज० ज० ग०

∪ ∪ - - ∪ - - ∪ - ∪ ∪ ∪ - - ∪ - - ∪ - ∪

एषा, जगदेकमनोहरा, कन्या, कनकोज्ज्वलदीधितिः।

त० ज० ज० ग० त० ज० ज० ग०

∪ ∪ - - ∪ - - ∪ - ∪ ∪ ∪ - - ∪ - - ∪ - ∪

लक्ष्मी-रिव दानवसूदनं, पुण्यै-र्नरनाथमुपस्थिता ॥

अत्र द्वाभ्यामष्टाभिश्च यतिरित्याम्नायः। (ख)

त्रिष्टुभि।—

## इन्द्रवज्रा तौ ज्गौ ग् ॥ २१ ॥

यस्य पादे तकारौ जकार-गकारौ गकारश्च, तद्वृत्तमिन्द्रवज्रा नाम। तत्रोदाहरणम्।—

—मत्ता जातहर्षा नारी वासागारे गृहमध्ये श्रुतिपुटपेयैः श्रवणेन्द्रियप्रीतिकरैः, स्वैरोल्लापैः स्वच्छन्दप्रयुक्तकाकूक्तिभिः, तथा गीतक्रीडासुरतविशेषैः गानादिभिश्च कृतसुरतानां यूनां चेतः मनः रमयति सुखयति। दशाक्षरप्रस्तारस्य एकचत्वारिंशदधिकद्विशततमो (२४१) भेदः मत्तेति व्यासः।

(ख) दशाक्षरे पङ्क्तिच्छन्दसि उपस्थितावृत्तं लक्षयति—उपस्थितेति। एषेत्यादि।—जगदेकमनोहरा जगत्सु अद्वितीयमनोज्ञा, कनकोज्ज्वलदीधितिः स्वर्णवदुज्ज्वलकान्तिः, एषा कन्या, पूर्वोक्तविशेषणविशिष्टा लक्ष्मीः रमा दानवसूदनं विष्णुमिव पुण्यैः प्राक्तनशुभकर्मभिः, नरनाथं राजानम् उपस्थिता अधिगता प्राप्ता इति यावत्। वृत्तमिदं दशाक्षरप्रस्तारभेदेषु पञ्चोत्तरद्विशततमम् (२०५) इति ज्ञेयम्। प्रस्तारभेदेन चतुर्विंशत्यधिकसहस्रविधेषु (१०२४) पङ्क्तिच्छन्दःसु कियन्तोऽत्र प्रदर्शिताः, प्राकृतपिङ्गल-वाणीभूषणादौ तु संयुता, चम्पकमाला, सारवती, सुषमा, अमृतगतिरिति पञ्च भेदाः केवलं प्रदर्शिताः।

(ग) अथ एकादशाक्षरपादत्रिष्टुप्छन्दसि इन्द्रवज्रावृत्तं निरूपयति—इन्द्रेति।

त० त० ज० ग० ग०

ᴗ ᴗ - ᴗ ᴗ - - ᴗ - ᴗ ᴗ

यस्यां त्रि-षट्-सप्तममक्षरं स्यात्,

त० त० ज० ग० ग०

ᴗ ᴗ - ᴗ ᴗ - - ᴗ - ᴗ ᴗ

ह्रस्वं सुजङ्घे! नवमञ्च तद्वत्।

त० त० ज० ग० ग०

ᴗ ᴗ - ᴗ ᴗ - - ᴗ - ᴗ ᴗ

गत्या विलज्जीकृतहंसकान्ते!,

त० त० ज० ग० ग०

ᴗ ᴗ - ᴗ ᴗ - - ᴗ - ᴗ ᴗ

तामिन्द्रवज्रां ब्रुवते कवीन्द्राः॥

अपि च।—

त० त० ज० ग० ग०

ᴗ ᴗ - ᴗ ᴗ - - ᴗ - ᴗ ᴗ

ये दुष्टदैत्या इह भूमिलोके,

त० त० ज० ग० ग०

ᴗ ᴗ - ᴗ ᴗ - - ᴗ - ᴗ ᴗ

द्वेषं व्यधुर्गोद्विजदेवसङ्घे।

---

ह्रस्वलघ्वोरेकत्रैव समावेशं दर्शयति. यस्यामिति।—हे सुजङ्घे! हे रम्भोरु!, तथा, गत्या गमनेन विलज्जीकृता विजितीकृता, लज्जापिता इत्यर्थः, हंसकान्ता यया तत्सम्बुद्धौ हे मरालगतिविनिन्दितगमने!, यस्यां त्रि-षट्-सप्तमम् अक्षरं ह्रस्वं लघु तथा नवमञ्च नवममक्षरमपि तद्वत् ह्रस्वं स्यात् भवेत, कवीन्द्राः तामिन्द्रवज्रां ब्रुवते कथयन्ति। एकादशाक्षरपादत्रिष्टुप्छन्दसि प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ता अष्टचत्वारिंशदधिकद्विसहस्रभेदा (२०४८) भवन्ति, तत्र सप्तपञ्चाशदधिकत्रिशततमो (३५७) भेदः इन्द्रवज्राख्यं वृत्तम्। ये इति।—इह भूमिलोके पृथिव्यां ये दुष्टदैत्याः दुर्विनीतदानवाः, गोद्विजदेवसङ्घे गोब्राह्मणदेवतासमूहे, द्वेषं विरागं, व्यधुः

त० त० ज० ग० ग०

⏑ ⏑ – ⏑ ⏑ – – ⏑ – ⏑ ⏑

तानिन्द्रवज्रादपि दारुणाङ्गान्,

त० त० ज० ग० ग०

⏑ ⏑ – ⏑ ⏑ – – ⏑ – ⏑ ⏑

व्याजीवयद्यः सततं नमस्ते ॥

तथा।—

त० त० ज० ग० ग०

⏑ ⏑ – ⏑ ⏑ – – ⏑ – ⏑ ⏑

गोब्राह्मणस्त्रीव्रतिभिर्विरुद्धं,

त० त० ज० ग० ग०

⏑ ⏑ – ⏑ ⏑ – – ⏑ – ⏑ ⏑

मोहात् करोत्यल्पमतिर्नृपो यः।

त० त० ज० ग० ग०

⏑ ⏑ – ⏑ ⏑ – – ⏑ – ⏑ ⏑

तस्येन्द्रवज्राभिहतस्य पातः,

त० त० ज० ग० ग०

⏑ ⏑ – ⏑ ⏑ – – ⏑ – ⏑ ⏑

क्षोणीधरस्येव भवत्यवश्यम् ॥

अत्र पादान्ते यतिः। (ग)

---

कृतवन्तः, इन्द्रवज्रात् सुरपतिवज्रात् अपि दारुणाङ्गान् कठोरशरीरान् तान् यो जनः व्याजीवयत् विगतजीवनमकारयत्; "व्याजीवयत्" इत्यत्र "नाजीवयत्" इति पाठे—यः ना पुरुषः अजीवयत् वधमकारीदित्यर्थः; ते तादृशाय तुभ्यं सततं सर्वदा नमः नमस्कारं कुर्मः। गो-इत्यादि।—यः अल्पमतिः मूढबुद्धिः नृपः राजा मोहात् अज्ञानात् गोब्राह्मणस्त्रीव्रतिभिः सह विरुद्धं विरोधं करोति, इन्द्रवज्राभिहतस्य क्षोणीधरस्य पर्वतस्येव तस्य पातः पतनम् अवश्यं निश्चितं भवति।

## उपेन्द्रवज्रा ज्तौ ज्गौ ग् ॥ २२ ॥

यस्य पादे जकार-तकार-जकारा गकारौ च, तद्वृत्तमुपेन्द्रवज्रा नाम। तत्रोदाहरणम्।—

ज० त० ज० ग० ग०

ᴗ – ᴗ – – ᴗ ᴗ – ᴗ – –

भवन्नखाः कुन्ददलश्रियो ये,

ज० त० ज० ग० ग०

ᴗ – ᴗ – – ᴗ ᴗ – ᴗ – –

नमन्ति लक्ष्मीस्तनलेखनेऽपि।

ज० त० ज० ग० ग०

ᴗ – ᴗ – – ᴗ ᴗ – ᴗ – –

उपेन्द्र! वज्राधिककर्कशत्वं,

ज० त० ज० ग० ग०

ᴗ – ᴗ – – ᴗ ᴗ – ᴗ – –

कथं गतास्ते रिपुदारणायाम्? ॥

अत्र पादान्ते यतिः। (घ)

---

(घ) उपेन्द्रवज्राख्यमेकादशाक्षरमपरं वृत्तं लक्षयति, उपेन्द्रेति।—वृत्तमिदं प्रायशः इन्द्रवज्रालक्षणाक्रान्तं, केवलम् इन्द्रवज्रायाः प्रथमं तगणः पश्चाच्च जगणः इत्युभयोर्भेदः। भवदिति।—उपेन्द्र! हे विष्णो! कुन्ददलश्रियः कुन्दकुसुमवत् शुभ्रकोमलाः ये भवतः नखाः लक्ष्म्याः स्वकान्तायाः स्तनलेखनेऽपि स्तनदारणेऽपि नमन्ति अवनताः भवन्ति, ते नखाः रिपुदारणायां हिरण्यकशिपुवक्षोविदारणे कथं वज्राधिककर्कशत्वं कुलिशादपि काठिन्यं गताः? विचित्रमेतदिति भावः। एकादशाक्षरपादे त्रिष्टुप्छन्दसि जायमानेषु प्रस्तारभेदेषु अष्टपञ्चाशदधिकद्विशततमो (२५८) भेदः उपेन्द्रवज्राख्यं वृत्तमिति। प्राकृतादौ पुनरेकादशाक्षरच्छन्दसः बन्धु-सुमुखी-दमनक-मोटनकानुकूला-मालती-सैनिकानामानः सप्त भेदाः अधिकत्वेन दृश्यन्ते।

## आद्यन्तावुपजातयः ॥ २३ ॥

आद्यन्ताविति अनन्तरोक्ताविन्द्रवज्रोपेन्द्रवज्रयोः पादा-वादौ। तौ यदा विकल्पेन यथेष्टं भवतः, तदोपजातयः प्रस्तार-वशाच्चतुर्दशप्रकारा जायन्ते। तत्रोदाहरणम्।—

(ङ) अथेन्द्रवज्रोपेन्द्रवज्रयोः सङ्करूपामुपजातिमाह, आद्यन्ताविति।— आदिश्च अन्तश्च इति द्वन्द्वसमासः। केषां पुनराद्यन्तत्वमित्याह, अनन्तरोक्ताविति।— अनन्तरोक्तौ अव्यवहितपूर्वोक्तौ। यदा तौ अनन्तरोक्तौ उभयवृत्तयोः पादौ विकल्पेन कश्चिदिन्द्रवज्रायाः कश्चिद्वा उपेन्द्रवज्रायाः इति वैपरीत्येन यथेष्टं स्वेच्छया भवतः तदा उपजातयः इति। उपजातयः इति बहुवचनेनास्य चतुर्दशप्रकारत्वं सूचितम्; तथा च वृद्धैरप्युक्तम्—"एकत्र पादे चरणद्वये वा पादत्रये वाऽन्यतरस्थितिश्चेत्। तयोरिहान्येव तदोहनीयाश्चतुर्दशोक्ता उपजातिभेदाः॥" इति। चतुरक्षरप्रस्तारे यथा लघुगुरुबोधकसरलवक्ररेखास्थापननियमेन सर्वगुर्वादिसर्वलघ्वन्ताः षोडशभेदा जायन्ते, तथा अत्रापि चतुष्पादस्थानीयैकतरवृत्ताद्याक्षरचतुष्कप्रस्तारे उपजातिवृत्त-द्वयाद्याक्षरस्वरूपलघुगुरुस्थापननियमेन प्रस्तारे क्रियमाणेऽपि षोडश भेदा जायन्ते, तत्र प्रथमस्य चतुरिकारस्वरूपत्वात् शुद्धेन्द्रवज्रात्वं, षोडशस्य च चतुरुकारस्वरूपत्वात् शुद्धो-पेन्द्रवज्रात्वं बोध्यम्, एवं षोडशभेदात् शुद्धभेदद्वयापगमे अवशिष्टा मध्यस्थाः चतुर्दश भेदाः, अनयोरेकद्व्यादिपदमिश्रणादुपजातयः भवन्ति। प्रस्तारप्रकारस्तु एवमत्र कल्पनीयः,—सर्वत्रोपजातिप्रस्तारे यस्यादौ वर्णो गुरुः स गुरुस्थानीयः, यस्यादौ लघुः स लघुस्थानीयः, एतन्नियमेनात्र इकारो गुरुस्थानीयः उकारो लघुस्थानीय इति बोद्धव्यम्। ततश्चतुरक्षरप्रस्तारवत् प्रथमपङ्क्तौ गुरुस्थानीयाश्चत्वार इकारा लेख्याः; तत आद्यादिकारादधःपङ्क्तौ लघुस्वरूपमुकारं न्यस्य अवशिष्टेकारत्रयाधः "यथोपरि तथा शेषम्" इति नियमेन त्रय इकाराः लेख्याः, एवं तदधश्च प्रथमे-कारादधः उकारं विलिख्य तृतीयचतुर्थयोरिकारयोरधश्च द्वाविकारौ स्थाप्यौ। "ऊने दद्याद्गुरूनेव" इति नियमेन प्रथमोकारादधः इकारः स्थाप्यः; एवंविधेन प्रस्तार-नियमेन यावत् चतुरुकारस्वरूपः सर्वलघुर्भवेत् तावल्लेख्यः। प्राकृतपिङ्गलादौ अपि चतुर्दशत्वमेवास्या अभिहितम्; तथा च प्राकृतपिङ्गले—"इंद उविंदा एक्क करिज्जसु चउअग्गल दह णाम मुणिज्जसु। समजाइहिं सम अक्खर दिज्जसु पिंगल भण उव-जाइहि किज्जसु॥" (२।११८)। संस्कृतम्—"इन्द्रोपेन्द्रे एकं कुरु चतुरधिकं दश नाम

त० त० ज० ग० ग० त० त० ज० ग० ग०

ᴗ ᴗ – ᴗ ᴗ – – – ᴗ – ᴗ ᴗ ᴗ ᴗ – ᴗ ᴗ – – ᴗ – ᴗ ᴗ

तत्रोपजातिर्विविधा विदग्धैः, संयोज्यते तु व्यवहारकाले ।

जानीहि । समजातौ समान्यक्षराणि देहि पिङ्गलो भणत्युपजातिं कुरु ॥" इति । "चउअक्खरके पत्थर किज्जसु इंदउविंदा गुरुलहु बुज्झसु । मज्झहिं चउदहओ उवजाइ पिंगल जंपइ किज्जि वेआइ ॥" ( २।१२० ) । संस्कृतं यथा—"चतुरक्षरस्य प्रस्तारं कुरु इन्द्रोपेन्द्रयोर्लघुगुरून् जानीहि । मध्ये चतुर्दश भवन्त्युपजातयः पिङ्गलो जल्पति क्रियन्ते व्याकुलाः ॥" इति । चतुर्दशभेदानां नामानि यथा तत्रैव—"किती वाणी माला साला हंसी माआ जाआ बाला । अद्दा भद्दा पेम्मा रामा रिद्धी बुद्धी तासु णामा ॥" ( २।१२२ ) इति । अस्य संस्कृतं—"कीर्तिर्वाणी माला शाला हंसी माया जाया बाला । आर्द्रा भद्रा प्रेमा रामा ऋद्धिर्बुद्धिस्तासां नामानि ॥" इति । सुखबोधाय इकारोकाराभ्यामुपजातिप्रकारो दर्श्यते । यथा—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | इ | इ | इ | इ | शुद्धा | | इन्द्रवज्रा |
| २ | उ | इ | इ | इ | १ | उपजातिः | कीर्तिः |
| ३ | इ | उ | इ | इ | २ | „ | वाणी |
| ४ | उ | उ | इ | इ | ३ | „ | माला |
| ५ | इ | इ | उ | इ | ४ | „ | शाला |
| ६ | उ | इ | उ | इ | ५ | „ | हंसी |
| ७ | इ | उ | उ | इ | ६ | „ | माया |
| ८ | उ | उ | उ | इ | ७ | „ | जाया |
| ९ | इ | इ | इ | उ | ८ | „ | बाला |
| १० | उ | इ | इ | उ | ९ | „ | आर्द्रा |
| ११ | इ | उ | इ | उ | १० | „ | भद्रा |
| १२ | उ | उ | इ | उ | ११ | „ | प्रेमा |
| १३ | इ | इ | उ | उ | १२ | „ | रामा |
| १४ | उ | इ | उ | उ | १३ | „ | ऋद्धिः |
| १५ | इ | उ | उ | उ | १४ | „ | बुद्धिः |
| १६ | उ | उ | उ | उ | शुद्धा | | उपेन्द्रवज्रा |

कोऽप्यस्मिन् चाद्यन्तपञ्चदशभक्तितानां केवलेकारोकाररूपाणाम् इन्द्रवज्रोपेन्द्रवज्रा-

ज० त० ज० ग०ग० ज० त० ज० ग०ग०

– ⏑ – ⏑ ⏑ – – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑ – ⏑ – ⏑ ⏑

अतः प्रयत्नः प्रथमं विधेयो, नृपेण पुंस्त्वपरीक्षणाय ॥

एवमन्यान्युपजात्युदाहरणानि कुमारसम्भवादिकाव्येषु

नामत्वं, तन्मध्यस्थानाम् एकद्वयादिपादमिश्रीभावादुपजातिनामत्वम् । अत्र प्रस्तारे क्रियमाणे इकारस्य इन्द्रवज्रापादत्वम् उकारस्य च उपेन्द्रवज्रापादत्वमिति बोध्यम् । एवं वंशस्थेन्द्रवंशयोः तादृशेतरयोश्चोपजातिप्रकारेषु चतुर्दशभेदा जायन्ते । इह तु इकार-उकाराभ्यां पूर्ववत् प्रस्तारः कर्त्तव्यः । इकारः गुरुस्थानीयः उकारश्च लघुस्थानीयः कल्पनीयः । अत इति ।—विदग्धैः रत्नगुणागुणचतुरैः व्यवहारकाले भूषणनिर्माण-काले अत्र रत्ने विविधा बहुप्रकारा उपजातिः हीनजातिः, हीनजातीयरत्न इत्यर्थः, "उप हीनेऽधिके हृष्टः" इति शाश्वतः ; संयोज्यते सम्मिश्र्यते, मिलिता क्रियते इत्यर्थः, अतः अस्मात् नृपेण राज्ञा पुंस्त्वपरीक्षणाय पुंजातीयरत्ननिरूपणाय प्रथमम् आदौ प्रयत्नः चेष्टा विधेयः कर्त्तव्यः । अत्र प्रथम-द्वितीयपादद्वयम् इन्द्रवज्रालक्षणात्मकं, तृतीय-चतुर्थपादद्वयञ्च उपेन्द्रवज्रालक्षणात्मकमतः उपजातित्वं सिद्धमिति । इह केचिदाहुः,—"समाक्षरजातिमिश्रणमेवोपजातिः" इति । वस्तुतस्तु यथा समाक्षरपाद-च्छन्दोद्वयसंयोगे उपजातिर्भवति तथा विषमाक्षरपादच्छन्दसां द्वयोः त्रयाणां चतुर्णां वा संयोगेऽप्युपजातिर्भवति इति । अन्ये तु "द्वयोरेव जात्योर्मिश्रणमेव उपजातिः" इति मन्यन्ते । परन्तु जातित्रय-जातिचतुष्टयघटितोपजातेः उदाहरणानि बहुशो दृश्यन्ते, अतस्तादृशा अपि साधारणोपजातिसंज्ञाभाज एव ज्ञातव्याः, किन्तु जाति-त्रय-जातिचतुष्टयघटितोपजातिषु पूर्वोक्तप्रस्तारप्रसक्तिः न युज्यते, जातिद्वयसंयोगात् पूर्वोक्तरीत्या क्रियमाणानामेव प्रस्ताराणां भेदाश्चतुर्दश भवन्ति । तत्र प्रस्तारार्थम् एकस्य वृत्तस्य नामाद्याक्षरं गुरुत्वेन अपरस्य च लघुत्वेन परिकल्पयेत् । गुरुलघ्वोश्च द्विव्यक्तिकत्वात् द्विव्यक्तिकस्थाने एव तत्प्रसक्तिः । तिसृणां चतसृणां वा जातीनां संयोगे तु पादसङ्ख्यास्थानीयानामेकद्वित्रिचतुरङ्कनिर्दिष्टानामिन्द्रवज्रोपेन्द्रवज्रा-वंश-स्थाद्याक्षराणां पादविपर्य्ययेण विन्यासानियमात् प्रस्तारे विधीयमाने प्रथमं चतुर्विधा भेदा जायन्ते । पादाद्यक्षरमव्यत्ययसमये नामविशेषयोर्व्यत्ययविन्यासानुसारेण पुनस्तेषां बहवो भेदा ज्ञेयाः । तथोदाहरणं यथा रामायणे—[1]"नमस्तु वाचस्पतये सवज्रिणे स्वयम्भुवे चापि हुताशनाय । अनेन चोक्तं यदिदं ममाग्रतो वनौकसा तच्च तथाऽस्तु

द्रष्टव्यानि। समवृत्तप्रस्तावे प्रसङ्गादुपजातीनामुपन्यासो लाघवार्थः। केचिदिदं सूत्रं न्यायोपलक्षणपरं व्याचक्षते। तेन, वंशस्थेन्द्रवंशापादयोरपि सङ्करादुपजातयो भवन्ति। तथा शालिनीवातोर्मीपादयोः; अन्येषामपि लक्ष्मभेदानां प्रयोगानुसारेण उपजातयो द्रष्टव्याः। (ङ)

मान्यथा॥" इति। वंशस्थोपेन्द्रवज्रामिश्रितायाः यथा उपजातेः स्वायम्भुवे इत्यादि द्वितीयः पादः उपेन्द्रवज्रायाः अन्ये च त्रयः वंशस्थायाः। तथा भागवतीयदशमस्कन्धे —"तावत् प्रविष्टास्त्वसुरोदरान्तरं" इत्यादिश्लोकः इन्द्रवंशोपेन्द्रवज्रावंशस्थाघटितोपजातेरुदाहरणम्। इन्द्रवज्रेन्द्रवंशोपेन्द्रवज्रावंशस्थाघटिताया उपजातेस्तु प्रबोधचन्द्रोदये —"विद्याप्रबोधोदयजन्मभूमिः" इत्यादौ द्रष्टव्यम्। अथ समवृत्तप्रस्तावे कथमर्द्धसमविषमान्तर्गतोपजातीनामुपादानमित्यत आह, समवृत्तेति।—प्रसङ्गात एतासामर्द्धसमविषमत्वेऽपि समवृत्तघटिततया प्रसङ्गतः लाघवार्थं प्रथमपादे इन्द्रवज्रावृत्तम् अपरञ्च उपेन्द्रवज्रावृत्तम् इत्यादिच्छन्दसां नामोल्लेखे गौरवं स्यादतस्तल्लाघवार्थम् उपजातीनामिह उपन्यासः, उपजातिमनुक्त्वा वृत्तद्वयनामोल्लेखे गौरवं स्यादिति भावः। एवंविधा अन्या अप्युपजातयो भवन्तीति वक्तुमाह, केचिदिति।—न्यायोपलक्षणपरम् एकधर्मत्वेन एकस्वरूपत्वं न्यायः, तस्य उपलक्षणपरम्; एकधर्मत्वेन इत्यत्र धर्मशब्दार्थस्तु—अर्द्धसमविषमवृत्तत्वेऽपि समवृत्तवत् प्रतीयमानत्वमिति; यद्वा—न्यायवत् न्यायसूत्रवत् "सूचीकटाह" "गड्डलिकाप्रवाह" इत्यादिसूत्रवदित्यर्थः, उपलक्षणपरं यथा दृष्टान्तप्रदर्शनार्थं न्यायसूत्राणां सूचीकटाहादिनामकरणं तथा अत्रापि इन्द्रवज्रोपेन्द्रवज्रयोः पादाभ्यामुपजातिनामकथनं वंशस्थादिवृत्तानामुपलक्षणार्थम्, उभयवृत्तपादसङ्करादुपजातिरिति निष्कर्षः। अनेनैव न्यायेन अनन्याधिकारोक्ता अपि उपजातयो भवन्तीत्याह—तेनेति। वंशस्थेन्द्रवंशयोरुपजातिर्यथा—"इत्थं रथाश्वेभनिषादिनां प्रगे" इत्यादि शिशुपालवधे। शालिनीन्द्रवज्रापादयोर्यथा—"कार्पण्यदोषोपहतस्वभावः" इत्यादि गीतायाम्। शालिनीवातोर्मीपादयोर्यथा—"सा स्त्री श्यामा स्निग्धमुग्धायताक्षी पीनश्रोणी दक्षिणावर्त्तनाभिः। मध्ये क्षामा घनपीनस्तनी या श्लाघ्या भर्त्तुः शालिनी कामिनी स्यात्॥" इत्यादि। समवृत्तवत् प्रतीयमानत्वमपि तथैव, यत्र भेदाल्पता इति वक्तुमाह, अन्येषामिति।—अन्येषां प्रदर्शितेन्द्रवज्रादिभ्य इतरेषाम्। अत्रेदं बोद्धव्यं—समवृत्तवत् प्रतीयमानत्वाभावे अवकीर्णानाम् अर्द्ध-

## दोधकं भौ भगौ ग् ॥ २४ ॥

यस्य पादे भकारास्त्रयो गकारौ च भवतः, तद्वृत्तं दोधकं नाम। तत्रोदाहरणम्।—

भ० भ० भ० ग०ग०
∪ – – ∪ – – ∪ – – ∪ ∪
दोधकमर्थविरोधकमुग्रं,

भ० भ० भ० ग०ग०
∪ – – ∪ – – ∪ – – ∪ ∪
स्त्रीचपलं युधि कातरचित्तम्।

भ० भ० भ० ग०ग०
∪ – – ∪ – – ∪ – – ∪ ∪
स्वार्थपरं मतिहीनममात्यं,

भ० भ० भ० ग० ग०
∪ – – ∪ – – ∪ – – ∪ ∪
मुञ्चति यो नृपतिः स सुखी स्यात्॥

अत्र पादान्ते यतिः। दोग्धीति दोधकः, केनाप्युपायेन राजानं दोग्धि।( च )

समवृत्त-विषमवृत्तानां शास्त्रे अनुक्तनाम्नां गाथात्वमेव, न तु उपजातित्वमिति। उपजातयस्तु त्रिष्टुब्जगत्यधिकारे एव दृश्यन्ते नान्यत्र इति।

( च ) त्रिष्टुभि दोधकलक्षणमाह,—दोधकं भौ-इति। दोधकमित्यादि।—यो नृपतिः राजा दोधकं सदैव दोहनकारकं, विविधोपायेन सर्वस्वापहारकमित्यर्थः, अर्थविरोधकं स्वप्रयोजनविरोधकरम्, उग्रं कर्कशस्वभावं, स्त्रीषु चपलं लोलुपं, युधि युद्धे कातरचित्तं भीतिविह्वलमानसं, स्वार्थपरं स्वार्थप्रधानं, मतिहीनं बुद्धिहीनम् अमात्यं मुञ्चति परित्यजति स सुखी स्यात्। एकादशाक्षरपादे त्रिष्टुपछन्दसि प्रस्तारे क्रियमाणे एकोनचत्वारिंशदधिकचतुःशततमो ( ४३९ ) भेदः दोधकनाम्ना प्रसिद्धः। दोधक इति "दुह दोहने" इत्यस्य कर्त्तरि रूपम्। तदेव समर्थयते—दोग्धि इत्यादि।

**शालिनी म्तौ त्गौ ग् समुद्र-ऋषयः ॥ २५ ॥**

यस्य पादे मकार-तकारौ तकार-गकारौ गकारश्च भवति, तद्वृत्तं शालिनी नाम । चतुर्भिः सप्तभिश्च यतिः । तत्रोदाहरणम् ।—

म० त० त० ग० ग०

शस्तश्यामा, स्निग्धमुग्धायताक्षी,

म० त० त० ग० ग०

पीनश्रोणि-र्दक्षिणावर्त्तनाभिः ।

म० त० त० ग० ग०

मध्ये क्षामा, पीवरोरुस्तनी या,

म० त० त० ग० ग०

श्लाघ्या भर्त्तुः, शालिनी कामिनी सा ॥ (क)

---

कस्य दीधक इत्यपेक्षायामाह, राजानमिति ।—येन केनापि यथा राजानं स्ववशीनं कर्त्तुं शक्नोति तथा चेष्टते इत्यर्थः ।

(क) त्रिष्टुबधिकारे शालिनीवृत्तमाह, शालिनीति ।—समुद्र-ऋषयः, यतिस्थानानीति शेषः, समुद्रेषु चतुर्षु, चतुर्थाक्षरेषु ततः ऋषिषु सप्तसु चतुरनन्तरं सप्तसु, एकादशाक्षरेषु यतिरित्यर्थः । शस्तेत्यादि ।—या कामिनी शस्तश्यामा, शस्त्रवत् लौहवत्, "शस्त्रमायुधलोहयोः" इत्यमरः, श्यामवर्णा, स्निग्धे स्नेहव्यञ्जिके, कोमले इत्यर्थः, मुग्धे सुन्दरे आयते दीर्घे च अक्षिणी चक्षुषी यस्याः सा, तथा पीना गुर्वी, मांसला इत्यर्थः, श्रोणिः यस्याः सा, दक्षिणावर्त्तः वामेतरभागनियुक्तः, नाभिर्यस्याः सा, मध्ये कटिदेशे उदरे वा क्षामा क्षीणा, मुष्टिग्राह्यमध्या इत्यर्थः, तथा पीवरौ स्थूलौ ऊरू, स्तनौ च यस्याः सा तादृशी, शालिनी सलज्जा, सा भर्त्तुः श्लाघ्या आदरणीया भवेत् । एकादशाक्षरप्रस्तारस्य एकोननवत्यधिकद्विशततमो ( २८९ ) भेदः शालिनीवृत्तमिदम् ।

## वातोर्मी मभौ तगौ ग् ॥ २६ ॥

यस्य पादे मकार-भकार-तकारा गकारौ च, तद्वृत्तं वातोर्मी नाम। चतुर्भिः सप्तभिश्च यतिः। तत्रोदाहरणम्।—

म० भ० त० ग० ग०

ᴗ ᴗ ᴗ ᴗ – – ᴗ ᴗ – ᴗ ᴗ

यात्युत्सेकं, सपदि प्राप्य किञ्चित्,

म० भ० त० ग० ग०

ᴗ ᴗ ᴗ ᴗ – – ᴗ ᴗ – ᴗ ᴗ

स्याद्वा यस्या-श्चपला चित्तवृत्तिः।

म० भ० त० ग० ग०

ᴗ ᴗ ᴗ ᴗ – – ᴗ ᴗ – ᴗ ᴗ

या दीर्घाङ्गी, स्फुटशब्दाट्टहासा,

म० भ० त० ग० ग०

ᴗ ᴗ ᴗ ᴗ – – ᴗ ᴗ – ᴗ ᴗ

त्याज्या सा स्त्री, द्रुतवातोर्मिमाला ॥

वातोर्मीति स्त्रियां "ऋदिकारादक्तिनः" (ग०) इति ङीप्। (ज)

(ज) एकादशाक्षरेषु वातोर्मीलक्षणमाह, वातोर्मीत्यादि।—क्वचित "ग्" इत्यनन्तरं "चतुःस्वराः" इत्यधिकः पाठः। यातीत्यादि।—या योषित किञ्चित् किमपि द्रव्यं प्राप्य सपदि हठात् उत्सेकं गर्वं याति अधिगच्छति, वा अथवा यस्याः चित्तवृत्तिः चपला चञ्चला स्यात्, तथा या दीर्घाङ्गी उन्नतदेहा, स्फुटः अप्रः, कलभाषाकार इत्यर्थः, शब्दो यस्य तादृशः अट्टहासः उच्चैर्हास्यं यस्याः तादृशी, तथा द्रुतः निर्गतः वातः अपानवायुः यस्याः सा तादृशी; यद्वा—द्रुतः पलायितः वातः जारः यस्याः सा तादृशी, "वातः जारे" इति वाचस्पत्यमहाकोषः, तथा ऊर्मिभिः पीडाभिः, "ऊर्मिः पीडाजवोत्कण्ठाभङ्गप्रकाशवीचिषु" इति हैमः, मालं मलनं दुष्टत्वं यस्याः तादृशी, बहुविधरोगदुष्टा इत्यर्थः, स्त्री त्याज्या, एतादृशी

## भ्रमरविलसिता म्भौ न्लौ ग् ॥ २७ ॥

यस्य पादे मकार-भकार-नकार-लकार-गकाराः, तद्वृत्तं भ्रमरविलसिता नाम। सैव यतिः। तत्रोदाहरणम्।—

म० भ० न० ल० ग०

किं ते वक्त्रं, चलदलकचितं,

म० भ० न० ल० ग०

किं वा पद्मं, भ्रमरविलसितम्।

म० भ० न० ल० ग०

इत्येवं मे, जनयति मनसि,

म० भ० न० ल० ग०

भ्रान्तिं कान्ते!, परिसरसरसि ॥ (भ)

अशुभलक्षणवती दृष्टा च रमणी सर्वथा गृहात् बहिष्करणीया इत्यर्थः। एकादशाक्षरपादच्छन्दसां प्रस्तारे कृते पञ्चाधिकद्विशततमभेदवत् (२०५) इदं वृत्तमिति बोध्यम्।

(भ) भ्रमरविलसितालक्षणमाह, भ्रमरेति।—सैव यतिः पूर्वोक्ता एव यतिः, चतुर्भिः सप्तभिश्च यतिरित्यर्थः। किमित्यादि।—हे कान्ते! सुन्दरि! परिसरसरसि परिसरे प्रान्तभूमौ, नगरादीनां समीपे इत्यर्थः, यत् सरः सरोवरं तस्मिन् चञ्चलता वायुवेगेन इतस्ततः सञ्चरमाणेन चलकेन चूर्णकुन्तलेन चितं व्याप्तं ते वक्त्रं तव मुखं किम्? वा अथवा भ्रमरविलसितं षट्पदविलासयुक्तं पद्मं किम्? मे मनसि इत्येवं भ्रान्तिं संशयं जनयति। अत्र चतुर्थपादे 'सि' इति लघ्वक्षरस्य पादान्तत्वाद्वैकल्पिकगुरुत्वम्। इदमेकादशाक्षरप्रस्तारेषु नवाधिकसहस्रतमो (१००९) भेदः इत्यवधेयम्।

## रथोद्धता र्नौ र्लौ ग् ॥ २८ ॥

यस्य पादे रेफ-नकारौ रेफ-लकारौ गकारश्च, तद्वृत्तं रथोद्धता नाम । तत्रोदाहरणम् ।—

र० न० र० ल० ग०

ᴗ –ᴗ – – –ᴗ –ᴗ –ᴗ

या करोति विविधैर्विटैः समं,

र० न० र० ल० ग०

ᴗ– ᴗ – – –ᴗ –ᴗ – ᴗ

सङ्गतिं परगृहे रता च या ।

र० न० र० ल० ग०

ᴗ –ᴗ – – –ᴗ –ᴗ –ᴗ

म्लानयत्युभयतोऽपि बान्धवान्,

र० न० र० ल० ग०

ᴗ –ᴗ – – – ᴗ –ᴗ –ᴗ

मार्गधूलिरिव सा रथोद्धता ॥

अत्र पादान्ते यतिः । (अ)

## स्वागता र्नौ भ्गौ ग् ॥ २९ ॥

यस्य पादे रेफ-नकार-भकारा गकारौ च, तद्वृत्तं स्वागता नाम । तत्रोदाहरणम् ।—

(अ) रथोद्धतामाह,—रथोद्धतेति । येत्यादि ।—या नारी विविधैः बहुविधैः, अनेकैरित्यर्थः, विटैः जारैः समं सह सङ्गतिं संसर्गं करोति, या च परगृहे रता परपुरुषालये सततमवस्थानशीला, सा रथोद्धता रथचक्रपीडनेनोत्थापिता मार्गधूलिरिव वर्त्मरजोवत् उभयतः स्वामिकुले पितृकुले उभयकुलेऽपि स्थितानित्यर्थः, बान्धवान् स्वजनान्, पक्षे—सम्मुखस्थान् पश्चादवस्थितांश्च लोकानित्यर्थः, म्लानयति मलिनयति । एकादशाक्षरप्रस्तारस्य नवनवत्यधिकषट्शततमभेदतया (६९९) ख्यातमिदं वृत्तम् ।

र० न० भ० ग० ग०

ᵕ - ᵕ - - - ᵕ - - ᵕ ᵕ

आहवं प्रविशतो यदि राहुः,

र० न० भ० ग० ग०

ᵕ - ᵕ - - - ᵕ - - ᵕ ᵕ

पृष्ठतश्चरति वायुसमेतः।

र० न० भ० ग० ग०

ᵕ - ᵕ - - - ᵕ - - ᵕ ᵕ

प्राणहानिरपि यस्य शरीरे,

र० न० भ० ग० ग०

ᵕ - ᵕ - - - ᵕ - - ᵕ ᵕ

स्वागता भवति तस्य जयश्रीः॥

अत्र पादान्ते यतिः। (९)

## वृन्ता नौ स्गौ ग्॥ ३०॥

यस्य पादे नकारौ सकार-गकारौ गकारश्च, तद्वृत्तं वृन्ता नाम। अत्र मण्डूकप्लुतिन्यायेन समुद्र-ऋषय इत्यनुवर्त्तते; तेन चतुर्भिः सप्तभिश्च यतिः। तत्रोदाहरणम्।—

(९) स्वागतावृत्तमाह,—स्वागतेति। आहवमित्यादि।—आहवं युद्धं प्रविशतः जनस्य पृष्ठतः पश्चात् यदि वायुसमेतः वायुना सह राहुः राहुग्रहः चरति सञ्चारितो भवति, राहुग्रहो यदि पृष्ठदेशे वर्त्तते तथा वायुरपि अनुकूलो भवति, किञ्च यस्य च जनस्य शरीरे देहे प्राणहानिरपि अक्षतिरिव, अस्तीति शेषः, तस्य जयश्रीः विजयलक्ष्मीः स्वागता सुखेनागता, अनायासलब्धा इत्यर्थः, भवति। एकादशाक्षरपादे छन्दसि प्रस्तारे क्रियमाणे त्रिचत्वारिंशदधिकचतुःशततमभेदः (४४३) स्वागतानाम्ना ख्यातः।

(१०) वृन्ताच्छन्दोलक्षणमाह,—वृन्तेति। अत्रेति।—मण्डूकप्लुतिन्यायेन भेद-

न० न० स० ग० ग०

द्विजगुरु-परिभवकारी यो,

न० न० स० ग० ग०

नरपति-रतिधनलुब्धात्मा।

न० न० स० ग० ग०

ध्रुवमिह, निपतति पापोऽसौ,

न० न० स० ग० ग०

फलमिव, पवनहतं वृन्तात् ॥ (ठ)

## श्येनी रजौ रलौ ग् ॥ ३१ ॥

यस्य पादे रेफ-जकारौ रेफ-लकारौ गकारश्च, तद्वृत्तं श्येनी नाम। तत्रोदाहरणम्।—

र० ज० र० ल० ग०

क्रूरदृष्टिरायताग्रनासिका,

गतिवत् लङ्घनक्रमेण मालिनीत्यादि सूत्रात् सूत्रचतुष्टयमुल्लङ्घ्य प्रवर्त्तितेन इत्यर्थः। द्विजेति।—यः नरपतिः द्विजाः ब्राह्मणाः गुरवः पूज्याश्च तेषां परिभवकारी अवमानानाकारकः, तथा अति अतिशयं धनेषु अर्थेषु लुब्धः आत्मा अन्तःकरणं यस्य तादृशः, असौ पापः इह अस्मिन्नेव लोके वृन्तात् प्रसवबन्धनात् पवनहतं वायुताडितं फलमिव ध्रुवं निश्चितं निपतति अधोगच्छतीत्यर्थः। एकादशाक्षरप्रस्तारस्य षट्पञ्चाशदधिकद्विशततमो (२५६) भेद एतन्नाम्ना प्रसिद्ध इत्यवधेयम्।

(ड) श्येनीलक्षणमाह—श्येनीति। क्रूरेत्यादि।—क्रूरा निर्दया परद्रोह-

र० ज० र० ज० ग०

⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑

चञ्चला कठोरतीक्ष्णनादिनी।

र० ज० र० ज० ग०

⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑

युद्धकाङ्क्षिणी सदाऽऽमिषप्रिया,

र० ज० र० ज० ग०

⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑

श्येनिकेव सा विगर्हिताऽङ्गना॥

अत्र पादान्ते यतिः। (ड)

## विलासिनी ज्रौ ज्गौ ग्॥ ३२॥

यस्य पादे जकार-रेफौ जकार-गकारौ गकारश्च भवति, तद्वृत्तं विलासिनी नाम। तत्रोदाहरणम्।—

ज० र० ज० ग० ग०

– ⏑ – ⏑ – ⏑ – ⏑ – ⏑ ⏑

विलासिनी विलोकितः स कामी,

ज० र० ज० ग० ग०

– ⏑ – ⏑ – ⏑ – ⏑ – ⏑ ⏑

दधाति कामसत्त्वचेष्टितं या।

सूचिका इत्यर्थः, दृष्टिः दर्शनं यस्याः सा, आयता दीर्घा अग्रनासिका नासिकाग्रं यस्याः सा, चञ्चला चापल्यवती, कठोरं कर्कशं तीक्ष्णं तीव्रञ्च नदितं शीलमस्याः इति तादृशी कर्कशभाषिणी, युद्धकाङ्क्षिणी कलहप्रिया, सदा नित्यम् आमिषं मांसं प्रियं यस्याः तादृशी, सा एवंविधा अङ्गना रमणी श्येनिका इव मांसाशिपक्षिणीविशेषवत् विगर्हिता निन्दिता, भवति इति शेषः। एकादशाक्षरप[ाद]प्रस्तारभेदानां त्र्यशीत्यधिकषट्शततमो (६८३) भेदः श्येनीनाम्ना ख्यातः।

(ड) विलासिनीलक्षणमाह, विलासिनीति।—अत्रापि पादान्ते एव यतिर्बोध्या, अनुक्तस्थले पादान्ते एव तस्याः विहितत्वात्। विलासिनीत्यादि।—या

ज० र० ज० ग० ग०

– ᴗ – ᴗ – ᴗ – ᴗ – ᴗ ᴗ

करोति चञ्चलाक्षिदृष्टिपातैः,

ज० र० ज० ग० ग०

– ᴗ – ᴗ – ᴗ – ᴗ – ᴗ ᴗ

यतात्मनश्च योगिनोऽपि मत्तान् ॥ (ढ)

## जगती ॥ ३३ ॥

अधिकारोऽयमाध्यायपरिसमाप्तेः । यदित ऊर्ध्वमनुक्रमिष्यामः, तज्जगतीत्येवं वेदितव्यम् । वक्ष्यति च "तोटकं सः" ( ६।२७ पि० ) इति ; तज्जगतीपादस्य लक्षणं भवति । (ण)

## वंशस्था ज्तौ ज्रौ ॥ ३४ ॥

यस्य पादे जकार-तकारौ जकार-रेफौ च भवतः, तद्वृत्तं वंशस्थानाम । तत्रोदाहरणम् ।—

---

विलासिनी विलासवती रमणी चञ्चलाक्षिदृष्टिपातैः चञ्चलयोः अक्ष्णोः दृष्टिपातैः अवलोकनैः कटाक्षदर्शनैरित्यर्थः, यतात्मनः संयतचित्तवृत्तीन् योगिनः योगाभ्यासरतानपि च मत्तान् मुग्धान् करोति, तया विलासिन्या विलोकितः दृष्टः सः कामी कामतन्त्वचेष्टितं कामतन्त्वस्य कामासक्तचित्तस्य चेष्टितम् अनुरूपचेष्टां दधाति धारयति । एकादशाक्षरपादप्रस्तारस्य द्विचत्वारिंशदुत्तरत्रिशततमो ( ३४२ ) भेदः विलासिनीनाम्ना ख्यातः ।

( ण ) एकादशाक्षरपादत्रिष्टुप्छन्दः परिसमाप्य सम्प्रति द्वादशाक्षरपादां जगतीमाह—जगतीति । अधिकारसूत्रमिदम् । एतदध्यायपरिसमाप्तिं यावत् जगत्यधिकार इति दर्शयितुमाह—अधिकार इति । तत्र प्रमाणं दर्शयति, वक्ष्यतीति ।—"तोटकं सः" ( ६।२७ पि० ) इति सूत्रे "यावद्भिः सकारैः जगतीपादः पूर्य्यते तावन्त एव यस्य पादे सकारा भवन्ति, तद्वृत्तं तोटकं नाम" इति व्याख्यानात् जगत्यधिकारं विना च तस्यासङ्गतेरित्यभिप्रायः ।

( त ) द्वादशाक्षरपादे जगतीच्छन्दसि वंशस्थाख्यं वृत्तं निरूपयति—वंशस्थेति ।

ज० त० ज० र०

- ᴗ - ᴗ ᴗ - - ᴗ - ᴗ - ᴗ

विशुद्धवंशस्थमुदारचेष्टितं,

ज० त० ज० र०

- ᴗ - ᴗ ᴗ - - ᴗ - ᴗ - ᴗ

गुणप्रियं मित्रमुपात्तसज्जनम् ।

ज० त० ज० र०

- ᴗ - ᴗ ᴗ - - ᴗ - ᴗ - ᴗ

विपत्तिमग्नस्य करावलम्बनं,

ज० त० ज० र०

- ᴗ - ᴗ ᴗ - - ᴗ - ᴗ - ᴗ

करोति यः प्राणपरिक्रयेण सः ॥

अत्र पादान्ते यतिः । (त)

## इन्द्रवंशा तौ ज्रौ ॥ ३५ ॥

यस्य पादे तकारौ जकार-रेफौ च, तद्वृत्तमिन्द्रवंशा नाम । तत्रोदाहरणम् ।—

---

विशुद्धेति ।—यः विशुद्धवंशस्थं सद्वंशजातम्, उदारं महत् चेष्टितं यत्नः यस्य तं, गुणः प्रियो यस्य तं गुणानां प्रियस्तमिति वा ; "गणप्रियम्" इति पाठे—गणानां समूहानां बहुजनानां प्रियं, तथा उपात्तः गृहीतः सज्जनः साधुजनो येन तं निजचरित्राव-लम्बितसाधुसमूहमित्यर्थः, एवंविधं जनं प्राणपरिक्रयेण आत्मविनिमयेन मित्रं बन्धुं करोति स विपत्तिमग्नस्य आपन्नस्य जनस्य ; "विपत्तिमग्नाय" इति पाठान्तरम् ; करावलम्बनं हस्तावलम्बनम्, आश्रय इत्यर्थः, भवतीति शेषः । द्वादशाक्षरपादे जगतीच्छन्दसि प्रस्तारे क्रियमाणे षण्णवत्यधिकचतुःसहस्रभेदाः ( ४०९६ ) भवन्ति, तेषु द्व्यशीत्यधिकत्रयोदशशततमो ( १३८२ ) भेदः वंशस्थाख्यमिति ।

( त ) जगत्यधिकारे द्वादशाक्षरपादम् इन्द्रवंशाख्यमाह—इन्द्रवंशेति ।

त० त० ज० र०

∪ ∪ – ∪ ∪ – – ∪ – ∪ – ∪

कुर्वीत यो देवगुरुद्विजन्मना-

त० त० ज० र०

∪ ∪ – ∪ ∪ – – ∪ – ∪ – ∪

मुर्वीपतिः पालनमर्थलिप्सया ।

त० त० ज० र०

∪ ∪ – ∪ ∪ – – ∪ – ∪ – ∪

तस्येन्द्रवंशेऽपि गृहीतजन्मनः,

त० त० ज० र०

∪ ∪ – ∪ ∪ – – ∪ – ∪ – ∪

सञ्जायते श्रीः प्रतिकूलवर्त्तिनी ॥

अत्र पादान्ते यतिः । (थ)

## द्रुतविलम्बितं नभौ भरौ ॥ ३६ ॥

यस्य पादे नकार-भकारौ भकार-रेफौ च भवतः, तद्वृत्तं द्रुतविलम्बितं नाम । तत्रोदाहरणम् ।—

न० भ० भ० र०

– – – ∪ – – ∪ – – ∪ – ∪

द्रुतगतिः पुरुषो धनभाजनं,

कुर्वीतेति ।—यः उर्वीपतिः महीपतिः, अर्थलिप्सया धनवाञ्छया देवगुरुद्विजन्मनां देवतागुरुब्राह्मणानां पालनं रक्षणं कुर्वीत विदधीत ; इन्द्रवंशे सुरराजकुले गृहीतजन्मनोऽपि जातस्यापि महद्वंशसम्भूतस्यापीत्यर्थः, का कथा अन्यस्येति भावः, तस्य श्रीः लक्ष्मीः प्रतिकूलवर्त्तिनी विरूपा इत्यर्थः, सञ्जायते भवति । द्वादशाक्षरपादे जगतीच्छन्दसि प्रस्तारे क्रियमाणे एकाशीत्यधिकत्रयोदशशततमो ( १३८१ ) भेद इन्द्रवंशेति नाम्ना ख्यातः ।

( थ ) जगतीप्रकरणे द्रुतविलम्बितलक्षणमाह—द्रुतविलम्बितमिति । द्रुतेत्यादि ।—द्रुता शीघ्रा गतिर्यस्य सः शीघ्रगामी पुरुषः धनभाजनं धनानाम् अर्थानां

न०　भ०　भ०　र०

- - - ∪ - - ∪ - - ∪ - ∪

भवति मन्दगतिश्च सुखोचितः ।

न०　भ०　भ०　र०

- - - ∪ - - ∪ - - ∪ - ∪

द्रुतविलम्बितखेलगतिर्नृपः,

न०　भ०　भ०　र०

- - - ∪ - - ∪ - - ∪ - ∪

सकलराज्यसुखं प्रियमश्नुते ॥

अत्र पादान्ते यतिः । ( द )

**तोटकं सः ॥ ३७ ॥**

जगतीत्यधिकारे यावद्भिः सकारैर्जगतीपादः पूर्य्यते तावन्त एव यस्य पादे सकारा भवन्ति, तद्वृत्तं तोटकं नाम । तत्रोदाहरणम् ।—

भाजनं पात्रं, तथा मन्दगतिः लघुगामी पुरुषश्च सुखोचितः सुखेषु अभ्यस्तः भवति, द्रुतविलम्बितखेलगतिः द्रुता कदाचित् क्षिप्रा विलम्बिता कदाचित् मन्दा च अत एव खेला एतदुभयात्मकत्वात् खेलनात्मिका, क्रीडास्वरूपा इत्यर्थः, गतिर्यस्य तादृशः नृपः राजा प्रियं प्रीतिकरं सकलराज्यसुखं सर्वविधराज्यभोगानन्दम् अश्नुते भुङ्क्ते । द्वादशाक्षरपादप्रस्तारस्य चतुःषष्ट्यधिकचतुर्दशशततमो ( १४६४ ) भेदः द्रुतविलम्बित इति नाम्ना ख्यातः । प्राकृतपिङ्गल-वाणीभूषणादौ सुन्दरीनाम्ना अभिहितमिदम् ।

( ध ) जगत्यां द्वादशाक्षरपादं तोटकमाह, तोटकमिति ।—सः चत्वारः सकारा इत्यर्थः । एतदेवाह वृत्तिकारः, जगतीत्यादि ।—द्वादशाक्षरपादं जगतीच्छन्दसि यावद्भिः यावत्सङ्ख्यकैः स-कारैः स-गणैः जगतीपादः पूर्य्यते जगतीप्रकरणत्वात् द्वादशाक्षरपादपूरणं जायते, तावन्तः तावत्सङ्ख्यकाः यदि स-कारा: स-गणाः, स-गणैर्घटिताः पादा इत्यर्थः, भवन्ति, तदा तोटकं नाम वृत्तमित्यर्थः ; एतेन

स० स० स० स०

- - ᴗ - - ᴗ - - ᴗ - - ᴗ

अमुना यमुनाजलकेलिकृता,

स० स० स० स०

- - ᴗ - - ᴗ - - ᴗ - - ᴗ

सहसा तरसा परिरभ्य धृता।

स० स० स० स०

- - ᴗ - - ᴗ - - ᴗ - - ᴗ

हरिणा हरिणाकुलनेत्रवती,

स० स० स० स०

- - ᴗ - - ᴗ - - ᴗ - - ᴗ

न ययौ नवयौवनभारवती॥

अन्यच्च।—

स० स० स० स०

- - ᴗ - - ᴗ - - ᴗ - - ᴗ

त्यज तोटकमर्थनियोगकरं,

चतुःस-गणयुक्तपादत्वे तोटकमिति लक्षणम्। वृत्तरत्नाकरादौ तु स-कारचतुष्टयेन तोटकमिति स्फुटमेवाभिहितं, यथा वृत्तरत्नाकरे—"इह तोटकमम्बुधिसैः प्रथितम्" इति। तथा छन्दोमञ्जर्यां—"वद तोटकमब्धिस-कारयुतम्" इति। तथा आग्नेयछन्दःसारे—"तोटकं सैश्चतुर्भिः प्रतिपादितः" इति। तथा वाणीभूषणेऽपि—"विनिधेहि चतुःस-गणं रुचिरं रविसङ्ख्यकवर्णकृतं सुचिरम्। फणिनायकपिङ्गल-संभणितं कुरु तोटकवृत्तमिदं गणितम्॥" (२।१३५) इति। अमुनेत्यादि।—यमुनायां कालिन्दीसलिले जलकेलिं जलक्रीडां करोति इति तेन, अमुना हरिणा कृष्णेन सहसा अकस्मात् तरसा झटिति परिरभ्य आलिङ्ग्य धृता गृहीता हरिणवत् आकुले भयव्याकुले नेत्रे विद्येते यस्याः सा तादृशी, नवयौवनभारवती नवोद्गतयौवना, काचित् गोपाङ्गनेति शेषः, न ययौ न गतवती। हलायुधोक्तोदाहरणश्लोके प्रायशः सर्वत्रैव छन्दोनाम श्लोकांशतया विन्यस्तमस्ति इति दृश्यते, उदाहरणेऽस्मिन् तद्व्यतिक्रमदर्शनात् बहुषु पुस्तकेषु श्लोकस्यास्य अदर्शनाच्च श्लोकोऽयं केनचित् प्रक्षिप्त

स० स० स० स०

‐ ‐ ᴗ ‐ ‐ ᴗ ‐ ‐ ᴗ ‐ ‐ ᴗ

प्रमदाधिकृतं व्यसनोपहतम्।

स० स० स० स०

‐ ‐ ᴗ ‐ ‐ ᴗ ‐ ‐ ᴗ ‐ ‐ ᴗ

उपधाभिरशुद्धमतिं सचिवं,

स० स० स० स०

‐ ‐ ᴗ ‐ ‐ ᴗ ‐ ‐ ᴗ ‐ ‐ ᴗ

नरनायकभीरुकमायुधिकम्॥

अत्र पादान्ते यतिः। ( ध )

## पुटो नौ म्यौ वसुसमुद्राः ॥ ३८ ॥

यस्य पादे नकारौ मकार-यकारौ च भवतः, तद्वृत्तं पुटो नाम। अष्टभिश्चतुर्भिश्च यतिः। तत्रोदाहरणम्।—

न० न० म० य०

‐ ‐ ‐ ‐ ‐ ‐ ᴗ ᴗ ᴗ ‐ ᴗ ᴗ

न विचलति कथञ्चित्, न्यायमार्गात्,

न० न० म० य०

‐ ‐ ‐ ‐ ‐ ‐ ᴗ ᴗ ᴗ ‐ ᴗ ᴗ

वसुनि शिथिलमुष्टिः, पार्थिवो यः।

---

इति सुधीभिर्मन्यते इति। त्यजेत्यादि।—तोटकं कलहकरम्, अर्थानां धनानां नियोगकरम् असत्पात्रे प्रयोगकम्, अर्थदूषकमित्यर्थः, प्रमदाभिः स्त्रीभिः अधिकृतं जितं, तथा व्यसनैः अक्षक्रीडादिभिः उपहतम् आक्रान्तम्, उपधाभिः धर्मार्थाद्युपन्यासेन मन्त्रिणां परीक्षणैः अशुद्धमतिं परीक्षितापरिशुद्धबुद्धिं नरनायकात् नरपतेः भीरुकं भयशीलम्; यद्वा—नरनायक! हे नराधिप! भीरुकम्, आयुधिकम् आयुधजीविनं सचिवं मन्त्रिणं त्यज। द्वादशाक्षरपादे छन्दसि प्रस्तारे क्रियमाणे जायमानेषु भेदेषु षट्पञ्चाशदधिकसप्तदशशततमो ( १७५६ ) भेदः तोटकेति नाम्ना ख्यातः।

( ध ) द्वादशाक्षरपादच्छन्दःसु पुटच्छन्दोलक्षणमाह, पुट इति।—यस्य

म० म० म० य०

- - - - - - ∪ ∪ ∪ - ∪ ∪

अमृतपुट इवासौ, पुण्यकर्मा,

म० न० म० स०

- - - - - - - ∪ ∪ ∪ - ∪ ∪

भवति जगति सेव्यः, सर्वलोकैः ॥(न)

**जलोद्धतगतिर्ज्सौ ज्सौ रसर्त्तवः ॥ ३९ ॥**

यस्य पादे जकार-सकारौ पुनस्तावेव भवतः, तद्वृत्तं जलोद्धतगतिर्नाम। षड्भिः षड्भिश्च यतिः। तत्रोदाहरणम्।—

ज० स० ज० स०

- ∪ - - - ∪ - ∪ - - - ∪

भनक्ति समरे, बहूनपि रिपून्,

ज० स० ज० स०

- ∪ - - - ∪ - ∪ - - - ∪

हरिः प्रभुरसौ, भुजोर्जितबलः।

---

अष्टौ, समुद्राः चत्वारः। नेति।—यः पार्थिवः राजा वसुनि धनविषये शिथिलमुष्टिः मुक्तहस्तः, अकृपण इत्यर्थः, न्यायमार्गात् नीतिपथात् कथञ्चित् केनापि प्रकारेण न विचलति न भ्रश्यति, पुण्यकर्मा सुकृतकारी असौ पार्थिवः जगति पृथिव्याम् अमृतपुट इव सुधाधार इव सर्वलोकैः सेव्यः आश्रयणीयो भवति। प्रस्तारनियमेन द्वादशाक्षरपादच्छन्दसि प्रस्तारे कृते षट्सप्तत्यधिकपञ्चशततमो (५७६) भेदः पुट इति नाम्ना ख्यातः। अत्र "कथञ्चित्" इत्यष्टाक्षरे पादे ततः "मार्गात्" इति चतुरक्षरे च विरतिः। आत्रेये पुनरस्य "श्रीपुटः" इति नाम।

(प) जगतीप्रकरणे जलोद्धतगतिलक्षणमाह, जलोद्धतगतिरिति।—रसर्त्तवः रसाः षट् ऋतवः षट्। ज्सेति।—तावेव जकार-सकारावेव। भनक्तीति।—

ज॰ स॰ ज॰ स॰

- ᴗ - - - ᴗ - ᴗ - - - ᴗ

जलोद्धतगति-र्यथैव मकर-

ज॰ स॰ ज॰ स॰

- ᴗ - - - ᴗ - ᴗ - - - ᴗ

स्तरङ्गनिकरं, करेण परितः ॥ (प)

## ततं नौ म्रौ ॥ ४० ॥

यस्य पादे नकारौ मकार-रेफौ च, तद्वृत्तं ततं नाम। तस्योदाहरणम्।—

न॰ न॰ म॰ र॰

- - - - - - ᴗ ᴗ ᴗ ᴗ - ᴗ

कुरु करुणमियं गाढ़ोत्कण्ठिका,

न॰ न॰ म॰ र॰

- - - - - - ᴗ ᴗ ᴗ ᴗ - ᴗ

यदुतनय! चकोरी कामाधिका।

---

जलोद्धतगतिः जलेषु सलिलेषु उद्धता प्रबला गतिः क्रमणं यस्य तादृशः मकरः जलजन्तुविशेषः यथैव करेण शुण्डादण्डेन परितः समन्तात् तरङ्गनिकरम् ऊर्मिसङ्घातं भनक्ति तथा भुजोर्ज्जितबलः भुजयोः बाह्वोः ऊर्जितं प्रकृष्टं बलं सामर्थ्यं यस्य सः प्रभुः असौ हरिरपि समरे युद्धे बहून् अनेकान् रिपून् शत्रून् परितः समन्तात् भनक्ति विनाशयति। द्वादशाक्षरप्रस्तारेषु षडशीत्यधिकाष्टादशशततमो (१८८६) भेदः जलोद्धतगतिरिति नाम्ना ख्यातः।

(फ) द्वादशाक्षरपादच्छन्दःसु ततास्यवृत्तमाह—ततमिति। कुर्वित्यादि।—कृष्णं प्रति कामपीड़िताया: राधिकायाः दूत्याः उक्तिरियम्। यदुतनय! हे यादव! करुणां दयां कुरु। कस्यां कस्मै वा दया कर्त्तव्या इत्याशंकायामाह—गाढ़ा प्रबला उत्कण्ठा यस्याः सा, चकोरी चन्द्रिकापिपासुः चकोरीस्वरूपा इत्यर्थः, कामाधिका

म० म० म० र०

\- - - - - - - - ˘ ˘ ˘ ˘ ˘ - ˘

विरहदहनसङ्गादङ्गैः कृशा,

न० न० म० र०

\- - - - - - ˘ ˘ ˘ ˘ - ˘

पिबतु तव मुखेन्दोर्बिम्बं दृशा ॥ (फ)

## कुसुमविचित्रा न्यौ न्यौ ॥ ४१ ॥

यस्य पादे नकार-यकारौ पुनरपि तावेव भवतः, तद्वृत्तं कुसुमविचित्रा नाम । षड्भिः षड्भिश्च यतिः । तत्रोदाहरणम् ।—

---

आधीयते अभिनिविश्यते प्रतीकाराय मनोऽनेन इति आधिः, आङ्पूर्वस्य धा-धातोः कि-प्रत्ययेन सिद्धम् ; कामेन आधिः मानसी व्यथा यस्याः सा ; "पुंस्याधिर्मानसी व्यथा" इत्यमरः, कामपीडिता इत्यर्थः ; यद्वा—कामः अभिलाषः तव मुखेन्दुपानाभिलाषः अधिकः यस्याः सा तादृशी, विरहदहनसङ्गात् वियोगानलसंस्पर्शात् अङ्गैः शरीरैः कृशा क्षीणा अतीव कृशाङ्गी इयं राधा तव मुखेन्दोः मुखचन्द्रस्य बिम्बं दृशा चक्षुषा पिबतु अवलोकयतु इत्यर्थः ; तवादर्शनादेव दुःखिता दिने दिने क्षीणा च सा मानससन्तापमत्यसहनीयं भजते इति भावः । चकोरी यथा चन्द्रिकार्थमुत्कण्ठिता चन्द्रादमृतमभिलषति तथा गाढ़ोत्कण्ठा इयं श्रीराधिका अपि तव मुखचन्द्रदर्शनमभिलषति इति निष्कर्षः । द्वादशाक्षरपादस्य प्रस्तारगत्या अष्टाशीत्यधिकैकसहस्रतमो ( १०८८ ) भेदः तत इति नाम्ना ख्यातः । वृत्तेऽस्मिन् यतिनियमस्यानुक्तत्वात् पादान्ते एव यतिर्बोध्या, किंवा पुटवृत्तवत् अष्टमे द्वादशे च इति । केचित्तु सूत्रमिदं प्रक्षिप्तं मन्यन्ते, उदाहरणश्लोके वृत्तनामादर्शनात् । वयन्तु उपस्थितप्रचुपितादिसूत्रद्वये यथा वृत्तनाम प्रवेशयितुं न शक्यं तथा अत्रापीति मन्यामहे । छन्दोमञ्जरीपरिशिष्टे वृत्तरत्नाकरपरिशिष्टे च वृत्तमिदं ललितनाम्ना अभिहितं, यथा —"ललितमभिहितं नौ म्रौ नामतः" इति ।

(ब) द्वादशाक्षरपादजगतीप्रकरणे कुसुमविचित्रावृत्तमाह—कुसुमेति ।

म० य० म० य०

— — — — ⏑ ⏑ — — — — ⏑ ⏑

विगलितहारा, सकुसुममाला,

म० य० म० य०

— — — — ⏑ ⏑ — — — — ⏑ ⏑

सचरणलाक्षा, वलयसुलक्ष्मा।

म० य० म० य०

— — — — ⏑ ⏑ — — — — ⏑ ⏑

विरचितवेशं, सुरतविशेषं,

म० य० म० य०

— — — — ⏑ ⏑ — — — — ⏑ ⏑

कथयति शय्या, कुसुमविचित्रा ॥ (ब)

## चञ्चलाक्षिका नौ रौ ॥ ४२ ॥

यस्य पादे नकारौ रेफौ च, तद्वृत्तं चञ्चलाक्षिका नाम। तत्रोदाहरणम्।—

---

यस्येति।—तावेव मकार-यकारावेव। विगलितेत्यादि।—विगलित: सुरतवेगेन छिन्नत्वात् परिभ्रष्टः हार: यत्र सा, कुसुममालया विमर्दितपुष्पस्रजा सह वर्त्तते या सा, सचरणलाक्षा चरणयोः पादयोः या लाक्षा अलक्तकं तया सह वर्त्तमाना पादस्थितालक्तकरागरञ्जितेत्यर्थः, वलयस्य हस्ताभरणविशेषस्य सुलक्ष्म स्पष्टचिह्नं यत्र सा, तथा कुसुमविचित्रा विविधवर्णपुष्पपरिशोभिता शय्या विरचितवेशं विरचितः कृतः वेशः यत्र तं सुरचितभूषणादिना सूचितविविधप्रसाधनमित्यर्थः, सुरतविशेषं क्रीड़ाविशेषं कथयति प्रकटयति। द्वादशाक्षरप्रस्तारस्य षट्सप्तत्यधिकनवशततमो ( ९७६ ) भेदः कुसुमविचित्रेति। केचिदत्र षड्भिरक्षरैर्यतिं मन्यन्ते, यत्र यतिविधौ विशेषविधिर्नास्ति तत्र पादान्ते एव यतिरिति सामान्यविधानबलात् पादान्ते एव यतिरित्यन्ये।

न० न० र० र०

- - - - - - ∪ - ∪ ∪ - ∪

अतिसुरभिरभाजि पुष्पश्रिया-

न० न० र० र०

- - - - - - ∪ - ∪ ∪ - ∪

मतनुतरतयेव सन्तानकः ।

न० न० र० र०

- - - - - - ∪ - ∪ ∪ - ∪

तरुणपरभृतः स्वनं रागिणा-

न० न० र० र०

- - - - - - ∪ - ∪ ∪ - ∪

मतनुत रतये वसन्तानकः ॥ (भ)

(भ) चञ्चलाक्षिकालक्षणमाह—चञ्चलाक्षिकेति । अतीत्यादि ।—अतिसुरभिः अतिशयेन सुगन्धिः सन्तानकः सन्तान एव सन्तानकः; स्वार्थे कः, देवतरुविशेषः, "पञ्चैते देवतरवो मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम् ॥" इत्यमरः; पुष्पश्रियां कुसुमसमृद्धीनाम् अतनुतरतया अक्षीणतरतया अतिबहुलतया इत्यर्थः, प्रभूतपुष्पभारेणेति यावत्, अभाजि इव असेवि इव, प्रभूतपुष्पसम्भारः सन्तानकवृक्षमसेवत इव इत्यर्थः; तथा वसन्तस्य माधवस्य ऋतुराजस्येत्यर्थः, आनकः आनयति मोत्साहान् करोति इति आनकः पटहाख्य वाद्यविशेषः, ढक्कास्वरूप इति यावत, "आनकः पटहोऽस्त्री स्यात्" इत्यमरः; तरुणपरभृतः युवकोकिलः रागिणां कामिजनानां रतये प्रीतये स्वनं रुतम् अतनुत विस्तारयामास । उक्तद्वादशाक्षरपादप्रस्तारस्य द्विशतषोडशाधिकैकसहस्रतमो (१२१६) भेदश्चञ्चलाक्षिकेति नाम्ना विख्यातः । अत्रापि यतेरनुक्तत्वात् पादान्ते एव सा ज्ञेया । छन्दोमञ्जर्यां वृत्तमेतत् "मन्दाकिनी" इति नाम्ना प्रसिद्धम्; तथा च—"न-न-र-र-घटिता तु मन्दाकिनी" इति । वृत्तरत्नाकरे पुनः अस्य "प्रमुदितवदना" "प्रभा" इति नामद्वयं परिदृश्यते, यथा—"प्रमुदितवदना भवेन्नौ च रौ" तथा—"स्वरशर विरतिर्ननौ रौ प्रभा" इति । वृत्तरत्नाकरपरिशिष्टे तु—"वसुयुगविरतिर्नौ रौ प्रभा

य० य० य० य०

– ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑ ⏑ – ⏑ ⏑

भुजङ्गप्रयातोपमं यस्य चित्तं,

य० य० य० य०

– ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑

त्यजेत्तादृशं दुश्चरित्रं कुमित्रम् ॥

अत्र पादान्ते यति:। (म)

## स्रग्विणी र: ॥ ४४ ॥

यस्य पादे चत्वारो रेफा:, तद्वृत्तं स्रग्विणी नाम। तदो-दाहरणम्।—

र० र० र० र०

⏑ – ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑ – ⏑

यो रणे युध्यते निर्भरं निर्भय-

र० र० र० र०

⏑ – ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑ – ⏑

स्त्यागिता यस्य सर्वस्वदानावधि:।

---

चतुर्भिर्य-कारै:" इति। "भुजङ्गप्रयातं भवेद् येश्चतुर्भि:" इति वृत्तरत्नाकर:। तथा चाग्नेये—"भुजङ्गप्रयातं यै: स्याच्चतुर्भि:" इति। पुर इत्यादि।—य: हताश: हता विनष्टा आशा यस्य स: दुष्टाशय:, मिथ्याविनीत: कपटविनयो, अविनीतोऽपि विनीत इव यस्तिष्ठति स एव मिथ्याविनीत इत्युच्यते; पुर: अग्रत: समक्षमित्यर्थ:, साधुवत् सज्जन इव भाति प्रकाशते, किन्तु परोक्षे अर्थनाशं प्रयोजनविघ्नं कार्य्यनाशमित्यर्थ:, करोति विदधाति, तथा यस्य चित्तं मानसं भुजङ्गप्रयातोपमं सर्पगमनसदृशकुटिलं, तादृशं दुश्चरित्रं दुष्टस्वभावं कुमित्रं निन्दितबन्धुं त्यजेत् वर्जयेत। द्वादशाक्षरप्रस्तारस्य षड्शीत्युत्तरपञ्चशततमो (५८६) भेद: भुजङ्गप्रयात इति नाम्ना ख्यात:।

(म) स्रग्विणीलक्षणमाह, स्रग्विणीति।—यथापि "तोटकं स:" (६।२७) इतिवत् यावद्भि: र-गणै: जगतीपाद: पूर्य्यते, तावतामेव र-गणानां परिग्रहात् "चत्वार: रेफा:" इत्युक्तम्। य इति।—य: जन: रणे युद्धे, निर्भय: विगतभीति: सन् निर्भरम्

र०  र०  र०  र०

∪ – ∪  ∪ –  ∪ ∪  – ∪ ∪  – ∪

तं नरं वीच्य लक्ष्मीर्यशःस्रग्विणी,

र०  र०  र०  र०

∪ – ∪ ∪  –  ∪ ∪  – ∪ ∪ – ∪

नूनमभ्येति सत्कीर्त्तिशुक्लांशुका ॥

अत्र पादान्ते यतिः। (य)

## प्रमिताक्षरा स्जौ सौ ॥ ४५ ॥

यस्य पादे सकार-जकारौ सकारौ च भवतः, तद्वृत्तं प्रमिताक्षरा नाम। तत्रोदाहरणम्।—

स०  ज०  स०  स०  स०  ज०  स०  स०

– – ∪ – ∪ – – – ∪  – – ∪  – – ∪ –  ∪  – – – ∪ – – ∪

परिशुद्धवाक्यरचनातिशयं, परिषिञ्चति श्रवणयोरमृतम्।

स०  ज०  स०  स०  स०  ज०  स०  स०

– – ∪ – ∪ –  – – ∪ – – ∪  – – ∪ – ∪  – – – ∪  – – ∪

प्रमिताक्षराऽपि विपुलार्थवती, तव भारती हरति मे हृदयम् ॥

अत्र पादान्ते यतिः। (र)

---

ग्रतिशयं युज्यते, तथा यस्य त्यागिता दानशीलता सर्वस्वदानमेव अवधिः सीमा यस्याः सा तथाविधा, भवतीति शेषः, यशःस्रग्विणी कीर्त्तिरूपमालाधारिणी, सत्कीर्त्तिः साधु यशः एव शुक्लम् अंशुकं वस्त्रं यस्याः सा तादृशी, लक्ष्मीः तं तादृशं नरं वीक्ष्य दृष्ट्वा ; "वीक्ष्य लक्ष्मीः" इत्यत्र "वीरलक्ष्मीः" इति पाठे—वीरपुरुषानुरागिणी लक्ष्मीः, नूनं निश्चितम् अभ्येति प्राप्नोति। द्वादशाक्षरप्रस्तारस्य एकसप्तत्यधिकैकादशशततमो (११७१) भेदः स्रग्विणीति नाम्ना ख्यातः। प्राकृतपिङ्गले वाणीभूषणे च अस्याः "लक्ष्मीधरः" इति नामान्तरं दृश्यते।

(र) द्वादशाक्षरपादजगत्यां प्रमिताक्षरामाह—प्रमिताक्षरेति। परिशुद्धेति। —परिशुद्धवाक्यरचना परिशुद्धस्य च्युतसंस्कारादिदोषरहितस्य गुणालङ्कारादिशोभितस्य च वाक्यस्य रचना सङ्घटना यत्र तादृशी, प्रमिताक्षराऽपि प्रमितमत्यल्पम् अक्षरं

## कान्तोत्पीड़ा भ्मौ स्मौ ॥ ४६ ॥

यस्य पादे भकार-मकारौ सकार-मकारौ च, तद्वृत्तं कान्तोत्पीड़ा नाम । तत्रोदाहरणम् ।—

भ०　म०　स०　म०
∪ – – ∪ ∪ ∪ – – ∪ ∪ ∪ ∪
कामशरैर्व्यामा खलु कान्तोत्पीड़ा-

भ०　म०　स०　म०
∪ – – ∪ ∪ ∪ – – ∪ ∪ ∪ ∪
मामवती दुःखैः परिमुह्यन्ती या ।

भ०　म०　स०　म०
∪ – – ∪ ∪ ∪ – – ∪ ∪ ∪ ∪
सा लभते चेत् कामुकयोगं गाढं,

भ०　म०　स०　म०
∪ – – ∪ ∪ ∪ – – ∪ ∪ ∪ ∪
दुःखविमुक्ता स्यात् परमानन्दाप्ता ॥

अत्र पादान्ते यतिः । (ल)

---

अस्तीं सा तादृशी अत्यल्पवर्णमयी अपि, विपुलार्थवती महदर्थयुक्ता तव भारती वाणी मे मम श्रवणयोः कर्णयोः अतिशयम् अधिकं यथा तथा अमृतं परिषिञ्चति वर्षति, तथा हृदयं मनश्च हरति आकर्षति । प्रमिताक्षरानाम वृत्तं श्रवणयोरमृतं परिषिञ्चति हृदयञ्च हरति इत्यपि ध्वन्यते । प्रोक्तद्वादशाक्षरपादप्रस्तारस्य द्विसप्तत्यधिकसप्तदशशततमो ( १७७२ ) भेदः प्रमिताक्षरानाम्ना प्रसिद्धः ।

( ल ) द्वादशाक्षरपादजगतीप्रकरणे कान्तोत्पीड़ालक्षणमाह—कान्तोत्पीडेति । कामेत्यादि ।—या खलु कान्ता रमणी कामशरैर्मदनबाणैः व्याप्ता अत एव दुःखैः विरहसन्तापैरित्यर्थः, परिमुह्यन्ती मोहं गच्छन्ती उत्पीड़ां क्लेशम् आमवती लब्धवती, सा चेत् यदि गाढम् अतिशयं कामुकेन योगं सम्बन्धं लभते प्राप्नोति तदा दुःख-

## वैश्वदेवी मौ याविन्द्रिय-ऋषयः ॥ ४७ ॥

यस्य पादे मकारौ यकारौ च भवतः, तद्वृत्तं वैश्वदेवी नाम। पञ्चसु सप्तसु च यतिः। तत्रोदाहरणम्।—

म० म० य० य०

ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ

धन्यः पुण्यात्मा, जायते क्वापि वंशे,

म० म० य० य०

ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ

तादृक् पुत्रोऽसौ, येन गोत्रं पवित्रम्।

म० म० य० य०

ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ

गोविप्रज्ञाति-स्वामिकार्य्ये प्रवृत्ते,

म० म० य० य०

ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ

शुद्धः श्राद्धादौ, वैश्वदेवी भवेत् यः ॥ (व)

---

विमुक्ता विगतमनःसन्तापा सती परमानन्दाप्ता अतिप्रीतिं प्राप्ता, भवेदिति शेषः। द्वादशाक्षरप्रस्तारस्य नवनवत्यधिकैकशततमो (१९९) भेदः कान्तोत्पीड़ा इति नाम्ना प्रसिद्धः।

(व) द्वादशाक्षरपादवृत्तेषु वैश्वदेवीलक्षणमाह, वैश्वदेवीति।—इन्द्रिय-ऋषयः इन्द्रियाणि पञ्च ऋषयः सप्त, इन्द्रियशब्दस्य पञ्चसङ्ख्यावाचित्वेन, ऋषिशब्दस्य च सप्तसङ्ख्यावाचित्वेन पञ्च-सप्ताक्षरेषु यतिरिति लक्षम। धन्यः इति।—गोविप्रज्ञाति-स्वामिकार्य्ये गवां विप्राणां ब्राह्मणानां ज्ञातीनां स्वामिनः प्रभोश्च कर्मणि प्रवृत्ते आरब्धे सति इत्यर्थः, तथा श्राद्धादौ पितृकृत्यादौ यः शुद्धः शुचिः सन्, वैश्वदेवी विश्वेदेवेभ्यः बलिप्रदायी भवेत् स्यात्; विश्वेभ्यो देवेभ्यो देयः बलिः इत्यर्थे अण्-प्रत्ययात् वैश्वदेव इति पदं निष्पाद्य सोऽस्यास्तीति पुनरिन्-प्रत्ययेन सिद्धम्। विश्वेदेवाः श्राद्धदेव-विशेषाः, तथा च "क्रतुर्दक्षो वसुः सत्यः कामः कालस्तथा धुरिः। रोचनो माद्रवाश्चैव

**वाहिनी तमौ मृयावृषिकामशराः ॥ ४८ ॥**

यस्य पादे तकार-मकारौ मकार-यकारौ च भवतः, तद्वृत्तं वाहिनी नाम। सप्तभिः पञ्चभिश्च यतिः। तस्योदाहरणम्।—

त० म० म० य०

∪ ∪ – ∪ ∪ ∪ ∪ ∪ ∪ – ∪ ∪

पूर्णो यदीयः कोषो, नीतिर्विशुद्धा,

त० म० म० य०

∪ ∪ – ∪ ∪ ∪ ∪ ∪ ∪ – ∪ ∪

दृष्टिः स्वधर्मे रक्षा, स्वानां प्रजानाम् ।

---

तथा चान्यः पुरूरवाः । विश्वेदेवा भवन्त्येते दश श्राद्धेषु पूजिताः ॥" इति ; एतादृशः धन्यः श्लाघ्यः पुण्यात्मा पूतचरित्रः पुत्रः तनयः क्वापि कस्मिंश्चिदपि वंशे गोत्रे जायते उत्पद्यते, तादृशो महानुभावः पुत्रनं यत्र तत्र समुत्पद्यते इति भावः, असौ परिदृश्यमानः पुत्रः तादृक् कथितगुणसम्पन्नः ; येन अनेन पुत्रेण गोत्रं कुलं पवित्रं धन्यं सदाचार-सद्व्यवहार-सुकीर्त्तिभिरुज्ज्वलमित्यर्थः, जातमिति शेषः । द्वादशाक्षरप्रस्तारस्य सप्तसप्तत्यधिकपञ्चशततमो ( ५७७ ) भेदः वैश्वदेवीतिनाम्ना ख्यातः ।

( अ ) द्वादशाक्षरच्छन्दसि वाहिनीलक्षणमाह, वाहिनीति ।—ऋषिकामशराः ऋषिशब्दस्य सप्तसङ्ख्यावाचकत्वात् कामशरशब्दस्य च पञ्चसङ्ख्यावाचकत्वात् सप्तसु पञ्चसु च यतिः। आदर्शपुस्तकानां केषु केषु सूत्रस्यास्य समुल्लेखो नास्ति, आग्नेयच्छन्दस्यपि तथैव । क्वचित् प्राचीनपुस्तके अस्य उदाहरणान्तरमपि परिदृश्यते यथा—"यो वाहिनीं क्वाप्यादात्, वृत्यद्धमावान, हन्तुं हि शक्तोऽनन्तः, सोऽप्यद्य मूर्च्छाम । प्राप्तः किमेतच्चित्रं, पौलस्त्यशक्त्या, ज्ञातुं न शक्यन्त्वद्य-श्चारित्र्यमेषाम ॥" इति । पूर्ण इत्यादि ।—यदीयः यस्य राज्ञः सम्बन्धी कोषः अर्थौघः, धनराशिरित्यर्थः, "कोषोऽस्त्री कुड्मले खड्गपिधानेऽर्थौघदिव्ययोः" इत्यमरः, पूर्णः उपचयं प्राप्तः, न तु क्षीणतां गत इत्यर्थः ; कोषो धनागारः इत्यर्थो वा, पूर्णः अशून्यः धनराशिभिरिति शेषः ; नीतिः नयः विशुद्धा प्रमादादिदोषरहिता, स्वधर्मे राजधर्मे दृष्टिः अवलोकनं, यथायथं राजधर्मपालनमित्यर्थः, तथा स्वानां स्वकीयानां प्रजानां

त० भ० भ० य०

∪ ∪ – ∪ ∪ ∪ ∪ ∪ ∪ – ∪ ∪

यद्वाहिनी सर्वाङ्ग-युक्ताऽप्रधर्ष्या,

त० भ० भ० य०

∪ ∪ – ∪ ∪ ∪ ∪ ∪ ∪ – ∪ ∪

राज्ञोऽस्य संविज्ञेयं, श्रेयः सदैव ॥ (ञ)

## नवमालिनी न्जौ भ्याविति ॥ ४९ ॥

यस्य पादे नकार-जकार-भकार-यकारा भवन्ति, तद्वृत्तं नवमालिनी नाम । तत्रोदाहरणम् ।—

न० ज० भ० य०

– – – – ∪ – ∪ – – – ∪ ∪

धवलयशोंऽशुकेन, परिवीता,

न० ज० भ० य०

– – – – ∪ – ∪ – – – ∪ ∪

सकलजनानुराग-घुसृणाक्ता ।

न० ज० भ० य०

– – – ∪ – ∪ – – – ∪ ∪

दृढगुणबद्धकीर्त्ति-कुसुमौघै-

---

प्रकृतिसमूहानां रक्षा पालनं, किञ्च यस्य राज्ञः वाहिनी सेना सर्वाङ्गैः हस्त्यश्वादिभिः अङ्गचतुष्टयैः युक्ता, अत एव अप्रधर्ष्या केनापि पराभवितुमशक्या, अस्य एवंविधस्य राज्ञः सदा एव श्रेयः मङ्गलं संविज्ञेयम् अवधेयम् । प्रोक्तद्वादशाक्षरप्रकारस्य सप्तदशाधिकपञ्चशततमो ( ५१७ ) भेदः वाहिनीति नाम्ना प्रसिद्धः । "गन्ते" इत्यनेन "सदैव" इत्यत्र 'व'कारस्य गुरुत्वातिदेशः ।

( ट ) नवमालिनीवृत्तलक्षणमाह—नवमालिनीति । धवलेत्यादि ।—नृप ! हे राजन् ! धवलं शुभ्रं यश एव अंशुकं वस्त्रं तेन परिवीता वेष्टिता, तथा सकलानां निखिलानां जनानाम् अनुरागः अत्यन्तप्रीतिरेव घुसृणं कुङ्कुमं तेन आक्ता अञ्चिता,

न० ज० भ० य०

- - - - ᴗ - ᴗ, - - - ᴗ ᴗ

स्तव नवमालिनीव, नृप ! लक्ष्मीः ॥

अत्र वसुसमुद्रैर्यतिरित्याम्नायः। (ख)

इति भट्टहलायुधकृतायां पिङ्गलच्छन्दोवृत्तौ षष्ठोऽध्यायः।

---

# सप्तमोऽध्यायः।

इदानीमतिजगतीशक्कर्य्यतिशक्कर्य्यष्टिरत्यष्टिर्धृतिरतिधृतिश्चेति समातिच्छन्दांसि एकैकपादाक्षरवृद्ध्या क्रमेणोद्दीयन्ते। (क)

---

रञ्जिता इत्यर्थः, तव लक्ष्मीः राजश्रीः, दृढगुणेन दृढसूत्रेण इव गुणेन शूरत्वादिना बद्धा संयता, अत एव निश्चला कीर्त्तिः यशः एव कुसुमं तेषामोघैः समूहैः उपलाञ्छिता सती नवमालिनीव अभिनवकुसुममालाधारिणी रमणीव ; यद्वा—कुसुमौघैः नवमाल्यवतीव, धवलांशुकसमाच्छादिता कुङ्कुमरागरञ्जिता सुग्रथितपुष्पदामशोभिता च नायिकेव इत्यर्थः, राजते इति शेषः। अथवा—धवलं यश इवांशुकं तेन परिवीता इति नायिकापक्षे, धवलयशः अंशुकमिव इति च राजलक्ष्मीपक्षे उपमितिसमासः। एवं सर्वत्र योज्यम्। अत्राष्टाक्षरे चतुरक्षरे च यतिर्बोध्या। प्रोक्तद्वादशाक्षरप्रस्तारस्य चतुश्चत्वारिंशदधिकनवशततमो (९४४) भेदः नवमालिनीति नाम्ना ख्यातः। छन्दो-मञ्जरी-वृत्तरत्नाकरयोः "नवमालिका" इति नामान्तरमस्याः। इह अष्टनवत्यधिक-चतुःसहस्रभेदवत्सु जगतीवृत्तेषु कतिचित् भेदाः प्रदर्शिताः, ग्रन्थविस्तृतिभिया न सर्वे। वाणीभूषण-छन्दोमञ्जरी-वृत्तरत्नाकरादौ अन्येऽपि भेदाः दृश्यन्ते, ते तु तत्र तत्र मृग्याः।

इति श्रीमज्जीवानन्दविद्यासागरकृतायां पिङ्गलच्छन्दःसूत्रे हलायुधवृत्तौ सुखबोधिन्यां षष्ठोऽध्यायः।

---

(क) पूर्वस्मिन् खलु षष्ठाध्याये प्रथमं यतिलक्षणमभिधाय एकाक्षरपादात् द्वादशाक्षरपादवृत्तलक्षणानि अभिहितानि। साम्प्रतमतिजगत्यादीनि सप्त अति-

तत्रातिजगत्याम्।—

**प्रहर्षिणी म्नौ ज्रौ ग् त्रिकदशकौ ॥ १ ॥**

यस्य पादे मकार-नकार-जकार-रेफ-गकारा भवन्ति, तद्वृत्तं प्रहर्षिणी नाम। त्रिभिर्दशभिश्च यतिः। तत्रोदाहरणम्।—

म० न० ज० र० ग०
— — — ⏑ ⏑ ⏑ ⏑ — ⏑ — ⏑ — ⏑ — —
उत्तुङ्ग-स्तनकलसद्वयोन्नताङ्गी,

म० न० ज० र० ग०
— — — ⏑ ⏑ ⏑ ⏑ — ⏑ — ⏑ — ⏑ — —
लोलाक्षी, विपुलनितम्बशालिनी च।

म० न० ज० र० ग०
— — — ⏑ ⏑ ⏑ ⏑ — ⏑ — ⏑ — ⏑ — —
बिम्बोष्ठी, नरवर! मुष्टिमेयमध्या,

म० न० ज० र० ग०
— — — ⏑ ⏑ ⏑ ⏑ — ⏑ — ⏑ — ⏑ — —
सा नारी, भवति मनःप्रहर्षिणीति ॥ (ख)

---

छन्दांसि वर्णयितुं सप्तमाध्यायमारभते। तत्रैव क्रमागतो विवृणोति—प्रहर्षि-णीत्यादि।

(ख) अतिच्छन्दःसु त्रयोदशाक्षरपादातिजगत्यधिकारे प्रहर्षिणीलक्षणमाह, प्रहर्षिणीति।—त्रिक-दशकौ तृतीय-दशमवर्णौ, यतिस्थानीयौ भवतः इति शेषः; यद्वा—तृतीय-दशकौ विरतिं भजेते इत्यर्थः; अथवा—यद्वृत्तं तृतीय-दशकौ वर्णौ प्राप्य यतिं लभते इत्यर्थः, तत् प्रहर्षिणीनाम वृत्तं स्यात्। उत्तुङ्गेत्यादि।—नरवर! हे राजन्! या स्तनः कलस इव तयो द्वयं स्तनकलसद्वयम्, उत्तुङ्गेन उन्नतेन स्तनकलस-द्वयेन उन्नतं तथावत् प्रतीयमानमङ्गं वक्षःस्थलमित्यर्थः, यस्याः सा, "उन्नताङ्गी" इत्यस्य "आनताङ्गी" इति पाठान्तरः समीचीनः; तथा लोले चञ्चले अक्षिणी यस्याः सा, विपुलेन विशालेन नितम्बेन शालते शोभते या सा, तथा बिम्बफलवत् ओष्ठौ

## रुचिरा ज्भौ स्जौ ग् चतुर्नवकौ ॥ २ ॥

यस्य पादे जकार-भकारौ सकार-जकारौ गकारश्च, तद्वृत्तं रुचिरा नाम। चतुर्भिर्नवभिश्च यतिः। तत्रोदाहरणम्।—

ज०  भ०  स०  ज० ग०
- ᴗ - ᴗ  - - - - ᴗ - ᴗ  - ᴗ

मृगत्वचा, रुचिरतराम्बरक्रियः,

ज०  भ०  स०  ज० ग०
- ᴗ - ᴗ  - - - - - ᴗ - ᴗ - ᴗ

कपालभृत्, कपिलजटाग्रपल्लवः।

ज०  भ०  स०  ज० ग०
- ᴗ - ᴗ  - - - - ᴗ - ᴗ - ᴗ

ललाटदृग्-दहनकृशीकृतस्मरः,

ज०  भ०  स०  ज० ग०
- ᴗ - ᴗ  - - - - - ᴗ - ᴗ - ᴗ

पुनातु वः, शिशुशशिशेखरः शिवः ॥ (ग)

---

यस्याः सा, मुष्टिमेयः मुष्टिग्राह्यः मध्यः कटिदेशः यस्याः सा तादृशी भवति, सा नारी रमणी मनसः चेतसः प्रहर्षिणी आनन्ददायिनी इति एवं, आशीयादिति शेषः। यथा ईदृशी नारी मनःप्रहर्षिणी तथा प्रहर्षिणीवृत्तमपि कवीनां मनःप्रहर्षणात् एतन्नामकमिति चापरार्थो व्यज्यते। अतिजगत्यधिकारे त्रयोदशाक्षरपादानां सर्वगुर्वादिसर्वलघ्वन्ते प्रस्तारे विधीयमाने एकशतद्विनवत्यधिकाष्टसहस्रभेदा (८१९२) जायन्ते, तत्र च चतुःशतैकाधिकैकसहस्रतमो (१४०१) भेदः प्रहर्षिणीति नाम्ना ख्यातः।

(ग) त्रयोदशाक्षरपादातिजगत्यधिकारे रुचिराख्यं वृत्तं दर्शयति—रुचिरेति। मृगत्वचेति।—मृगत्वचा पशुचर्मणा, रुचिरतरा अतिमनोहारिणी अम्बरस्य वस्त्रस्य क्रिया कार्य्यं यस्य सः, कपालं ब्रह्मणः शिरोऽस्थिमयं पात्रं बिभर्त्ति धारयति इति कपालभृत्, तथा कपिलः पिङ्गलवर्णः जटायः पल्लव इव यस्य सः, ललाटदृक्

## मत्तमयूरं म्तौ य्सौ ग् समुद्रनवकौ ॥ ३ ॥

यस्य पादे मकार-तकारौ यकार-सकारौ गकारश्च, तद्वृत्तं मत्तमयूरं नाम । पूर्ववत् यतिः । तत्रोदाहरणम् ।—

म०　त०　य०　स०　ग०
∪ ∪ ∪ ∪ ∪ – – ∪ ∪ – – ∪ ∪
व्यूढोरस्कः, सिंहसमानानतमध्यः,

म०　त०　य०　स०　ग०
∪ ∪ ∪ ∪ ∪ – – ∪ ∪ – – ∪ ∪
पीनस्कन्धो, मांसलहस्तायतबाहुः ।

म०　त०　य०　स०　ग०
∪ ∪ ∪ ∪ ∪ – – ∪ ∪ – – ∪ ∪
कम्बुग्रीवः, स्निग्धशरीरस्तनुलोमा,

म०　त०　य०　स०　ग०
∪ ∪ ∪ ∪ ∪ – – ∪ ∪ – – ∪ ∪
भुङ्क्ते राज्यं मत्तमयूराकृतिर्नरः ॥ (घ)

---

भालस्थलोचनेनैव दहनं वह्निः तेन तृणीकृतः तृणवत् सम्पादितः भस्मीकृत इत्यर्थः, स्मरः कामो येन सः, शिशुः नवः कलामात्र इत्यर्थः, शशी चन्द्रः शेखरे मौलौ यस्य सः इति व्यधिकरणबहुव्रीहिः ; यद्वा—शिशुशशिशब्दस्तद्विशिष्टे लाक्षणिकः, कलामात्रचन्द्रयुक्तः शेखरो यस्येति विग्रहः, तथाविधः शिवः हरः वः युष्मान् पुनातु पवित्रीकरोतु । त्रयोदशाक्षरप्रस्तारेषु षडधिकाष्टाविंशतिशततमो ( २८०६ ) भेदः रुचिरावृत्तमिति ।

( घ ) त्रयोदशाक्षरपादवृत्तेषु मत्तमयूरवृत्तलक्षणमाह, मत्तमयूरमिति ।—समुद्र-नवकौ इत्यत्र समुद्राः चत्वारः । व्यूढेति ।—व्यूढं विशालम् उरः वक्षः यस्य सः, सिंहस्य सिंहकटेरित्यर्थः, समानः तुल्यः आनतः क्षीणः मध्यः कटिदेशः यस्य सः, तथा पीनः स्थूलः स्कन्धः यस्य सः, मांसलौ मांसबहुलौ कोमलौ इत्यर्थः, हस्तौ करौ यस्य सः, तथा आयतौ दीर्घौ बाहू भुजौ यस्य सः मांसलहस्ताबाहुः

## गौरी नौ न्सौ ग् ॥ ४ ॥

यस्य पादे नकारत्रयं सकारो गकारश्च, तद्वृत्तं गौरी-नाम। तत्रोदाहरणम्।—

न० न० न० स० ग०

- - - - - - - - - - - ◡ ◡

सकलभुवनजगणनतपादा,

न० न० न० स० ग०

- - - - - - - - - - - ◡ ◡

निजपदभजनशमितविषादा।

न० न० न० स० ग०

- - - - - - - - - - - ◡ ◡

विजितसरसिरुहनयनपद्मा,

न० न० न० स० ग०

- - - - - - - - - - - ◡ ◡

भरतु सकलमिह जगति गौरी ॥ (ङ)

---

आयतबाहुश्चेति पूर्वपदस्य विशेषणत्वस्वीकारात् पदद्वये विशेषणवत् कर्मधारय-समासः ; कम्बुवत् शङ्ख इव, शङ्खे यथा रेखात्रयमस्ति तद्वत् रेखात्रयविशिष्टा ग्रीवा यस्य सः रेखात्रयवद्ग्रीव इत्यर्थः, स्निग्धं नयनसुखदं शरीरं देहो यस्य सः, तथा तनु अल्पं लोम यस्य सः, मत्तः हृष्टः यो मयूरः तस्य नेत्रस्य नयनस्य या आकृतिः सा इव नेत्रं चक्षुर्यस्य सः, मत्तमयूरनेत्रसमाननेत्र इत्यर्थः, एतादृशलक्षणवान् नरः राज्य भुङ्क्ते राजा भवतीत्यर्थः। प्रोक्तत्रयोदशाक्षरप्रस्तारस्य त्रयस्त्रिंशदधिकषोडशशततमो (१६३३) भेदो मत्तमयूर इति नाम्ना ख्यातः। प्राकृतपिङ्गले वाणीभूषणे च अस्य "माया" इति नाम। उदाहरणान्तरं यथा—"हा तातेति" इत्यादि रघौ (९।७५)।

(ङ) त्रयोदशाक्षरपादच्छन्दःसु गौरीच्छन्दोलक्षणमाह—गौरीति। सूत्रमिदं मूलपाठे नास्तीति केचित् वदन्ति, परन्तु प्राचीनच्छन्दसि तथा मुद्रितेषु सर्वेष्वेव पुस्तकेषु अस्य समुल्लेखोऽस्ति। सकलेत्यादि।—सकलेषु निखिलेषु भुवनेषु जगत्सु, भुवनत्रयेषु इत्यर्थः, जातानाम् उत्पन्नानां गणैः समूहैः सुरनरपन्नगसमूहैः नतौ

शक्वर्य्याम्।—

**असम्बाधा म्तौ न्सौ गाविन्द्रियनवकौ॥ ५॥**

यस्य पादे मकार-तकारौ नकार-सकारौ गकारौ च भवतः, तद्वृत्तमसम्बाधा नाम। पञ्चभिर्नवभिश्च यतिः। तत्रोदाहरणम्।—

म० त० न० स० ग० ग०

ऽ ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ

भङ्क्त्वा दुर्गाणि, द्रुमवनमखिलं छित्त्वा,

म० त० न० स० ग० ग०

ऽ ऽ ऽ ऽ ऽ । । । । । । ऽ ऽ ऽ

हत्वा तत्सैन्यं, करितुरगबलं हृत्वा।

---

नमस्कृतौ पादौ यस्याः सा, तथा निजं नित्यं, "निजं स्वीये च नित्ये च" इति मेदिनी, यत् पदं वस्तु, "पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः; तस्य नित्यवस्तुनः शिवस्य इत्यर्थः, भजनेन सेवया शमितः निवारितः विषादः यस्याः सा शिवसेवनेन निर्मलमानसा इत्यर्थः; यद्वा—निजं स्वीयं, गौर्य्या एवेति भावः, पदं चरणं तयोः भजनात् सेवनात्, भक्तजनेनेति भावः, यद्वा—भज्यते सेव्यते यैस्ते भजनाः सेवका इत्यर्थः, निजपदभजनानां निजचरणाश्रितसेवकानामित्यर्थः; शमितः विषादः यया सा निजपादसेवननिरतभक्तानां दूरीकृतविषादा इत्यर्थः; तथा विजितं पराभूतं सरसिरुहं पद्मं नयनपद्मेन नेत्रकमलेन यया सा गौरी भवानी इह जगति अस्यां पृथिव्यां सकलं जनं भरतु रक्षणं करोतु। "जगति" इत्यत्र "भवति" इति पाठे—भवति त्वयि सकलं भरतु सर्वां सम्पदं ददातु इत्यर्थः। त्रयोदशाक्षरप्रस्तारस्य अष्टचत्वारिंशदधिकद्विसहस्रतमो (२०४८) भेदः गौरीनाम्ना प्रसिद्धः। अतिजगत्यधिकारे जायमानेषु एकनवतिद्विनवत्यधिकाष्टसहस्रभेदेषु (८१९२) कतिचित् भेदा अत्र प्रदर्शिताः, अन्ये च यथायथं स्वयमूहनीयाः। वाणीभूषणादौ च एतदतिरिक्ताः तारक-पङ्कावलि-कन्दनामानः त्रयो भेदाः दृश्यन्ते।

(च) त्रयोदशाक्षराणि वृत्तानि परिसमाप्य साम्प्रतं शक्वर्य्यधिकारे चतुर्दशाक्षरवृत्तलक्षणानि वक्तुमुपक्रमते, तत्र असम्बाधालक्षणमाह, असम्बाधेति।—इन्द्रियाणि पञ्च। भङ्क्त्वेति।—येन राज्ञा, दुर्गाणि दुःखेन गम्यते एषु इति दुर्गाणि कीदृशान्,

म० त० न० स० ग० ग०

येनासम्बाधा, क्षितिरजनि विपक्षाणां,

म० त० न० स० ग० ग०

सर्वोर्वीनाथः, स जयति नृपतिर्मुञ्जः ॥ (च)

**अपराजिता नौ र्सौ ल्गौ स्वर-ऋषयः ॥ ६ ॥**

यस्य पादे नकारौ रेफ-सकार-लकार-गकाराश्च, तद्वृत्तम् अपराजिता नाम। सप्तभिः सप्तभिश्च यतिः। तत्रोदाहरणम्।—

न० न० र० स० ल० ग०

फणिपतिवलयं, जटामुकुटोज्ज्वलं,

न० न० र० स० ल० ग०

मनसिजमथनं, त्रिशूलविभूषितम्।

"गङ्"इति व्यातानीति यावत्, भङ्क्त्वा विचूर्ण्य, विपक्षाणामिति शेषः, अखिलं सकलं द्रुमवनं तत्प्रधानं वनं, विपक्षवृन्दराजीपूर्णमरण्यमित्यर्थः, छित्त्वा कर्त्तित्वा, तेषां शत्रूणां सैन्यं बलं हत्वा विनाश्य करिणश्च तुरगाश्च त एव बलं सैन्यं हत्वा बलादधिक्रम्य इत्यर्थः, विपक्षाणां रिपूणां क्षितिः अवस्थितिस्थानम् असम्बाधा सङ्कट-परिहीना, दुर्गादिनाशेन अवस्थितिस्थानस्य सर्वजनगोचरीभूतत्वेन प्रकाशीभूता इत्यर्थः; यद्वा—क्षितिः स्वेषाम् अवस्थानम् असम्बाधा विपक्षबलनाशेन बाधाविहीना, निर्विघ्ना इत्यर्थः, अजनि जनिता; सर्वोर्वीनाथः समग्रपृथिवीपतिः स नृपतिः मुञ्जः जयति सर्वोत्कर्षेण वर्त्तताम्। "षट्पञ्चाशदक्षरं शक्करी" इत्युक्तत्वात् शक्करीपादघटकीभूतानि अक्षराणि चतुर्दश एव लभ्यन्ते, तेषां चतुर्दशाक्षरपादानां प्रस्तारे विधीयमाने त्रिशतचतुरशीत्यधिकषोडशसहस्रभेदा (१६३८४) जायन्ते; तत्र सप्तदशाधिकद्विसहस्रतमो (२०१७) भेदः असम्बाधा इति नाम्ना ख्यातः।

(छ) चतुर्दशाक्षरपादशक्कर्य्यधिकारे अपराजितालक्षणमाह, अपराजितेति।— स्वर-ऋषयः स्वराः सप्त ऋषयः सप्त। फणिपतिरिति।—फणिपतिः नागराजः

न० न० र० स० ल०ग०

स्मरसि यदि सखे!, शिवं शशिशेखरं,

न० न० र० स० ल०ग०

भवति तव तनुः, परैरपराजिता ॥ (क)

## प्रहरणकलिता नौ भ्नौ ल्गौ च ॥ ७ ॥

यस्य पादे नकारौ भकार-नकार-लकार-गकाराश्च, तद्वृत्तं प्रहरणकलिता नाम। चकारात् पूर्वोक्तैव यतिः। तत्रोदाहरणम्।—

न० न० भ० न० ल०ग०

सुरमुनिमनुजै-रुपचितचरणां,

न० न० भ० न० ल०ग०

रिपुभयचकित-त्रिभुवनशरणाम्।

---

वासुकिः वलयं हस्तभूषणं यस्य तं, जटा एव मुकुटं जटाभिः कृतं मुकुटमिति वा तेन उज्ज्वलं मुकुटाकारीकृतजटाशोभितमित्यर्थः, मनसिजं कामं मथ्नाति नाशयति यस्तं, त्रिशूलेन विभूषितं शोभितं, तथा शशी चन्द्रः शेखरे चूडायां यस्य तादृशं शिवं शङ्करं यदि स्मरसि चिन्तयसि, तदा सखे! हे बन्धो! तव तनुः शरीरं परैः रिपुभिः अपराजिता अपरिभूता भवति। प्रोक्तचतुर्दशाक्षरपादप्रस्तारस्य अष्टशतचतुर्विंशत्यधिकपञ्चसहस्रतमो (५८२४) भेदः अपराजिता इत्याख्यया ख्यातः।

(ख) वृत्ताधिकारे प्रहरणकलितालक्षणमाह—प्रहरणेति। सुरेत्यादि।—सुरा देवाः मुनयः ऋषयः मनुजाः मानवाः तैः उपचितौ संवर्द्धितौ, पूजितौ इत्यर्थः,

न०  न०  भ०  न०  ल०ग०

- - - -  - - ◡  - - - - - -  - ◡

प्रणमत महिषा-सुरवधकुपितां,

न०  न०  भ०  न०  ल०ग०

- - - - -  - ◡  - - - - - - -  ◡

प्रहरणकलितां, पशुपतिदयिताम् ॥ (ज)

## वसन्ततिलका तभौ जौ गौ ॥ ८ ॥

यस्य पादे तकार-भकारौ जकारौ गकारौ च, तद्वृत्तं वसन्ततिलका नाम। तत्रोदाहरणम्।—

त०  भ०  ज०  ज०  ग०ग०

◡ ◡ - ◡  - - - ◡  - - ◡ - ◡ ◡

उद्धर्षिणी जगद्दृशां स्तनभारगुर्वी,

त०  भ०  ज०  ज०  ग०ग०

◡ ◡ - ◡ -  - - ◡ - -  ◡ - ◡ ◡

नीलोत्पलद्युतिमलिम्लुचलोचना च।

चरणौ यस्याः तां, रिपुभयेन चकितानां त्रस्तानां त्रिभुवनानां स्वर्गमर्त्त्यरसातलवासिनामित्यर्थः, शरणां रक्षित्रीं, तथा महिषासुरस्य वधाय विनाशाय महिषासुरं हन्तुमित्यर्थः, कुपितां क्रुद्धाम्; "वध" इत्यत्र "तनु" इति पाठे—महिषासुरस्य तनवे देहाय देहविनाशाय इत्यर्थः, यद्वा—महिषासुराय तनु स्वल्पं कुपितां, महाशक्तिमत्याः कोपाधिक्ये सृष्टिविनाशशङ्कया स्वल्पकोप इति बोध्यम्; प्रहरणानि अस्त्राणि कलितानि गृहीतानि यया तां धृतविविधास्त्रामित्यर्थः, पशुपतेः शिवस्य दयितां प्रियां दुर्गामित्यर्थः, प्रणमत नमस्कुरुत। प्रोक्तचतुर्दशाक्षरपादप्रस्तारस्य एकशताष्टाविंशत्यधिकाष्टसहस्रतमो (८१२८) भेदः प्रहरणकलिता इति नाम्ना ख्यातः। छन्दोमञ्जरी-वृत्तरत्नाकरयोः "प्रहरणकलिका" इति पाठः।

(झ) चतुर्दशाक्षरपादशक्वर्यधिकारे वसन्ततिलकालक्षणमाह—वसन्ततिलकेति। उद्धर्षिणीत्यादि।—जगद्दृशां लोकलोचनानाम् उद्धर्षिणी अतिशयहर्षजननी, आनन्दप्रदायिनी इति यावत्, तथा स्तनयोः कुचयोः भारेण गुर्वी भारवती, गुरुत्वात् अवनताङ्गी इत्यर्थः, तथा नीलोत्पलद्युतेः नीलोत्पलप्रभायाः मलिम्लुचौ तस्करौ,

त० भ० ज० ज० ग० ग०

ᴗ ᴗ – ᴗ – – – ᴗ – – ᴗ – ᴗ ᴗ

सिंहोन्नतत्रिकतटी कुटिलालकान्ता,

त० भ० ज० ज० ग० ग०

ᴗ ᴗ – ᴗ – – – ᴗ – – ᴗ – ᴗ ᴗ

कान्ता वसन्ततिलका नृपवल्लभाऽसौ॥ (झ)

अत्र पादान्ते यतिः।

## सिंहोन्नता काश्यपस्य॥ ९॥

इयमेव वसन्ततिलका काश्यपस्य आचार्य्यस्य मतेन सिंहोन्नता नाम भवति। पूर्वमेवोदाहरणम्। (ञ)

## उद्धर्षिणी सैतवस्य॥ १०॥

इयमेव वसन्ततिलका सैतवस्य आचार्य्यस्य मतेन उद्धर्षिणी नाम। पूर्वमेवोदाहरणम्। (ट)

---

अपहारके इत्यर्थः, "चौरैकागारिकस्तेनदस्युतस्करमोषकाः। प्रतिरोधिपरास्कन्दिपाटच्चरमलिम्लुचाः॥" इत्यमरः; लोचने चक्षुषी यस्याः सा, इन्दीवरविजयिनेत्रा, अत्र 'च' इत्यस्यातिदेशिकगुरुत्वम्; तथा सिंहस्येव सिंहत्रिकतटस्येव उन्नतं त्रिकतटं पृष्ठवंशाधोभागो यस्याः सा, कुटिलः कुञ्चितः अलकानां चूर्णकुन्तलानाम् अन्तः प्रान्तदेशो यस्याः सा, तथाभूता असौ वसन्ततिलकानाम्नी कान्ता ललना नृपवल्लभा राजप्रिया; पक्षे—तादृशसौन्दर्य्यशालिनी रमणीव वृत्तविशेषवसन्ततिलका अपि राजप्रिया सर्वेषां कमनीया च भवेदिति। अत्र "उद्धर्षिणी" "सिंहोन्नत" इति पदद्वयं वसन्ततिलकायाः उद्धर्षिणी सिंहोन्नतेति नामान्तरद्वयं सूचयति। शक्वर्य्यां चतुर्दशाक्षरपादप्रस्तारगत्या जायमानेषु भेदेषु नवशततयस्त्रिंशदधिकद्विसहस्रतमो (२९३३) भेदः वसन्ततिलकाख्यं वृत्तम्।

(ञ) मतान्तरेण वसन्ततिलकायाः नामान्तरप्रदर्शनार्थमाह—सिंहोन्नतेत्यादि।

(ट) वसन्ततिलकाया अन्यविधनामान्तरप्रदर्शनार्थं सूत्रान्तरमाह—उद्धर्षिणीति। एतत्सूत्रानन्तरं पुस्तकविशेषे "मधुमाधवी शाकल्यस्य" इति पाठो दृश्यते। शाकल्यस्य मते मधुमाधवी इति नामान्तरमपि वसन्ततिलकाया अस्ति इति

अतिशक्कर्य्याम्।—

चन्द्रावर्त्ता नौ नौ स्॥ ११॥

यस्य पादे नकाराश्चत्वारः सकारश्च, तद्वृत्तं चन्द्रावर्त्ता नाम। तत्रोदाहरणम्।—

न० न० न० न० स०

पटुजवपवन-चलितजललहरी-

न० न० न० न० स०

तरलितविहग-निचयरवमुखरम्।

न० न० न० न० स०

विकसितकमल-सुरभिशुचिसलिलं,

न० न० न० न० स०

विचरति पथिक-मनसि शरदि सरः॥

अत्र स्वरैर्वसुभिश्च यतिरित्याम्नायः। (ठ)

---

सम्मतम्। आर्षेयच्छन्दःसारे तथा अन्यत्र क्वचिदपि च तादृशपाठादर्शनादस्माभिरपि तादृशपाठः प्रत्याख्यातः। तथा चोक्तमार्षेये—"वसन्ततिलका तभौ। जौ गौ, सिंहोन्नता सा स्यात् मुनेरुद्धर्षिणी च सा॥" इत्यनन्तरमेव चन्द्रावर्त्ताच्छन्दसः लक्षणं दृश्यते। केचन "सिंहोन्नता" इत्यत्र "सिंहोद्धता" केचन च "शोभावती" इति पाठान्तरद्वयमपि स्वीकुर्वन्ति। शक्कर्य्यां चतुर्दशाक्षरवृत्तस्य प्रस्तारगत्या षोडशोन-चतुःशतोत्तरषोडशसहस्राणि (१६३८४) भेदाः जायन्ते; तेषु कियन्तोऽत्र प्रदर्शिताः, कियन्तश्च छन्दोमञ्जरी-वृत्तरत्नाकरादौ द्रष्टव्याः। अस्मत्कृताभिनवच्छन्दोमञ्जरीव्याख्यायां प्रस्तारसङ्ख्या अपि तेषां प्रदर्शिताः। शेषभेदाः सुधीभिः प्रस्तार्य्य आकरात् वा निजबुद्धितो वा बोधनीयाः।

(ठ) अनन्तरमतिशक्कर्य्यधिकारे पञ्चदशाक्षरपादानि छन्दांसि निर्देष्टुमादौ चन्द्रावर्त्तालक्षणमाह—चन्द्रावर्त्तेति। पटुजवेति।—शरदि शरत्काले पथिकमनसि

## मालर्त्तुनवकौ चेत् ॥ १२ ॥

सैव चन्द्रावर्त्ता माला नाम भवति, यदा षष्ठे नवमे च वर्णे यतिः। तत्रोदाहरणम्।—

न० न० न० न० स०

नवविकसित-कुवलयदलनयने !,

न० न० न० न० स०

निशमय नव-जलधरमिह गगने।

न० न० न० न० स०

अपनय रुष-मुपसर मम सविधं,

न० न० न० न० स०

यदि रतिसुख-मभिलषसि बहुविधम् ॥ (ड)

---

पान्थजनहृदये, पटुः अमन्दः प्रबल इत्यर्थः, जवः वेगो यस्य तादृशो यः पवनः तेन चलिता कम्पिता या जललहरी जलतरङ्गः तया तरलितानां चञ्चलितानां दोलायितानामित्यर्थः, विहगनिचयानां रवैः मुखरं शब्दितं, तथा विकसितानि प्रस्फुटितानि यानि कमलानि पद्मानि तैः सुरभि सुगन्धं शुचि निर्मलं पवित्रं सलिलं यस्य तादृशं सरः, विचरति चरति इत्यर्थः। "पञ्चदशमतिशक्करी" इत्युक्तत्वात् अतिशक्कर्याः पञ्चदशाक्षरपादता सिद्धैव। पञ्चदशाक्षरपादानां प्रस्तारे कृते अष्टषष्ट्युत्तरसप्तशताधिकद्वात्रिंशत्सहस्राणि (३२७६८) भेदा जायन्ते; तत्र चतुरशीत्युत्तरत्रिंशताधिकषोडशसहस्रतमो (१६३८४) भेदः चन्द्रावर्त्तेति नाम्ना प्रसिद्धः। स्वरेति।—स्वरैः सप्तभिरक्षरैः वसुभिरष्टाक्षरैश्च यतिरित्याम्नायः पारम्पर्य्योपदेशः। वृत्तस्यास्य एकगुरुकपादत्वात् श्लोकेऽस्मिन् चतुर्गुर्वात्मकचन्द्रावर्त्तेति नाम प्रवेशयितुं न शक्यम्। छन्दोमञ्जरी-वृत्तरत्नाकरयोरस्य "शशिकला" इति नामान्तरम्।

(ड) पञ्चदशाक्षरपादातिशक्कर्य्यधिकारे मालावृत्तमाह, मालेति।—ऋतवः षट्, षष्ठाक्षरे इत्यर्थः। सैवेति।—सा न-गणचतुष्टय-स-गणात्मिका चन्द्रावर्त्ता यदि स्वरैर्वसुभिश्च यतियुक्ता न भूत्वा षष्ठे नवमे च यतियुक्ता भवति, तदा माला-

**मणिगुणनिकरो वस्वृषयः ॥ १३ ॥**

सैव चन्द्रावर्त्ता मणिगुणनिकरो नाम भवति, यदा अष्टभिः सप्तभिश्च यतिः । तत्रोदाहरणम् ।—

न० न० न० न० स०

कथमपि निपतित-मतिमहति पदे,

न० न० न० न० स०

नरमनुसरति न, फलमनुपचितम् ।

---

नाम वृत्तम् । एतेन एवं ज्ञायते यत्—गणभेदेन यथा नामभेदो भवति यतिभेदेनापि तथा इति । नवेत्यादि ।—नवविकसिते अचिरप्रस्फुटिते कुवलयदले इव नयने चक्षुषी यस्याः सा तत्सम्बोधने, निशमय शृणु, मद्वचनमिति शेषः, इह अस्मिन् गगने आकाशमण्डले नवजलधरं नवीनमेघं, वर्षणोन्मुखमेघमिति यावत्, पश्य इति शेषः ; यदि बहुविधं नानाप्रकारं रतिसुखं सम्भोगानन्दम् अभिलषसि वाञ्छसि, तदा मम सविधं समीपम् उपसर आगच्छ ; "सविधम्" इत्यत्र "सचिवम्" इति पाठः बहुष्वेव मुद्रितपुस्तकेषु दृश्यते ; रुषं कोपम् अपनय दूरीकुरु । प्रस्तारसङ्ख्या पूर्ववत् । अत्र यतिमात्रभेदान्नामभेद इति मन्तव्यम् । गुरुचतुष्टयात्मकचन्द्रावर्त्तावत् द्विगुर्वात्मकमालेति नाम्नः एकगुरुकपादेऽस्मिन्नुदाहरणे प्रवेष्टुमशक्यत्वात् न तत् प्रवेशितम् । एतदर्थमेव छन्दोमञ्जरी-वृत्तरत्नाकरादौ "स्रक्" इति नामान्तरं वृत्तस्यास्य पठितम् ।

(ढ) यतिभेदात् पुनस्तस्या एव मणिगुणनिकर इति अन्यविधमपि नामान्तरम् ऋषिभिरङ्गीकृतं दर्शयति, मणिगुणेति ।—वसवः अष्टौ, ऋषयः सप्त । सैवेति ।—सा पूर्वलक्षणलक्षिता चन्द्रावर्त्ता एव सप्तभिरष्टाभिश्च यतियुक्ता न भूत्वा अष्टाभिः सप्तभिश्च यदि यतियुक्ता भवेत् तदा मणिगुणनिकरनाम वृत्तं भवेत् । कथमपीति ।—अनुपचितम् अपरिवर्त्तं भोगकालमनापद्यमानमित्यर्थः, फलं कथं केनापि प्रकारेण, कष्टसृष्ट्या इति यावत्, अतिमहति अतिविपुले पदे व्यवसितौ, उद्यमे इत्यर्थः, "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः ; निपतितमपि

न० न० न० न० स०

- - - - - - - - - - - - - - ᴗ

अपि वरयुवतिषु, कुचतटनिहितः,

न० न० न० न० स०

- - - - - - - - - - - - - - ᴗ

स्पृशति न वपुरिह, मणिगुणनिकरः ॥ (छ)

## मालिनी नौ म्यौ य् ॥ १४ ॥

यस्य पादे नकारौ मकार-यकारौ यकारश्च, तद्वृत्तं मालिनी नाम । पूर्वैव यतिः । तत्रोदाहरणम् ।—

न० न० म० य० य०

- - - - - - ᴗ ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ

अतिविपुलललाटं, पीवरोरःकपाटं,

न० न० म० य० य०

- - - - - - ᴗ ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ

सुघटितदशनोष्ठं, व्याघ्रतुल्यप्रकोष्ठम् ।

---

आरोपितमपीत्यर्थः, नरं व्यवसायिनमित्यर्थः, न अनुसरति नानुगच्छति ; उद्यमवानपि नरः अनागतभोगकाले उद्यमफलं भोक्तुं न समर्थो भवतीति निष्कर्षः । "अनुसरति" इत्यत्र "अनुसरसि" इति पाठः बहुपुस्तकसम्मतोऽपि अर्थबोधाननुकूलतया न समीचीनः । श्लोकं समर्थयितुमाह, अपीति ।—वरयुवतिषु पूर्णयौवनासु स्त्रीषु विषये कुचतटनिहितोऽपि स्तनदेशार्पितोऽपि ; "निहितः" इत्यत्र "निहतः" इति पाठे—कुचतटे विशेषेण प्राप्ताघातोऽपि, अत्यर्थं लुण्ठितोऽपीत्यर्थः, मणिगुणनिकरः रत्नहारपञ्चसूत्रनिचयः, वपुः युवत्याः शरीरं न स्पृशति स्प्रष्टुं न शक्नोति, अत्यभ्यन्तरस्थितत्वात् अनुपचितत्वाच्च इति भावः ।

(च) पञ्चदशाक्षरपादातिशक्वर्यां मालिनीलक्षणमाह—मालिनीति ।

म० म० म० य० य०

पुरुषमशनिलेखा-लक्षणं वीरलक्ष्मी-

म० म० म० य० य०

रतिसुरभियशोभि-र्मालिनीवाभ्युपैति ॥ (ख)

अतीत्यादि।—वीरलक्ष्मीः भटानां श्रीः, जयश्रीरित्यर्थः, अतिविपुलललाटम् अतिविपुलम् अत्यन्तप्रशस्तं ललाटं भालदेशः यस्य तं, पीवरोरःकपाटं पीवरं स्थूलम् उरः वक्षःस्थलं कपाटमिव यस्य तं विशालवक्षसम् इत्यर्थः, सुघटितदशनोष्ठं सुघटितौ सुचारुतया निर्मितौ दशनौष्ठौ दन्ताधरौ यस्य तं, विकृतदशनोष्ठयोर्दुर्भाग्यसूचकत्वादिति भावः, व्याघ्रतुल्यप्रकोष्ठं व्याघ्रेण व्याघ्रप्रकोष्ठेन इत्यर्थः, तुल्यः सदृशः प्रकोष्ठः कूर्परमणिबन्धयोः मध्यदेशो यस्य तं, "प्रकोष्ठो मणिबन्धस्य कूर्परस्यान्तरेऽपि च" इति मेदिनी, सुदृढप्रकोष्ठमित्यर्थः, अशनिलेखालक्षणम् अशनिलेखा वज्राकृतिरेखा एव लक्षणं चिह्नं यस्य तं, करे वज्रचिह्नस्य सौभाग्यसूचकत्वादिति भावः; एवं सुलक्षणोपेतं पुरुषम् अतिसुरभियशोभिः एवंलक्षणकपुरुषस्य दिगन्तामोदितसुरम्यकीर्त्तिभिः, आकृष्टेति शेषः, मालिनी मालिकारमणी इव "मालिनी मातृकाछन्दोभिदो-र्मालिकयोषिति" इति मेदिनी; अभ्युपैति समुपगच्छति। मालिनी यथा कुसुममाल्यादिप्रदानार्थं शोभनलक्षणं पुरुषं स्वयमेव गच्छति तथा जयश्रीरपैति भावः। "मालिनीव" इत्यत्र "मालिनी च" इति पाठे—वीरलक्ष्मीः मालिनी माल्यधारिणी सती तादृशं पुरुषं वरीतुं विजयमाल्यं वरमाल्यं वा हस्ते गृहीत्वा अभ्युपैति इत्यर्थः। मालिनीनाम वृत्तमपि सुलक्षणं काव्यरसिकं पुरुषं प्राप्नोतीत्यपरार्थो व्यज्यते। प्रोक्तप्रचदशाक्षरपादानां प्रस्तारे क्रियमाणे षट्शतद्विसप्तत्युत्तरचतुःसहस्रतमो (४६७२) भेदः मालिनीति नाम्ना ख्यातः। अतिशक्वर्यामत्र अष्टचत्वारिंशदधिकषट्शतोत्तरद्वात्रिंशत्सहस्रसङ्ख्यकप्रस्तारभेदेषु (३२७६८) यान्युक्तानि वृत्तानि ततोऽधिकान्यपि कतिपयानि वृत्तानि छन्दोमञ्जरी-वृत्तरत्नाकर-प्राकृतपिङ्गलादौ दृश्यन्ते; तत्र प्राकृतपिङ्गल वाणीभूषणादौ १०९२३ तमः प्रस्तारभेदः यद्वृत्तं "चामर" इति नाम्ना ख्यातं, छन्दोमञ्जरी-वृत्तरत्नाकरयोः पुनरस्य "तूनकम्" इति नाम ज्ञेयम्। तथा १४०४४ तमः प्रस्तारभेदः यद्वृत्तं "भ्रमरावली" इति नाम्ना प्राकृतपिङ्गलादौ ख्यातं, छन्दोमञ्जर्यान्तु तत् "नलिनी" इति नाम्ना प्रसिद्धम्। एवं १८०२८ तमः प्रस्तारभेदः यद्वृत्तं "मनहंसम्"

षष्ठी ।—

ऋषभगजविलसितं भ्रौ नौ न्गौ स्वरनवकौ ॥१५॥

यस्य पादे भकार-रेफौ नकारास्त्रयो गकारश्च, तद्वृत्तमृषभ-गजविलसितं नाम । सप्तभिर्नवभिश्च यतिः । तत्रोदाहरणम् ।—

भ० र० न० न० न० ग०

∪ – – ∪ – ∪ – – – – – – – – – ∪

आयतबाहुदण्ड-मुपचितपृथुहृदयं,

भ० र० न० न० न० ग०

∪ – – ∪ – ∪ – – – – – – – – – ∪

पीनकटिप्रदेश-मृषभगजविलसितम् ।

भ० र० न० न० न० ग०

∪ – – ∪ – ∪ – – – – – – – – – ∪

वीरमुदारसत्त्व-मतिशयगुणरसिकं,

भ० र० न० न० न० ग०

∪ – – ∪ – ∪ – – – – – – – – – ∪

श्रीरतिचञ्चलाऽपि, न परिहरति पुरुषम् ॥ (त)

इति नाम्ना ख्यातं, छन्दोमञ्जर्यादौ तत् "मानसहंसः" इति नाम्ना ख्यातम् इति ।
एवमन्येऽपि भेदाः स्वयमूहनीयाः ।

(त) अतिशक्करीं समाप्य साम्प्रतं षोडशाक्षरपादाष्ट्यधिकारे वृत्तानि विवक्षुः प्रथमम् ऋषभगजविलसिताख्यवृत्तमाह, ऋषभेत्यादि ।—स्वरनवकौ इत्यत्र स्वरशब्दः सप्तसङ्ख्याबोधकः । आयतेत्यादि ।—श्रीः लक्ष्मीः अतिचञ्चला अत्यन्तलोला अपि आयतबाहुदण्डम् आयतः दीर्घः बाहुदण्डः भुजदण्डः यस्य तम् आजानुलम्बित-भुजं, तथा उपचितपृथुहृदयम् उपचितं परिपुष्टं, मांसलमित्यर्थः, पृथु विशालं हृदयम् उरःस्थलं यस्य तं, "हृदयं मानसे वुक्कोरसोरपि नपुंसकम्" इति मेदिनी ; पीनकटिप्रदेशं पीनः स्थूलः कटिप्रदेशः यस्य तं, तथा ऋषभगजविलसितम् ऋषभ-वत् वृषवत् गजवत् हस्तिवच्च विलसितं चेष्टितं, शौर्य्यवीर्य्यगाम्भीर्य्यादिकं यस्य तं, वीरम् उदारसत्त्वम् उदारं महत्, "उदारो दातृमहतोः दक्षिणे चाभिधेयवत्" इति मेदिनी ; सत्त्वं बलं यस्य तं, तथा अतिशयगुणरसिकम् अत्यर्थं गुणानु-

अत्यष्टौ ।—

**हरिणी न्सौ म्रौ स्लौ ग्ऋतुसमुद्र-ऋषयः ॥१६॥**

यत्र पादे नकार-सकार-मकार-रेफाः सकार-लकार-गकाराश्च, तद्वृत्तं हरिणी नाम । षड्भिश्चतुर्भिः सप्तभिश्च यतिः । तत्रोदाहरणम् ।—

न० स० म० र० स० ल० ग०

कुवलयदल-श्यामा पीनो-न्नतस्तनशालिनी,

न० स० म० र० स० ल० ग०

चकितहरिणी-नेत्रच्छाया-मलिम्लुचलोचना ।

---

१ रागिणं पुरुषं न परिहरति न त्यजति, चिरं तदनुरक्ता तिष्ठति । षोडशाक्षरपादानां प्रस्तारोक्त्या प्रस्तारे कृते सर्वगुर्वादिसर्वलघ्वन्ताः पञ्चशतषट्त्रिंशदधिकपञ्चषष्टिसहस्र भेदाः ( ६५५३६ ) जायन्ते, तत्र च सप्तशतसप्तविंशत्यधिकद्वात्रिंशत्सहस्रतमो (३२७२७) भेदः ऋषभगजविलसितम् इति नाम्ना प्रसिद्धः । प्राकृतपिङ्गलादौ नराच नील चञ्चलाख्योऽन्येऽपि भेदा दर्शिताः । इह तु एक एव दर्शितः । तत्र प्राकृतपिङ्गलादौ यत् "नराच" इति नाम वृत्तं, तदेव वृत्तरत्नाकर परिशिष्टे छन्दोमञ्जर्यां च "पञ्चचामरम्" इति नाम्ना अभिहितम् । तथा प्राकृतादौ २ यत् "नील"नाम वृत्तं तत् छन्दोमञ्जरी वृत्तरत्नाकरपरिशिष्टयोः "अश्वगतिः" इति ख्यातम् । अन्ये च भेदाः ग्रन्थविस्तृतिशङ्कया न सन्निवेशिताः, तत्र तत्र द्रष्टव्याः । अष्टेः षोडशाक्षरपादत्वन्तु "चतुःषष्ट्यष्टिः" इत्युक्तलक्षणात् सुव्यक्तमेव ।

( ख ) अथ सप्तदशाक्षरपादामत्यष्टिं दर्शयितुं प्रथमं तत्रोक्तहरिणीवृत्तमाह, हरिणीत्यादि ।—ऋतुसमुद्र-ऋषयः इत्यत्र यतिश्चाभिरिति शेषः, तत्र ऋतवः षट्, समुद्राश्चत्वारः, ऋषयः सप्त । कुवलयेत्यादि ।—कुवलयदलश्यामा कुवलयदलवत् नीलोत्पलदलवत् श्यामा श्यामवर्णा, तथा पीनोन्नतस्तनशालिनी पीनाभ्यां स्थूलाभ्याम् उन्नताभ्यां तुङ्गाभ्यां स्तनाभ्यां कुचाभ्यां शालते शोभते या सा तादृशी,

न० स० म० र० स० ल०ग०

- - - - - ᴗ ᴗ ᴗ ᴗ ᴗ - ᴗ - - ᴗ - ᴗ

मनसिजधनु-र्ज्यानिर्घोषै-रिव श्रुतिपेशलै-

न० स० म० र० स० ल०ग०

- - - - - ᴗ ᴗ ᴗ ᴗ ᴗ - ᴗ - - ᴗ - ᴗ

र्मनसि ललना, लीलालापैः, करोति ममोत्सवम्॥

एतत् "ऋषभविलसितम्" इत्यपरे। (ख)

## पृथ्वी ज्सौ ज्सौ य्लौ ग् वसुनवकौ॥ १७॥

यस्य पादे जकार-सकारौ पुनस्तौ यकार-लकार-गकाराश्च, तद्वृत्तं पृथ्वी नाम। अष्टभिर्नवभिश्च यतिः। ततोदाहरणम्।—

ज० स० ज० स० य० ल० ग०

- ᴗ - - - ᴗ - ᴗ - - - ᴗ - ᴗ ᴗ ᴗ - ᴗ

कृताः समिति यत्नव-स्त्रिभुवने प्रकीर्णं यशः,

---

चकितहरिणीनेत्रच्छायामलिम्लुचलोचना चकितायाः चलायाः हरिण्याः या नेत्रच्छाया नयनकान्तिः तस्याः मलिम्लुचौ चौरौ लोचने चक्षुषी यस्याः सा, "मलिम्लुचो मासभेदे चौरज्वलनयोः पुमान्" इति मेदिनी; भीतहरिणीवदायत-चञ्चलनेत्रा इत्यर्थः, ललना कामिनी, मनसिजधनुर्ज्यानिर्घोषैः मनसि हृदये जायते इति मनसिजः कामः तस्य यत् धनुः पुष्पमयमिति भावः, तस्य ज्यानिर्घोषैः गुणशब्दैरिव श्रुतिपेशलैः श्रुतीनां श्रवणेन्द्रियाणां पेशलैः रुचिरैः, "पेशलो रुचिरे दक्षे" इति मेदिनी; कर्णरसायनैः, लीलालापैः सविलाससम्भाषणैः, मम मनसि चित्ते उत्सवम् उद्धर्षं, प्रीतिमित्यर्थः, "क्षण उद्धर्षः मह उद्धव उत्सवः" इत्यमरः; करोति जनयति। अत्र च षष्ठ-दशम-सप्तदशाक्षरेषु यतिः। सप्तदशाक्षर-पादात्यष्टौ प्रस्तारविधिना प्रस्तारे कृते सर्वगुर्वादिसर्वलघ्वन्ताः द्वासप्तत्युत्तरैक-त्रिंशत्सहस्राधिकैकलक्षभेदाः (१३१०७२) जायन्ते; तत्र च द्वादशाधिकैक-शतोत्तरषट्चत्वारिंशत्सहस्रतमो (४६११२) भेदः हरिणी इति नाम्ना प्रसिद्धः।

(ख) सप्तदशाक्षरपादे अत्यष्ट्यधिकारे पृथ्वीवृत्तलक्षणमाह, पृथ्वीत्यादि।—

ज० स० ज० स० य० ल०ग०

- ⏑ - - - - ⏑ - ⏑ - - - ⏑ - ⏑ ⏑ - -

कृतश्च गुणिनां गृहे, निरवधिर्महानुत्सवः ।

ज० स० ज० स० य० ल०ग०

- ⏑ - - - - ⏑ - ⏑ - - - ⏑ - ⏑ ⏑ - ⏑

त्वया कृतपरिग्रहे, क्षितिपवीर ! सिंहासने,

ज० स० ज० स० य० ल० ग०

- ⏑ - - - ⏑ - ⏑ - - - ⏑ - ⏑ ⏑ - -

नितान्तनिरवग्रहा, फलवती च पृथ्वी कृता ॥ (८)

वसुनवकौ इत्यत्र वसुः अष्टौ । यस्येति ।—पुनस्तौ जकार-सकारौ । हताः इत्यादि ।—क्षितिपवीर ! हे वीरश्रेष्ठपृथिवीपाल ! त्वया समिति युद्धे शत्रवः अरयः हताः विनाशिताः, तथा त्रिभुवने त्रिलोके यशः कीर्त्तिः प्रकीर्णं विस्तृतं, तवैति शेषः, गुणिनां गुणवतां गृहे आलये निरवधिः निर्नास्ति अवधिः सीमा यस्य तादृशः निरन्तरः, महान् अतिशयः उत्सवश्च कृतः, तथा सिंहासने सिंहाकारं सिंह इव वा राज्ञाम् आसनं तस्मिन् स्वर्णमयराजासने, "नृपासनन्तु यद्भद्रासनं सिंहासनन्तु तत् । हैमम्—" इत्यमरः ; कृतपरिग्रहे कृतः परिग्रहः स्वीकारः अधिकारः इत्यर्थः, यस्य तादृशे सति, रिपून् विजित्य त्वयि सिंहासने आरूढ़े सति इत्यर्थः, "वीरसिंहासने" इति समस्तपाठे तु—वीराणां शूराणां विक्रमशालिप्रतिपक्षभूपानामित्यर्थः, "शूरो वीरश्च विक्रान्तः" इत्यमरः, "क्षितिपवीर" इत्यत्र "सुदिनवीर" इति पाठे—सुदिनवीर ! हे प्रशस्तवीर ! वीरश्रेष्ठ इत्यर्थः ; पृथ्वी पृथिवी नितान्तनिरवग्रहा नितान्तः अतिशयः निर्नास्ति अवग्रहः वर्षाप्रतिबन्धः अनावृष्टिदोषः इत्यर्थः, यत्र सा तादृशी, "अवग्रहो दृष्टिरोधे प्रतिबन्धे गजालिके" इति मेदिनी ; तथा फलवती शस्यसम्पन्ना च कृता ॥ अथार्थान्तरमपि ध्वन्यते—त्वया पिङ्गलराजेन समिति सभायां शत्रवः छन्दोविचार-चिकीर्षवोऽन्ये प्रतिपक्षपण्डिताः हताः विनष्टाः, विचारेण पराभूता इत्यर्थः, अतः त्रिभुवने यशः प्रकीर्णम् एतादृशः पण्डितः अन्यो नास्ति एवम्भूता कीर्त्तिर्विस्तृता इत्यर्थः, ततश्च गुणिनां छन्दोऽलङ्कारादिविदुषां सहृदयानां गृहे महान् उत्सवः काव्यालापजनितप्रमोदः कृतश्च, तथा क्षितिपवीराणां वीर्य्यशालिनृपतीनां यत्

वंशपत्रपतितं भ्रौ न्भौ न्लौ ग् दिगृषयः ॥१८॥

यस्य पादे भकार-रेफ-नकार-भकार-नकार-लकार-गकारा भवन्ति, तद्वृत्तं वंशपत्रपतितं नाम। दशभिः सप्तभिश्च यतिः। तत्रोदाहरणम्।—

भ० र० न० भ० न० ल०ग०

∪ - - ∪ - ∪ - - - ∪ - - - - - - ∪

अद्य कुरुष्व कर्म सुकृतं, यदि परदिवसे,

भ० र० न० भ० न० ल० ग०

∪ - - ∪ - ∪ - - - ∪ - - - - - - ∪

मित्र! विधेयमस्ति भवतः, किमु चिरयसि तत्?।

भ० र० न० भ० न० ल०ग०

∪ - - ∪ - ∪ - - - ∪ - - - - - - ∪

जीवितमल्पकालकलना-लघुतरतरलं,

भ० र० न० भ० न० ल०ग०

∪ - - ∪ - ∪ - - - ∪ - - - - - - ∪

नश्यति वंशपत्रपतितं, हिमसलिलमिव ॥ (ध)

---

सिंहासनं तस्मिन् कृतपरिग्रहे स्वीकृते सर्वविधच्छन्दोग्रन्थेभ्यः सकलच्छन्दोग्रन्थस्य उत्कर्षविधानात् बुधसमाजेषु पराक्रान्तनृपतिवत् श्रेष्ठासनमधिकृते त्वयीति भावः, त्वया कृता रचिता पृथ्वी तदाख्यं वृत्तं नितान्तनिरवद्या सर्वथा प्रतिबन्धकशून्या, विशुद्धा इति यावत्, अतः फलवती च धन्या इत्यर्थः। सप्तदशाक्षराणां प्रस्तारे कृते सप्तशतपञ्चाशदधिकाष्टविंशतिसहस्रतमो ( १८७५० ) भेदः पृथ्वी इति नाम्ना प्रसिद्धः।

(ध) अथात्यष्ट्यधिकारे वृत्तान्तरं दर्शयति, वंशपत्रेति।—दशभिः सप्तभिश्चेति दिगृषयः इत्यस्यार्थः, दशम-सप्तदशाक्षरयोर्विरतिरिति यावत्। अद्येत्यादि।—मित्र! हे बन्धो! परदिवसे आगामिदिने भवतः सुकृतं पुण्यं कर्म विधेयं करणीयम् अस्ति विद्यते यदि चेत् तत् तदा अद्य अस्मिन् दिवसे कुरुष्व विधेहि, किमु चिरयसि ?

# मन्दाक्रान्ता म्भौ न्तौ त्गौ ग् समुद्रर्त्तुस्वराः॥१९॥

यस्य पादे मकार-भकार-नकारास्तकारौ गकारौ च, तद्वृत्तं मन्दाक्रान्ता नाम। चतुर्षु षट्सु सप्तसु च यतिः।

तत्रोदाहरणम्।—

म० भ० न० त० त० ग०ग०

⏑ ⏑ ⏑ ⏑ – – – – – ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑

प्रत्यादिष्टं, समरशिरसः, कां दिशं प्राप नष्टं,

म० भ० न० त० त० ग० ग०

⏑ ⏑ ⏑ ⏑ – – – – – ⏑ ⏑ – ⏑ ⏑ . ⏑ ⏑

त्वं निःशेषं, कुरु रिपुबलं, मार्गमासाद्य सद्यः।

म० भ० न० त० त० ग०ग०

⏑ ⏑ ⏑ ⏑ . – – – – – ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑

किं नाशीषोः, परिणतधियां, नीतियोग्योपदेशं?

म० भ० न० त० त० ग० ग०

⏑ ⏑ ⏑ ⏑ – – – – – – ⏑ ⏑ – ⏑ ⏑ – ⏑ ⏑

मन्दाक्रान्ता, भवति फलिनी, वाऽरिलक्ष्मीः क्षयाय॥ (न)

---

कथं विलम्बसे? एतत् सुकृतं कर्म श्वः करिष्यामीति ते निश्चितं चेत् तदा तत् कर्म अद्यैव कुरुष्व, कथं विलम्बसे? इति समुदितार्थः। तत्र हेतुमाह, जीवितमित्यादि। —अल्पकालकलनालघुतरतरलम् अल्पकालेन यत्किञ्चित्क्षणेनैव कलनया ग्रसनेन, कालकर्तृकमिति भावः, लघुतरतरलम् अत्यन्तचञ्चलं क्षणमात्रेणैव कालकवलीभवन-स्वभावादत्यन्तमस्थायि जीवितं जीवनं वंशपत्रपतितं वंशानां वेणूनां तृणजाति-विशेषाणामित्यर्थः, पत्रेषु पर्णेषु पतितं गलितं हिमसलिलं शिशिरजलमिव नश्यति विनष्टं भवति। सप्तदशाक्षरप्रस्तारे नवशतचतुरशीत्यधिकचतुःषष्टिसहस्रतमो (६४९८४) भेदो वंशपत्रपतितमिति नाम्ना ख्यातः।

(न) अत्यष्ट्यधिकारे सप्तदशाक्षरपादे अपरं वृत्तमाह, मन्देत्यादि।—समुद्रर्त्तु-स्वराः समुद्राः चत्वारः ऋतवः षट् स्वराः सप्त, चतुर्थ-दशम-सप्तदशाक्षरेषु यति-

## शिखरिणी य्मौ न्सौ भ्लौ ग्ऋतुरुद्राः ॥ २० ॥

यस्य पादे यकार-मकार-नकार-सकार-भकार-लकार-गकारा भवन्ति, तद्वृत्तं शिखरिणी नाम। षट्स्वेकादशसु च यतिः। तत्रोदाहरणम्।—

य० म० न० स० भ० ल०ग०

- ᴗ ᴗ ᴗ ᴗ ᴗ  - - -  - - ᴗ ᴗ  - -  - ᴗ

यशःशेषीभूते, जगति नरनाथे गुणनिधौ,

य० म० न० स० भ० ल० ग०

· ᴗ ᴗ ᴗ ᴗ ᴗ  - - - - - ᴗ ᴗ  - - - ᴗ

प्रवृत्ते वैराग्ये, विषयरसनिष्क्रान्तमनसाम्।

---

रित्यर्थः। प्रत्यादिष्टमिति।—समरशिरसः युद्धक्षेत्रस्य पुरोभागात् प्रत्यादिष्टं निराकृतं, पराजितमित्यर्थः, रिपुबलं शत्रुसैन्यं कां दिशं कस्यां दिशि प्राप ? गतवान् ? त्वं सद्यः अचिरेण मार्गं पन्थानम् आसाद्य प्राप्य, यत्र यत्र पलायनसम्भावना तत्र तत्र गत्वा इत्यर्थः, नष्टम् अदृश्यतां गतं रिपुबलं निःशेषं कुरु निर्मूलं विधेहि इत्यर्थः ; यद्वा—कां दिशं प्राप ? इति कस्यचित् प्रश्नः। नष्टमिति अपरस्य प्रत्युक्तिः। पुनस्तदुक्तिमाह —त्वमित्यादि। पलायमानः शत्रुः किमिति पथि अनुसन्धाय हन्तव्यः इत्याह, किमित्यादि।—परिणतधियां परिणता सदसद्विवेकशालिनी धीः येषां तेषां परिपक्वबुद्धीनामित्यर्थः, नीतियोग्योपदेशं नीतिशास्त्रानुमोदितोपदेशवचनमित्यर्थः, किं नाश्रौषीः ? न श्रुतवान् ? अश्रवणे दोषमाह, मन्देत्यादि।—परिलघ्वीः शत्रुश्रीः, मन्दाक्रान्ता अल्पाक्रान्ता सती फलिनी फलवती आक्रमणतासामर्थ्यप्रकटनात् परिणामे भययुक्ता इति भावः, वा अथवा अयाय आक्रमणकारिणां विनाशाय भवति, सकृदल्पाक्रमणेन सञ्जातकोपाः रिपवः प्रतिपक्षाः शक्तिहीना इति विविच्य तान् विनाशयितुमेव यतन्ते इति भावः। सप्तदशाक्षरप्रस्तारे नवशतैकोनविंशदधिकाष्टादश-सहस्रतमो ( १८९२९ ) भेदः मन्दाक्रान्तानाम्ना ख्यातः।

( प ) अत्यष्टिच्छन्दसि वृत्तान्तरमाह, शिखरिणीत्यादि।—ऋतुरुद्राः ऋतवः षट्, रुद्राः एकादश, षष्ठाक्षरे सप्तदशाक्षरे च यतिरित्यर्थः। यशः इत्यादि।-

य०  म०  न०  स०  भ० ल० ग०

- ᴗ ᴗ ᴗ ᴗ ᴗ - - - - - ᴗ ᴗ - - - ᴗ

इदानीमस्माकं, घनतरुलतां निर्झरवतीं,

य०  म०  न०  स०  भ० ल० ग०

- ᴗ ᴗ ᴗ ᴗ ᴗ - - - - - ᴗ ᴗ - - - ᴗ

तपस्तप्तुं चेतो, भजति गिरिमालां शिखरिणीम् ॥ (५)

धृत्याम् ।—

## कुसुमितलतावेल्लिता म्तौ न्यौ याविन्द्रियर्त्तुस्वराः ॥ २१ ॥

यस्य पादे मकार-तकार-नकारा यकारद्वयञ्च, तद्वृत्तं

---

गुणनिधौ गुणानां शूरत्वादीनां निधौ आधारे नरनाथे पृथिवीपतौ जगति पृथिव्यां यशःशेषीभूते यशः कीर्त्तिरेव शेषीभूतम् अवशिष्टं यस्य तादृशे सति यशोमात्रावशिष्टे सति, देहं विहाय परलोकं प्रस्थिते सतीत्यर्थः, "जगति नरनाथे" इत्यत्र "हृदि गगननाथे" इति पाठे—हृदिगगननाथे हृदाकाशाधीश्वरे, मनःप्रह्लादके हृदयाधीशे इत्यर्थः ; विषयरसनिष्क्रान्तमनसां विषयरसात् इन्द्रियार्थभोगवासनायाः निष्क्रान्तं विरतं मनः चित्तं येषां तेषां तादृशानामस्माकमिदानीं वैराग्ये उपरतौ च प्रवृत्ते प्रारब्धे, नरनाथवियोगेन निर्वेदे सञ्जाते इत्यर्थः, चेतः मनः तपः तप्तुं तपस्यां कर्त्तुं घनतरुलतां घनाः सान्द्राः तरवः वृक्षाः लताश्च यत्र तां तादृशीं, तथा निर्झरवतीं प्रस्रवणोदकप्रवाहयुक्तां, "निर्झरवतीम्" इत्यत्र "निर्जरवतीम्" इति पाठे—अमरवृन्दाधिष्ठिताम् ; शिखरिणीं शृङ्गविशिष्टां गिरिमालां पर्वतश्रेणीं भजति आश्रयति । "घनतरुलतां······शिखरिणीम्" इत्यत्र "घनतरुलता निर्झरवती । तपस्तप्तुं चेतो हरति गिरिमाला शिखरिणी" इति पाठान्तरं दृश्यम । अस्माकं चेतः शिखरिणीनाम वृत्तं भजति मनोज्ञत्वेन वाञ्छति इत्यर्थश्च ध्वनयति । अस्य सप्तदशाक्षरप्रस्तारस्य त्रिशतविंशदुत्तरैकोनषष्टिसहस्रतमो ( ५९३३० ) भेदः शिखरिणी इति नाम्ना प्रसिद्धः । भूषणे प्राकृतपिङ्गले च ३८७२२ तमः प्रस्तारभेदः मालाधरनामवृत्तविशेषः अधिकतया दृश्यते । एवमन्येऽपि भेदाः स्वयं प्रस्तार्य परिकल्पनीयाः, ग्रन्थविस्तृतिशङ्कया नास्माभिरत्र दर्शिताः ।

कुसुमितलतावेल्लिता नाम। पञ्चसु षट्सु सप्तसु च यतिः।

तत्रोदाहरणम्।—

म० त० न० य० य० य०

ऽऽऽऽऽ ऽ।।।।।ऽ ।ऽऽ।ऽऽ।ऽऽ

धन्यानामेताः, कुसुमितलता-वेल्लितोत्फुल्लवृक्षाः,

म० त० न० य० य० य०

ऽऽऽऽऽ ऽ।।।।।ऽ ।ऽऽ।ऽऽ।ऽऽ

सोत्कण्ठं कूजत्-परभृतकला-ऽऽलापकोलाहलिन्यः।

म० त० न० य० य० य०

ऽऽऽऽऽ ऽ।।।।।ऽ ।ऽऽ।ऽऽ।ऽऽ

मध्वादौ माद्यन्-मधुकरकुलो-द्गीतझङ्काररम्या,

म० त० न० य० य० य०

ऽऽऽऽऽ ऽ।।।।।ऽ ।ऽऽ।ऽऽ।ऽऽ

ग्रामान्तःस्रोतः-परिसरभुवः, प्रीतिमुत्पादयन्ति॥ (फ)

---

(फ) अत्यष्ट्यधिकारं समाप्य साम्प्रतं धृत्यधिकारे अष्टादशाक्षरपादे एकमेव कुसुमितलतावेल्लितालक्षणमाह, कुसुमितेत्यादि।—इन्द्रियर्त्तुस्वराः इन्द्रियाणि पञ्च, ऋतवः षट्, स्वराः सप्त, पञ्च-षट्-सप्ताक्षराणि, पञ्चमैकादशाष्टादशाक्षरेषु यतिरित्यर्थः। धन्यानामित्यादि।—कुसुमितलतावेल्लितोत्फुल्लवृक्षाः कुसुमिताभिः पुष्पिताभिः लताभिः वेल्लिताः वेष्टिताः उत्फुल्लाः प्रफुल्लाः, कुसुमोद्गमेन जातहर्षा इव प्रतीयमाना इत्यर्थः, वृक्षाः तरवः यत्र ताहृश्यः, सोत्कण्ठं सोत्सुकं यथा तथा कूजत्परभृतकलालापकोलाहलिन्यः कूजन्तः कुहूरवं कुर्वन्तः ये परभृताः कोकिलाः तेषां कलालापैः अव्यक्तमधुरध्वनिभिः कोलाहलिन्यः कलकलायमानाः, तथा मध्वादौ वसन्तारम्भे माद्यन्मधुकरकुलोद्गीतझङ्काररम्याः माद्यन्तः मत्ततां गच्छन्तः ये मधुकराः भ्रमरास्तेषां कुलैः मधुरास्फुटैः उद्गीतझङ्कारैः गुञ्जितध्वनिभिः रम्याः मनोहराः एताः प्रत्यक्षदृश्यमानाः, ग्रामान्तःस्रोतःपरिसरभुवः ग्रामाणाम् अन्तः मध्ये स्रोतः जलप्रवाहो यस्याः तस्याः नद्या इत्यर्थः, परिसरभुवः पर्य्यन्तप्रदेशाः धन्यानां सुकृतिनां प्रीतिम् आनन्दम् उत्पादयन्ति जनयन्ति। अत्र प्रस्तारनियमेन अष्टादशाक्षरपादानां प्रस्तारे

अतिधृतौ।—

**शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्य-**

**ऋषयः॥ २२॥**

यस्य पादे मकार-सकारौ जकार-सकारौ तकारौ गकारश्च भवति, तद्वृत्तं शार्दूलविक्रीडितं नाम। द्वादशभिः सप्तभिश्च यतिः। तत्रोदाहरणम्।—

म० स० ज० स० त० त० ग०

ᴗ ᴗ ᴗ - - ᴗ - ᴗ - - - ᴗ ᴗ ᴗ - ᴗ ᴗ - ᴗ

कम्बुग्रीवमुदग्रबाहुशिखरं, रक्तान्तदीर्घेक्षणं,

म० स० ज० स० त० त० ग०

ᴗ ᴗ ᴗ - - ᴗ - ᴗ - - - ᴗ ᴗ ᴗ - ᴗ ᴗ - ᴗ

शालप्रांशुशरीरमायतभुजं, विस्तीर्णवक्षःस्थलम्।

---

अत्र सर्वगुर्वादिसर्वलघ्वन्ताः एकशतचतुश्चत्वारिंशदधिकद्विषष्टिसहस्रोत्तरद्विलक्षभेदाः (२६२१४४) भवन्ति ; तत्र षट्शतसप्तपञ्चाशदधिकसप्तत्रिंशत्सहस्रतमो (३७८५७) भेदः कुसुमितलतावेल्लितेति नाम्ना प्रसिद्धः। इह एक एव प्रस्तारभेदः दर्शितः ; प्राकृतपिङ्गल-वाणीभूषणादौ तु कतिचित् अन्ये भेदाः प्रदर्शिताः। तत्र चतुःशत सप्तपञ्चाशदुत्तरत्रिसहस्रतमो (१४५७) भेदः "मञ्जरी" इति नाम्ना ख्यातः। तथा एकोनविंशत्यधिकत्रिनवतिसहस्रतमो (९३०१९) भेदः "चर्चरी" इति नाम्ना प्रसिद्धं यद्वृत्तं तत् छन्दोमञ्जरी-वृत्तरत्नाकरयोः "हरनर्तनम्" इति नाम्ना ख्यातम्। तथा चतुःशतपञ्चाशदधिकसप्तविंशत्सहस्रतमो (१७४५०) भेदः "क्रीडाचन्द्र" इति नाम्ना ख्यातं यद्वृत्तं तत् छन्दोमञ्जरी-वृत्तरत्नाकरयोः "क्रीडाचक्रम्" इति नाम्ना ख्यातम्। अन्ये च भेदाः स्वयं प्रस्तार्य्य वेदितव्याः इति।

(च) अतिधृत्यधिकारे एकोनविंशत्यक्षरपादं एकमेव शार्दूलविक्रीडिताख्यं वृत्तमाह, शार्दूलेत्यादि।—आदित्य-ऋषयः आदित्याः द्वादश, ऋषयः सप्त, आदौ द्वादशाक्षरे तदनन्तरं सप्तमाक्षरे च यतिः, एवञ्च द्वादशाक्षरे एकोनविंशाक्षरे च

म० स० ज० स० त० त० गं०

ᴗ ᴗ ᴗ – – ᴗ – ᴗ – – – ᴗ ᴗ ᴗ – ᴗ ᴗ – ᴗ

कोलस्कन्धमनुद्धतं परिजने, गम्भीरसत्यस्वरं;

म० स० ज० स० त० त० गं०

ᴗ ᴗ ᴗ – – ᴗ – ᴗ – – – ᴗ ᴗ ᴗ – ᴗ ᴗ – ᴗ

राज्यश्रीः समुपैति वीरपुरुषं, शार्दूलविक्रीडितम् ॥ (वं)

धतिरित्यर्थः । कम्बुग्रीवमित्यादि ।—राज्यश्रीः राजलक्ष्मीः कम्बुग्रीवं कम्बुवत् शङ्ख-ग्रीवावत् ग्रीवा गलदेशो यस्य तं रेखात्रययुक्तग्रीवमित्यर्थः, तथा उदग्रबाहुशिखरम् उदग्रे उन्नते बाह्वोः भुजयोः शिखरे अग्रभागौ ऊर्ध्वदेशौ इति यावत, यस्य तं, "शिखरोऽस्त्री द्रुमाग्रेऽद्रि-शृङ्गे पुलककक्षयोः । पक्वदाडिमबीजाभ-माणिक्य-शकलाग्रयोः" इति मेदिनी ; उन्नतभुजाग्रदेशमित्यर्थः, तथा रक्तान्तदीर्घचक्षुषं रक्तान्ते रक्तवर्णप्रान्ते दीर्घे आयते च ईक्षणे चक्षुषी यस्य तथाविधं, शालप्रांशुशरीरं शालवत् तदाख्यवृक्षविशेष इव "प्राकारवृक्षयोः शालः शालः सर्जतरुः स्मृतः" इति यादवः ; प्रांशु उन्नतं शरीरं देहो यस्य तम्, "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे" इत्यमरः ; तथा आयतौ दीर्घौ भुजौ यस्य तम् आजानुलम्बितबाहुमित्यर्थः, विस्तीर्णवक्षःस्थलं विस्तीर्णं प्रशस्तं वक्षःस्थलम् उरःप्रदेशः यस्य तं, व्यूढोरस्को वृषस्कन्धः शालप्रांशुर्महाभुजः" इत्यनु-रूपं, कोलस्कन्धं कोलवत् शूकरवत् स्कन्धः अंसदेशो यस्य तं स्थूलस्कन्धदेशं, "कोलो ना शूकरे भेले कोलं बदरे... ना पुंसि तयोः ..." इति मेदिनी ; तथा परिजने स्वजने अनुद्धतम् अप्र-चण्डं, प्रसन्नमित्यर्थः, गम्भीरसत्यस्वरं गम्भीरः सत्यः तथ्यात्मकश्च स्वरः कण्ठध्वनिर्यस्य तं गम्भीरस्वरं सत्यताव्यञ्जकस्वरश्चेत्यर्थः, "सत्यं कृते च शपथे तथ्ये त्रिषु तु तद्वति" इति मेदिनी ; "गम्भीरसत्यस्वरम्" इत्यत्र "गम्भीरसत्त्वस्वरम्" इति पाठः समीचीनः, "स्वरे सत्त्वे च नाभौ च त्रिषु गम्भीरता शुभा" इत्युक्तत्वात् । "गम्भीरघोरस्वनम्" इति क्वचित पाठः ; तथा शार्दूलविक्रीडितं शार्दूलवत् व्याघ्रवत् विक्रीडितं चेष्टितं यस्य तं व्याघ्रसदृशपराक्रमशालिनमित्यर्थः, एतादृशं वीरपुरुषं समुपैति प्राप्नोति, एतादृशः वीरपुरुष एव राज्यं भुङ्क्ते इति भावः । एकोनविंशत्यक्षरपादे अतिधृतिच्छन्दसि प्रस्तारविधिना प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताः द्विशताष्टाशीत्यधिक-चतुर्विंशतिसहस्रोत्तरपञ्चलक्षभेदाः (५२४२८८) जायन्ते, तत्र च त्रिशतसप्त-त्रिंशदधिकैकोनपञ्चाशत्सहस्रोत्तरैकलक्षतमो (१४९३३७) भेदः शार्दूलविक्रीडित-

इदानीं कृतिः प्रकृतिराकृतिर्विकृतिः सङ्कृतिरभिकृति-रुत्कृतिश्चेति सप्त कृतयः क्रमेणैकाक्षरवृद्ध्योदाह्रियन्ते । (भ)

तत्र कृतौ ।—

**सुवदना म्रौ भ्नौ य्भौ ल्गावृषिस्वरर्त्तवः ॥२३॥**

यस्य पादे मकार-रेफ-भकार-नकार-यकार-भकार-लकार-गकारा भवन्ति, तद्वृत्तं सुवदना नाम । सप्तसु सप्तसु षट्सु च यतिः । तत्रोदाहरणम् ।—

म० र० भ० न० य० भ० ल०ग०

ᴗ ᴗ ᴗ ᴗ - ᴗ ᴗ - - - - - - - ᴗ ᴗ ᴗ - - - ᴗ

या पीनोद्गाढतुङ्ग-स्तनजघनघना-ऽऽभोगालसगति-

म० र० भ० न० य० भ० ल०ग०

ᴗ ᴗ ᴗ ᴗ - ᴗ ᴗ - - - - - - - ᴗ ᴗ ᴗ - - - ᴗ

यस्याः कर्णावतंसोत्-पलरुचिजयिनी, दीर्घे च नयने ।

---

लिति नाम्ना प्रसिद्धः । प्राकृतपिङ्गलादौ एतदतिरिक्ताः पुनरन्येऽपि प्रस्तारभेदाः प्रदर्शिताः ; तत्र पञ्चविंशत्यधिकैकसहस्रतमो ( १०२५ ) भेदः "चन्द्रः" इति नाम्ना ख्यातः । तथा प्रस्तारगत्या लक्षद्वयं द्वाषष्टिसहस्राणि पञ्चचत्वारिंशदधिकैकशत-तमो ( २६२१४५ ) भेदः "धवलम्" इति नाम्ना प्रसिद्धः । एवं पूर्वोक्तरीत्या प्रस्तार-गत्या सप्तदशाधिकैकविंशतिसहस्राक्षरचतुर्लक्षतमो ( ४२१०१७ ) भेदः "शम्भुः" इति नाम्ना प्रसिद्धः । अन्ये च भेदाः छन्दोमञ्जरी-वृत्तरत्नाकरपरिशिष्टयोः द्रष्टव्याः ।

( भ ) "प्रकृत्या चोपसर्गवर्जितः" ( ४।४ पि० ) इत्यारभ्य विलोमक्रमेण "चतुः-शतमुत्कृतिः" ( ४।१ पि० ) इत्यन्तसूत्रचतुष्टयेन उक्तानि कृत्यादीन्युत्कृत्यन्तानि छन्दांसि दर्शयितुमाह, इदानीमित्यादि ।—क्रमेण एकाक्षरवृद्ध्या कृतिः विंशत्यक्षरा प्रकृतिरेक-विंशत्यक्षरा इत्यादिरूपेण उत्तरोत्तरम् एकैकाक्षरवर्द्धनेन ।

( म ) "अशीत्यक्षरं कृतिः" इत्युक्तत्वात् विंशत्यक्षरपादकृत्यधिकारे सुवदना-वृत्तमाह, सुवदनेति ।—ऋषिस्वरर्त्तवः ऋषयः सप्त, स्वराः सप्त, ऋतवः षट्, सप्तम-सप्तम-षष्ठाक्षरेषु यतिरित्यर्थः, ततश्च सप्तम-चतुर्दश-विंशाक्षरेषु यतिरिति

म० र० भ० न० य० भ० ल०ग०

श्यामा सीमन्तिनीनां, तिलकमिव मुखे, या च त्रिभुवने,

म० र० भ० न० य० भ० ल० ग०

सम्प्राप्ता साम्प्रतं मे, नयनपथमसौ, दैवात् सुवदना ॥ (य)

## ग्लिति वृत्तम् ॥ २४ ॥

यस्य पादे गकार-लकाराः क्रमेण भवन्ति, तद्वृत्तं वृत्तं नाम। क्रतिप्रकारेण यावद्भिरेव विंशत्यक्षराणि पूर्य्यन्ते तावतां ग्लां ग्रहणम् । तत्रोदाहरणम् ।—

---

निष्कर्षः। सेत्यादि।—या सुवदना इत्यर्थः, पीनोल्लाढतुङ्गस्तनजघनघनाभोगालसगतिः पीनयोः स्थूलयोः उल्लाढतरयोः अत्यन्तमुन्नतयोश्च स्तनयोः तथा जघनयोश्च घनाभोगेन अत्यन्तपूर्णतया, स्तनजघनगौरवेणेत्यर्थः, अलसा मन्दा गतिर्गमनं यस्याः सा तादृशी, तथा यस्याः सुलनायाः नयने चक्षुषी कर्णावतंसोत्पलरुचिजयिनी कर्णावतंसस्य श्रोत्रभूषणीकृतस्य उत्पलस्य नीलपद्मस्य रुचिजयिनी शोभापराभवकारिणी, तथा दीर्घे विशाले च, आकर्णविश्रान्ते इत्यर्थः, या च श्यामा "शीते सुखोष्णसर्वाङ्गी" इत्यादिलक्षणान्विता, तथा मुखे मुखविषये त्रिभुवने जगत्त्रितये सीमन्तिनीनां वरवर्णिनीनां तिलकमिव भूषणमिव, या च मुखसौन्दर्य्ये स्त्रीणां भूषणस्वरूपा, एवं पूर्वोक्तलक्षणान्विता असौ सुवदना सुमुखी ललना दैवात् भाग्यवशात् साम्प्रतम् अधुना मे मम नयनपथं नेत्रगोचरतामित्यर्थः, सम्प्राप्ता गता। अत्र प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताः पञ्चशतषट्सहस्राधिकाष्टचत्वारिंशल्लक्षोत्तरदशलक्षभेदा (१०४८५७६) भवन्ति ; तत्र अष्टशतत्रयस्त्रिंशदधिकषट्षष्टिसहस्रोत्तरपञ्चलक्षतमो (५६६८३३) भेदः सुवदनेति नाम्ना प्रसिद्धः।

(य) विंशत्यक्षरपादकृत्यधिकारे वृत्तनामकमपरं छन्द आह, ग्लितीति।—ग् गुरु ल् लघु, अक्षरमिति शेषः। यस्येति।—यस्य वृत्तस्य पादे पर्य्यायक्रमेण यावद्भिः गुरुलघुभिरक्षरैर्विंशतिसङ्ख्याः पूर्य्यन्ते तावद्भिरक्षरैः विरचितं छन्दः वृत्तमिति संज्ञा

ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल

⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ –

जन्तुमात्रदुःखकारि कर्म निर्मितं भवत्यनर्थहेतु,

ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल

⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ –

तेन सर्वमात्मतुल्यमीक्षमाण उत्तमं सुखं लभस्व ।

ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल

⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ –

विद्धि बुद्धिपूर्वकं ममोपदेशवाक्यमेतदादरेण,

ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल ग ल

⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ – ⏑ –

वृत्तमेतदुत्तमं महाकुलप्रसूतजन्मनां हिताय ॥

अत्र पादान्ते यतिः । (य)

---

भवते । जन्तुमात्रेत्यादि ।—निर्मितं कृतं, स्वानुष्ठितमित्यर्थः, जन्तुमात्रस्य सर्वप्राणिनः दुःखकारि क्लेशजनकं कर्म, अनर्थहेतु अशुभकारणं भवति, तेन हेतुना सर्वं निखिलप्राणिनम् आत्मतुल्यं स्वसदृशम् ईक्षमाणः पश्यन्, त्वमिति शेषः, उत्तमं प्रकृष्ट सुखं निर्वृतिं लभस्व प्राप्नुहि, सर्वभूतेषु आत्मवद्दर्शने तेषां दुःखजनककर्मणि प्रवृत्तिर्नैव भविष्यति, तेन च उत्तमं सुखं लप्स्यते इत्यभिप्रायः। एतत् वृत्तं सर्वभूतेषु आत्मवद्दर्शनरूपव्यवहारं महाकुलप्रसूतजन्मनां महाकुले श्रेष्ठवंशे प्रसूताः उत्पन्ना ये जनास्तेभ्यः जन्म उत्पत्तिः येषां तेषां श्रेष्ठवंशजातानां हिताय शुभाय उत्तमं श्रेष्ठम्, अत एव एतत् पूर्वोक्तं मम उपदेशवाक्यं मदीयहितभाषणम्, आदरेण श्रद्धया बुद्धिपूर्वकं ज्ञानपुरःसरं सावहितमित्यर्थः, विद्धि जानीहि, अवधारय इत्यर्थः । विंशत्यक्षरप्रस्तारस्य एकपञ्चाशदधिकैकोनसप्ततिसहस्रोत्तरषड्लक्षतमो (६६९०५१) भेदो वृत्तनाम्ना ख्यातः । इदमेव वृत्तं प्राकृतपिङ्गल-वाणीभूषणयोः "गण्डका" इति नाम्ना ख्यातम् । अन्ये च भेदाः छन्दोमञ्जर्यादौ द्रष्टव्याः ।

प्रकृती।—

**स्रग्धरा म्रौ भ्नौ यौ य् त्रिःसप्तकाः॥ २५॥**

यस्य पादे मकार-रेफ-भकार-नकाराः त्रयश्च यकारा भवन्ति, तद्वृत्तं स्रग्धरा नाम। सप्तसु सप्तसु सप्तसु च यतिः।

तत्रोदाहरणम्।—

म० र० भ० न० य० य० य०

रेखाभ्रूः शुभ्रदन्त-द्युतिहसितशर-च्चन्द्रिकाचारुमूर्त्ति-

म० र० भ० न० य० य० य०

र्माद्यन्मातङ्गलीला-गतिरतिविपुला-ऽऽभोगतुङ्गस्तनी या।

म० र० भ० न० य० य० य०

रम्भास्तम्भोपमोरू-रलिमलिनघन-स्निग्धधम्मिल्लहस्ता,

म० र० भ० न० य० य० य०

बिम्बोष्ठी रक्तकण्ठी, दिशतु रतिसुखं, स्रग्धरा सुन्दरीयम्॥ (२)

---

(२) एकविंशत्यक्षरपादप्रकृत्यधिकारे स्रग्धरालक्षणमाह, स्रग्धरेत्यादि।—त्रिःसप्तकाः त्रीणि सप्ताक्षराणि यतिस्थानानीत्यर्थः, ततश्च सप्तम-चतुर्दशैकविंशत्यक्षरेषु यतिरिति निष्कर्षः। रेखाभ्रूरिति।—या रेखाभ्रूः रेखे रेखाकारे भ्रुवौ यस्याः सा तादृशी, चित्रितवन्मनोज्ञभ्रूयुगला इत्यर्थः, तथा शुभ्रदन्तद्युतिहसितशरच्चन्द्रिका-चारुमूर्त्तिः शुभ्राणां श्वेतानां दन्तानां दशनानां द्युतिभिः कान्तिभिः हसिता अवज्ञाता शरच्चन्द्रिका शारदीयज्योत्स्ना यया सा अत एव चारुः मनोज्ञा मूर्त्तिः यस्याः सा तादृशी, माद्यन्मातङ्गलीलागतिः माद्यन् मत्ततामधिगच्छन् यो मातङ्गः गजः तस्य लीलाऽगतिवत् गतिः सविलासगमनं यस्याः सा, मत्तगजेन्द्रगमना इत्यर्थः, तथा

अाकृती।—

**भद्रकं भ्रौ न्रौ न्रौ न्गौ दिगादित्याः ॥२६॥**

यस्य पादे भकार-रेफौ नकार-रेफौ पुनर्नकार-रेफौ नकार-गकारौ च भवतः, तत् वृत्तं भद्रकं नाम। दशभिर्द्वादशभिश्च यतिः। तत्रोदाहरणम्।—

भ० र० न० र० न० र० न० ग०

भद्रकगीतिभिः सकृदपि, स्तुवन्ति भव ! ये भवन्तमभवं,

भ० र० न० र० न० र० न० ग०

भक्तिभरावनम्रशिरसः, प्रणम्य तव पादयोः सुकृतिनः।

अतिविपुलाभोगतुङ्गस्तनी अतिविपुलः अत्यन्तविशालः आभोगः परिसरो ययोस्तथाभूतौ तुङ्गौ च उन्नतौ च स्तनौ यस्याः सा, रम्भास्तम्भोपमोरुः रम्भास्तम्भः कदलीकाण्डः उपमा सादृश्यं ययोः तथाभूतौ ऊरू यस्याः सा, तथा अलिमलिनघनस्निग्धधम्मिल्लहस्ता अलिमलिनः षट्पदवत् कृष्णवर्णः घनः निविडः स्निग्धश्च मसृणश्च चिक्कण इत्यर्थः, धम्मिल्लहस्तः संयतकेशकलापः यस्याः सा, तथा बिम्बोष्ठी बिम्बफलवदोष्ठो यस्याः सा, तथा रक्तः अनुरागव्यञ्जकः सुमधुर इति यावत्, कण्ठः कण्ठस्वरो यस्याः सा, तथा स्रग्धरा स्रजं माल्यं धरति इति तादृशी माल्यधारिणी, एतादृशी सा इयं दृश्यमाना सुन्दरी रतिसुखं सम्भोगानन्दं दिशतु वितरतु। अत्र प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ता एकशतद्विपञ्चाशदधिकसप्तनवतिसहस्रोत्तरविंशतिलक्षभेदाः ( २०९७१५२ ) जायन्ते ; तत्र च एकादशाधिकत्रिसहस्रोत्तरविंशतितमः ( ३०३०११ ) भेदः स्रग्धरा इति नाम्ना ख्यातः। प्राकृतपिङ्गल-वाणीभूषणयोः "नरेन्द्र" इति नाम छन्दोऽन्तरं दृश्यते इति।

( ल ) पूर्ववदेकाक्षरवृद्धिक्रमेण द्वाविंशत्यक्षरपादाकृत्यधिकारे भद्रकाख्यलक्षणमाह, भद्रकमित्यादि।—दिगादित्याः दिशो दश, आदित्याः द्वादश, दशमाक्षरे द्वादशाक्षरे च इत्यर्थः, दशम-द्वाविंशाक्षरयोर्यतिरिति निष्कर्षः। भद्रकेत्यादि।—भव ! हे शिव ! ये सुकृतिनः पुण्यवन्तः जनाः, "भव ये" इत्यत्र "भवाय" इति पाठः क्वचि-

भ० र० न० र० न० र० न० ग०

ᴗ - - ᴗ - ᴗ - - - ᴗ - ᴗ - - - - ᴗ - ᴗ - - - ᴗ

ते परमेश्वरस्य पदवी-मवाप्य सुखमाप्नुवन्ति विपुलं,

भ० र० न० र० न० र० न० ग०

ᴗ - - ᴗ - ᴗ - - - ᴗ - ᴗ - - - - ᴗ - ᴗ - - - ᴗ

मर्त्तभुवं स्पृशन्ति न पुन-र्मनोहरसुराङ्गनापरिवृताः ॥ (ब)

विकृतौ ।—

## अश्वललितं न्जौ भ्जौ भ्जौ भ्लौ ग् रुद्रादित्याः ॥२७॥

यस्य पादे नकार-जकारौ भकार-जकारौ पुनर्भकार-जकारौ भकार-लकारौ गकारश्च, तद्वृत्तमश्वललितं नाम। एकादशभिर्द्वादशभिश्च यतिः । तत्रोदाहरणम् ।—

---

करप्रमादविजृम्भितः, छन्दोलक्षणविरोधात् ; भक्तिभरावनम्रशिरसः भक्तिभरेण अनुरागवशेन अवनम्रम् अवनतं शिरः उत्तमाङ्गं येषां ते तथाभूताः सन्तः तव पादयोः भवचरणयोः प्रणम्य नमस्कृत्य अभवं नास्ति भवः जन्म यस्मात् तं जन्मच्छिदं, मुक्तिदमित्यर्थः, भवन्तं त्वां भद्रकगीतिभिः कल्याणप्रदस्तुतिसङ्गीतैरित्यर्थः, "भद्रक" इत्यत्र "मद्रक" इति पाठेऽपि स एवार्थः ; सकृदपि एकवारमपि स्तुवन्ति स्तुतिं विदधति, ते सुकृतिन इत्यर्थः, मनोहरसुराङ्गनापरिवृताः रमणीयाप्सरोभिः परिवेष्टिताः सन्तः परमेश्वरस्य जगदीश्वरस्य परमात्मन इत्यर्थः, पदवीं शिवलोकमित्यर्थः, अवाप्य प्राप्य विपुलं सुखं परमानन्दम् आप्नुवन्ति लभन्ते, न पुनः मर्त्तभुवं भूलोकं, स्पृशन्ति आविशन्ति, न तेषां पुनर्जन्म जायते इत्यर्थः। आकृतिच्छन्दःपादघटकीभूतानां द्वाविंशत्यक्षराणां प्रस्तारे क्रियमाणे त्रिशतचतुरधिकचतुर्नवतिसहस्रोत्तरैकचत्वारिंशल्लक्षाः ( ४१९४३०४ ) सर्वगुर्वादिसर्वलघ्वन्ताः भेदाः जायन्ते ; तत्र सप्तशतपञ्चविंशदधिकैकविंशत्सहस्रोत्तरैकोनविंशतिलक्षतमः ( १९२१७२५ ) भेदः भद्रक इति नाम्ना ख्यातः। अन्ये च प्रस्तारभेदाः आकृत्यधिकारे प्राकृतपिङ्गलादौ अस्मत्कृतच्छन्दोमञ्जरी-वृत्तरत्नाकरयोश्च द्रष्टव्याः।

( ब ) त्रयोविंशत्यक्षरपादविकृत्यधिकारे अश्वललिताख्यवृत्तलक्षणमाह, अत्रे-

न० ज० भ० ज० भ० ज० भ० ल० ग०

पवनविधूतवीचिचपलं, विलोकयति जीवितं तनुभृतां,

न० ज० भ० ज० भ० ज० भ० ल० ग०

वपुरपि हीयमानमनिशं, जरावनितया वशीकृतमिदम् ।

न० ज० भ० ज० भ० ज० भ० ल० ग०

सपदि निपीड़नव्यतिकरं, यमादिव नराधिपान्नरपशुः,

न० ज० भ० ज० भ० ज० भ० ल० ग०

परवनितामवेक्ष्य कुरुते, तथाऽपि हतबुद्धिरश्वललितम् ॥ (व)

त्यादि ।—रुद्रादित्याः रुद्रा एकादश, आदित्याः द्वादश, यतिस्थानमिति शेषः, एकादशाक्षरानन्तरं पुनर्द्वादशाक्षरे यतिः, ततश्च एकादश-त्रयोविंशत्यक्षरयोः विरतिरित्यर्थः । पवनेत्यादि ।—नरपशुः पशुवन्नीचवृत्तिर्मनुष्यः तनुभृतां शरीरधारिणां जीवितं जीवनं पवनविधूतवीचिचपलं पवनेन वायुना विधूतः कम्पितः यो वीचिः तरङ्गः तद्वच्चपलं चञ्चलम् अचिरस्थायीत्यर्थः, विलोकयति पश्यति, तथा जरावनितया वार्द्धक्यरूपपत्न्या वशीकृतम् आयत्तीकृतम् इदं वपुः शरीरमपि अनिशं निरन्तरं हीयमानं क्षीयमाणं विलोकयति, तथा यमादिव अन्तकसदृशात् अतिभीषणात् इति भावः, नराधिपात् नृपतेः दुष्टानां शासनकर्त्तुरिति भावः, सपदि शीघ्रं निपीडनव्यतिकरं शासनरूपं व्यसनञ्च विलोकयति, तथाऽपि परवनितां परकलत्रम् अवेक्ष्य दृष्ट्वा हतबुद्धिः विवेकशून्यः सन्, अश्वललितम् अश्वचेष्टितम्, अश्ववत् लम्फनादिकमित्यर्थः, कुरुते, यथा कश्चित् अश्वः अश्वीं दृष्ट्वा तया सह रन्तुम् उल्लम्फनादिरूपं चापल्यं कुरुते तथा नरपशुरपि इति भावः । विकृतिच्छन्दःपादघटकीभूतानां त्रयोविंशत्यक्षराणां प्रस्तारे विधीयमाने सर्वगुर्वादिसर्वलघ्वन्ताः षट्शताष्टाधिकाष्टाशीतिसहस्रोत्तरत्र्यशीतिलक्ष-भेदाः ( ८३८८६०८ ) भवन्ति ; तत्र चतुःशतचतुर्विंशत्यधिकैकषष्टिसहस्रोत्तराष्टाविंशतिलक्षतमो ( २८६१४२४ ) भेदः अश्वललितम् इति नाम्ना प्रसिद्धः । इदमेव वृत्तं छन्दोमञ्जर्याम् "अद्रितनया" इति नाम्ना ख्यातम् ।

## मत्ताक्रीड़ा मौ त्नौ नौ न्लौ ग् वसुपञ्चदशकौ॥२८॥

यस्य पादे मकारौ तकारो नकारचतुष्कं लकार-गकारौ च, तद्वृत्तं मत्ताक्रीड़ा नाम। अष्टभिः पञ्चदशभिश्च यतिः। तत्रोदाहरणम्।—

म० म० त० न० न० न० न० ल०ग०

◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ - - - - - - - - - - - - - - ◡

हृद्यं मद्यं पीत्वा नारी, स्खलितगतिरतिशयरसिकहृदया,

म० म० त० न० न० न० न० ल०ग०

◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ - - - - - - - - - - - - - - ◡

मत्ता क्रीड़ालोलैरङ्गैर्मुदमखिलविटजनमनसि कुरुते।

म० म० त० न० न० न० न० ल० ग०

◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ - - - - - - - - - - - - - - ◡

वीतक्रीड़ाश्लीलालापैः, श्रवणसुखसुभगसुललितवचना,

म० म० त० न० न० न० न० ल०ग०

◡ ◡ ◡ ◡ ◡ ◡ ◡ ◡ - - - - - - - - - - - - - - ◡

नृत्यैर्गीतैर्भ्रूविक्षेपैः, कलमणितविविधविहगकुलरुतैः॥ (अ)

(अ) त्रयोविंशत्यक्षरपादविकृत्यधिकारे मत्ताक्रीड़ालक्षणमाह, मत्ताक्रीडेत्यादि।—वसुपञ्चदशकौ इत्यत्र वसुशब्देन अष्टसङ्ख्या बोद्धव्या, ततश्च अष्टम-त्रयोविंशाक्षरयोर्यतिरित्यर्थः। हृद्यमित्यादि।—नारी काचित् रमणी हृद्यं स्वप्रियं मद्यं सुरां पीत्वा आस्वाद्य स्खलितगतिः स्खलिता श्लथा गतिः पादविक्षेपः यस्याः तथाभूता, तथा अतिशयरसिकहृदया अत्यन्तरसपूर्णमानसा, अतीव प्रफुल्लचित्ता इत्यर्थः, तथा मत्ता एवं वीतक्रीड़ा त्यक्तक्रीड़ा, मत्तताधिक्यादिति भावः, श्रवणसुखसुभगसुललितवचना श्रवणसुखं श्रोत्रतृप्तिविधायकं सुभगं प्रियं सुललितम् अतीवसुन्दरं, सुकोमलमित्यर्थः, वचनं वाक्यं यस्याः सा, क्रीडालोलैः क्रीड़ाचञ्चलैः अङ्गैः शरीरैः अश्लीलालापैः लज्जाजनकग्राम्यकथाभिः; "वीतक्रीडाश्लीलालापैः" इत्यत्र "वीतव्रीड़ा लीलालापैः" इति पाठान्तरं दृश्यम्; तत्र वीतव्रीड़ा निर्लज्जा, लीलालापैः सविलाससम्भाषणैः; नृत्यैः

सङ्कृती।—

तन्वी भ्तौ न्सौ भ्भौ न्याविन्द्रियस्वर-
मासाः॥ २९ ॥

यस्य पादे भकार-तकार-नकार-सकारा भकारौ नकार-यकारौ च, तद्वृत्तं तन्वीनाम। पञ्चसु सप्तसु द्वादशसु च यतिः। तस्योदाहरणम्।—

भ० त० न० स० भ० भ० न० य०

चन्द्रमुखी सु-न्दरघनजघना, कुन्दसमानशिखरदशना या,

भ० त० न० स० भ० भ० न० य०

निष्कलवीणा-श्रुतिसुखवचना, त्रस्तकुरङ्गतरलनयनान्ता।

भ० त० न० स० भ० भ० न० य०

निर्मुखपीनो-न्नतकुचकलसा, मत्तगजेन्द्रललितगतिभावा,

भ० त० न० स० भ० भ० न० य०

निर्भरलीला, निधुवनविषये, मुञ्ज नरेन्द्र! भवतु तव तन्वी॥ (ष)

नर्त्तनैः गीतैः सङ्गीतैः भ्रूविक्षेपैः कटाक्षादिभिश्च तथा कलमणितविविधविहगकुलरुतैः; कलैः अव्यक्तैः मणितैः सुरतकाले कृतशब्दविशेषवत् शब्दकरणैः तथा विविधविहग-कुलानां नानाविधपक्षिसमूहानां रुतैः ध्वनिभिश्च करणकैः; यद्वा—कलैः मधुरास्फुटैः मणितवत् शीत्कारवत् सुरतकालिकशब्दविशेषैरिव विविधविहगकुलरुतैः; अखिल-विटजनमनसि निखिलकामिजनचेतसि मुदं प्रीतिं कुरुते। त्रयोविंशत्यक्षराणां प्रस्तारे अष्टचत्वारिंशदुत्तरचतुर्नवतिसहस्राधिकैकचत्वारिंशल्लक्षतमो (४१९४०४८) भेदः मत्ताक्रीडेति नाम्ना ख्यातः। त्रयोविंशत्यक्षराणां प्रदर्शितेषु भेदेषु भेदद्वयमात्रमत्र प्रदर्शितं, वृत्तरत्नाकरादौ "सुन्दरिका" संज्ञकं भेदान्तरं द्रष्टव्यम्। अन्ये च प्रस्तार-भेदाः स्वयं प्रस्तार्य्य आकराद्वा ज्ञातव्या इति।

अभिकृती ।—

क्रौञ्चपदा भ्मौ स्भौ नौ नौ ग् भूतेन्द्रिय-
वस्वृषयः ॥ ३० ॥

यस्य पादे भकार-मकार-सकार-भकारा नकाराश्चत्वारो

(च) चतुर्विंशत्यक्षरपादसङ्कृत्यधिकारे तन्वीलक्षणमाह, तन्वीत्यादि ।—इन्द्रियस्वरमासैः इन्द्रियाणि पञ्च, स्वराः सप्त, मासाः द्वादश; प्रथमं पञ्चसु ततः सप्तसु ततश्च द्वादशसु अक्षरेषु यतिरित्यर्थः, एवञ्च पञ्चम-द्वादश-चतुर्विंशाक्षरेषु यतिरिति फलितम् । चन्द्रमुखीत्यादि ।—हे नरेन्द्र मुञ्ज ! या चन्द्रमुखी चन्द्रवत् मनोज्ञं मुखं यस्याः सा, तथा सुन्दरघनजघना सुन्दरः मनोहरः घनः निबिड़ः, मांसल इत्यर्थः, जघनं यस्याः सा, तथा कुन्दसमानशिखरदशना कुन्दसमानानि कुन्दकोरक-तुल्यानि शिखराणि अग्रभागा येषां तथाभूता दशना दन्ता यस्याः सा, निष्कलवीणा-श्रुतिसुखवचना निर्गतः कलः मधुरास्फुटः ध्वनिः यस्याः तथाभूता या वीणा तद्वत् श्रुतिसुखं श्रोत्रानन्दजननं वचनं भाषणं यस्याः सा, वीणाध्वनिवत् मधुरभाषिणीत्यर्थः, त्रस्तकुरङ्गतरलनयनान्ता त्रस्तः चकितः यः कुरङ्गः मृगः तद्वत् तन्नेत्रवत् तरलः चञ्चलः नयनयोरन्तः प्रान्तो यस्याः सा, निर्मुखपीनोन्नतकुचकलसा निर्मुखौ मुखरहितौ अनिर्गतवृन्तौ इत्यर्थः, पीनौ स्थूलौ उन्नतौ तुङ्गौ च कुचकलसौ स्तनकुम्भौ यस्याः सा, तथा मत्तगजेन्द्रललितगतिभावा मत्तः मदाक्रान्तः यः गजेन्द्रः करिश्रेष्ठः तद्वत् मत्तगजेन्द्रगतिवत् ललितः मनोहरः गतिभावः पादविक्षेपक्रमो यस्याः सा, तथा निर्भरलीला निर्भरम् अतिमात्रं लीला शृङ्गारभावजचेष्टाविशेषः यस्याः तादृशी शृङ्गारचेष्टावती, एतादृशी तन्वी कृशाङ्गी कान्ता तव निधुवनविषये सुरतव्यापारे, "निर्भरलीलानिधुवनविषये" इति समस्तपाठे—निर्भरं लीला यत्र तादृशं यत् निधुवनं तद्विषये विविधचेष्टासमन्वितसुरतव्यापारे इत्यर्थः; भवतु, एतादृश्या कामिन्या त्वं रमस्व इत्यर्थः । अत्र प्रस्तारे कृते सर्वगुर्वादिसर्वलघ्वन्ताः सप्तसप्तति-सहस्रद्विशतषोड़शाधिकसप्तषष्टिलक्षोत्तरैककोटिभेदा (१६७७७२१६) जायन्ते; तत्र त्रिशतसप्तषष्ट्यधिकपञ्चपञ्चाशत्सहस्रोत्तरैकचत्वारिंशल्लक्षतमो (४१५५३६७) भेदः तन्वी इति नाम्ना प्रसिद्धः । छन्दोमञ्जरी-वृत्तरत्नाकर-प्राकृतपिङ्गल-वाणीभूषणादौ किरीट दुर्मिलाख्यौ भेदौ दृश्येते, तल्लक्षणं तत्र तत्र द्रष्टव्यमिति ।

गकारश्च भवति, तद्वृत्तं क्रौञ्चपदा नाम। पञ्चभिः पञ्चभिरष्टभिः सप्तभिश्च यतिः। तत्रोदाहरणम्।—

भ० म० स० भ० न० न० न० न० ग०

या कपिलाक्षी, पिङ्गलकेशी, कलिरुचिरनुदिन-मनुनयकठिना,

भ० म० स० भ० न० न० न० न० ग०

दीर्घतराभिः, स्थूलशिराभिः, परिवृतवपुरति-शयकुटिलगतिः।

भ० म० स० भ० न० न० न० न० ग०

आयतजङ्घा, निम्नकपोला, लघुतरकुचयुग-परिचितहृदया,

भ० म० स० भ० न० न०

सा परिहार्य्या, क्रौञ्चपदा स्त्री, ध्रुवमिह निरवधि,

न० न० ग०

सुखमभिलषता॥ (स)

(सं) पञ्चविंशत्यक्षरपादाभिकृत्यधिकारे क्रौञ्चपदाभिधेयं वृत्तं लक्षयितुमाह, क्रौञ्चेत्यादि।—भूतेन्द्रियवस्वृषयः भूतानि पञ्च, इन्द्रियाणि पञ्च, वसवः अष्टौ, ऋषयः सप्त, एवञ्च पञ्चम-दशमाष्टादश-पञ्चविंशत्यक्षरेषु यतिरिति निष्कर्षः। येत्यादि।—या रमणी कपिलाक्षी कपिले पिङ्गलवर्णे अक्षिणी चक्षुषी यस्याः सा, तथा पिङ्गलकेशी पिङ्गलवर्णाः केशा यस्याः सा, अनुदिनं प्रतिदिनं कलिरुचिः कलौ विवादे, "कलिर्विभीतके शूरे विवादेऽन्त्ययुगे युधि" इति हैमः, रुचिः अनुरागः यस्याः सा नित्यं कलहप्रिया, तथा अनुनयकठिना अनुनये विनयव्यवहारे कृतेऽपि कठिना कठोरा अतिशयकोपनस्वभावा; यद्वा—अनुनये विनयविषये कठिना अविनीता इत्यर्थः, दीर्घतराभिः अत्यन्तमायताभिः स्थूलशिराभिः स्पष्टोद्गतशिराभिः परिवृतवपुः व्याप्तदेहा, अतिशयकुटिलगतिः अतिशयम् अत्यन्तं कुटिला वक्रा गतिः यस्याः सा, तथा आयतजङ्घा आयता दीर्घा जङ्घा यस्याः सा सुदीर्घचरणा, निम्नकपोला निम्नौ

उत्कृतौ।—

भुजङ्गविजृम्भितं मौ त्नौ नौ र्सौ ल्गौ
वसुरुद्र-ऋषयः ॥ ३१ ॥

यस्य पादे मकारौ तकार-नकारौ नकारौ रेफ-सकारौ लकार-गकारौ च, तद्वृत्तं भुजङ्गविजृम्भितं नाम। अष्टभिरेकादशभिः सप्तभिश्च यतिः। तत्रोदाहरणम्।—

म० म० त० न० न० न० र० स० ल०ग०

◡ ◡◡◡◡◡ ◡ ◡◡ - - - - - - - - - - - ◡ - ◡ - - ◡ - ◡

ये सम्बानेकानीकै-र्नरतुरगकरिपरिवृतैः, समं तव शत्रवो,

म० म० त० न० न० न० र० स० ल०ग०

◡◡◡ ◡ ◡◡ ◡ ◡ - - - - - - - - - - - ◡ - ◡ - - ◡ - ◡

युद्धश्रद्धालुब्धात्मान-स्त्वदभिमुखमपगतभियः, पतन्ति हृतायुधाः।

---

मांसाल्पत्वात् गभीरप्रायौ कपोलौ यस्याः सा शुष्कगण्डदेशा, एवं लघुतरकुचयुगपरिचितहृदया लघुतरेण स्वल्पेन शुष्केणेत्यर्थः, कुचयुगेन परिचितं हृदयं यस्याः सा अतिक्षुद्रस्तनी, क्रौञ्चपदा क्रौञ्चः बकविशेषः, तस्य पदौ इव निर्मांसदीर्घौ पदौ यस्याः सा तादृशी, भवतीति शेषः, सा ईदृशी स्त्री, इह संसारे, निरवधि निरन्तरं सुखम् अभिलषता अनेन ध्रुवं निश्चितं परिहार्य्या त्याज्या। पञ्चविंशत्यक्षरपादाभिकृतिच्छन्दसां प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताः चतुःपञ्चाशत्सहस्रचतुःशतद्वात्रिंशदधिकपञ्चत्रिंशल्लक्षोत्तरत्रिकोटिभेदा (३३५५४४३२) भवन्ति; तत्र षट्सप्ततिसहस्रत्रिशतैकनवत्युत्तरसप्तषष्टिलक्षाधिकैककोटितमो (१६७७६३९१) भेदः क्रौञ्चपदा इति नाम्ना ख्यातः।

(६) षड्विंशत्यक्षरपादोत्कृत्यधिकारे भुजङ्गविजृम्भितस्य लक्षणमाह, भुजङ्गेत्यादि।—वसुरुद्र-ऋषयः वसवः अष्टौ, रुद्रा एकादश, ऋषयः सप्त, आदौ अष्टमाक्षरे ततः एकादशाक्षरे ततश्च सप्तमाक्षरे यतिः, एवञ्च अष्टमैकोनविंशषड्विंशाक्षरेषु यतिरिति निष्कर्षः। ये इत्यादि।—युद्धश्रद्धालुब्धात्मानः युद्धश्रद्धायाः सङ्ग्रामानुरागात् लुब्धः साकाङ्क्षः, युद्धकरणे इति भावः, आत्मा अन्तःकरणं

म० म० त० न० न० न० र० स० ल०ग०

⏑ ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ - - - - - - - - - - - ⏑ - ⏑ - - ⏑ - ⏑

ते त्वां दृष्ट्वा सङ्ग्रामाग्रे, तुङ्गिगनृप ! कृपणमनस-श्चलन्ति दिगन्तरं,

म० म० त० न० न० न० र० स०

⏑ ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ - - - - - - - - - - ⏑ - ⏑ - - ⏑

किं वा सोढुं शक्यं भेकै-र्बहुभिरपि सविषविषमं, भुजङ्गविजृ-

ल० ग०

- ⏑

म्भितम् ॥

अत्र कात्यायनेनाप्युक्तम् ।—

म० म० त० न० न० न० र०

⏑ ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ ⏑ - - - - - - - - - ⏑ - ⏑

ध्यानैकाग्रा लम्बा दृष्टिः, कमलमुखि ! लुलितमलकं, करे

स० ल० ग०

- - ⏑ - ⏑

स्थितमाननं,

---

येषां ते तथाभूताः सङ्ग्रामलोलुपाः अत एव अपगतभियः निर्भयाः ये तव रिपवः शत्रवः नरतुरगकरिपरिवृतैः नराः मानुषाः तुरगाः अश्वाः करिणः गजाः तैः परिवृताः व्याप्ताः तैः, सन्नद्धानेकानीकैः वर्मादिपरिच्छितबहुलसैन्यैः, "सन्नद्धो वर्मितः सज्जो दंशितो व्यूढकङ्कटः" इत्यमरः ; समं सार्द्धं धृतायुधाः गृहीतास्त्राः सन्तः त्वदभिमुखं तव सम्मुखं पतन्ति गच्छन्ति ; हे तुङ्गिगनृप ! ते सङ्ग्रामाग्रे युद्धक्षेत्रस्य पुरोभागे त्वां दृष्ट्वा विलोक्य कृपणमनसः कृपणानि दीनानि मनांसि येषां ते तादृशाः, विषण्णमानसाः सन्तः दिगन्तरं देशान्तरं चलन्ति गच्छन्ति, पलायन्ते इत्यर्थः ; "चलन्ति" इत्यत्र "पतन्ति" तथा "फलन्ति" इति पाठान्तरद्वयम् । पूर्वोक्तमर्थं समर्थयितुमर्थान्तरं न्यस्यति, किं वा इति ।—वा अथवा भेकैः मण्डूकैः बहुभिः अनेकैरपि सविषविषमं विषेण हलाहलेन सह वर्त्तमानतया विषमम् अत्युत्कटं

म० म० त० न० न० न० र०

चिन्ताग्रस्ता शून्या बुद्धि-र्द्विरदगतिपतितरसना, तनु-

स० ल०ग०

स्तनुतां गता।

म० म० त० न० न० न० र०

पाण्डुच्छायं क्षामं वक्त्रं, मदजननि! रहसि सरसां, करो-

स० ल०ग०

षि न सत्कथां,

म० म० त० न० न० न० र०

को नामायं रम्यो व्याधि-स्तव कथय सुतनु! किमिदं, न ख-

स० ल०ग०

ल्वसि नातुरा?॥ (६)

---

भुजङ्गविजृम्भितं सर्पविलसितं सर्पपराक्रममित्यर्थः, सोढुं शक्यं किम? नैव शक्यमित्यर्थः; "शक्यं भेकैः" इत्यत्र "शक्यन्ते कैः" इति पाठान्तरम्। कात्यायनोक्तमुदाहरणान्तरमपि यथार्थं प्रदर्शयति, ध्यानेत्यादि।—कान्तचिन्ताकुलायाः कस्याश्चिन्नायिकाया विरहावस्थां व्याधित्वेनारोप्य वर्णयितुरुक्तिरियम्। कमलमुखि! हे पद्ममुखि! ते दृष्टिः अवलोकनं ध्यानैकाग्रा ध्यानेन चिन्तया एकाग्रा अनन्यवृत्तिः, तथा लम्बा लम्बमाना स्पन्दनरहिततया दूरप्रसारिणीव इत्यर्थः, अधोनिविष्टा इत्यर्थो वा; अलकं चूर्णकुन्तलं लुलितं चञ्चलतया इतस्ततो विक्षिप्तम्, आननं मुखं करे स्थितं हस्तन्यस्तं, बुद्धिः ज्ञानं चिन्ताग्रस्ता विषयान्तरभावनायामक्षमा, अत एव शून्या सर्वविषये अवलम्बनरहिता इत्यर्थः; "चिन्तासक्ता" इति पाठे—चिन्तानिविष्टा इत्यर्थः; तथा द्विरदगतिपतितरसना द्विरदगत्या गजगमनेन पतिता गलिता रसना काञ्ची यस्याः

**अपवाहको म्नौ नौ नौ न्सौ गौ नवर्त्तु-रसेन्द्रियाणि ॥ ३२ ॥**

यस्य पादे मकारः षट् नकाराः सकारो गकारौ च, तद्वृत्तमपवाहको नाम । नवसु षट्सु षट्सु पञ्चसु च यतिः । तत्रोदाहरणम् ।—

म० न० न० न० न० न० न० स० ग० ग०

ᴗ ᴗ ᴗ - - - - - - - - - - - - - - - - - - - - ᴗ ᴗ ᴗ

श्रीकण्ठं त्रिपुरदहन-ममृतकिरण-सकलकलित-शिरसं रुद्रं,

म० न० न० न० न० न० न० स० ग० ग०

ᴗ ᴗ ᴗ - - - - - - - - - - - - - - - - - - - - ᴗ ᴗ ᴗ

भूतेशं कृतमुनिमख-मखिलभुवन-नमितचरण-युगमीशानम् ।

---

तादृशी तनुः शरीरं तनुतां क्षीणतां गता प्राप्ता, मदजननि ! हे हर्षदायिनि ! त्व मुखं पाण्डुच्छायं केतकीपरागसदृशकान्तियुक्तम् इत्यर्थः, तथा क्षामं क्षीणम् । रहसि निर्जने सरसा रसयुक्तां, सङ्कथां परस्परालापं न करोषि । हे सुतनु ! तव अयं रम्यः मनोज्ञः विस्मयकर इत्यर्थः, व्याधिः रोगः को नाम ? किन्नामधेयः ? इदं किम् ? त्वं खलु आतुरा पीडिता न असि इति न, अपि तु पीडितैव इत्यर्थः । उत्कृतिच्छन्दः-पादघटकीभूतानां षड्विंशत्यक्षराणां प्रस्तारे कृते सर्वगुर्वादिसर्वलघ्वन्ताः अष्टसहस्राष्टशतचतुःषष्ट्यधिकैकसप्ततिलक्षोत्तरषट्कोटिभेदाः (६७१०८८६४) जायन्ते; तत्र चतुःपञ्चाशत्सहस्राष्टशतैकोनपञ्चाशदधिकाष्टाविंशतिलक्षोत्तरद्विकोटितमो (२३८५४८४९) भेदः भुजङ्गविजृम्भितम् इति नाम्ना ख्यातः ।

(क) उत्कृत्यधिकारे अपवाहकवृत्तमाह, अपवाहक इत्यादि ।—नवर्त्तुरसेन्द्रियाणि नव, ऋतवः षट्, रसाः षट्, इन्द्रियाणि पञ्च, नवम-पञ्चदशैकविंश-षड्विंशाक्षरेषु विरतिरित्यर्थः । श्रीकण्ठमित्यादि ।—श्रीकण्ठं श्रीः शोभा कण्ठे यस्य तं, कालकूटविषसंयोगेन कण्ठस्य कृष्णवर्णत्वात् सर्वतः श्वेतवर्णमध्ये तस्य शोभाधिक्यात्तथात्वमिति भावः; "उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् । वामदेवो महादेवः" इत्यमरः; त्रिपुरदहनं त्रिपुरासुरविनाशिनम्, अमृतकिरणसकलकलितशिरसम् अमृतकिरणस्य चन्द्रस्य सकलेन खण्डेन, "सकल" इत्यत्र "शकल" इति

न० न० न० न० न० न० न० स० ग०ग०

⏑ ⏑ ⏑ - - - - - - - - - - - - - - - - - - - - - ⏑ ⏑ ⏑

सर्वज्ञं वृषभगमन-महिपतिकृत-वलयरुचिर-करमाराध्यं,

न० न० न० न० न० न० न० स० ग०ग०

⏑ ⏑ ⏑ - - - - - - - - - - - - - - - - - - - - - ⏑ ⏑ ⏑

तं वन्दे भवभयभिद-मभिमतफल-वितरणगुरु-मुमया युक्तम् ॥(क)

इति कृतयः समाप्ताः।

## दण्डको नौ रः ॥ ३३ ॥

इदानीं दण्डकजातयः कथ्यन्ते। यत्र पादे द्वौ नकारौ

---

पाठः सङ्गतः, खण्डार्थक-सकलशब्दाभावात् ; कलितं प्राप्तं शिरो यस्य तथाभूतम् अर्द्धचन्द्रभूषितशिरसं, रुद्रं रुद्राख्यं भूतेशं भूतानां प्राणिनामीशं प्रभुं, हतमुनिमखं हतः विनष्टः मुनेः दक्षस्य मखः यज्ञो येन तम्, अखिलभुवननमितचरणयुगम् अखिलभुवनैः निखिललोकैः, "लोकस्तु भुवने जने" इत्यमरः, नमितं कृतप्रणामं चरणयुगं पादद्वन्द्वं यस्य तं, शिवसेवनमन्तरेण कर्माधिकाराभावादिति भावः, सर्वज्ञं सर्वं जानातीति तं निखिलपदार्थवेदिनमित्यर्थः, करकलितबदरफलवदविरतं विश्वमिदं पश्यतस्तस्य सर्वज्ञत्वं सिद्धमेवेति भावः ; वृषभगमनं वृषवाहनम्, अहिपतिकृतवलयरुचिरकरम् अहिपतिना नागाधिपेन कृतः यो वलयः तेन रुचिरः मनोज्ञः करः यस्य तम्, आराध्यं सेव्यं, भवभयभिदं संसारदुःखच्छिदम्, अभिमतफलवितरणगुरुम् अभिमतानां वाञ्छितानां फलानां वितरणेन अर्पणेन गुरुं महान्तम्, उमया पार्वत्या युक्तं सङ्गतं, तं प्रसिद्धम् ईशानं शिवं वन्दे अर्चयामि। उत्कृतिच्छन्दःपादघटकीभूतानां षड्-विंशत्यक्षराणां प्रस्तारे अष्टाशीतिसहस्रषट्शतैकाधिकत्र्यशीतिलक्षतमो ( ८३८८६०१ ) भेदः अपवाहक इति नाम्ना प्रसिद्धः। अन्ये प्रस्तारभेदाः प्रस्तारविधिना स्वयमूह-नीयाः। एवञ्च "रसलोचनशैलाश्व-चन्द्रदृग्वेदवह्निभिः। आत्मना योजितैर्वाम-गत्या ज्ञेया मनीषिभिः॥" इति निर्दिष्टदिशा एकाक्षरादिषड्विंशत्यक्षरपर्य्यन्तं प्रत्येकं प्रस्तारपिण्डसङ्ख्या त्रयोदशकोटिद्विचत्वारिंशल्लक्षाणि सप्तदशसहस्राणि षड्विंशत्यु-त्तराणि सप्तशतानि च ( १३४२१७७२६ ) इति।

(ख) एकाक्षरपादवृत्तमारभ्य षड्विंशत्यक्षरपादोत्कृतिपर्य्यन्तं वृत्तं परिसमाप्य साम्प्रतं दण्डकाधिकारमाह, दण्डक इति।—रः रगणः। रः इत्यनेन अपि र-गणा

रेफाश्च सप्त भवन्ति, दण्डको नाम सः। उत्कृतेः षड्विंशत्यक्षरायाः समनन्तरं दण्डकस्य पाठात् सप्तविंशत्यक्षरत्वमेव युक्तम्; सर्व्वेषां छन्दसामेकैकाक्षरवृद्ध्या प्रवृत्तेः। इत ऊर्द्ध्वं पुनरेकैकरेफवृद्ध्या प्रस्तारः, "दण्डको नौ रः" इति श्रवणात्। तत्रोदाहरणम् ।—

न० न० र० र० र० र० र०

- - - - - - ∪ - ∪ ∪ - ∪ ∪ - ∪ ∪ - ∪ ∪ - ∪

इह हि भवति दण्डकारण्यदेशे स्थितिः पुण्यभाजां मुनी-

र० र०

∪ - ∪ ∪ - ∪

नां मनोहारिणी,

न० न० र० र० र० र० र०

- - - - - - ∪ - ∪ ∪ - ∪ ∪ - ∪ ∪ - ∪ ∪ - ∪

त्रिदशविजयिवीर्य्यदृप्ताद्दशग्रीवलक्ष्मीविरामेण रा-

र० र०

∪ - ∪ ∪ - ∪

मेण संसेविते ।

---

लभ्यन्ते इत्यपेक्षायामाह, यत्रेति।—अये सप्तविंशत्यक्षरस्य दण्डकपादत्वोक्तेः तात्पर्य्यादेव नव गणा लभ्यन्ते, ततश्च नवसु गणेषु न-गणद्वयपारिशेष्यात् र-गणस्य सप्तत्वमेव तात्पर्य्यात् सिद्धम्। ननु "चतुःशतमुत्कृतिः" (४।१पि०) इत्यनेन एकाक्षरादारभ्य षड्विंशत्यक्षरपादोत्कृतिपर्य्यन्तानां छन्दसामक्षरसङ्ख्या सूत्रकारेण निर्दिष्टा, न तु तदनन्तरीयाणां दण्डकादीनाम्। "दण्डको नौ रः" इत्यत्रापि अक्षरसङ्ख्याया उल्लेखो नास्ति; अतश्चात्र प्रतिपादं कत्यक्षरसङ्ख्या भाव्या इत्यपेक्षायामाह—उत्कृतेरित्यादि। दण्डकस्य सप्तविंशत्यक्षरपादत्वे युक्तिमवतारयति—सर्व्वेषामित्यादि। इत ऊर्द्ध्वमित्यादि।—"दण्डको नौ रः" इत्यत्र बहुवचनेन सामान्यतया बहु-र-गणलाभात् तेषाञ्च विशेषनिर्देशाभावात् इत ऊर्द्ध्वं न-गणद्वय-र-गणसप्तघटितदण्डकानन्तरम् एकैकरेफवृद्ध्या

न० न० र० र० र० र० र०

- - - - - - ⏑ - ⏑ ⏑ - ⏑ ⏑ - ⏑ ⏑ - ⏑ ⏑ - ⏑

जनकयजनभूमिसम्भूतसीमन्तिनीसीमसीतापद-

र० र०

⏑ - ⏑ ⏑ - ⏑

स्पर्शपूताश्रमे,

न० न० र० र० र० र० र०

- - - - - - ⏑ - ⏑ ⏑ - ⏑ ⏑ - ⏑ ⏑ - ⏑ ⏑ - ⏑

भुवननमितपादपद्माभिधानाम्बिकातीर्थयात्रागता-

र० र०

⏑ - ⏑ ⏑ - ⏑

नेकसिद्धाकुले ॥ (ख)

अत्र पादान्ते यतिः ।

अष्ट नव दश इत्यादिक्रमेण दण्डकजातयो भवन्तीत्यर्थः। इह हीत्यादि।—विदशानां देवानां विजयिना जयशीलेन वीर्य्येण सामर्थ्येन हेतुना दृप्तात् "कर्त्तभिहितभावो द्रव्यवत् प्रकाशते" इति न्यायेन दर्पाद्धेतोरित्यर्थः, दशग्रीवस्य रावणस्य लक्ष्म्याः श्रिया विरामः अवसानं यस्मात् तथोक्तेन रामेण रघुपतिना, संसेविते सम्यगाराधिते, समाश्रिते इत्यर्थः, तथा जनकयजनभूमिसम्भूतसीमन्तिनीसीमसीतापदस्पर्शपूताश्रमे जनकस्य राजर्षेः यजनभूम्याः यज्ञस्थानात् सम्भूता समुत्पन्ना, सीमन्तिनीनां वरवर्णिनीनां सीमा सीमभूता सर्वप्रधाना इत्यर्थः, या सीता तस्याः पादस्पर्शेन चरणसंसर्गेण पूतः पवित्रः आश्रमो यस्मिन् तथाभूते, तथा भुवननमितपादपद्माभिधानाम्बिकातीर्थयात्रागतानेकसिद्धाकुले भुवनैः समस्तवासिभिः जनैः नमितं प्रणतं पादपद्मं चरणकमलं यस्याः सा भुवननमितपादपद्मा, सा एव अभिधानं संज्ञा यस्याः तादृशी या अम्बिका भुवननमितपादपद्मेत्यपरनाम्नी दुर्गा, तस्याः तीर्थं पुण्यक्षेत्रं, तत्र यात्रायाम् अर्चनोत्सवे आगता ये अनेके सिद्धाः देवयोनयः तैः आकुले व्याप्ते इह दण्डकारण्यदेशे पुण्यभाजां पूतस्वभावानां मुनीनाम् ऋषीणां मनोहारिणी मनोज्ञा स्थितिः आवासः अवस्थानं वा भवति अस्ति। न-गणद्वय-सप्त-रगणात्मकसप्तविंशत्यक्षरघटितपादत्वात् वक्ष्यमाण-सूत्रेण श्लोकोऽयं चण्डवृष्टिप्रपातनामदण्डकविशेषघटित इति ।

## प्रथमश्चण्डवृष्टिप्रपातः ॥ ३४ ॥

यः सप्तविंशत्यक्षरपादः प्रथमो दण्डकः स चण्डवृष्टिप्रपातो नाम। पूर्वमेवोदाहरणम्। (ग)

## अन्यत्र रातमाण्डव्याभ्याम् ॥ ३५ ॥

रातमाण्डव्याभ्याम् ऋषिभ्यामन्यत्रास्याभिधानमेतदेव, ताभ्यां पुनरन्यैव संज्ञा कृताऽस्य वृत्तस्य। रातमाण्डव्यग्रहणं पूजार्थम्। (घ)

## शेषः प्रचित इति ॥ ३६ ॥

इतश्चण्डवृष्टिप्रपातादूर्ध्वं दण्डकप्रस्तारः प्रचित इति संज्ञां लभते। पूर्वमेकैकाक्षरक्रमेण छन्दसां वृद्धिरुक्ता, इदानीन्तु रेफोपलक्षिताक्षरत्रयेण वृद्धिः। तत्रोदाहरणम्।—

(ग) तत्र पञ्चविंशाधिकशतत्रयसङ्ख्यकदण्डकेषु 'नौ रः' इत्युक्तलक्षणस्य प्रथम-दण्डकस्य संज्ञाविशेषमाह, प्रथम इति।—प्रथमः "दण्डको नौ रः" इत्यनेनोक्तः आदिदण्डकः। पूर्वमेव—"इह हि भवति" इत्यादिरूपम्।

(घ) प्रथमदण्डकस्य चण्डवृष्टिप्रपात इति संज्ञाया मतान्तरमाह, अन्यत्रेति।—रात-माण्डव्याख्यविद्वत्प्रणीतग्रन्थव्यतिरिक्ते छन्दोग्रन्थे, पिङ्गलादिविरचिते छन्दोग्रन्थे इत्यर्थः। पूजार्थं तत्कृतसंज्ञायां समादरज्ञापनार्थम्।

(ङ) प्रथमदण्डकस्य संज्ञाविशेषोऽभिहितः, अन्येषां काः संज्ञा इत्यपेक्षायामाह, शेष इति।—शेषः उक्तचण्डवृष्टिप्रपाताख्यप्रथमदण्डकादतिरिक्तः एकैकरेफवृद्ध्युपलक्षितः दण्डक इत्यर्थः। अत्र सूत्रकारेण न-गणद्वयसहित-रेफ-सप्तकोपलक्षितस्य छन्दस एव दण्डकसंज्ञा विहिता, रेफाष्टकाद्युपलक्षितानान्तु प्रचितकसंज्ञा इति; परन्तु छन्दोमञ्जरी-वृत्तरत्नाकरयोः तथा काव्येषु च न-गणद्वयसहित-य-गणसप्तक-घटितस्य छन्दस एव प्रचितकसंज्ञा, रेफाष्टकाद्युपलक्षितानामर्णार्णवादिसंज्ञाविशेषो दृश्यते; यदुक्तं गङ्गादास-केदारभट्टाभ्यां—"प्रचितकसमभिधो धीरधीभिः स्मृतो दण्डकः नद्वयादुत्तरैः सप्तभिर्यैः" इति। तथा—"प्रतिचरणविवृद्धरेफाः स्युरर्णार्णव-व्याल-जीमूत-लीलाकरोद्दाम-शङ्खादयः" इति। किञ्च—"चण्डवृष्टिप्रपाताख्यः प्रथमो

न० न० र० र० र० र० र०

- - - - - - ᴗ - ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ - ᴗ

प्रथमकथितदण्डकश्चण्डवृष्टिप्रपाताभिधानो मुनेः

र० र० र०

ᴗ - ᴗ ᴗ - ᴗ ᴗ - ᴗ

पिङ्गलाचार्य्यनाम्नो मतः,

---

न-गणद्वयात् । र-गणैः सप्तमङ्ख्यैः स्यादर्णस्त्वष्टाभिरुच्यते ॥ अर्णवो नवभिर्ज्ञेयो व्यालस्तु दशभिर्भवेत् । जीमूत एकादशभिः सूर्य्यैर्लीलाकरो भवेत् ॥ त्रयोदशभिरुद्दामः शङ्खनामा ततः स्मृतः । स चतुर्दशभिर्ज्ञेयः ततः पञ्चदशादिभिः ॥ आरामाद्यास्तु विज्ञेयाः—" ॥ इत्यादि । एवञ्च नद्वय-रगणाष्टकेन घटितपादो दण्डकः अर्णाख्यः, नद्वय-रगणनवकेन अर्णवः, नद्वय-रगणदशभिः व्यालः, नद्वय-रगणैकादशभिः जीमूतः, नद्वय-रगणद्वादशभिः लीलाकरः, नद्वय-रगणत्रयोदशभिः उद्दामः, नद्वय-रगणचतुर्दशभिः शङ्खः । आदिशब्दात् पञ्चदशादिभिः रगणैः आराम-सङ्ग्राम-सुराम-वैकुण्ठ-सोत्कण्ठ सार-कासार-विसार-संहार-नीहार-मन्दार-केदार-साधार-सत्कार-संस्कार-माकन्द-गोविन्द-सानन्द सन्दोह-नन्देत्येवमादिनामकाः एकैकरेफवृद्ध्या न-गणद्वयोत्तरैकविंशदधिक-विंशत-र-गणघटितैकोनसहस्राक्षरपादपर्य्यन्तं कविप्रयोगानुसारेण दण्डकजातयो ज्ञातव्याः ; तथा चोक्तम्—"एकोनसहस्राक्षरपर्य्यन्ता दण्डकाङ्घ्रयः प्रोक्ताः । वर्णैरिक-गणवृद्ध्या न-द्वितयाद्या महामतिभिः ॥" इति । ततश्च र-गणघटितदण्डकाः पञ्चविंश-त्युत्तरविंशतसङ्ख्यकाः (३२५) भवन्ति इति । अन्ये च दण्डकभेदाः वृत्तरत्नाकरपरिशिष्टे यथा—"लघुगलगुरुयुगैर्यत्र यकाराः कवीच्छानुरोधात्तदा यत्र बध्यन्त एषोऽपरो दण्डकः पण्डितैरीरितः सिंहविक्रान्तनामा । यत्र रेफान् कविः स्वेच्छया पाठगोकर्य्यसापेक्षया-ऽऽरोपयत्येष धीरैः स्मृतो दण्डको मत्तमातङ्गलीलाकरः । लघुर्गुरुः क्रमेण यत्र बध्यते सुधीभिरिच्छया स दण्डकस्त्वनङ्गशेखरः स्मृतः । स्वेच्छया र-जौ क्रमेण सन्निवेशयन्त्यु-दारधीः कवि: स: दण्डकः स्मृतो जगत्यशोकमञ्जरी । स-गणः सकलः खलु यत्र भवेत्त-मिह प्रवदन्ति बुधाः कुसुमस्तवकम् । य-कारैः कवीच्छानुरोधान्निबद्धैः प्रसिद्धो विशुद्धो-ऽपरो दण्डकः सिंहविक्रीडनामा" इति । केचित् "शेषः प्रचित इति" इति सूत्रस्य र-गणघटितदण्डकादन्यः सर्वोऽपि शेषः प्रचितनामा इत्येवं व्याख्यां विधाय न-द्वयात् परेण येन केनापि गणेन र-गणघटितदण्डकवत् एकोनसहस्राक्षरपादपर्य्यन्तं क्रमेणैक-

न० न० र० र० र० र० र०

प्रचित इति ततः परं दण्डकानामियं जातिरेकैकरे-

र० र० र०

फाभिवृद्ध्या यथेष्टं भवेत्।

न० न० र० र० र० र० र०

स्वरुचिरचितसंज्ञया तद्विशेषैरशेषैः पुनः काव्यम-

र० र० र०

न्येऽपि कुर्वन्तु वागीश्वराः,

न० न० र० र० र० र० र०

भवति यदि समानसङ्ख्याक्षरैर्यत्र पादव्यवस्था ततो

र० र० र०

दण्डकः पूज्यतेऽसौ जनैः॥

अत्र पादान्ते यतिः। (ङ)

इति दण्डकाः समाप्ताः।

इति भट्टहलायुधकृतायां पिङ्गलच्छन्दोवृत्तौ सप्तमोऽध्यायः॥७॥

गणवृद्ध्या प्रचिताख्यदण्डकमङ्गीकुर्वन्ति। ततश्च केवलस-गणघटितपादाः केवलय-गणघटितपादाः केवलर-गणघटितपादाः केवलम-गणघटितपादाः केवलभ-गणघटितपादाः यथाक्रमं गुरुलघुभ्यां लघुगुरुभ्यां च घटितपादाः प्रचिताख्यदण्डकाः कविप्रयोगानु-

# अष्टमोऽध्यायः।

## अत्रानुक्तं गाथा ॥ १ ॥

अत्र शास्त्रे नामोद्देशेन यन्नोक्तं छन्दः प्रयोगे च दृश्यते, तत् गाथेति मन्तव्यम्। (क)

---

स्तारात् यथायथं भवन्ति। सर्वेष्वेव दण्डकेषु न-गणद्वयादुत्तरं गणसन्निवेशः कार्य्यः इति। दण्डक-प्रचितकयोर्विशेषो यथा छन्दःपारिजाते—"आषड्विंशमिमानि स्युश्छन्दांसि क्रमशोऽक्षरैः। एकैकवर्द्धितैरूर्द्ध्वे दण्डकाः प्रचितानि च॥ दण्डकाः स्युर्न-रेफाभ्यां प्रचितान्यपरैर्गणैः। य-त-रा मिलितास्तुल्य-स्तुतयो भ-स-जास्तथा॥ तेषामन्योऽन्ययोगाश्च स-भाभ्याञ्चापि कोटिशः। प्रचितानि विवर्द्धन्ते शेषस्त्वेकैकवल्गम्॥ विहाय न-गणं युग्मं गणैरन्यैरशेषतः। षड्विंशादधिकैर्वर्णैर्दृश्यन्ते प्रचितानि च॥" इति। प्रथमेत्यादि। —प्रथमकथितदण्डकः प्रथमोक्तदण्डकः चण्डवृष्टिप्रपाताभिधानः चण्डवृष्टिप्रपातः इति अभिधानं नाम यस्य तथाभूतः इति पिङ्गलाचार्य्यनाम्नः मुनेः ऋषेः मतः स्वीकृतः, ततः परं चण्डवृष्टिप्रपातानन्तरं, दण्डकानां तदाख्यसमानाक्षरवृत्तानाम् इयं जातिः यथेष्टं यथाभिलषितम् इच्छानुसारेण एकैकरेफाभिवृद्ध्या एकैक-गणवृद्धिक्रमेण प्रचित इति प्रचित इतिसंज्ञाविशिष्टा भवेत् स्यात्। अन्ये अपरे वागीश्वराः वाग्मि-प्रवराः अपि स्वकविरचितसंज्ञया स्वेच्छाकृतनामविशेषेण पुनः अशेषैः निखिलैः तद्विशेषैः प्रचितविशेषैः काव्यं कुर्वन्तु विदधतु। यत्र समानसङ्ख्याक्षरैः यदि पादव्यवस्था प्रति-चरणं यदि अक्षरसङ्ख्या समाना भवति; "यत्र" इत्यत्र "तत्र" इति पाठकल्पनं समी-चीनम्; तथात्वे—तत्र दण्डके यदि समानसङ्ख्याक्षरैः पादव्यवस्था भवति, ततः तदा जनैः लोकैः असौ पूर्वोक्तः दण्डकः पूज्यते अर्च्यते।

इति श्रीमत्पिङ्गलाचार्य्यविरचित-पिङ्गलच्छन्दःसूत्रीयहलायुधवृत्तौ श्रीमज्जीवानन्द-विद्यासागरकृतायां सुखबोधिन्यां सप्तमोऽध्यायः।

---

(क) पूर्वाध्याये समवृत्तलक्षणानि कथितानि, साम्प्रतं तत्तदधिकारे सम-वृत्तेषु अनुक्तानि लोके वेदेषु च उपनिबद्धानि समवृत्तान्तर्भूतानि कानिचित् छन्दांसि प्रदर्शयितुमिच्छुः पिङ्गलाचार्य्यः तत्प्रदर्शनपूर्वकं प्रस्तारादिवर्णनात्मक-मष्टमाध्यायमारभते। अस्मिन् शास्त्रे यस्य छन्दसः नामोद्देशः न कृतः किन्तु

तत्र त्रिष्टुभि ।—

**कुड्मलदन्ती भ्तौ न्गौ गिन्द्रियरसाः ॥ २ ॥**

यस्य पादे भगण-तगणौ नगणो गकारौ च भवतः, तद्वृत्तं कुड्मलदन्ती नाम गाथा । पञ्चभिः षड्भिश्च यतिः । तत्रोदाहरणम् ।—

भ०  त०  न० ग०ग०  भ०  त०  न० ग०ग०

⏑ – – ⏑ ⏑  – – – – ⏑ ⏑  ⏑ – – ⏑ ⏑  – – – – ⏑ ⏑

कुड्मलदन्ती, विकटनितम्बा, किन्नरकण्ठी, लघुतरमध्या ।

भ०  त०  न० ग०ग०  भ०  त०  न० ग०ग०

⏑ – – ⏑ ⏑  – – – ⏑ ⏑  ⏑ – – ⏑ ⏑  – – – – ⏑ ⏑

बिम्बफलोष्ठी, मृगशिशुनेत्रा, मित्र ! भवन्तं, सुखयतु कान्ता ॥(ख)

काव्यादौ तेषाम् उदाहरणं दृश्यते, तद्बोधयितुं सामान्यसंज्ञासूत्रमवतारयति—अत्रेत्यादि । ननु छन्दःशास्त्रे निखिलान्येव छन्दांसि नामलक्षणादिभिः प्रदर्शितानि, तत् "अत्रानुक्तम्" इत्यनेन केषां छन्दसां पुनर्ग्रहणमाचार्य्याभिमतम् ? इति चेदुच्यते—निखिलान्येव छन्दोजातानि यद्यपि छन्दःशास्त्रे प्रदर्शितानि, तथाऽपि न नामोल्लेखेन, परन्तु प्रस्तारसञ्ज्ञया संख्यापादितयैव । प्रस्तारसञ्ज्ञया छन्दसां नामनिर्देशन्तु युगमन्वन्तरादिष्वपि न सम्पद्यते, अतः समान्यादीनि कतिचित्‌ वृत्तानि प्राचीनमुनिपरम्पराप्रसिद्धानि पञ्चमाद्यध्यायत्रयेषु प्रदर्श्य अवशिष्टानां प्रस्तारसञ्ज्ञया वक्तुमशक्यानां सामान्यतः गाथेति नामकरणं कृतम् ; तत्रापि काव्यादिषु दृष्टोदाहरणानां कविप्रयुक्तानां केषाञ्चित्‌ छन्दसां कुड्मलदन्तीत्यादयः संज्ञाः स्वयमेवाचार्य्येण कृताः, पञ्चमाद्यध्यायोक्तानि तु प्राचीनमुनिपरम्पराप्रसिद्धानीति विशेषः । येषान्तु केनापि छन्दःशास्त्रकारेण संज्ञा न कृताः तान्येव गाथेति प्रसिद्धानीति । केचित्तु कुड्मलदन्तीत्यादीनि अष्टादशसूत्राणि वृत्तिकारेणैव कृतानि मूलपुस्तकेषु सूत्राणामेतेषां पाठादर्शनादिति मन्यन्ते । आग्नेयच्छन्दःसारेऽपि एषामुल्लेखो न दृश्यते इति ।

(ख) "अत्रानुक्तं गाथा" इत्यनेन सामान्यसंज्ञां विधाय एकादशाक्षरपादत्रिष्टबधिकारे प्रागनुक्तं गाथाभेदं विवृणोति, कुड्मलदन्तीत्यादि ।—इन्द्रियरसाः इन्द्रियाणि पञ्च, रसाः षट्, पञ्च-षडक्षराणि यतिस्थानानि इत्यर्थः, ततश्च पञ्चस्वेकादशाक्षरेषु

जगत्याम् ।—

वरतनुर्नजौ ज्रौ षड्रसाः ॥ ३ ॥

यस्य पादे नगण-जगणौ जगण-रगणौ च, तद्वृत्तं वरतनुर्नाम गाथा । षड्भिः षड्भिश्च यतिः । तत्रोदाहरणम् ।—

न॰ ज॰ ज॰ र॰ न॰ ज॰ ज॰ र॰

- - - - ᴗ - - ᴗ - ᴗ - ᴗ - - - - ᴗ - - ᴗ - ᴗ - ᴗ

अयि ! विजहीहि, दृढ़ोपगूहनं, त्यज नवसङ्ग-मभीरु ! वल्लभम् ।

न॰ ज॰ ज॰ र॰ न॰ ज॰ ज॰ र॰

- - - - ᴗ - - ᴗ - ᴗ - ᴗ - - - - ᴗ - - ᴗ - ᴗ - ᴗ

अरुणकरोद्गम एष वर्त्तते, वरतनु ! सम्प्र-वदन्ति कुक्कुटाः ॥(ग)

---

यतिरिति बोधः । कुन्दलीत्यादि ।—मित्र ! हे बन्धो ! कुन्ददन्ती मुकुलवद्दशना, पिकटनितम्बा विपुलनितम्बदेशा, किन्नरकण्ठी किम्पुरुषरमणीकण्ठस्वरवत् मधुरकण्ठस्वरा, तनुतरमध्या क्षीणकटिः, बिम्बफलोष्ठी पक्वबिम्बफलवदारक्ताधरा, मृगशिशुनेत्रा हरिणशावकवदायताक्षी, कान्ता प्रिया भवन्तं सुखयतु आनन्दयतु । त्रिष्टुप्छन्दःपादचतुष्कीभूतानामेकादशाक्षराणां प्रस्तारे क्रियमाणे सप्ताशीत्युत्तरचतुः-शततमो (४८७) भेदः कुन्ददन्तीति नाम्ना ख्यातः ।

(ग) द्वादशाक्षरपादजगत्यधिकारे पूर्वैरनुक्तं गाथाभेदमाह, वरतनुरित्यादि ।—षड्रसाः इत्यत्र रसाः षट्; षडक्षर-द्वादशाक्षरेषु यतिरित्यर्थः । नारायणभट्टस्तु पञ्चभिः सप्तभिः केचिच्च पादान्ते यतिमिच्छन्ति । अयि इत्यादि ।—अयि नवसङ्गमभीरु ! नूतनसहवाससमागमभीते ! सम्बोधनमिदं हेतुगर्भं सोल्लुण्ठनं, यतः, या हि नवसङ्गम-भीरुर्भवति सा भर्त्तुरङ्कात् पलायते एव, त्वन्तु, पलायनं दूरे आस्तां, प्रातरपि पतिं दृढ़मुपगूह्य तिष्ठसि, ततश्च ते नवसङ्गमभीरुता कुतः? इति; दृढ़ोपगूहनं गाढ़ालिङ्गनं विजहीहि परित्यज. वल्लभं प्रियं त्यज जहीहि; यद्वा—हे अभीरु ! कान्तसहवासेन विगतगुरुजनलज्जाभये ! नवसङ्गं नूतनसंसर्गकारिणं वल्लभं त्यज । यद्वा—अयि वरतनु ! दृढ़ोपगूहनं विजहीहि तथा नवसङ्गमभीरुवल्लभं नवसङ्गमात् तस्मिन्नेव दिने प्रथमं कान्तासाहचर्य्यात् भीरुः भयशीलः यो वल्लभः तं त्यज । परित्यागे हेतुमाह, अरुणेत्यादि ।—वरतनु ! हे सुन्दरि ! एषः अरुण-

**जलधरमाला म्भौ स्मौ समुद्रवसवः ॥ ४ ॥**

यस्य पादे मगण-भगणौ सगण-मगणौ च भवतः, तत् वृत्तं जलधरमाला नाम गाथा। चतुर्भिरष्टाभिश्च यतिः। तत्रोदाहरणम्।—

म० भ० स० म०

⏑ ⏑ ⏑ ⏑ - - - - ⏑ ⏑ ⏑ ⏑

धत्ते शोभां, कुवलयदाम्नः श्यामा,

म० भ० स० म०

⏑ ⏑ ⏑ ⏑ - - - - ⏑ ⏑ ⏑ ⏑

शैलोत्सङ्गे, जलधरमाला लीना।

म० भ० स० म०

⏑ ⏑ ⏑ ⏑ - - - - ⏑ ⏑ ⏑ ⏑

विद्युल्लेखा, कनककृतालङ्कारा,

म० भ० स० म०

⏑ ⏑ ⏑ ⏑ - - - - ⏑ ⏑ ⏑ ⏑

क्रीड़ासुप्ता, युवतिरिवाङ्के पत्युः ॥ (घ)

---

करोद्गमः सूर्य्यकिरणाविर्भावः वर्त्तते विद्यते, कुक्कुटाः प्रभातकालज्ञापकशब्दकारिणः प्रसिद्धाः पक्षिविशेषाः, सम्प्रवदन्ति शब्दं कुर्वन्ति। जगतीच्छन्दःपादघटकीभूतानां द्वादशाक्षराणां प्रस्तारे क्रियमाणे द्वानवत्युत्तरत्रयोदशशततमो (१३९२) भेदः वरतनुरिति नाम्ना ख्यातः। छन्दोमञ्जर्य्यामस्य "मालती" इति नाम कृतम्।

(घ) द्वादशाक्षरपादजगत्यधिकारे प्रस्तारान्तरात्मकं गाथान्तरमवतारयति, जलधरेत्यादि।—समुद्रवसवः समुद्राश्चत्वारः, वसवः अष्टौ, चतुर्थाक्षरे द्वादशाक्षरे च यतिः। धत्ते इत्यादि।—शैलोत्सङ्गे पर्वतक्रोड़े, पर्वतमेखलायामित्यर्थः, लीना सम्बद्धा श्यामा श्यामवर्णा जलधरमाला मेघपङ्क्तिः कुवलयदाम्नः नीलोत्पल-मालायाः शोभां सौन्दर्य्यं धत्ते गृह्णाति। तथा विद्युल्लेखा सौदामनीरेखा, कनक-कृतालङ्कारा कनकेन स्वर्णेन कृतः अलङ्कारः भूषणं यस्याः सा स्वर्णालङ्कारशोभिता

## गौरी नौ रौ ॥ ५ ॥

यस्य पादे नगणौ रगणौ च भवतः, तत् वृत्तं गौरी नाम गाथा। पादान्ते यतिः। तत्रोदाहरणम्।—

न० न० र० र० न० न० र० र०

- - - - - - ᴗ - ᴗ ᴗ - ᴗ - - - - - - ᴗ - ᴗ ᴗ - ᴗ

प्रणमत चरणारविन्दद्वयं, त्रिभुवननमितस्य गौरीपतेः।

न० न० र० र० न० न० र० र०

- - - - - - ᴗ - ᴗ ᴗ - ᴗ - - - - - - ᴗ - ᴗ ᴗ - ᴗ

सकृदपि मनसैव यः सेवितः, प्रवितरति यथेष्टमष्टौ गुणान् ॥

इयमेव गौरी दण्डकात् पूर्वञ्चैकैकरेफवृद्ध्या नामान्तराणि लभते। (ङ)

## ललना भ्तौ न्साविन्द्रियर्षयः ॥ ६ ॥

यस्य पादे भगण-तगणौ नगण-सगणौ च भवतः, तत् वृत्तं ललना नाम गाथा। पञ्चभिः सप्तभिश्च यतिः। तत्रोदाहरणम्।—

---

इत्यर्थः, पत्युः स्वामिनः अङ्के क्रोडे क्रीडाश्रान्ता सुरतश्रमेण निद्रिता युवतिरिव, दृश्यते इति शेषः। द्वादशाक्षरप्रस्तारस्य एकचत्वारिंशदधिकद्विशततमो (२४१) भेदः जलधरमाला इति।

(ङ) द्वादशाक्षरपादजगत्यधिकारे गाथान्तरमाह—गौरीति। प्रणमतेत्यादि।—यः शिवः मनसैव चेतसैव सकृदपि एकवारमपि सेवितः पूजितः अष्टौ गुणान् अणिमाद्यष्टैश्वर्याणि यथेष्टं यथेच्छ प्रवितरति ददाति, तस्य त्रिभुवननमितस्य त्रिजगद्वन्दितस्य गौरीपतेः शिवस्य चरणारविन्दद्वयं प्रणमत नमस्कुरुत। द्वादशाक्षरप्रस्तारस्य षोडशाधिकद्वादशशततमो (१२१६) भेदः गौरीति नाम्ना ख्यातः। इयमित्यादि।—इयं गौरी गौरीनाम वृत्तं दण्डकात् पूर्वं न-गणद्वय-र-गणसप्तात्मकदण्डकजातेः पूर्वम् एकैकरेफवृद्ध्या एकैकर-गणवृद्धिक्रमेण, र-गणत्रयमारभ्य षड्र-गणपर्य्यन्तवृद्ध्या इत्यर्थः, नामान्तराणि संज्ञान्तराणि लभते प्राप्नोति।

(च) द्वादशाक्षरपादजगत्यधिकारे ललनाख्यं गाथान्तरमाह, ललनेत्यादि।—

भ० त० न० स०

ᴗ - - ᴗ ᴗ - - - - - - ᴗ

या कुचगुर्वी, मृगशिशुनयना,

भ० त० न० स०

ᴗ - - ᴗ ᴗ - - - - - - ᴗ

पीननितम्बा, मदकरिगमना।

भ० त० न० स०

ᴗ - - ᴗ ᴗ - - - - - - ᴗ

किन्नरकण्ठी, सुरुचिरदशना,

भ० त० न० स०

ᴗ - - ᴗ ᴗ - - - - - - ᴗ

सा तव सौख्यं, वितरतु ललना॥ (च)

अतिजगत्याम्।—

**कनकप्रभा स्जौ स्जौ ग्॥ ७॥**

यस्य पादे सगण-जगणौ पुन: सगण-जगणौ गकारश्च, तद्वृत्तं कनकप्रभा नाम गाथा। पादान्ते यति:। तत्रोदाहरणम्।—

स० ज० स० ज० ग०

- - ᴗ - ᴗ - - - ᴗ - ᴗ - ᴗ

कनकप्रभा पृथुनितम्बशालिनी,

स० ज० स० ज० ग०

- - ᴗ - ᴗ - - - ᴗ - ᴗ - ᴗ

विपुलस्तनी हरिणशावकेक्षणा।

---

इन्द्रियर्षय: इन्द्रियाणि पञ्च, ऋषय: सप्त, यतिस्थानानीति शेष:। इत्यादि।—सुगमार्थ:। द्वादशाक्षरप्रस्तारस्य त्रयोविंशत्यधिकद्विसहस्रतमो (२०२३) भेद: ललनेति नाम्ना ख्यात:।

स० ज० स० ज० ग०

- - ᴗ - ᴗ - - - ᴗ - ᴗ - ᴗ

इयमङ्गना नयनयोः पथि स्थिता,

स० ज० स० ज० ग०

- - ᴗ - ᴗ - - - ᴗ - ᴗ - ᴗ

कुरुते न कस्य मदनातुरं मनः ? ॥ (क)

## कुटिलगतिर्नौ तौ ग् स्वरर्त्तवः ॥ ८ ॥

यस्य पादे नगणौ तगणौ गकारश्च भवति, तद्वृत्तं कुटिल-गतिर्नाम गाथा। सप्तभिः षड्भिश्च यतिः। तत्रोदा-हरणम्।—

न० न० त० त० ग०

- - - - - - ᴗ ᴗ - ᴗ ᴗ - ᴗ

अधरकिसलये, कान्तदन्तक्षते,

न० न० त० त० ग०

- - - - - - - ᴗ ᴗ - ᴗ ᴗ - ᴗ

हरिणाक्षिग्रहष्टया, नृत्यति भ्रूयुगम्।

---

(क) अतिजगत्यधिकारे त्रयोदशाक्षरपादे कनकप्रभाख्यं गाथाभेदमाह— कनकप्रभेति। कनकेत्यादि।—कनकप्रभा स्वर्णकान्तिः, पृथुनितम्बशालिनी विशालनितम्बविशिष्टा, विपुलस्तनी घनोन्नतकुचा, करिशावकगमना मृगशिशुनेत्र-वदायतचञ्चलनेत्रा इयमङ्गना नयनयोः पथि स्थिता नयनपथवर्त्तिनी सती कस्य मनः मदनातुरं कामार्त्तं न कुरुते ? अपि तु सर्वस्यैवेत्यर्थः। अतिजगतीपादघटकीभूतानां त्रयोदशाक्षराणां प्रस्तारे क्रियमाणे षट्सप्तत्यधिकसप्तशतोत्तरद्विसहस्रतमः (२७९६) भेदः कनकप्रभेति नाम्ना ख्यातः। छन्दोमञ्जरी-वृत्तरत्नाकरयोः त्विदं "मञ्जुभाषिणी" इति नाम्ना ख्यातम्। "सुनन्दिनी" इति अन्यः।

न० न० त० त० ग०

ध्रुवमिदमुचितं, यद्विपत्तौ सतां-

न० न० त० त० ग०

मतिकुटिलगतेः, स्यान्महानुत्सवः ॥ (ज)

शक्वर्याम् ।—

## वरसुन्दरी भ्जौ स्नौ गौ ॥ ९ ॥

यस्य पादे भगण-जगण-सगण-नगणा गकारौ च भवतः, तत् वृत्तं वरसुन्दरी नाम गाथा । पादान्ते यतिः । तत्रोदाहरणम् ।—

भ० ज० स० न० ग०ग०

स्वादुशिशिरोज्ज्वलसुगन्धिजलपूर्णं,

भ० ज० स० न० ग०ग०

वीचिचयचञ्चलविचित्रशतपत्रम् ।

(ज) तत्रैव कुटिलगतिनामकं गाथाभेदमाह, कुटिलगतिरिति ।—स्वरर्त्तवः स्वराः सप्त, ऋतवः षट्, सप्तमाक्षरे त्रयोदशाक्षरे च यतिरित्यर्थः । अधरेत्यादि ।—हरिणशिशुदृशां मृगशावकनयनवदतिचञ्चलायतलोचनानाम् अधरकिसलये अधरपल्लवे कान्तदन्तक्षते सति मधुपं नृत्यति आनन्दते, इदं नर्त्तनं ध्रुवं निश्चितमेव उचितं सङ्गतम्, अतिकुटिलत्वादिति भावः ; यत् यस्मात् सतां सज्जनानां विपत्तौ आपदि अतिकुटिलगतेः खलस्येत्यर्थः, महान् अतिशयः उत्सवः आनन्दः, स्यात् भवेत् । त्रयोदशाक्षरप्रस्तारस्य त्रिशताष्टषष्ट्यधिकद्विसहस्रतमो (२३६८) भेदः कुटिलगति-नाम्ना ख्यातः । वृत्तमिदं छन्दोमञ्जर्यां "चन्द्रिका" वृत्तरत्नाकरे "क्षमा" वृत्तरत्नाकरपरिशिष्टे "विद्युत्" क्वचित्त "उत्पलिनी" इति नाम्ना ख्यातम् ।

भ० ज० स० न० ग० ग०

ऽ।। ।ऽ। ।।ऽ ।।। ऽ ऽ

हंसकलकूजितमनोहरतटान्तं

भ० ज० स० न० ग० ग०

ऽ।। ।ऽ। ।।ऽ ।।। ऽ ऽ

पश्य वरसुन्दरि! सरोवरमुदारम्॥ (झ)

**कुटिला म्भौ न्यौ गौ वेदरससमुद्राः॥ १०॥**

यस्य पादे मगण-भगण-नगण-यगणा गकारौ च भवतः, तत् वृत्तं कुटिला नाम गाथा। चतुर्भिः षड्भिश्चतुर्भिश्च यतिः। तत्रोदाहरणम्।—

म० भ० न० य० ग० ग०

ऽऽऽ ऽ।। ।।। ।ऽऽ ऽ ऽ

अध्वस्थानां, जनयति सुख-मुच्चैः कूजन्,

म० भ० न० य० ग० ग०

ऽऽऽ ऽ।। ।।। ।ऽऽ ऽ ऽ

दात्यूहोऽयं, पथि निचुलिनि, तोयोपान्ते।

---

(झ) शक्वर्य्यधिकारे चतुर्दशाक्षरपादे वरसुन्दरीनामकं गाथाभेदमाह,—वरेत्यादि। स्वाद्वित्यादि।—स्वादुशिशिरोज्ज्वलसुगन्धिजलपूर्णं स्वादु मधुरं शिशिरं शीतलम् उज्ज्वलं निर्मलं सुगन्धि मनोहरगन्धवत् यत् जलं तेन पूर्णं पूरितं, तथा वीचिचयचञ्चलविविधशतपत्रं वीचिचयैः तरङ्गसमूहैः चञ्चलानि इतस्ततः चलितानि विविधानि नानावर्णानि शतपत्राणि पद्मानि यत्र तत्, तथा हंसकलकूजितमनोहर-तटान्तं हंसानां पक्षिविशेषाणां कलकूजितैः अव्यक्तमधुरशब्दैः मनोहरः मञ्जुलः तटान्तः तीरप्रान्तो यस्य तत् तादृशम्, उदारं विशालं सरोवरं सरोभिर्जलैः व्रियते इति सरोवरं तड़ागं पश्य विलोकय। शक्करीच्छन्दःपादघटकीभूतानां चतुर्दशाक्षराणां प्रस्तारे क्रियमाणे षट्शतत्रयोविंशत्यधिकत्रिसहस्रतमो (३६२३) भेदः वरसुन्दरी इति नाम्ना ख्यातः। छन्दोमञ्जरीपरिशिष्ट-वृत्तरत्नाकरयोः वृत्तमिदम् "इन्दुवदना" इति ख्यातम्।

म० भ० न० य० ग० ग०

◡ ◡ ◡ ◡ – – – – – – ◡ ◡ ◡ ◡

कर्णाटस्त्री-रतिकुहरित-तुल्यच्छेदैः

म० भ० न० य० ग० ग०

◡ ◡ ◡ ◡ – – – – – – ◡ ◡ ◡ ◡

नादैः कण्ठ-स्खलनकुटिल-मन्द्रावर्त्तैः ॥ (ञ)

अष्टौ।—

## शैलशिखा भ्रौ न्भौ भ्गौ ॥ ११ ॥

यस्य पादे भगण-रगणौ नगण-भगणौ भगणो गकारश्च भवति, तद्वृत्तं शैलशिखा नाम गाथा। पादान्ते यतिः। तत्रोदाहरणम्।—

---

(ञ) शक्कर्य्यधिकारे चतुर्दशाक्षरपादे कुटिलानाम्नीमन्यां गाथामाह, कुटिलेत्यादि।—वेदरससमुद्राः वेदाश्चत्वारः, रसाः षट्, समुद्राः चत्वारः, चतुरक्षर-दशाक्षर-चतुर्दशाक्षरेषु यतिरित्यर्थः। अध्वेत्यादि।—अयं दात्यूहः दितिं खण्डनं वहति इति दितिवाट् स एव अयमिति अण्प्रत्ययान्तः, दात्यूहः कालकण्ठकाख्यः पक्षिविशेषः, पथि मार्गे, मार्गपार्श्वे, निचुलिनि वेतसलतासङ्कुले, तीर्थोपान्ते जलसमीपे, कर्णाटस्त्रीणां तद्देशरमणीनां रतिकुहरितेन विहारकालिकाव्यक्तकण्ठध्वनिविशेषेण तुल्यः ध्वनिविशेषश्च छेदेन समः इत्यर्थः, छेदः विरामः येषां तैः तादृशैः, तथा कण्ठस्खलनकुटिलमन्द्रावर्त्तैः कण्ठस्खलनेन पुनः पुनः उच्चनीच्चारजनितकण्ठावसादेन कुटिलः वक्रः, कम्पित इत्यर्थः, मन्द्रश्च अल्पश्च आवर्त्तः स्वरस्य पुनरावृत्तिरित्यर्थः, येषु तैः नादैः शब्दैः उच्चैः कूजन् अतिशयशब्दं कुर्वन् अध्वगानां पथिस्थितानां पान्थानामित्यर्थः, सुखं प्रीतिं जनयति उत्पादयति। चतुर्दशाक्षरप्रस्तारस्य नवाधिकैकसहस्रतमो (१००९) भेदः कुटिला इति नाम्ना ख्यातः। छन्दोमञ्जरी-वृत्तरत्नाकरपरिशिष्टयोः वृत्तमिदं "मध्यक्षामा" इति प्रसिद्धम्।

भ० र० न० भ० भ० ग०

ᴗ - - ᴗ - ᴗ - - - ᴗ - - ᴗ - - ᴗ

शैलशिखानिकुञ्जशयितस्य हरेः श्रवणे,

भ० र० न० भ० भ० ग०

ᴗ - - ᴗ - ᴗ - - - ᴗ - - ᴗ - - ᴗ

जीर्णतृणं करेण निदधाति कपिश्चपलः।

भ० र० न० भ० भ० ग०

ᴗ - - ᴗ - ᴗ - - - ᴗ - - ᴗ - - ᴗ

क्षुद्रवधापवादपरिहारविनीतमते-

भ० र० न० भ० भ० ग०

ᴗ - - ᴗ - ᴗ - - - ᴗ - - ᴗ - - ᴗ

स्तस्य न तावतैव लघुता द्विपयूथभिदः॥ (ट)

---

(ट) अत्यधिकारे षोड़शाक्षरपादे शैलशिखानाममाथामाह, शैलेत्यादि।—भूतरसेन्द्रियाः भूतानि पञ्च, रसाः षट्, इन्द्रियाणि पञ्च, पञ्चमैकादश-षोड़शाक्षरेषु यतिरित्यर्थः। शैलशिखेत्यादि।—शैलशिखायां पर्वताग्रभागे यः निकुञ्जः लतावेष्टितस्थानं तत्र शयितस्य शयानस्य हरेः सिंहस्य श्रवणे श्रोत्रे चपलः चञ्चलः कपिः वानरः करेण हस्तेन जीर्णतृणं निदधाति अर्पयति, क्षुद्रवधापवादपरिहारविनीतमतेः क्षुद्राणां हीनानां दुर्बलानामित्यर्थः, वधे विनाशे योऽपवादः निन्दा तस्य परिहारे दूरीकरणे विनीता शिक्षिता मतिर्यस्य तादृशस्य, द्विपयूथभिदः गजकुलविनाशकस्य, तस्य हरेः, तावता निन्दापरिहारार्थं प्रतीकाराकरणेन नैव लघुता हीनत्वं, भवेदिति शेषः। अष्टिच्छन्दःपादघटकीभूतषोड़शाक्षराणां प्रस्तारे क्रियमाणे एकशतैकोनविंशाधिकाष्टाविंशतिसहस्रतमो ( २८११९ ) भेदः शैलशिखा नाम वृत्तमिति।

## वरयुवती भ्रौ य्नौ न्गौ ॥ १२ ॥

यस्य पादे भगण-रगणौ यगण-नगणौ नगणो गकारश्च भवति, तद्वृत्तं वरयुवती नाम गाथा। पादान्ते यतिः। तत्रोदाहरणम्।—

भ० र० य० न० न० ग०

ᵕ - - ᵕ - ᵕ - ᵕ ᵕ - - - - - - - ᵕ

कुञ्जरकुम्भपीठपीनोन्नतकुचयुगला,

भ० र० य० न० न० ग०

ᵕ - - ᵕ - ᵕ - ᵕ ᵕ - - - - - - - ᵕ

पार्वणशर्वरीशगर्वापहमुखकमला।

भ० र० य० न० न० ग०

ᵕ - - ᵕ - ᵕ - ᵕ ᵕ - - - - - - - ᵕ

पीननितम्बबिम्बसंवाहनशिथिलगतिः,

भ० र० य० न० न० ग०

ᵕ - - ᵕ - ᵕ - ᵕ ᵕ - - - - - ᵕ

मुञ्ज! नराधिराज! भूयात्तव वरयुवतिः॥ (ठ)

---

(ठ) षष्ठ्यधिकारे षोडशाक्षरपादे गाथान्तरमाह—वरेत्यादि। विशेषानुक्तत्वात् अत्र पादान्ते एव यतिः। कुञ्जरेत्यादि।—नराधिराज मुञ्ज! हे नरपतिमुञ्ज! कुञ्जरकुम्भपीठपीनोन्नतकुचयुगला कुञ्जराणां गजानां कुम्भपीठवत् पीनोन्नतं स्थूलोत्तुङ्गं कुचयुगलं स्तनद्वयं यस्याः सा, पार्वणशर्वरीशगर्वापहमुखकमला पार्वणशर्वरीशस्य पूर्णचन्द्रस्य गर्वापहं सौन्दर्याभिमानविनाशकं मुखकमलं यस्याः सा, तथा पीननितम्बबिम्बसंवाहनशिथिलगतिः पीनस्य स्थूलस्य नितम्बबिम्बस्य नितम्बमण्डलस्य संवाहनेन धारणेन शिथिला मन्दा गतिः यस्याः सा एतादृशी वरयुवतिः तरुणीश्रेष्ठा तव भूयात्। अत्र प्रस्ताररीत्या प्रस्तार्यमाणे त्रिशतद्विचत्वारिंशदधिकद्वात्रिंशत्सहस्रतमो (३२३४२) भेदो वरयुवतीनाम्ना प्रसिद्धः।

अत्यष्टी ।—

**अतिशायिनी सौ ज्भौ ज्गौ ग् दिक्स्वराः ॥१३॥**

यस्य पादे सगणौ जगण-भगणौ जगणो गकारौ च भवतः, तद्वृत्तमतिशायिनी नाम गाथा । दशभिः सप्तभिश्च यतिः । तत्रोदाहरणम् ।—

स० स० ज० भ० ज० ग०ग०

- - ᴗ - - ᴗ - ᴗ - ᴗ - - - - ᴗ - ᴗ ᴗ

इति धौतपुरन्ध्रिमत्सरान्, सरसि मज्जनेन,

स० स० ज० भ० ज० ग० ग०

- - ᴗ - - ᴗ - ᴗ - ᴗ - - - ᴗ - ᴗ ᴗ

श्रियमाश्रवतोऽतिशायिनी-मपमलाङ्गभासः ।

स० स० ज० भ० ज० ग०ग०

- - ᴗ - - ᴗ - ᴗ - ᴗ - - - - ᴗ - ᴗ ᴗ

अवलोक्य तदैव यादवा-नपरवारिराशेः,

स० स० ज० भ० ज० ग०ग०

- - ᴗ - - ᴗ - ᴗ - ᴗ - - - ᴗ - ᴗ ᴗ

शिशिरेतररोचिषाऽप्यपां, ततिषु मङ्क्तुमीषे ॥ (ङ)

---

(ङ) सप्तदशाक्षरे अत्यष्ट्यधिकारे गाथाभेदमाह, अतिशायिनीत्यादि ।—दिक्स्वराः दिशः दश स्वराः सप्त, दशमसप्तमाक्षराः वर्णाः विरामस्थानानीत्यर्थः, ततश्च दशम-सप्तदशाक्षरेषु प्रतिपादं विरतिरिति भावः । इतीत्यादि ।—शिशिरेतररोचिषा उष्णकिरणेन सूर्य्येणापि इति एवम्प्रकारेण सरसि तड़ागे मज्जनेन अवगाहनेन धौतपुरन्ध्रिमत्सरान् धौतः क्षालितः पुरन्ध्रीणां मानिनीनां मत्सरः कोपः यैः तान्, तथा अतिशायिनीम् अत्यधिकां श्रियं शोभाम् आश्रवतः प्राप्नुवतः, अपमलाङ्गभासः अपमलाः मलिनताहीनाः अङ्गानाम् अवयवानां भासः कान्तयो येषां तान् विमल-कान्तीन्, यादवान् अवलोक्य दृष्ट्वा तदैव अवलोकनक्षणे एव अपरवारिराशेः

## अवितथं न्जौ भ्जौ ज्लौ ग् ॥ १४ ॥

यस्य पादे नगण-जगणौ भगण-जगणौ जगण-लकारौ गकारश्च भवति, तद्वृत्तमवितथं नाम गाथा। पादान्ते यतिः। तत्रोदाहरणम्।—

न॰ ज॰ भ॰ ज॰ ज॰ ल॰ग॰

- - - - ᵕ - ᵕ - - - - ᵕ - - ᵕ - - ᵕ

श्रुतिपरिपूर्णवक्त्रमतिसुन्दरवाग्विभवं,

न॰ ज॰ भ॰ ज॰ ज॰ ल॰ग॰

- - - - ᵕ - ᵕ - - - ᵕ - - ᵕ - - ᵕ

तमखिलजैमिनीयमतसागरपारगतम्।

न॰ ज॰ भ॰ ज॰ ज॰ ल॰ ग॰

- - - - ᵕ - ᵕ - - - ᵕ - - ᵕ - - ᵕ

अवितथवृत्तविप्रजनपूजितपादयुगं,

न॰ ज॰ भ॰ ज॰ ज॰ ल॰ ग॰

- - - - ᵕ - ᵕ - - - ᵕ - - ᵕ - - ᵕ

पितरमहं नमामि बहुरूपमुदारमतिम् ॥ (ढ)

---

पश्चिमसमुद्रस्य अपां जलानां ततिषु पूरेषु मङ्क्तुम् अवगाहितुम् ईषे अभिलषि।

अत्यष्टिच्छन्दःपादघटकीभूतानां सप्तदशाक्षराणां प्रस्तारे विधीयमाने नवशताधिक-त्रयोविंशतिसहस्रतमो (२३९००) भेदः अतिशायिनी इति नाम्ना ख्यातः।

(ढ) अथ्यद्यधिकारे गाथान्तरमवितथाख्यमाह, अवितथमित्यादि।—स्पष्टम्। श्रुतीत्यादि।—श्रुतिभिः वेदैः परिपूर्णं मुखम् आननं यस्य तं मुखावस्थितवेद-चतुष्टयम्, अतिसुन्दरः सर्वोत्कर्षवान् वाचां वाक्यानां विभवः सम्पत्तिः यस्य तं, तथा अखिलजैमिनीयमतसागरपारगतम् अखिलं समग्रं जैमिनीयमतं सागर इव समु

वस्विन्द्रियसमुद्रार्श्चेत् कोकिलकम् ॥ १५ ॥

यस्य पादे पूर्वोक्ता गणा भवन्ति, अष्टाभिः पञ्चभिश्चतुर्भिश्च यतिर्भवति, तद्वृत्तं कोकिलकं नाम गाथा । तत्रोदाहरणम् ।—

न० ज० भ० ज० ज० ल०ग०

- - - - ⏑ - ⏑ - - - ⏑ - - ⏑ - - ⏑

नवसहकारपुष्प-मधुनिष्कल-कण्ठतया,

न० ज० भ० ज० ज० ल० ग०

- - - - ⏑ - ⏑ - - - ⏑ - - ⏑ - - ⏑

मधुरतरस्वरेण, परिकूजति, कोकिलकः ।

न० ज० भ० ज० ज० ल०ग०

- - - - ⏑ - ⏑ - - ⏑ - - ⏑ - - ⏑

प्रथमककारविद्ध-वचनैर्धन-लुब्धमते-

न० ज० भ० ज० ज० ल०ग०

- - - - ⏑ - ⏑ - - - ⏑ - - ⏑ - - ⏑

स्तव गमनस्य भङ्ग-मिव सम्प्रति, कर्त्तुमनाः ॥ (ग)

---

इव तस्य तारम् अन्तं गतं प्राप्तं, तथा अवितथवृत्तविप्रजनपूजितपादयुगम् अवितथवृत्तैः सत्यव्यवहारिभिः विप्रजनैः ब्राह्मणैः पूजितम् अर्चितं पादयुगं चरणद्वन्द्वं यस्य तं, बहुरूपं बहूनि अनन्तानि रूपाणि यस्य तम्, उदारा मतिर्यस्य तादृशं तं प्रभिन्नं पितरम् अहं नमामि । सप्तदशाक्षरप्रस्तारस्य षट्शतपञ्चषष्ट्यधिकैकविंशसंख्यकतमो (२१६६५) भेदः अवितथ इति नाम्ना प्रसिद्धः । छन्दोमञ्जरी-वृत्तरत्नाकरयोः वृत्तमिदं "नर्दटक" इति नाम्ना ख्यातम् ।

(ग) यतिभेदेन पूर्वोक्तस्यैव गाथावृत्तस्य नामभेदमाह, वस्विति ।—वस्विन्द्रियसमुद्राः वसवः अष्टौ, इन्द्रियाणि पञ्च, समुद्राः चत्वारः, अष्टम-त्रयोदश-सप्तदशाक्षरेषु यतिश्चेत् तदा पूर्वोक्तावितथवृत्तमेव कोकिलकनाम्ना ख्यातं भवति । नवेत्यादि ।—सम्प्रति प्रथमककारविद्धवचनैः कुत्सितस्याविष्कारककारेण विद्धैः घटितैः वचनैः उक्तिभिः

धृतौ।—

विबुधप्रिया र्सौ जौ भ्रौ वसुदिशः॥ १६॥

यस्य पादे रगण-सगणौ जगणौ भगण-रगणौ च भवतः, तद्वृत्तं विबुधप्रिया नाम गाथा। अष्टभिर्दशभिश्च यतिः। तत्रोदाहरणम्।—

र० स० ज० ज० भ० र०

⏑ – ⏑ – – ⏑ – ⏑ – – ⏑ – ⏑ – – ⏑ – ⏑

कुन्दकुड्मलकोमल-द्युतिदन्तपङ्क्तिविराजिता,

र० स० ज० ज० भ० र०

⏑ – ⏑ – – ⏑ – ⏑ – – ⏑ – ⏑ – – ⏑ – ⏑

हंसगद्गदवादिनी, वनिता भवेद्विबुधप्रिया।

र० स० ज० ज० भ० र०

⏑ – ⏑ – – ⏑ – ⏑ – – ⏑ – ⏑ – – ⏑ – ⏑

पीनतुङ्गपयोधर-द्वयभारमन्थरगामिनी,

---

धनलुब्धमतेः धने अर्थोपार्जने लुब्धा मतिः बुद्धिः यस्य तस्य तव ममनस्य अर्थोपार्जनार्थं तव विदेशयात्रायाः भङ्गं प्रतिबन्धकं कर्त्तुं मनः यस्य तथाभूत इव कोकिलकः पिकः नवस्य नूतनस्य सहकारपुष्पस्य चूतकुसुमस्य मधुना मकरन्देन मकरन्दपानेन इत्यर्थः, निष्कलः निः निश्चयेन अतिशयेनेत्यर्थः, कलः मधुरास्फुटः कण्ठो यस्य तस्य भावस्तया; हेत्वर्थे तृतीया; मधुरतरस्वरेण परिकूजति कुहूः कुहूरिति रवेण विरौति। प्रस्तारसङ्ख्या पूर्ववत्। गङ्गादास केदारभट्टाभ्यामत्र सप्तम-त्रयोदश-सप्तदशाक्षरेषु यतिरुक्ता।

(त) धृत्यधिकारे अष्टादशाक्षरपादे विबुधप्रियाख्यं गाथाभेदमाह, विबुधेत्यादि।—वसुदिशः वसवः अष्टौ, दिशः दश, अष्टमाष्टादशाक्षरेषु यतिरित्यर्थः। कुन्देत्यादि।—कुन्दकुड्मलकोमलद्युतिदन्तपङ्क्तिविराजिता कुन्दकुड्मलस्य कुन्दकुसुमकोरकस्य कोमला सुकुमारा, स्निग्धावदाता इति यावत्, द्युतिरिव द्युतिर्यासां तादृशीभिः दन्तपङ्क्तिभिः दशनश्रेणीभिः विराजिता शोभिता, हंसगद्गदवादिनी

र० स० ज० ज० भ० र०

ᴗ - ᴗ - - ᴗ - ᴗ - - ᴗ - ᴗ - - ᴗ - ᴗ

नेत्रकान्तिविनिर्जित-श्रवणावतंसितकैरवा ॥ (त)

## नाराचकं नौ रौ रौ ॥ १७ ॥

यस्य पादे नगणौ रगणाश्चत्वारो भवन्ति, तद्वृत्तं नाराचकं नाम गाथा। पादान्ते यतिः। तत्रोदाहरणम्।—

न० न० र० र० र० र०

- - - - - - ᴗ - ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ - ᴗ

रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियां,

न० न० र० र० र० र०

- - - - - - ᴗ - ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ - ᴗ

प्रियसुहृदि विभीषणे सङ्क्रमय्य श्रियं वैरिणः।

---

हंसस्येव गद्गदं वदति भाषते या सा, तथा पीनतुङ्गपयोधरद्वयभारमन्थरगामिनी पीनस्य स्थूलस्य तुङ्गस्य उन्नतस्य पयोधरद्वयस्य स्तनयुगलस्य भारेण मन्थरं मन्दं गन्तुं शीलं यस्याः सा, तथा नेत्रकान्तिविनिर्जितश्रवणावतंसितकैरवा नेत्रकान्त्या नयनशोभया विनिर्जितं पराभूतं श्रवणावतंसितं कर्णभूषणीकृतं कैरवं कुमुदं यया तथाभूता वनिता रमणी विबुधप्रिया विदुषां देवानां वा मनोहारिणी भवेत्। इति-च्छन्दःपादघटकीभूतानामष्टादशाक्षराणां प्रस्तारे क्रियमाणे एकोनविंशत्यधिकत्रिनवतिसहस्रतमो (९३०१९) भेदः विबुधप्रिया इति ख्यातः। छन्दोमञ्जरी-वृत्तरत्नाकरयोः वृत्तमिदं "हरनर्त्तनम्" इति प्रसिद्धम्।

(थ) धृत्यधिकारे अष्टादशाक्षरपादे नाराचकाख्यमपरं गाथाभेदमाह—नाराचकमित्यादि। रघुपतिरित्यादि।—रघुवंशस्य द्वादशसर्गान्त्यश्लोकोऽयं। रघुपतिः रामः अपि प्रियसुहृदि सख्यौ विभीषणे वैरिणः शत्रोः, रावणस्य इत्यर्थः, श्रियं राजलक्ष्मीं सङ्क्रमय्य सङ्गतां कृत्वा; कमेर्ण्यन्तात् ल्यप्-प्रत्ययः; जातवेदसि अग्नौ विशुद्धां जातशुद्धिम् अग्निपरीक्षया विज्ञातविशुद्धस्वभावां प्रियां सीतां प्रगृह्य स्वीकृत्य

न० न० र० र० र० र०

- - - - - - ᴗ - ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ - ᴗ

रविसुतसहितेन तेनानुयातः ससौमित्रिणा,

न० न० र० र० र० र०

- - - - - - ᴗ - ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ - ᴗ

भुजविजितविमानरत्नाधिरूढः प्रतस्थे पुरीम् ॥ (थ)

अतिधृतौ।—

## विस्मिता य्मौ न्सौ रौ ग् रसर्त्तुस्वराः ॥ १८ ॥

यस्य पादे यगण-मगणौ नगण-सगणौ रगणौ गकारश्च भवति, तद्वृत्तं विस्मिता नाम गाथा। षड्भिः षड्भिः सप्तभिश्च यतिः। तत्रोदाहरणम्।—

य० म० न० स० र० र० ग०

- ᴗ ᴗ ᴗ ᴗ ᴗ - - - - - ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ

श्रिया जुष्टं दिव्यैः, सपटहरवै-रन्वितं पुष्पवर्षै-

य० म० न० स० र० र० ग०

- ᴗ ᴗ ᴗ ᴗ ᴗ - - - - - ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ

र्वपुष्टश्चैत्यस्य, चरणमृषिगणैः, स्तूयमानं निरीय।

---

रविसुतसहितेन सुग्रीवयुक्तेन ससौमित्रिणा सलक्ष्मणेन तेन विभीषणेन अनुयातः अनुगतः सन्, भुजविजितविमानरत्नाधिरूढः विमानं रत्नमिव, भुजविजितं यद्विमानरत्नं पुष्पकमित्यर्थः, तत्रारूढः सन् पुरीम् अयोध्यां प्रतस्थे गतवान्। "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मनेपदम्। स्थाधातोरकर्मकत्वेऽपि तदङ्गभूतोद्देश्यक्रियापेक्षया सकर्मकत्वमिह विवक्षितम्। अष्टादशाक्षराणां प्रस्तारे क्रियमाणे चतुश्चत्वारिंशदधिकनवशतोत्तरचतुःसप्ततिसहस्रतमो (७४९४४) भेदो नाराचक इति नाम्ना प्रसिद्धः।

(द) अतिधृत्यधिकारे एकोनविंशत्यक्षरपादे विस्मितानामकं गाथाभेदं दर्शयति, विस्मितेत्यादि।—रसर्त्तुस्वराः रसाः षट्, ऋतवः षट्, स्वराः सप्त, षष्ठ-द्वादशैकोन-

य० म० न० स० र० र० ग०

- ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ - - - - - ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ

प्रकाशेनाकाशे, दिनकरकरान्, विक्षिपद्विस्मिताक्षै-

य० म० न० स० र० र० ग०

- ᴗ ᴗ ᴗ ᴗ ᴗ - - - - - ᴗ ᴗ - ᴗ ᴗ - ᴗ ᴗ

र्नरेन्द्रैरौपेन्द्रं, वपुरथ विशद्-धाम वीक्षाम्बभूवे॥ (८)

प्रकृतौ।—

**शशिवदना न्जौ भ्जौ ज् ज्रौ रुद्रदिशः॥ १८॥**

यस्य पादे नगण-जगणौ भगणो जगणास्त्रयो रगणश्च भवति, तद्वृत्तं शशिवदना नाम गाथा। एकादशभिर्दशभिश्च यतिः। "पक्षकावली" इति केचित्। तत्रोदाहरणम्।—

---

विंशाक्षरेषु प्रतिपादं यतिरित्यर्थः। श्रियेत्यादि।—अथ शिरश्छेदनानन्तरं श्रिया अपूर्वशोभया जुष्टं सेवितं, भगवद्धस्तेन विनाशप्राप्तेरिति भावः; अत एव दिव्यैः स्वर्गीयैः सपटहरवैः दुन्दुभिशब्दसहितैः पुष्पवर्षैः कुसुमनिपातैः अन्वितं युक्तं, तथा अथ शिरश्छेदनसमकालमिति यावत्, ऋषिगणैः मुनिसमूहैः स्तूयमानं कृतस्तवं, चैद्यस्य शिशुपालस्य वपुषः शरीरात् निर्गत्य निर्गत्य, प्रकाशेन स्वप्रभयेत्यर्थः, आकाशे नभसि दिनकरकरान् सूर्यकिरणान् विक्षिपत् निरस्यत्, स्वप्रभया चण्डकरकिरणानपि पराभवदित्यर्थः, श्रिया लक्ष्म्या जुष्टं पुष्पवर्षैरन्वितं ऋषिगणैः स्तूयमानञ्च औपेन्द्रम् उपेन्द्रसम्बन्धि वपुः शरीरं विशत् निविशमानमित्यर्थः, भगवत्तेजसा सहैक्यं गच्छदित्यर्थः, धाम चैद्यं तेजः, विस्मिताक्षैः नरेन्द्रैः राजभिः वीक्षाम्बभूवे ददृशे। अतिधृतिच्छन्दःपादघटकीभूतानामेकोनविंशत्यक्षराणां प्रस्तारे क्रियमाणे चतुर्दशाधिकसप्तशतोत्तरपञ्चसप्ततिसहस्रतमो (७५७१४) भेदः विस्मिताख्यं वृत्तमिदम्। छन्दोमञ्जरी-वृत्तरत्नाकरयोः वृत्तस्यास्य "मेघविस्फूर्जिता" इति नाम।

(ध) एकविंशत्यक्षरपादे प्रकृत्यधिकारे गाथाभेदमाह, शशीति।—रुद्रदिशः रुद्राश्च एकादश च, दिशश्च दश च इति रुद्रदिशः एकादश-दशसङ्ख्याकाक्षराणि,

न० ज० भ० ज० ज० ज० र०

- - - - ∪ - ∪ - - - ∪ • - - ∪ - - ∪ - ∪ - ∪

तुरगशताकुलस्य परितः, परमेकतुरङ्गजन्मनः,

न० ज० भ० ज० ज० ज० र०

- - - - ∪ - ∪ - - - ∪ - - ∪ - - ∪ - - ∪ - ∪

प्रमथितभूभृतः प्रतिपथं, मथितस्य भृशं महीभृता।

न० ज० भ० ज० ज० ज० र०

- - - - ∪ - ∪ - - - ∪ - - ∪ - - ∪ - ∪ - ∪

परिचलतो बलानुजबल-स्य पुरः सततं धृतश्रिय-

न० ज० भ० ज० ज० ज० र०

- - - - ∪ - ∪ - - - ∪ - - ∪ - - ∪ - ∪ - ∪

श्चिरविगतश्रियो जलनिधे-श्च तदाऽभवदन्तरं महत्॥ (घ)

---

द्युतिव्यानानि इति शेषः। पञ्चकावलीति केचित्—मल्लिनाथेन चास्य पञ्चकावलीति नाम कथितम्; तथा "धृतश्रीरुत्तमर्णिका क्वचित्" इत्यपि तेन उक्तमिति। तुरगेत्यादि।—परितः समन्तात् तुरगशतैः अश्वशतैः आकुलस्य व्याप्तस्य अपरिमिताश्वस्य इत्यर्थः, प्रतिपथं प्रतिमार्गं प्रमथिताः क्षुण्णाः भूभृतः पर्वताः राजानश्च येन तस्य, सततं धृता श्रीः शोभा रमा च येन तस्य, पुरः अग्रे नगराद्वा परिचलतः परिगच्छतः, बलानुजबलस्य बलानुजस्य बलरामानुजस्य हरेरित्यर्थः, बलस्य सैन्यस्य परं केवलम् एकस्यैव तुरङ्गस्य जन्म उत्पत्तिमात्रं यस्मात् तस्य, एकोऽपि जात एव, न तु चलतीति भावः, तथा महीभृता मन्दराद्रिणा राज्ञा च भृशम् अत्यर्थं मथितस्य चालोडितस्य, तथा चिरविगतश्रियः चिरं विगता श्रीः लक्ष्मीः यस्य तथाविधस्य, उत्पत्त्यनन्तरमेवास्याः हरिस्वीकरणादिति भावः, जलनिधेश्च समुद्रस्य च तदा प्रस्थानसमये महदन्तरं दूरगमनादिना व्यवधानम्, उत्कटौत्या महत् तारतम्यञ्चाभवत्। प्रकृतिच्छन्दःपादघटकीभूतानामेकविंशत्यक्षराणां प्रस्तारे क्रियमाणे षट्शतोत्तरैकादशसहस्राधिकसप्तलक्षतमो (७११६००) भेदः

एवमादीनि वृत्तानि कोटिशः प्रस्तारेषु महाकविप्रयोगेषु च दृश्यन्ते । विशेषसंज्ञाऽभावात्तानि शास्त्रकारेण नामनिर्देशं कृत्वा नोक्तानि, तानि गाथाशब्देन कथ्यन्ते । (न)

इदानीं प्रस्तारादीन् प्रत्ययानुपक्रमते । तत्र गायत्र्यादि-प्रस्तारसिद्ध्यर्थमेकाक्षरप्रस्तारपूर्वकं द्व्यक्षरप्रस्तारं सूत्रद्वये-नाह ।—

## द्विकौ ग्लौ ॥ २० ॥

उपरिष्टाद्गकारं लिखित्वा अधस्ताल्लकारं विन्यसेत् इत्येका-

---

शशिवदनेति नाम । छन्दोमञ्जर्यामस्य "सरसी" वृत्तरत्नाकरे "सलिलनिधिः" क्वचिच्च "सिंहकम्" इति नाम ।

(न) ननु महाकविप्रयोगेषु प्रोक्तलक्षणभिन्नानि अन्यान्यपि बहूनि वृत्तानि दृश्यन्ते, तानि किंनामधेयानि कीदृशलक्षणवन्ति च ? इत्यत आह, एवमादी-नीत्यादि ।—एतन्मते तानि प्रस्तारेण ज्ञेयानि गाथानामधेयानि च भवन्तीत्यर्थः ।

(प) एवं समादिवृत्तत्रयमुक्त्वा साम्प्रतं तेषामेव समुत्पत्तिप्रदर्शनार्थम् अनुक्तानाञ्च वृत्तानां सत्कविप्रयोगेषु बहुशो दृश्यमानानां सद्भावोपपत्तये प्रस्तारादिषट्प्रत्ययान् आरब्धुमाह, इदानीमित्यादि ।—प्रस्तार्य्यन्ते विस्तार्य्यन्ते गुरुलघुरूपतया वर्णाः मात्रा वा अनेन इति प्रस्तारः गुरुलघुवर्णसङ्ख्यादिज्ञानजनिका क्रिया इत्यर्थः, प्रस्तारो भेदरचना इत्यर्थो वा । प्रतीयते ज्ञायते छन्दसां सङ्ख्यादिकमेभिरिति प्रत्ययाः सङ्ख्याविशेषादि-बोधकोपायाः, सम्भावितवृत्तेषु विश्वासापरपर्य्यायप्रत्ययव्यापकत्वाद्वा प्रत्ययाः, छन्दसां भेदादिप्रत्यायकत्वात् प्रत्यया इति वा ; ते च "प्रस्तारो नष्टमुद्दिष्टमेकद्व्यादि-लगक्रिया । सङ्ख्यानमध्वयोगश्च षडेते प्रत्ययाः स्मृताः ॥" इति वृत्तरत्नाकरोक्तरूपाः । प्रत्ययपरिज्ञानमन्तरेण छन्दःशास्त्रेषु न भवति विशेषव्युत्पत्तिः, तत्र च प्रत्ययान्तरेभ्यः प्रस्तारस्यैव प्रथमोक्तत्वात् प्राधान्याच्च प्रथमं तस्यैव वक्तुमौचित्यात्तदेवाह —तत्रेत्यादि । द्विकावित्यादि ।—"एकाक्षरप्रस्तारपूर्वकं द्व्यक्षरप्रस्तारम्" इत्युक्तत्वात् एकाक्षरप्रस्तारपक्षे सूत्रार्थः एवं व्याख्येयः,—द्वावेव द्विकौ "अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्ति"

क्षरप्रस्तारः। तस्य द्विकत्वात् द्वौ ग्लौ द्विकौ स्थापयेत्। द्वे आवृत्ती प्रमाणमनयोरिति द्विकौ। "सङ्ख्याया अति-शदन्तायाः कन्" (५।१।२२पा०) इति कन्-प्रत्ययः। ततश्च गकारं ततोऽधस्ताल्लकारं लिखित्वा विस्पष्टार्थमधस्तिर्य्यग्रेखां दद्यात्, अधस्ताच्च पूर्ववत् गकार-लकारौ स्थापयेत्। (५)

अत्र किं कर्त्तव्यमित्याह।—

मिश्रौ च ॥ २१ ॥

अनेन द्वितीयाक्षरप्रस्तारं दर्शयति। चकारः पूर्वप्रस्तार-समुच्चयार्थः। द्विकौ ग्लौ स्थापयित्वा अनन्तरं द्वितीयाक्षरस्थानेषु मिश्रौ ग्लौ विन्यसेत्। संश्लिष्टो मिश्र उच्यते। मिश्राविति

---

इति स्वार्थे कन्। ग्‌च ल्‌च ग्लौ, द्वौ गुरुलघू एकाक्षरप्रस्तारज्ञापकौ इत्यर्थः। इममेवार्थं स्पष्टीकृत्य वृत्तिकारो दर्शयति, उपरिष्टादित्यादि।—उपरिष्टात् ऊर्ध्वतनपङ्क्तौ गकारं गुरुत्वबोधकमक्षरम्, (ऽ) एवं चिह्नविशेषं वा लिखित्वा तदधस्तनपङ्क्तौ लकारं लघुत्वसूचकमक्षरम्, (।) एवं चिह्नविशेषं वा विन्यसेत्, तेन च सर्वगुर्वात्मकः एकः सर्वलघ्वात्मकश्च एकः इति भेदद्वयवानेकाक्षरप्रस्तारः सिध्यति; एवञ्च एकाक्षरवृत्तस्य द्वौ भेदौ। उक्तायाम् एकाक्षरप्रस्तारः स्वरूपतो यथा—

| | |
|---|---|
| ऽ ग | १ भेदः |
| । ल | २ भेदः |

द्व्यक्षरप्रस्तारसिद्ध्यर्थमस्यैव सूत्रस्य व्याख्यान्तरं दर्शयति वृत्तिकारः, तस्येति।—तस्य ग्-ल् रूपस्य प्रस्तारस्य द्विकत्वात् द्विरावृत्तत्वात्। द्विकावित्यस्य व्युत्पत्तिलभ्यार्थ-माह—द्वे इति। द्विकौ द्विवारौ ग्लौ ग्लौ इत्येवंरूपौ इत्यर्थः, एवञ्च गकार-लकारौ ऊर्ध्वाधोभावेन वारद्वयं स्थापनीयौ इति निष्कर्षः। स्वरूपतो यथा—

प्रथमावृत्तिः { ग / ल

—

द्वितीयावृत्तिः { ग / ल

गकार-लकाराभ्यां प्रत्येकमभिसम्बध्यते, "द्वन्द्वात् परो यः श्रूयते" इति न्यायात्। ततश्च प्रथमायामावृत्तौ गकारौ मिश्रौ स्थापयेत्, द्वितीयायां लकाराविति। ततो मध्ये रेखामपनयेत्; एवं चतुःप्रकारो द्व्यक्षरप्रस्तारो भवति। तद् यथा—गौ, ल्गौ, ग्लौ, लाविति। (फ)

---

(फ) उक्तदिशा ऊर्द्धाधोभावेन वारद्वयं गकार-लकारस्थापनादनन्तरं करणीयमाह सूत्रकारः, मिश्रौ चेति।—मिश्रौ इत्यत्र करणीयौ इति शेषः। एतदेव विशदयति भाष्यकारः, अनेनेत्यादि।—पूर्वप्रस्तारसमुच्चयार्थः द्विरावृत्तगकार-लकारसमुच्चयार्थः। पूर्वसूत्रोक्तेन द्विरावृत्तेन गकार-लकाररूपेण एकाक्षरप्रस्तारेण पुनः ग्लौ मिश्रौ युक्तौ करणीयौ। ग् च ल् च ग्लौ इति द्वन्द्वसमासः "द्वन्द्वात् परं श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते" इति न्यायात् एकाक्षरप्रस्तारमूर्द्धाधोभावेन द्विधा स्थापयित्वा मध्ये रेखां दद्यात्, ततः प्रथमावृत्तौ द्वितीयाक्षरस्थाने गकारं द्वितीयावृत्तौ द्वितीयाक्षरस्थाने च लकारं संस्थाप्य मध्यस्थां रेखामपनयेत्, एवञ्च चतुर्विधो द्व्यक्षरप्रस्तारः निष्पद्यते। विन्यासपद्धतिश्चैवंविधा—प्रथमं गकारद्वयं, द्वितीयं लकार-गकारौ, ततश्च गकार-लकारौ, ततश्च द्वौ लकारौ करणीयौ। चतुष्टयां द्व्यक्षरप्रस्तारः स्वरूपतो निदर्श्यते यथा—

| | | | | | |
|---|---|---|---|---|---|
| प्रथमावृत्तिः | ग<br>ल | ग | = | | १ ग ᴗ ग ᴗ<br>२ ल - ग ᴗ |
| | — | | | | |
| द्वितीयावृत्तिः | ग<br>ल | ल | | | ३ ग ᴗ ल -<br>४ ल - ल - |

एतेन द्व्यक्षरच्छन्दसि समवृत्तसङ्ख्याः कति इति प्रश्ने प्रस्ताररीत्या चतस्रः इति ज्ञायते, तत्र च एको द्विगुरुकः, अपरः एकलघुरेकगुरुः, तृतीयः प्रथमगुरुकः द्वितीयलघुकः, चतुर्थश्च द्विलघुकः इत्यायातम्। वृत्तरत्नाकरे पुनः प्रकारान्तरेण प्रस्तारसाधनोपायः प्रदर्शितः यथा—"पादे सर्वगुरावाद्याल्लघुं न्यस्य गुरोरधः। यथोपरि तथा शेषं भूयः कुर्य्यादमुं विधिम्। ऊने दद्याद्गुरूनेव यावत् सर्वलघुर्भवेत्॥" इति। अन्यैरप्युक्तं यथा—"स्थापयेल्लघुमधो गुरोः पुरः स्यात्

इदानीं द्व्यक्षरप्रस्तारपूर्वकमेकैकाक्षरवृद्ध्या त्र्यक्षरादि-प्रस्तारं दर्शयितुमाह।—

## पृथक् ग्ला मिश्राः ॥२२॥

द्व्यक्षरप्रस्तारस्य पूर्वन्यायेन द्विकं रेखाविभक्तं स्थापयित्वा तृतीयाक्षरस्थानेषु प्रथमावृत्तौ गकारा मिश्रा दातव्याः,

---

यथोपरि तथैव पूरयेत । पश्चिमञ्च गुरुभिः पुनःपुनः सर्वलघ्ववधिरित्ययं विधिः ॥" इति। तत्र क्रमः,—वृत्तपादीयवर्णसङ्ख्याकसर्वगुरुकं पादं लिखित्वा प्रथमात् गुरोरधः पङ्क्तौ लघुं विन्यसेत्, अन्येषाञ्च "यथोपरि तथा शेषम्" इति नियमेन यथा उपरि पङ्क्तौ तथैव अधस्तनाधस्तनपङ्क्तौ, शेषपादे वर्णसङ्ख्यापूर्त्यर्थञ्च द्वितीयादिकं गुरुं लघुं वा यथाक्रमं लिखेत्, यत्र उपरि गुरुस्तत्राधस्तादपि स एव, यथोपरि लघुस्तत्राधस्तादपि लघुरित्यर्थः। एवं पुनःपुनः गर्वपेक्षया आद्यगुरोरधस्तात् लघौ लिखिते वामतो यत्र स्थानं न्यूनं भवेत तस्मिन् गुरुः स्थाप्यः, यावत सर्व-लघुकः न-गणात्मकः पादो भवेत् तावदेवं कुर्य्यात। एतेन सर्वगुरोः म-गणस्य अधः प्रथमलघुकः य-गणः स्थाप्यः, ततश्च तस्यामेव द्वितीयपङ्क्तौ द्वितीयाक्षरस्य गुरुत्वात तृतीयपङ्क्तौ तदधः लघुं स्थापयेत्। द्वितीयपङ्क्तिस्थतृतीयाक्षरस्य गुरुतया "यथो-परि तथा शेषम्" इति नियमेन तृतीयपङ्क्तौ तदधः गुरुः स्थापनीयः; प्रथमा-क्षरस्थाने च गुरुलघुविन्यासनियमाभावेन "ऊने दद्यात् गुरूनेव" इति नियमात् न्यूनस्थानतया गुरुरेव स्थापनीयः। एवं सर्वत्र सर्वलघुकः पादः यावत् स्यात् तावत् कुर्य्यात्, ततश्च सर्वेष्वेव वृत्तेषु प्रथमो भेदः सर्वगुरुकः अन्तिमश्च भेदः सर्वलघुक इति। अत्रापरोऽपि नारायणसङ्कृतश्लोकः,—"पादं सर्वगुरुं लिखेत् मुखगुरोश्चाधो लघुं न्यस्य च चाग्रं मूलगुरोः पुनर्लघुमधः शेषं पुनः पूर्ववत्। ऊने न्यस्य गुरूनशेषलघुकं पादश्च यावत् पुनः कार्य्योऽयं विधिरित्यपीक्तपदकं नारायणः प्रस्तुतिम ॥" इति।

(ख) पूर्वोक्तरीत्या सर्वत्र प्रस्तारसिद्धिरिति दर्शयन् त्र्यक्षरप्रस्तारमाह, पृथ-गिति।—ग्लाः गकारा लकाराश्च, पृथक् पृथक्पृथग्भावेन, परस्परमसंसृष्टभावेनेत्यर्थः,

द्वितीयावृत्तौ लकारा मिश्राः, ततो मध्ये रेखामपनयेत्। एवं त्रिकप्रस्तारः सिध्यति। पृथगिति विजातीयासंसर्गमाह, तेन प्रथमायामावृत्तौ न लकारप्रवेशः, द्वितीयायां न गकारस्य। एवं त्रिकप्रस्तारं द्विः स्थापयित्वा पृथक् ग्ला मिश्रा दातव्याः, इति चतुरक्षरप्रस्तारः। एवं तत्पूर्वकः पञ्चाक्षरप्रस्तारः। तथैव तत्पूर्वकः षडक्षरगायत्रीसमवृत्तप्रस्तारः। उष्णिगादीनामप्येकैकाक्षरवृद्धा एवमेव न्यासः। तत्रेदं सूत्रं त्र्यक्षरात् प्रभृति पुनः पुनरावर्त्तनीयं यावदभिमतः प्रस्तारः। (व)

---

मिश्राः, कर्त्तव्या इति शेषः। प्रथमावृत्तौ केवलगकाराणां द्वितीयावृत्तौ च केवललकाराणामेव मिश्रणं कर्त्तव्यं, न तु प्रथमावृत्तौ द्वितीयावृत्तौ वा गकार-लकारयोरुभयोरेव मिश्रणं कर्त्तव्यमिति निष्कर्षः। विजातीयासंसर्गं विजातीययोः भिन्नजातीययोः गकार-लकारयोः, गकारेण लकारस्य लकारेण वा गकारस्य इत्यर्थः, असंसर्गं मिश्रणाभावम्। द्व्यक्षरप्रस्तारस्य चाद्याक्षराणां ग-ल-ग-ल-रूपाणामधः तान्येवाक्षराणि स्थापनीयानि। ततो द्वितीयाक्षराणां ग-ग-ल-ल-रूपाणामधोऽपि पूर्ववत् तान्येव स्थापनीयानि, एवमष्टावष्टावक्षराणि जायन्ते; ततश्च दक्षिणे तृतीयाक्षरस्थाने यथाक्रमं ग-ग-ग-ग-ल-ल-ल-ल-रूपाणि अष्टावक्षराणि स्थापयेत्, एवञ्च अष्टभेदवान् सर्वगुर्वादिः सर्वलघ्वन्तः त्र्यक्षरप्रस्तारः सिध्यति। विस्पष्टार्थञ्च तथ्यायां त्र्यक्षरप्रस्तारः स्वरूपतः निर्दिश्यते यथा—

| | | | | |
|---|---|---|---|---|
| प्रथमावृत्तिः | ग ग | ग | = | १। ग ‿ ग ‿ ग ‿ (मगणः) |
| | ल ग | | | २। ल – ग ‿ ग ‿ (य „) |
| | ग ल | | | ३। ग ‿ ल – ग ‿ (र „) |
| | ल ल | | | ४। ल – ल – ग ‿ (स „) |
| द्वितीयावृत्तिः | ग ग | ल | | ५। ग ‿ ग ‿ ल – (त „) |
| | ल ग | | | ६। ल – ग ‿ ल – (ज „) |
| | ग ल | | | ७। ग ‿ ल – ल – (भ „) |
| | ल ल | | | ८। ल – ल – ल – (न „) |

एवमिति।—एवं पूर्ववत् प्रक्रियया त्रिकप्रस्तारम् अष्टभेदात्मकं त्र्यक्षरप्रस्तारं, द्विः स्थापयित्वा द्विरावृत्तं कृत्वा पृथक् ग्लाः मिश्राः तृतीयाक्षरदक्षिणे चतुर्थाक्षरस्थाने अष्टौ गकाराः तदधः अष्टौ लकाराश्च स्थापयितव्याः, तेन च षोडशभेदात्मकः सर्वगुर्वादिसर्वलघ्वन्तः चतुरक्षरप्रस्तारः सिध्यति। विस्पष्टार्थं स्वरूपतोऽपि प्रदर्श्यते।

# वसवस्त्रिकाः ॥ २३ ॥

प्रतिष्ठायां चतुरक्षरप्रस्तारः यथा—

| | |
|---|---|
| १। ग ◡ ग ◡ ग ◡ ग ◡ | ९। ग ◡ ग ◡ ग ◡ ल - |
| २। ल - ग ◡ ग ◡ ग ◡ | १०। ल - ग ◡ ग ◡ ल - |
| ३। ग ◡ ल - ग ◡ ग ◡ | ११। ग ◡ ल - ग ◡ ल - |
| ४। ल - ल - ग ◡ ग ◡ | १२। ल - ल - ग ◡ ल - |
| ५। ग ◡ ग ◡ ल - ग ◡ | १३। ग ◡ ग ◡ ल - ल - |
| ६। ल - ग ◡ ल - ग ◡ | १४। ल - ग ◡ ल - ल - |
| ७। ग ◡ ल - ल - ग ◡ | १५। ग ◡ ल - ल - ल - |
| ८। ल - ल - ल - ग ◡ | १६। ल - ल - ल - ल - |

एवं चतुरक्षरप्रस्तारं द्विधा स्थापयित्वा सर्वदक्षिणतः षोडश गकारान् षोडश लकारांश्च पौत्तराधर्य्येण स्थापयेत, तेन च द्वात्रिंशद्भेदात्मकः सर्वगुर्वादिसर्वलघ्वन्तः पञ्चाक्षरप्रस्तारः सिध्यति । तत्र सुप्रतिष्ठायां पञ्चाक्षरप्रस्तारो यथा—

| | |
|---|---|
| १। ग ◡ ग ◡ ग ◡ ग ◡ ग ◡ | १७। ग ◡ ग ◡ ग ◡ ग ◡ ल - |
| २। ल - ग ◡ ग ◡ ग ◡ ग ◡ | १८। ल - ग ◡ ग ◡ ग ◡ ल - |
| ३। ग ◡ ल - ग ◡ ग ◡ ग ◡ | १९। ग ◡ ल - ग ◡ ग ◡ ल - |
| ४। ल - ल - ग ◡ ग ◡ ग ◡ | २०। ल - ल - ग ◡ ग ◡ ल - |
| ५। ग ◡ ग ◡ ल - ग ◡ ग ◡ | २१। ग ◡ ग ◡ ल - ग ◡ ल - |
| ६। ल - ग ◡ ल - ग ◡ ग ◡ | २२। ल - ग ◡ ल - ग ◡ ल - |
| ७। ग ◡ ल - ल - ग ◡ ग ◡ | २३। ग ◡ ल - ल - ग ◡ ल - |
| ८। ल - ल - ल - ग ◡ ग ◡ | २४। ल - ल - ल - ग ◡ ल - |
| ९। ग ◡ ग ◡ ग ◡ ल - ग ◡ | २५। ग ◡ ग ◡ ग ◡ ल - ल - |
| १०। ल - ग ◡ ग ◡ ल - ग ◡ | २६। ल - ग ◡ ग ◡ ल - ल - |
| ११। ग ◡ ल - ग ◡ ल - ग ◡ | २७। ग ◡ ल - ग ◡ ल - ल - |
| १२। ल - ल - ग ◡ ल - ग ◡ | २८। ल - ल - ग ◡ ल - ल - |
| १३। ग ◡ ग ◡ ल - ल - ग ◡ | २९। ग ◡ ग ◡ ल - ल - ल - |
| १४। ल - ग ◡ ल - ल - ग ◡ | ३०। ल - ग ◡ ल - ल - ल - |

एवं पूर्वोक्ते त्र्यक्षरप्रस्तारे अष्टौ त्रिका जायन्ते, ते च मकारादयः शास्त्रादौ कथिता एव। प्रदर्शनार्थञ्चैतत्, तेन षोड़श चतुष्काः, द्वात्रिंशत् पञ्चका भवन्ति। एवं चतुःषष्टि-र्गायत्रीसमवृत्तानि सर्वगुर्वादिसर्वलघ्वन्तानि भवन्ति। द्विगुणो-त्तरम् उष्णिगादीनामेकैकाक्षराधिक्यात्। विस्पष्टार्थमिदं सूत्रं, प्रस्तारादेव सङ्ख्यापरिच्छित्तेः। (भ)

नष्टवृत्तपरिज्ञानार्थमाह।—

---

| | |
|---|---|
| १५। ग ᴗ ल - ल - ल - ग ᴗ | ३१। ग ᴗ ल - ल - ल - ल - |
| १६। ल - ल - ल - ल - ग ᴗ | ३२। ल - ल - ल - ल - ल - |

एवं षड्विंशत्यक्षरप्रस्तारपर्य्यन्तम् उत्तरोत्तरद्वैगुण्येन गुरुलघुसमावेशः करणीयः।

(भ) सम्प्रति पूर्वोक्तमगणादीनां प्रस्तारस्थितिं दर्शयितुमाह, एवम् इति।—एवम्: अष्टौ त्रिकाः त्र्यक्षरात्मका गणा इत्यर्थः, जायन्ते इति शेषः। मकारादयः म-य-रादयो गणाः। शास्त्रादौ अस्य ग्रन्थस्य प्रथमे "धी श्री स्त्रीम्" (१।१ पि०) इत्यादिषु सूत्राष्टकेषु इत्यर्थः। छन्दोमञ्जर्य्यामपि—"म्यरस्तजभ्नगै-र्लान्तैरेभिर्दशभिरक्षरैः। समस्तं वाङ्मयं व्याप्तं त्रैलोक्यमिव विष्णुना॥" इत्युक्तम्। तदष्टौ त्रिका यथा—

| | | | | | |
|---|---|---|---|---|---|
| १। | म | ᴗ ᴗ ᴗ | ५। | त | ᴗ ᴗ - |
| २। | य | - ᴗ ᴗ | ६। | ज | - ᴗ - |
| ३। | र | ᴗ - ᴗ | ७। | भ | ᴗ - - |
| ४। | स | - - ᴗ | ८। | न | - - - |

षोडश चतुष्काः चतुरक्षरात्मकगणाः, चतुरक्षरप्रस्तारे इति शेषः, षोड़श षोड़शभेद-विशिष्टाः। द्वात्रिंशत्पञ्चका इति—पञ्चाक्षरप्रस्तारे पञ्चाक्षरात्मकगणाः द्वात्रिंशद्भेदाः। चतुःषष्टिरिति षडक्षरप्रस्तारे इत्यर्थः। अनयैव रीत्या षड्विंशत्यक्षरपादवृत्तानामपि प्रस्तारः साधनीयः। द्विगुणोत्तरमिति।—उष्णिगादीनाम् उष्णिगनुष्टुप्प्रभृतीनां द्विगुणोत्तरम् उत्तरोत्तरद्वैगुण्यम्, अष्टाविंशत्यधिकशतम् उष्णिहि सर्वगुर्वादिसर्व-लघ्वन्तानि समवृत्तानि। अनुष्टुभि षट्पञ्चाशदधिकद्विशतं सर्वगुर्वादिसर्वलघ्वन्तानि समवृत्तानि भवन्ति इत्यादि। सङ्ख्याज्ञानन्तु प्रस्तारादेव सिध्यति, किमर्थं सूत्रमिदमित्याह—विस्पष्टार्थमिति।

## लर्द्धे ॥ २४ ॥

यद्येवं जिज्ञासेत, गायत्र्यां समवृत्तं षष्ठं कीदृशम्? इति। तदा तमेव षट्सङ्ख्याविशेषमर्द्धयेत्, तस्मिन्नर्द्धीकृते लघुरेको लभ्यते, तं भूमौ विन्यसेत्।

इदानीमवशिष्टा त्रिसङ्ख्या विषमत्वादर्द्धयितुं न शक्यते, तत्र किं कर्त्तव्यमित्याह।—

## सैके ग् ॥ २५ ॥

अर्द्धे इत्यनुवर्त्तते। विषमसङ्ख्यायामेकमधिकं निक्षिप्य ततोऽर्द्धयेत्, तत्रैको गकारो लभ्यते, तं पूर्वलब्धाल्लकारात् परं

(क) प्रस्तारशोधनोपयोगिप्रत्ययभेदनष्टलक्षणं सूत्रद्वयेनाह, लर्द्धे इति सैके ग् इति च।—अर्द्धे अर्द्धीकृते, समसङ्ख्याविशेषे अर्द्धीकृते इत्यर्थः, ल् लघुः, लभ्यते इति शेषः। सैके इति।—सैके एकाङ्केन सहिते ग् गुरुः, लभ्यते इति शेषः। लर्द्धे इति सूत्रेण पृष्टसङ्ख्याविशेषः अर्द्धीकरणार्हः समश्चेत् तस्यार्द्धीकरणानन्तरम् अवशिष्टाङ्कः अर्द्धीकरणानर्हः एकत्रिपञ्चादिरूपः विषमश्चेत् भवति तदा तं विषमाङ्कमेकाङ्केन संयोज्य पुनरर्द्धयेत्, तेन एको गुरुर्लभ्यते इति। तत्र नष्टलक्षणमन्यत्रोक्तं यथा—"वर्त्तितावति को भेदः किंरूप इति पृच्छति। यत्र तन्नष्टमाख्यातं तस्योत्तरमिहोच्यते॥" इति। सर्वगुर्वादिसर्वलघ्वन्तेषु एकाक्षरादिच्छन्दःसु प्रस्तारे क्रियमाणे इयत्सङ्ख्यको भेदः कीदृशः? इति प्रश्ने तस्य लघुगुरुसन्निवेशविशेषसमर्थनरूपोत्तरं नष्टमिति। यथा—षडक्षरे गायत्रीच्छन्दसि समवृत्ते षष्ठो भेदः कति गुर्वक्षरात्मकः कति वा लघ्वक्षरात्मकः इति प्रश्ने प्रस्तारं विनाऽपि तत्परिज्ञानार्थं, तमेव जिज्ञासितप्रस्तारान्तर्गतसङ्ख्याविशेषं षडङ्कम् अर्द्धयेत्, अर्द्धीकृते च लब्ध एको लघुः पृथक् भूमौ स्थापयेत्। ततश्च अवशिष्टां त्रिसङ्ख्याम् अर्द्धयितुमशक्यतया "सैके ग्" इति सूत्रेण एकाङ्केन सङ्गमय्य पुनरर्द्धयेत्, तेन च लब्धः एको गुरुः लघूत्तरं स्थापनीयः, ततश्च अवशिष्टायां द्विसङ्ख्यायां पुनरर्द्धीकृतायामेको लघुर्लब्धः; अवशिष्टस्य च एकाङ्कस्य अर्द्धीकरणानर्हतया तत्र एकं संयोज्य पुनः अर्द्धयेत्, तेन च तत्परमेको गुरुः स्थापनीयः। पुनश्च अर्द्धीकरणानर्हेन अवशिष्टेन एकाङ्केन एकं संयोज्य अर्द्धयेत्, तेन च प्राप्त एको गुरुः

स्थापयेत् । ततो द्विसङ्ख्या अवशिष्यते, पुनस्तामर्द्धयेत्, ततश्चैकलकारं दद्यात् । ततश्चैकसङ्ख्या अवशिष्यते, तत्र तावत्

तदनन्तरं स्थापनीयः, पुनश्च एवं कुर्य्यात्, ततः षडक्षरपूर्त्तिः भवतीति । अत्रेदं बोद्धव्यं —प्रश्नविषयीभूता सङ्ख्या अर्द्धीकरणार्हा अर्थात् समा चेत् तामर्द्धीकुर्य्यात्, तेन च एको लघुर्लभ्यते, अवशिष्टा च अर्द्धसङ्ख्याऽपि अर्द्धीकरणार्हा चेत् तामपि पुनरर्द्धयेत्, तेनापि लघुर्लभ्यते ; एवमक्षरपूर्त्तिं यावत् अवशिष्टामर्द्धीकरणार्हां सङ्ख्यां पुनःपुनरर्द्धयेत्, तेन च लघुरेव लभ्यते । किञ्च अर्द्धीकरणानन्तरमवशिष्टा सङ्ख्या प्रश्नविषयीभूता सङ्ख्या वा अर्द्धीकरणानर्हा अर्थात् एकत्रिपञ्चादिरूपा विषमा चेत् तां सङ्ख्यामेकाङ्केन संयोज्य अर्द्धीकुर्य्यात्, तेन च एको गुरुर्लभ्यते, विषमायां सङ्ख्यायामक्षरपूर्त्तिं यावत् एवमुत्तरोत्तरं कुर्य्यादिति । तत्र च समसङ्ख्याया उदाहरणं प्रदर्शितमेव । अध्ययनार्थिनां सुखबोधार्थं विषमसङ्ख्याया उदाहरणं किञ्चिन्मात्रं प्रदर्श्यते—षडक्षरे छन्दसि समवृत्तं विषमाङ्कं पञ्चमं कीदृशमिति प्रश्ने विषमसङ्ख्यया तया एकं मिश्रयेत्, तेन च जातायां षट्सङ्ख्यायामर्द्धीकृतायाम् एको गुरुर्लभ्यते, ततः त्रिसङ्ख्या अवशिष्यते, तस्या अपि विषमत्वात् पुनरेकाङ्केन तां योजयेत्, तेन च लब्धां चतुःसङ्ख्यां पुनरर्द्धयेत्, तेनापि एको गुरुर्लभ्यते, ततः अवशिष्टां द्विसङ्ख्यां पुनरर्द्धयेत्, तेन एको लघुर्लभ्यते, शिष्टायाश्चैकसङ्ख्याया विषमत्वात् पुनरेकेन तां योजयित्वा अर्द्धयेत्, ततश्चैको गुरुर्लभ्यते, शिष्टाञ्चैकसङ्ख्यां पुनः एकाङ्केन संयोज्य अर्द्धयेत्, तेनापि एको गुरुर्लभ्यते, पुनश्च एवं कुर्य्यात् ततोऽपि एको गुरुर्लभ्यते, एवञ्च षडक्षरगायत्रीच्छन्दसि पञ्चमं समवृत्तमेवं ऽऽ।ऽऽऽ गुरुलघुसन्निवेशविशिष्टमिति मन्तव्यम् । अनया रीत्या सर्वत्रैव प्रत्यय-भेदः नष्टं साधनीयमिति । प्राकृतपिङ्गलेऽपि यथा—"णट्ठे अंके भाग करिज्जसु समभागहिं तहिं लहु मुणिज्जसु । विसम एक्कदइ बंटण किज्जसु पिंगल जंपइ गुरु आणिज्जसु ॥" (१।३९) अस्य संस्कृतं—"नष्टेऽङ्के भागः क्रियतां समे भागे तत्र लघुरानीयताम् । विषमे एकं दत्त्वा वण्टनं क्रियतां पिङ्गलो जल्पति गुरुरानीयताम् ॥" इति । तथा वाणीभूषणेऽपि—"नष्टे तु कल्पयेत् भागं समभागे लघुर्भवेत् । दत्त्वैकं विषमे भागः कार्य्यस्तत्र गुरुर्भवेत् ॥" (१।१६) इति । एतदनुसारेण वृत्तरत्नाकरकृताऽपि—"नष्टस्य यो भवेदङ्कः तस्यार्द्धेऽर्द्धे समे च लः । विषमे चैकमाधाय स्यादर्द्धेऽर्द्धे गुरुर्भवेत् ॥" इति । विशेषपरिज्ञानार्थं कानिचिदुदा-हरणानि दर्श्यन्ते—प्रश्नः,—चतुरक्षरप्रस्तारे पञ्चदशभेदः कीदृशः ? प्रक्रिया—

सैके गिति लक्षणमावर्त्तनीयं यावत् वृत्ताक्षराणि षट् पूर्य्यन्ते । एवं सङ्ख्यान्तरेऽपि योज्यम् । (म)

उद्दिष्टवृत्तस्य सङ्ख्यापरिज्ञानार्थमाह ।—

## प्रतिलोमगुणं द्विर्लाद्यम् ॥ २६ ॥

(१५) {१५+१+२=८} {८÷२=४} {४÷२=२} {२÷२=१}

उत्तरं— ग॰ ल॰ ल॰ ल॰

प्रश्नः,—पञ्चाक्षरप्रस्तारे पञ्चविंशतितमो भेदः कीदृशः ?

प्रक्रिया—(२५) {२५+१÷२=१३} {१३+१÷२=७} {७+१÷२=४} {४÷२=२} {२÷२=१}

उत्तरम्— ग॰ ग॰ ग॰ ल॰ ल॰

प्रश्नः,—षडक्षरप्रस्तारे द्वापञ्चाशत्तमो भेदः कीदृशः ?

प्रक्रिया—(५२) {५२÷२=२६} {२६÷२=१३} {१३+१÷२=७} {७+१÷२=४} {४÷२=२} {२÷२=१}

उत्तरम्— ल॰ ल॰ ग॰ ग॰ ल॰ ल॰

प्रश्नः,—नवाक्षरप्रस्तारे अशीतितमो भेदः कीदृशः ?

प्रक्रिया—(८०) {८०÷२=४०} {४०÷२=२०} {२०÷२=१०} {१०÷२=५} {५+१÷२=३} {३+१÷२=२} {२÷२=१} {१+१÷२=१} {१+१÷२=१}

उत्तरम्— ल॰ ल॰ ल॰ ल॰ ग॰ ग॰ ल॰ ग॰ ग॰

एतादृश्या एव प्रक्रियया सर्वत्रैव नष्टप्रत्ययः साधनीय इति प्रस्तारं विनाऽपि अभिमतरूपसिद्धिः । प्रस्तारदीतिस्तु प्रागेव प्रदर्शिता।

यस्य वृत्तस्य सङ्ख्यां जिज्ञासेत तत् भूमौ प्रस्तारयेत्, ततस्तस्यान्ते यो लकारः सजातीयापेक्षया तमादौ कृत्वा प्रातिलोम्येन द्विरावर्त्तयेत्। तत्र निराकाराया आवृत्तेरसम्भवात् प्रथमातिक्रमे कारणाभावादेकसङ्ख्या लभ्यते। ततश्चैकसङ्ख्याङ्कम् अन्त्यलकारस्याधस्तात् स्थापयित्वा द्विगुणयेत्, ततस्तस्मादपनीय तत्पूर्वस्य वर्णस्याधस्तान्निधाय पुनर्द्विगुणयेत्। पुनस्तदपि तत्पूर्वस्य, एवं यावत् वृत्ताक्षराणि प्रातिलोम्येन समाप्यन्ते। तत्र याः सङ्ख्या निष्पद्यन्ते तावतिथं तद्वृत्तमिति। (ग)

तत्र विशेषमाह।—

## ततोऽप्येकं जह्यात्॥ २७॥

(ग) वृत्तस्य सङ्ख्याविशेषज्ञानाय प्रत्ययभेदमुद्दिष्टं निरूपयति, प्रतिलोमगुणमिति।—ल् अन्त्यलकार इत्यर्थः, ल-शब्देन आदिलकारग्रहणे प्रतिलोमशब्दप्रयोगवैयर्थ्यात्; आद्यं, कृत्वेति शेषः, आदावेव अन्त्यलघुवर्णं गृहीत्वेत्यर्थः, द्विः द्विवारं प्रतिलोमेन वामानुसारेण, यथापूर्वमित्यर्थः, गुणम् आवृत्तं, कुर्य्यादिति शेषः, पूर्वपूर्वानुसारेण द्विगुणं कुर्य्यादित्यर्थः। एवं कृते उद्दिष्टवृत्तस्य सङ्ख्या लभ्यते इति। तत्र उद्दिष्टस्वरूपं यथा—ईदृशलघुगुरुसन्निवेशविशेषवान् भेदः कियत्सङ्ख्यकः इति प्रश्ने तत्समर्थनरूपोत्तरमुद्दिष्टम्। यस्येति।—सङ्ख्यां प्रस्तारविधिना विधीयमानेषु भेदेषु मध्ये कियदङ्कात्मकमित्यङ्कम्। तत् जिज्ञासितवृत्तस्य गकार-लकाररूपमक्षरं गुरुलघुबोधकं चिह्नं वा। भूमौ इत्युपलक्षणं, लेखनयोग्यस्थाने इत्यर्थः। प्रस्तारयेत् विन्यसेत्। तस्य वृत्तस्य सजातीयापेक्षया लकारान्तरापेक्षया अन्ते यो लकारः स्थापितगकारलकारेषु योऽन्त्यलघुः तम् आदौ कृत्वा प्राथम्येन परिगृह्य प्रातिलोम्येन प्रतिगतं लोम आनुकूल्यम् यस्मात् तेन वैपरीत्येन, पूर्वपूर्वक्रमेण इत्यर्थः, द्विरावर्त्तयेत् द्विगुणयेत्। ननु वृत्तसङ्ख्याज्ञानाय क्रियमाणेऽस्मिन् उपाये प्रातिलोम्येन द्विरावर्त्तयेदित्युक्तं, परन्तु तत्र सङ्ख्याङ्काभावात् कथमावर्त्तयेत्? लकारमेवावर्त्तयेदिति चेत् केवललकारावर्त्तनेन वा कथं सङ्ख्याज्ञानं स्यात् इत्याह, तत्रेति।—निराकारायाः आकाररहितायाः सङ्ख्यायाः।

**पूर्वोक्ते कर्मणि क्रियमाणे यदि सा सङ्ख्या गकारस्थान-मापद्यते तदा तां द्विगुणयित्वा ततः सङ्ख्यासमुदायादेकं त्यजेत्,**

(४) क्रियमाणायामस्यां प्रक्रियायां नियमान्तरमाह, तत इति।—ततः सङ्ख्यातः, एकाम् अङ्कम्। कीदृशसङ्ख्यात एकमङ्कं त्यजेदिति स्पष्टयितुमाह हत्तिकारः, पूर्वोक्ते इति।—अन्त्यलघुवर्णाधःस्थापिताद्येकाङ्कादारभ्य पूर्वपूर्वानुसारेण द्विगुणीकृता सा सङ्ख्या यदा गुरुवर्णमापद्यते तदा तां सङ्ख्यां पुनर्द्विगुणयित्वा द्विगुणीकृतसङ्ख्यातः एकं त्यजेत्; अनेन विधिना या सङ्ख्या सम्पद्यते तद्वृत्तं तावत्सङ्ख्यकभेदवत् जानीयात्। ततश्च अयमर्थः,—यस्य वृत्तस्य सङ्ख्यां जिज्ञासेत तद्वृत्तस्य गुरुलघुज्ञापकानि चिह्नानि पत्रादौ विन्यस्य तेषु अन्त्यलघोरधस्तात् एकसङ्ख्यां विन्यसेत्, ततस्तां द्विगुणीकृत्य तस्यैव अन्त्यलघोरुपरि स्थापयेत्, अथ तां द्विसङ्ख्यां तत्पूर्ववर्णस्याधो निवेश्य पुनः द्विगुणयेत्, तेन च प्राप्तां चतुःसङ्ख्यां तस्यैव उपरि विन्यस्य तत्पूर्ववर्णस्याधोऽपि निवेशयेत्; ततः तां चतुःसङ्ख्यां पुनर्द्विगुणीकृत्य तदुपरि स्थापयेत्, अथ तामष्टसङ्ख्यां तत्पूर्ववर्णस्य अधो विन्यस्य द्विगुणयित्वा च तस्यैवोपरि निवेशयेत्, एवं वृत्तस्य प्रथमाक्षरं यावत् कुर्य्यात्। किञ्च, क्रियमाणायामस्यां प्रक्रियायां यदा पूर्ववर्णो गुरुर्भवेत् तदा द्विगुणीकृतायाः तत्सङ्ख्याया एकसङ्ख्यां वियोज्य उपरि विन्यसेदिति; एवञ्च प्रथमाक्षरोपरि या सङ्ख्या विन्यस्ता भवेत् सैव तद्वृत्तस्य सङ्ख्या ज्ञातव्या। तत्रोदाहरणं यथा—त्र्यक्षरवृत्तेषु सर्वलघुकं वृत्तं प्रस्तारभेदानां कतममिति प्रश्ने (- - -) एवं लघुचिह्नत्रयं संस्थाप्य अन्त्यलघोरध-स्तादेकमङ्कं दद्यात्, (- - -, अन्त्यस्याधः १) ततस्तं द्विगुणीकृत्य तस्यैव उपरि स्थापयेत्, (- - -, अन्त्यस्योपरि २, अधः १) ततस्तं द्व्यङ्कं विलोमेन द्वितीयलघोरधः स्थापयित्वा द्विगुणीकृत्य च तस्यैवोपरि दद्यात्, (- - -, उपरि ४ २, अधः २ १) ततस्तं द्विगुणीभूतं चतुरङ्कं विलोमेन तृतीयलघो-रधः संस्थाप्य द्विगुणयित्वा च तस्यैवोपरि दद्यात्, (- - -, उपरि ८ ४ २, अधः ४ २ १) एवञ्चाष्टमभेदवत् सर्वलघुकं वृत्तमिति निश्चितम्। यथा वा—अष्टाक्षरे अनुष्टुप्छन्दसि (⏑ - - ⏑ ⏑ - - ⏑) एतादृशगुरुलघुसन्निवेशविशिष्टं माणवकाख्यं वृत्तं कतमो भेद इति प्रश्ने—उक्तगुरुलघुज्ञापकानि चिह्नानि पत्रादौ विन्यसेत्। ततश्च प्रथमापेक्षया अष्टमस्थानस्थितो यो लघुवर्णः स एवान्त्यलघुः, तदनन्तरं

ततः पूर्वोक्तं कर्म कुर्य्यात्। ततः परिपूर्णत्वात् तद्वृत्तसङ्ख्या सिध्यति। (र)

---

लघुवर्णाभावात्। एवञ्च उत्तमलघोरधस्तादेकमङ्कं लिखित्वा द्विगुणयेत्, ततस्तं द्विगुणितं २ द्व्यङ्कं तस्यैव सप्तमलघोरुपरि विन्यसेत्। ततस्तं २ द्व्यङ्कं तत्पूर्वलघोः षष्ठवर्णस्याधस्तात् लिखित्वा द्विगुणयेत्, अथ द्विगुणितं तं ४ चतुरङ्कं षष्ठलघोरेवोपरि विन्यस्य तत्पूर्वगुरोः पञ्चमवर्णस्य अधस्तात् निवेशयेत्, ततस्तं द्विगुणीकृत्य लब्धा-दष्टाङ्कादेकं वियोजयेत्, तेन च प्राप्तं ७ सप्ताङ्कं तत्पूर्वगुरोः चतुर्थवर्णस्याधस्तात् निवेश्य द्विगुणीकृत्य च लब्धात् चतुर्दशाङ्कात् एकपरित्यागेन प्राप्तं १३ त्रयोदशाङ्कं चतुर्थवर्णस्यैवोपरि स्थापयेत्। तञ्च त्रयोदशाङ्कं तत्पूर्वलघोः तृतीयवर्णस्याधो विन्यस्य पुनर्द्विगुणयेत्, द्विगुणितञ्च २६ षड्विंशत्यङ्कं तस्यैव तृतीयवर्णस्य उपरि स्थापयेत्, पुनश्च तं षड्विंशत्यङ्कं तत्पूर्वलघोः द्वितीयवर्णस्य अधस्तात् लिखित्वा द्विगुणयेत्, द्विगुणितञ्च ५२ द्विपञ्चाशदङ्कं तस्यैव द्वितीयवर्णस्य उपरि स्थापयेत्, अथ तं द्विपञ्चाशदङ्कं तत्पूर्वगुरोः प्रथमवर्णस्याधस्तात् विन्यस्य द्विगुणयेत्, तेन च लब्धात् चतुरधिकशताङ्कादेकपरित्यागेनावशिष्टं (१०३) त्र्यधिकशताङ्कं तस्यैव प्रथमवर्णस्य उपरि स्थापयेत्। एवञ्च अष्टाक्षरे अनुष्टुप्छन्दसि त्र्यधिकशततमो भेदः माणवकमिति सिद्धम्। एवमन्यत्रापि अनुसरणीयम्। पाठार्थिनां बोधसौकर्य्यार्थमङ्कपातेन सुस्पष्टं प्रदर्श्यते यथा—

१०३ ५२ २६ १३ ७ ४ २
ᴗ – – ᴗ ᴗ – – ᴗ
५२ २६ १३ ७ ४ २ १

अत्रायं वक्तव्यः,—प्रदर्शितनियमानुसारेण सर्वगुरुकवृत्तस्य भेदः किंयत्सङ्ख्यक इति प्रश्नस्य उत्तरो न सम्भवतीति चेत्—सर्वस्यैव वृत्तस्य सर्वगुरुको भेदः प्रथमः सर्वलघुकश्च चरमः इति सिद्धमेव, अतः सर्वगुरुकप्रस्तारे प्रथमे सर्वलघुकप्रस्तारे शेषे च मध्ये प्रश्नशङ्कैव नास्तीति द्वितीयस्थानादारभ्य अन्त्यात् पूर्वस्थानेषु प्रश्नावकाश इति। वृत्तरत्नाकरे उद्दिष्टाख्यः प्रत्ययः प्रकारान्तरेण प्रदर्शितः, यथा—"उद्दिष्टं द्विगुणानाद्यादुपर्य्यङ्कान् समालिखेत्। लघुस्था ये तु तत्राङ्कास्तैः सैकैर्मिश्रितै-र्भवेत्॥" इति। तथा वाणीभूषणेऽपि—"उद्दिष्टवर्णोपरि दत्त्वा द्विगुणक्रमेणाङ्कम्। एकं लघुवर्णान्ते दत्त्वोद्दिष्टं विजानीत॥" इति। अत्रायमभिप्रायः,—द्वौ गुरू एको लघुरेको गुरुः (ᴗ ᴗ – ᴗ) एवं गणः चतुरक्षरप्रस्तारे कुत्रास्ति इत्यादिप्रश्ने पृष्टे सर्वे

प्रस्तारात् विना वृत्तसङ्ख्यापरिज्ञानार्थमाह।—

द्विरर्द्धे ॥ २८ ॥

अपनीते इत्यध्याहारः। यदा जिज्ञासेत, षडक्षरे छन्दसि

---

लिखित्वा आदिगुरोरुपरि अधो वा एकसङ्ख्यां विलिख्य द्वितीयगुरोरुपरि तद्द्विगुणितं

१ २ ४ ८

द्व्यङ्कं लिखेत्, तृतीये लघौ चतुःसङ्ख्यां, चतुर्थे गुरावष्टसङ्ख्यां च लिखेत् (⌣ ⌣ – ⌣) उत्तरोत्तरमेवं द्विगुणलेखने कृते सति लघोरुपरिस्था ये अङ्काः तत्राधिकमेकं संयोज्य ये अङ्का भवन्ति, तत्समाने स्थाने स गणो वर्त्तते इति वेदितव्यम्। अत्र लघोरुपरिस्थचतुरङ्केन सह एकाङ्कयोगात् पञ्चाङ्को भवेदतः चतुरक्षरप्रस्तारे पञ्चमभेदे एवं-गण इति निष्कर्षः। सर्वत्र प्रस्तारे इयमेव परिपाटी विधेया। मात्राणामप्युद्दिष्टं प्राकृतपिङ्गलवाणीभूषणादावुक्तं, दिङ्मात्रं यथा—"दत्त्वा पूर्वयुगाङ्कं गुरुशीर्षाङ्कं विलुप्य शेषाङ्के। अङ्कैरितोऽवशिष्टैः शिष्टैरुद्दिष्टमुद्दिष्टम्॥" इति। एवमन्यैरप्युक्तं यथा—"मात्रायां प्रथमं चैकोऽङ्क उपरि अन्यया युगायां द्वयं संयुज्य गुरौ तत्र च विकला मूर्द्धद्वयेन वयम्। एकीकृत्य च पञ्चकं जनितवान्नैवं कृते लुप्यते शिष्टैस्तु लघुमूर्द्धकाङ्क इह चेदुद्दिष्टबाधकता॥" इति। एतेनैतदायातं—षट्कलप्रस्तारे एको गुरुः द्वौ लघू एको गुरुरित्येवं-गणः कुत्रास्ति इत्येवं-प्रश्ने तदाकारं गणं लिखित्वा (⌣ – – ⌣) पूर्वयुगलेन समानाऽङ्कः देयः, अर्थात् आदिकलायाम् एकाङ्को देयः, द्वितीयकलायां द्व्यङ्कः, तृतीयकलायां पूर्वाङ्कद्वयमेकीकृत्य तत्सङ्ख्यकस्त्र्यङ्कः स्थाप्यः, चतुर्थकलायां द्वित्र्यङ्कं मेलयित्वा पञ्चाङ्कः स्थाप्यः, इत्येवं पूर्वपूर्वाङ्कद्वयमेलनं कृत्वा उत्तरोत्तरकलायां स्थाप्यः। गुरौ तु मात्राद्वयस्य वर्त्तमानत्वात् अङ्कसङ्करपरिहारार्थं शिरसि एकोऽङ्कः अधश्च अपरोऽङ्कः देयः इति विशेषः। अतः प्रथमगुरोरधः द्वौ चतुर्थ-

१ ३ ५ ८

गुरोश्चाधः पञ्चभिरष्टाभिः मेलनेन त्रयोदशाङ्कः स्थाप्यः। (⌣ – – ⌣ / २ १३)

एवमङ्केषु स्थापितेषु गुरुशिरसि स्थितानङ्कानेकीकृत्य पातयेत्, ततश्च एकाङ्काष्टाङ्कौ मिलितौ नव, ते अन्त्यकलास्थे त्रयोदशाङ्के लोप्याः, अवशिष्टाश्चत्वारः। सा सङ्ख्या उद्दिष्टप्रस्तारस्य। अनया रीत्या अन्यत्रापि उद्दिष्टप्रत्ययः साधनीयः।

(ख) वृत्तसङ्ख्याज्ञापकं सङ्ख्यानाख्यप्रत्ययभेदं सूत्रचतुष्टयेन विवरीतुमुपक्रमते, द्विरर्द्धे इत्यादि।—अर्द्धे इति पदं वृत्तौ उक्तेन 'अपनीते' इति अध्याहृतपदेन

कति वृत्तानि भवन्ति? तदा तां छन्दोऽक्षरसङ्ख्यां भूमौ स्थापयित्वा ततोऽर्द्धमपनयेत्। तस्मिन्नपनीते द्वौ लभ्येते। ततस्तां द्विसङ्ख्यां भूमौ पृथक् प्रस्तारयेत्। (ल)

ततः शेषास्त्वयोऽक्षरसङ्ख्या या भवन्ति, तेषामर्द्धयितुमशक्यत्वात् किं कर्त्तव्यमित्याह।—

## रूपे शून्यम् ॥ २९ ॥

विषमसङ्ख्यातो रूपमपनयेत्, तस्मिन्नपनीते शून्यं लभ्यते। तत् पूर्वलब्धाया द्विसङ्ख्याया अधस्तात् स्थापयेत्, ततो द्विसङ्ख्या अवशिष्यते, ततोऽर्द्धेऽपनीते पुनर्द्विसङ्ख्या लभ्यते, तां शून्याधस्तात् स्थापयेत्, ततो रूपे शून्यं लभ्यते, तत् द्विसङ्ख्याया अधस्तात् स्थापयेत्। (व)

अन्वेतव्यम्; ततश्च अर्द्धे जिज्ञासितवृत्तसङ्ख्याङ्कात् अर्द्धभागे अपनीते अपसारिते सति द्वि. द्व्यङ्कः, लभ्यते इति शेषः। अत्रायं बोद्धव्यो यत्—जिज्ञासितवृत्तसङ्ख्याङ्कः समश्चेत्, तदैव तस्मात् अर्द्धः अपनेतव्यः; समसङ्ख्याया एवार्द्धीकरणसम्भवात्, ततश्च द्व्यङ्को व्यवस्थाप्यः। तां छन्दोऽक्षरसङ्ख्यां षट्सङ्ख्याम्। अर्द्धं त्रिसङ्ख्यारूपम्। तस्मिन् त्रिसङ्ख्यारूपे अर्द्धे। अत्रेदं ज्ञातव्यं यत्—यस्याः कस्याश्चिदेव समसङ्ख्याया अर्द्धे अपनीते द्विसङ्ख्या लभ्यते इति। स्थापनाप्रकारो यथा—

| | | |
|---|---|---|
| छन्दोऽक्षरसङ्ख्या | ६ | |
| अपनेतव्यमर्द्धं | ३ | अर्द्धापनयने लाभः २, अर्द्धस्थानम्। |
| अवशिष्टसङ्ख्या | ३ | |

(व) इदानीमवशिष्टाया स्त्रिसङ्ख्याया विषमत्वेन कर्त्तव्यमाह, रूपे इत्यादि।—रूपे स्वरूपे, वैषम्यस्वरूपे इत्यर्थः, एकत्रिपञ्चादिरूपविषमाङ्केषु प्रथमपरित्यागे कारणाभावात् एकसङ्ख्याङ्के इति यावत्, अत्रापि 'अपनीते' इति पदम् अध्याहार्य्यम्; ततश्च रूपे एकसङ्ख्याङ्के अपनीते सति शून्यं, लभ्यते इति शेषः। अयमत्र बोद्धव्यो यत्—यस्याः कस्याश्चिदेव विषमसङ्ख्यातः रूपापनयने शून्यलाभ इति। विषमेत्यादि।—रूपम् एकसङ्ख्याङ्कम्। तत् शून्यं, पूर्वलब्धायाः पूर्वसूत्रानुसारेण अर्द्धे अपनीते प्राप्तायाः द्विसङ्ख्यायाः। स्थापनाप्रकारो यथा—

ततः किं कर्त्तव्यमित्याह ।—

## द्विः शून्ये ॥ ३० ॥

शून्यस्थाने द्विरावृत्तिं कुर्य्यात् । तत्र निराकाराया आवृत्तेरसम्भवात् प्रथमातिक्रमे कारणाभावादेकसङ्ख्या लभ्यते, तां शून्यस्थाने स्थापयित्वा द्विगुणयेत, ततो द्वौ भवतः । तस्योपरिष्टादर्द्धस्थानं द्विसङ्ख्याङ्कं, तदपनीय तस्य स्थाने तं द्विसङ्ख्याङ्कं स्थापयेत् । (अ)

---

| | | | | |
|---|---|---|---|---|
| अवशिष्टविषमसङ्ख्या | ३ | | | |
| अपनेतव्यं रूपं | १ | रूपापनयने लाभः | ०, | शून्यस्थानम् । |
| अवशिष्टसमसङ्ख्या | २ | | | |
| अपनेतव्यमर्द्धं | १ | अर्द्धापनयने लाभः | २, | अर्द्धस्थानम् । |
| अवशिष्टविषमसङ्ख्या | १ | | | |
| अपनेतव्यं रूपं | १ | रूपापनयने लाभः | ०, | शून्यस्थानम् । |

(अ) समाङ्कतोऽर्द्धापनयने द्विलाभे विषमाङ्कतश्च रूपापनयने शून्यलाभे पुनः किं कर्त्तव्यमित्यत आह, द्विरिति ।—द्विः द्विगुणं, कुर्य्यादिति शेषः । शून्येति ।—शून्यस्थाने विषमाङ्कतो रूपापनयने लब्धस्य शून्यस्य स्थाने । शून्यस्य द्विरावृत्तिकरणासम्भवात् कथं सङ्गतिरिति दर्शयति, तत्रेति ।—निराकारायाः शून्यरूपायाः सङ्ख्यायाः आवृत्तेरसम्भवात् गुणनासम्भवेन काचित् साकारा सङ्ख्या ग्राह्या, सा च सङ्ख्या प्रथमातिक्रमे कारणाभावात् "प्रथमोपस्थितपरित्यागे प्रमाणाभावः" इति न्यायेन एकसङ्ख्यापरित्यागपूर्वकद्व्यादिसङ्ख्याग्रहणे हेत्वभावात् एकसङ्ख्या एव ग्राह्या इत्यर्थः । ताम् एकसङ्ख्याम् । शून्यस्थाने सर्वानन्तस्थशून्यस्थाने इत्यर्थः । तस्य शून्यस्थाने द्विरावृत्तिकरणेन स्थापितस्य द्व्यङ्कस्य । अर्द्धस्थानं समसङ्ख्यातः अर्द्धापनयने लब्धं द्व्यङ्करूपमर्द्धस्थानम् । तत् द्व्यङ्करूपमर्द्धस्थानम् । तं शून्यस्थाने एकसङ्ख्याङ्कस्य द्विरावृत्तिलब्धम् । एवं मध्ये उपरि च यत्र यत्र शून्यस्थानं लभेत तत्र तत्र स्थितमधोदेशादुन्नीतं सङ्ख्याजातं द्विगुणयित्वा उपरिष्टादर्द्धस्थाने स्थापयेदिति । स्थापनाप्रकारो यथा—

अनन्तरमिदं कर्त्तव्यमित्याह ।—

तावदर्द्धे तद्गुणितम् ॥ ३१ ॥

यदर्द्धस्थाने स्थितं सङ्ख्याजातं तत् तावद्गुणितं कुर्य्यात् । एतदुक्तं भवति—स्वसङ्ख्ययैव गुणयितव्यमिति । ततो द्वौ द्वाभ्यां गुणितौ चत्वारो भवन्ति ; तेषामुपरिष्टाच्छून्यस्थानं, तत्र तान् आरोपयेत् ; अनन्तरं "द्विः शून्ये" (८।३०) इति द्विगुणिता अष्टौ भवन्ति, तानप्यर्द्धस्थाने निधाय तावद्गुणितान् कुर्य्यात् ;

---

| | | | |
|---|---|---|---|
| छन्दोऽक्षरसङ्ख्या | ६ | | |
| अपनेतव्यमर्द्धं | ३ | अर्द्धापनयने लाभः २, | अर्द्धस्थानम् । |
| अवशिष्टविषमसङ्ख्या | ३ | | |
| अपनेतव्यं रूपं | १ | रूपापनयने लाभः ०, | शून्यस्थानम् । |
| अवशिष्टसमसङ्ख्या | २ | | |
| अपनेतव्यमर्द्धं | १ | अर्द्धापनयने लाभः २, | अर्द्धस्थानम् २ । |
| अवशिष्टविषमसङ्ख्या | १ | | |
| अपनेतव्यं रूपं | १ | रूपापनयने लाभः ०, | शून्यस्थानम् १ × २ = २ । |

(घ) शून्यस्थाने स्थापितमेकाङ्कं द्विगुणयित्वा तं द्व्यङ्कमुपरिस्थितार्द्धस्थाने संस्थाप्य किं विधेयमित्याह, तावदिति ।—अर्द्धे शून्यस्थानस्य उपर्य्यवस्थिते अर्द्ध-स्थाने, तत् शून्यस्थाने स्थितस्य सङ्ख्याजातस्य द्विगुणीकरणानन्तरम् उपरिष्टादर्द्धस्थाने स्थापितं यत् सङ्ख्याजातं तदित्यर्थः, तावद्गुणितं तयैव सङ्ख्यया गुणितं, कुर्य्यादिति शेषः । स्वसङ्ख्यया अर्द्धस्थानस्थितसङ्ख्यया । तान् चतुरङ्कान् । द्विगुणिता इत्यत्र चत्वार इति शेषः । तान् अष्टाङ्कान् । तावद्गुणितान् अष्टगुणितान् । स्थापनाप्रकारो यथा—

| | | | |
|---|---|---|---|
| अर्द्धस्थानं | २ | ८ × ८ = ६४ | "तावदर्द्धे तद्गुणितम्" इति सूत्रानुसारेण । |
| शून्यस्थानं | ० | ४ × २ = ८ | "द्विः शून्ये" इति सूत्रानुसारेण । |
| अर्द्धस्थानं | २ | २ × २ = ४ | "तावदर्द्धे तद्गुणितम्" इति सूत्रानुसारेण । |
| शून्यस्थानं | ० | १ × २ = २ | "द्विः शून्ये" इति सूत्रानुसारेण । |

एतेन सूत्रचतुष्टयेन तु एतदायातं भवति यत्—एतदक्षरे छन्दसि कति वृत्तानीति प्रश्ने तस्य छन्दसः अक्षरसङ्ख्या अर्द्धीकरणार्थं द्विचतुरादिरूपा समाङ्का भवति चेत्

ततोऽष्टावष्टभिः गुणिताश्चतुःषष्टिर्भवन्ति गायत्रीसमवृत्तानि। अनेनैव न्यायेन अष्टाविंशत्यधिकशतमुष्णिहः। षट्पञ्चाशदधिके द्वे शते अनुष्टुभः। द्वादशोत्तराणि पञ्चशतानि बृहत्याः।

---

तां भूमौ प्रसार्य्य ततः अर्द्धमपनयेत्, तेन च द्व्यङ्को लभ्यते, तञ्च द्व्यङ्कम् अष्टाविंशति-सूत्रस्य टीकायां प्रदर्शितरीत्यनुसारेण पार्श्वे स्थापयेत्। अवशिष्टाङ्कोऽपि अर्द्धीकरणार्हः समसङ्ख्यकश्चेत् ततोऽपि अर्द्धमपनयेत्, तेनापि द्व्यङ्को लभ्यते; समसङ्ख्यायामुत्तरोत्तरमेवमेव कर्त्तव्यम्। छन्दसः अक्षरसङ्ख्या, अर्द्धापनयनावशिष्टा सङ्ख्या वा अर्द्धीकरणानर्हा एकत्रिपञ्चादिविषमाङ्का भवति चेत् ततो रूपमपनयेत्, तेन च शून्यं लभ्यते, तच्च शून्यम् एकोनत्रिंशत्-सूत्रस्य टीकायां प्रदर्शितरीत्यनुसारेण उपरिस्थस्य द्व्यङ्कस्य अधः स्थापयेत्, अवशिष्टाङ्कोऽपि अर्द्धीकरणानर्हः विषम-सङ्ख्यकश्चेत् ततोऽपि रूपमपनयेत्, तेनापि शून्यं लभ्यते, विषमसङ्ख्यायामुत्तरो-त्तरमेवमेव कर्त्तव्यम्। छन्दसः अक्षरसङ्ख्या अर्द्धीकरणानर्हा विषमा चेत् ततो रूपमपनयेत्, तेन च लब्धं शून्यं सर्वोपरिष्टादेव स्थापयेत्, अवशिष्टसङ्ख्या समा वा विषमा वा, प्रदर्शितनियमानुसारेण ततः अर्द्धं वा रूपं वा अपनयेत्, तेन लब्धं द्व्यङ्कं वा शून्यं वा उपर्य्यधोभावेन स्थापयेत्। ततः शून्यस्थानं द्विगुणितं कुर्य्यात्, परन्तु शून्यस्य द्विगुणीकरणासम्भवात् सर्वाधःस्थशून्यस्थाने "प्रथमोपस्थितपरित्यागे कारणाभावः" इति न्यायेन त्रिंशत्-सूत्रस्य टीकायां प्रदर्शितरीत्यनुसारेण एकमङ्कं निवेश्य द्विगुणयेत्, तच्च द्व्यङ्कम् उपरि अर्द्धस्थानस्थितस्य द्व्यङ्कस्य स्थाने स्थापयेत्। एवं पूर्वपूर्वानुसारेण शून्यस्थाने स्थितमङ्कं द्विगुणयेत्। ततः शून्यस्थानस्थस्य एकाङ्कस्य द्वैगुण्यलब्धः योऽङ्कः उपरिष्टात् अर्द्धस्थाने व्यवस्थापितः, तं द्व्यङ्कम् एकत्रिंशत्सूत्रस्य टीकायां प्रदर्शितरीत्यनुसारेण तयैव सङ्ख्यया गुणितां कुर्य्यात्, ताञ्च सङ्ख्यां तदु-परिस्थे अर्द्धस्थाने शून्यस्थाने वा स्थापयेत्, तच्च स्थानम् अर्द्धस्थानं भवति चेत् तां सङ्ख्यां तयैव सङ्ख्यया पुनः गुणितां कुर्य्यात्। शून्यस्थानं भवति चेत् सङ्ख्यां तां द्विगुणितां कुर्य्यात् एवं सर्वोपरिस्थस्थानं यावत् कुर्य्यात्, ततश्च सर्वोपरिस्थिता सङ्ख्या एव तस्य छन्दसः वृत्तसङ्ख्या ज्ञातव्या इति। अत्र षडक्षरे गायत्रीच्छन्दसि समवृत्तसङ्ख्या वृत्तिकारेण स्वयमेव प्रदर्शिता, अस्माभिरपि अध्ययनार्थिनां बोध-सौकर्य्यार्थं यथामति अङ्कविन्यासपूर्वकं तदुदाहरणं विशदीकृतम्। एवं सप्ताक्षरे उष्णिक्छन्दसि कति समवृत्तानीति प्रश्ने सा सप्तसङ्ख्या भूमौ स्थाप्या, तस्याश्

चतुर्विंशत्यधिकं सहस्रं पङ्क्तेः। अष्टचत्वारिंशदधिके द्वे सहस्रे त्रिष्टुभः। षण्णवत्यधिकानि चत्वारि सहस्राणि जगत्याः। एवमतिच्छन्दसां ज्ञातोनाम्न द्रष्टव्यम्। (ष)

---

सङ्ख्याया विषमत्वात् अर्द्धीकरणानर्हत्वेन "रूपे शून्यम्" इति सूत्रानुसारेण ततो रूपमपनयेत्, तत्र लब्धं शून्यं पार्श्वे पृथक् स्थापयेत्, ततः अवशिष्टायाः षट्सङ्ख्यायाः समत्वादर्द्धीकरणार्हत्वेन "द्विरर्द्धे" इति सूत्रानुसारेण ततः अर्द्धम् अपनीत त्रिसङ्ख्या लभ्यते, तां च सङ्ख्यां शून्याधस्तात् विन्यसेत्, अवशिष्टायाश्च त्रिसङ्ख्याया विषमत्वेनार्द्धीकरणानर्हत्वात् पुनरपि "रूपे शून्यम्" इति सूत्रानुसारेण ततो रूपे अपनीते लब्धं शून्यम् उपरिस्थत्रिसङ्ख्याधः स्थापयेत्। अवशिष्टायाश्च द्विसङ्ख्यायाः समत्वादर्द्धीकरणार्हत्वेन "द्विरर्द्धे" इति सूत्रानुसारेण ततः अर्द्धे अपनीते लब्धां द्विसङ्ख्यां शून्याधः स्थापयेत्, अवशिष्टा च एकसङ्ख्या अर्द्धीकरणानर्हा विषमा, अतः "रूपे शून्यम्" इति सूत्रेण ततः पुनः रूपे अपनीते लब्धं शून्यं द्विसङ्ख्याधः पुनः स्थापयेत्। ततः "द्विः शून्ये" इति सूत्रानुसारेण सर्वाधःस्थशून्यस्थाने एकसङ्ख्यां स्थापयित्वा तां द्विगुणयेत्, तेन च लब्धां द्विसङ्ख्यामुपरिस्थिताङ्कस्थाने स्थापयित्वा "तावदर्द्धे तद्गुणितम्" इति सूत्रानुसारेण तयैव द्विसङ्ख्यया गुणयेत्, तेन च लब्धां चतुःसङ्ख्याम् उपरिस्थशून्यस्थाने संस्थाप्य पुनः "द्विः शून्ये" इति सूत्रेण द्विगुणितां कुर्यात्, द्वैगुण्यलब्धाञ्चाष्टसङ्ख्यामुपरिस्थिताङ्कस्थाने संनिवेश्य "तावदर्द्धे तद्गुणितम्" इत्यनेन तयैव अष्टसङ्ख्यया पुनः गुणयेत्, ततश्च लब्धां चतुःषष्टिसङ्ख्यामुपरिस्थितशून्यस्थाने नीत्वा पुनरपि "द्विः शून्ये" इति सूत्रेण द्विगुणयेत्, गुणनलब्धा च अष्टाविंशत्यधिकशतसङ्ख्या सप्ताक्षरे उष्णिक्छन्दसि समवृत्तानां ज्ञातव्या इति। स्थापनाप्रकारो यथा—

छन्दोऽक्षरसङ्ख्या ७

अपनेतव्यं रूपं १, रूपापनयने लाभः ( शून्यस्थानम् ) ०, ६४ × २ = १२८

—— "द्विः शून्ये"

अवशिष्टसमसङ्ख्या ६

अपनेतव्यमर्द्धं ३, अर्द्धापनयने लाभः ( अर्द्धस्थानं ) २, ८ × ८ = ६४

—— "तावदर्द्धे तद्गुणितम्"।

अवशिष्टविषमसङ्ख्या ३

## द्विर्द्व्यूनं तदन्तानाम् ॥ ३२ ॥

**गायत्र्यादिवृत्तसङ्ख्याजातं द्विगुणीकृत्य द्वाभ्यामूनं कुर्यात्, तत् तदन्तानां परिमाणं भवति, यस्य छन्दसः सङ्ख्या**

अपनेतव्यं रूपं  १,  रूपापनयने लाभः ( शून्यस्थानं )  ०,  ४ × २ = ८
—— "द्विः शून्ये"।

अवशिष्टसमसङ्ख्या  २

अपनेतव्यमर्द्धं  १,  अर्द्धापनयने लाभः ( अर्द्धस्थानं )  २,  २ × २ = ४
—— "तावदर्द्धे तद्गुणितम्"।

अवशिष्टविषमसङ्ख्या  १

अपनेतव्यं रूपं  १,  रूपापनयने लाभः ( शून्यस्थानं )  ०,  १ × २ = २
"द्विः शून्ये"।

एवमष्टाक्षरादिष्वपि समवृत्तसङ्ख्या साधनीया। समोपचितार्द्धसमवृत्तसङ्ख्या समार्द्धसमोपचितविषमवृत्तसङ्ख्या शुद्धार्द्धसमवृत्तसङ्ख्या शुद्धविषमवृत्तसङ्ख्या च पञ्चमाध्याये प्रदर्शिता, सा सा च तत्रैव द्रष्टव्या। वृत्तरत्नाकरे तु संख्यानाख्यः प्रत्ययः प्रकारान्तरेण निर्दिष्टो यथा—"लगक्रियाङ्कसन्दोहे भवेत् संख्या विमिश्रिते। उद्दिष्टाङ्कसमाहारः सैको वा जनयेदिमाम् ॥" इति। सरलोपायेन वृत्तसंख्यापरिज्ञानार्थं मतान्तरं यथा—इयदक्षरच्छन्दसः वृत्तसंख्या कति इति प्रश्ने वृत्ताक्षराणि भूमौ स्थापयेत। ततः प्रथमाक्षरोपरि द्विसंख्यां स्थापयेत, तां द्विगुणीकृत्य द्वितीयाक्षरोपरि स्थापयेत, पुनरपि द्वितीयाक्षरोपरिस्थां संख्यां द्विगुणीकृत्य तृतीये स्थापयेत, एवं द्विगुणिता या संख्या शेषाक्षरोपरि वर्त्तते सैव तस्य वृत्तस्य समवृत्तसंख्या। उदाहरणम्—

( २ ४ ८ १६ ३२ ६४ १२८ / ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ ᴗ )। उक्तोदाहरणे उष्णिक्छन्दसः सप्ताक्षरत्वात् सप्ताक्षराणि संस्थाप्य पूर्वोक्तरीत्या द्विगुणयेत्। शेषाक्षरे अष्टाविंशत्यधिकशतसंख्यायाः विद्यमानत्वात् उष्णिक्छन्दसि समवृत्तसंख्या अष्टाविंशत्यधिकशतमिति ज्ञायते।

( स ) एकाक्षरमारभ्य इयदक्षरपर्यन्तानां छन्दसां योगे समवृत्तानां कियती संख्या जायते इति प्रश्ने लघुनोपायेन तत्परिज्ञानार्थमाह, द्विरिति।—द्विः द्विगुणम्। द्व्यूनं द्वाभ्यां हीनम्। तदन्तानाम् एकाक्षरमारभ्य द्विचतुराद्यन्तानां छन्दसां,

द्विगुणिता तत्पर्य्यन्तानां पूर्वेषामेकाक्षरप्रभृतीनां वृत्तसङ्ख्या भवतीत्यर्थः। (ख)

परे पूर्णम्॥ ३३॥

तदेतच्छन्दोवृत्तसङ्ख्याजातं द्विगुणितं पूर्णमेव स्थापयितव्यं,

---

संख्यासमष्टिरिति शेषः। अयमर्थः,—ज्ञातव्यसंख्यासमष्टिषु छन्दःसु अन्तिमस्य अधिकाक्षरच्छन्दसः संख्यां द्विगुणीकृत्य गुणलब्धाङ्कात् द्विसंख्यां वियोजयेत्, अवशिष्टा च संख्या जिज्ञासितवृत्तानां समवृत्तसंख्यासमष्टिः ज्ञातव्या इति। एतदेव विशदयति वृत्तिकारः, गायत्र्यादीति।—एकाक्षरादिषडक्षरपर्य्यन्तानां छन्दसां समवृत्तसंख्यानां योगे वृत्तसंख्यासमष्टिः कति इति प्रश्ने, एतेषु अधिकाक्षरस्य अन्त्यस्य षडक्षरवृत्तस्य संख्यायाः चतुःषष्टिरूपायाः द्विगुणीकरणेन अष्टाविंशत्यधिकैकशतं भवेत्, तच्च द्वाभ्यामूनं कुर्य्यात्, तेन च षड्विंशत्यधिकैकशतम् एकाक्षरादिषडक्षरपर्य्यन्तच्छन्दसां समवृत्तसंख्यासमष्टिरिति बोध्यम्। यथा वा—एकाक्षरादि अष्टाक्षरपर्य्यन्तानां छन्दसां समवृत्तसंख्यानां योगे वृत्तसंख्यासमष्टिः कति इति प्रश्ने एतेषु अधिकाक्षरस्य अन्त्यस्य अष्टाक्षरवृत्तस्य संख्यायाः षट्पञ्चाशदधिकद्विशतरूपायाः द्वैगुण्यकरणेन लब्धायाः द्वादशाधिकपञ्चशतसंख्यायाः द्विसंख्यां वियोजयेत्। अवशिष्टा च दशाधिकपञ्चशतसंख्या एकाक्षराद्यष्टाक्षरपर्य्यन्तच्छन्दसां समवृत्तसंख्यासमष्टिरिति। सर्व्वत्रैवं-रीत्या साधनीयम्। अन्यत्राप्युक्तं—"विवक्षितान्तजातेस्तु भेदा द्विगुणितास्ततः। द्विहीनाः सर्वसंख्यायां ते स्युरुक्थादिजा इति॥" इति। अनया रीत्या एकाक्षरादिषड्विंशत्यक्षरपर्य्यन्तच्छन्दसां समवृत्तसंख्यासमष्टिः त्रयोदशकोट्यः द्विचत्वारिंशल्लक्षाणि सप्तदशसहस्राणि षड्विंशत्यधिकसप्तशतानीति। तथा चोक्तं प्राकृतपिङ्गले—"छब्बीसा सत्तसआ तह सत्तारह सहस्साइं। चाआलीसं लक्खं तेरह कोडी समग्गाइं॥" (१।४२) इति। संस्कृतं यथा—"षड्विंशतिः सप्तशतानि तथा सप्तदशसहस्राणि। द्विचत्वारिंशल्लक्षाणि त्रयोदशकोटयः समग्राणि॥" इति।

(ङ) उक्थादिच्छन्दसामुत्तरोत्तरं वृत्तसंख्यासमष्टिपरिज्ञानार्थं प्रस्तारं विना लघूपायान्तरमाह, परे इत्यादि।—परे अग्रिमवृत्ते जिज्ञासिते पूर्णं जिज्ञासितवृत्तात् पूर्ववृत्तसंख्याजातं द्विगुणीकृतमेव, स्थापयेदिति शेषः, न तु पूर्वसूत्रानुसारेण न्यूनं विधेयमिति भावः। तदेतत् छन्दोवृत्तसंख्याजातं "द्विरर्द्धे" इत्यादिना निरूपिता

न सूत्रम् । परे छन्दसि जिज्ञासिते तत्सङ्ख्याजातं द्विगुणितं परस्य छन्दसो वृत्तानां सङ्ख्या भवति । तत् यथा—चतुःषष्टि-र्गायत्रीसमवृत्तानां सङ्ख्या द्विगुणिता सती परस्या उष्णिहः समवृत्तसङ्ख्या अष्टाविंशत्यधिकशतं भवति । (छ)

परे पूर्णमिति ॥ ३४ ॥

अनेन एकद्व्यादिलघुक्रियासिद्ध्यर्थं यावदभिमतं प्रथम-प्रस्तारवत् मेरुप्रस्तारं दर्शयति । उपरिष्टादेकं चतुरस्रकोष्ठं लिखित्वा तस्याधस्तादुभयतोऽर्द्धनिष्क्रान्तं कोष्ठकद्वयं लिखेत्

---

पूर्ववृत्तसङ्ख्यासमष्टिः । तत्सङ्ख्याजातम् अव्यवहितपूर्ववृत्तसङ्ख्यासमष्टिः । केचिदिदं सूत्रं परसूत्रेण एकीकृत्य तथा सूत्रस्यास्य प्राक् "यथावस्थितिः" इति सूत्रस्य अधिकत्वेन पठन्ति, हलायुधेन तत्परिहृतत्वादस्माभिरपि न गृहीतमिति दिक् ।

(छ) एकाक्षरादिषड्विंशत्यक्षरपर्यन्तवृत्तजातानां सङ्ख्यासमष्टिः, तासु च कति एकलघवः कति द्विलघवः कति त्रिलघवः कति एकगुरवः कति द्विगुरवः कति वा त्रिगुरवः इति निरूपयितुं मेरुप्रस्तारं दर्शयति. परे इति ।—परे परवर्त्ति-कोष्ठे, ऊर्द्ध्वकोष्ठे इत्यर्थः, पूर्णम् ऊर्द्ध्वतनकोष्ठद्वयाङ्कसंयोगजातमङ्कजातं सम्पूर्णमेव, स्थापयितव्यमिति शेषः ; ऊर्द्ध्वतनकोष्ठस्थवृत्तसङ्ख्याजातमधस्तनकोष्ठे सम्पूर्णमेव स्थापयेदिति । इतिशब्दः ग्रन्थसमाप्तिसूचकः । एकद्व्यादिलघुक्रियासिद्ध्यर्थम् एकद्व्यादि-लघुयुक्तानां वृत्तानां क्रिया ज्ञानोपायः तत्सिद्ध्यर्थम् । "एकद्व्यादिलगक्रिया" इति वृत्तरत्नाकरोक्तः पाठस्तु न हलायुधसम्मतः ; परन्तु लघ्वक्षरपरिज्ञानेन गुर्वक्षरज्ञानस्यापि अवशिष्टतया अवश्यम्भावित्वात् तज्ज्ञानोपायक्रियाया उपेक्षणे च कारणाभावात् वृत्तरत्नाकरोक्तपाठ एव समीचीनतया प्रतिभाति । एकद्व्यादि-लगक्रियासिद्ध्यर्थम् एकद्व्यादिलघुगुर्वक्षरभेदवतां वृत्तानां ज्ञानोपायसिद्ध्यर्थमिति तदर्थः । यावदभिमतं यथेष्टम्, एकाक्षरादिकमेव षड्विंशत्यक्षरपर्यन्तमित्यर्थः । प्रथमप्रस्तारवत् एकाक्षरप्रस्तारयुक्तं, सर्वोपरिकोष्ठे तथा प्रतिपङ्क्ति आद्यन्तकोष्ठे च एकाङ्कयुक्तमित्यर्थः । मेरुप्रस्तारं मेरुसंस्थानत्वात् मेरुवत् प्रस्तारम् । कोष्ठ-विरचनप्रकारमाह—उपरिष्टादिति । एवं कोष्ठम् अङ्कयित्वा तत्र किं स्थाप्य-

तस्याप्यधस्तात् त्रयं, तस्याप्यधस्ताच्चतुष्टयम्, एवं यावदभिमतं स्थानमिति प्रथममेरुप्रस्तारः। तस्य प्रथमे कोष्ठे एकसङ्ख्यां व्यवस्थाप्य लक्षणमिदं प्रवर्त्तयेत्। तत्र परे कोष्ठे यत् वृत्तसङ्ख्याजातं तत् पूर्वकोष्ठयोः पूर्णं निवेशयेत्। तत्र उभयोः कोष्ठयोरेकैकमङ्कं दद्यात्। ततस्तृतीयायां पङ्क्तौ पर्य्यन्तकोष्ठयोः परकोष्ठगतमेकैकमङ्कं दद्यात्। मध्ये कोष्ठे तु परकोष्ठद्वयाङ्कमेकीकृत्य पूर्णं निवेशयेदिति पूर्णशब्दार्थः। चतुर्थ्यां पङ्क्तावपि पर्य्यन्तकोष्ठयोरेकैकमङ्कं स्थापयेत्। मध्यमकोष्ठयोस्तु परकोष्ठद्वयाङ्कमेकीकृत्य पूर्णं त्रिसङ्ख्यारूपं स्थापयेत्। उत्तरत्राप्येवमेव न्यासः। तत्र द्विकोष्ठायां पङ्क्तावेकाक्षरस्य विन्यासः, तत्रैकं सर्वगुरु एकं सर्वलघु भवति। तृतीयायां पङ्क्तौ द्व्यक्षरस्य प्रस्तारः। तत्रैकं सर्वगुरु द्वे एकलघुनी एकं सर्वलघु इति कोष्ठक्रमेण वृत्तानि भवन्ति। चतुर्थ्यां पङ्क्तौ त्र्यक्षरस्य प्रस्तारः। तत्रैकं सर्वगुरु त्रीणि एक-

---

मित्यपेक्षायामाह, तस्य प्रथमे कोष्ठे इत्यादि।—परे कोष्ठे मूलकोष्ठे, उपरिस्थितकोष्ठे इत्यर्थः, वृत्तसङ्ख्याजातं वृत्तसङ्ख्यासमष्टिः, पूर्वकोष्ठयोः अग्रवर्त्तिकोष्ठयोः, मूलकोष्ठादधःस्थद्वितीयकोष्ठयोरित्यर्थः, पूर्णं, न तु ऊनमिति भावः, उभयोः कोष्ठयोः द्वितीयपङ्क्तिस्थयोः द्वयोः कोष्ठयोः एकैकमङ्कं प्रथमकोष्ठस्थमेकमङ्कं द्वयोरपि कोष्ठयोरेकमेकं निवेशयेदित्यर्थः। पर्य्यन्तकोष्ठयोः सीमाभूतयोः आद्यन्तकोष्ठयोरित्यर्थः, परकोष्ठगतं तृतीयकोष्ठादुपरिस्थितकोष्ठगतं, मूलकोष्ठादधःस्थद्वितीयकोष्ठगतमित्यर्थः। मध्ये कोष्ठे आद्यन्तकोष्ठयोर्मध्यवर्त्तिकोष्ठे। तथा च—"अक्खरसंक्खे कोट्ठ करु आइ अंत पढमंक। सिर दुइ अंके अवरु भरु सुई मेरु णिसंक॥" इति। संस्कृतं यथा—"अक्षरसङ्ख्यया कोष्ठं कुरु आद्यन्तयोः प्रथमाङ्कम्। शीर्षद्वयाङ्केनापरं पूरय सूच्यते मेरुर्निःशङ्कम॥" इति। तथा वाणीभूषणेऽपि—"कोष्ठमक्षरसङ्ख्यातमन्त्याद्योरेकचिह्नितम्। शीर्षकोष्ठद्वयाङ्केन शून्यं कोष्ठं प्रपूरयेत्॥" इति। तत्र मेरुप्रस्तारविन्यासप्रणाली यथा—

लघूनि त्रीणि द्विलघूनि एकं सर्वलघु। तथा पञ्चमादिपङ्क्ता-वपि सर्वगुर्वादिसर्वलघ्वन्तमेकद्व्यादिलघु द्रष्टव्यमिति। (क)

## वर्णमेरुः।

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| | १ | | | | | | | | | | |
| एकाक्षरस्य प्रस्तारः... | १ | १ | | | | | | | | | २ |
| द्व्यक्षरस्य „ ... | १ | २ | १ | | | | | | | | ४ |
| त्र्यक्षरस्य „ ... | १ | ३ | ३ | १ | | | | | | | ८ |
| चतुरक्षरस्य „ ... | १ | ४ | ६ | ४ | १ | | | | | | १६ |
| पञ्चाक्षरस्य „ ... | १ | ५ | १० | १० | ५ | १ | | | | | ३२ |
| षडक्षरस्य „ | १ | ६ | १५ | २० | १५ | ६ | १ | | | | ६४ |
| सप्ताक्षरस्य „ | १ | ७ | २१ | ३५ | ३५ | २१ | ७ | १ | | | १२८ |
| अष्टाक्षरस्य „ | १ | ८ | २८ | ५६ | ७० | ५६ | २८ | ८ | १ | | २५६ |
| नवाक्षरस्य „ | १ | ९ | ३६ | ८४ | १२६ | १२६ | ८४ | ३६ | ९ | १ | ५१२ |

अयमर्थः.—एकाक्षरादिषड्विंशत्यक्षरपर्य्यन्तं छन्दःप्रस्तारे कति सर्वगुरवः कत्येकादिगुरवः कति सर्वलघवः कति वा प्रस्तारसङ्ख्या इति प्रश्ने आदौ चतुरस्रं कोष्ठमेकं लिखेत्, तदधः उभयतः अर्द्धनिष्क्रान्तं कोष्ठद्वयं, तदधः तथैव कोष्ठत्रयमित्येवं सप्तविंशतिकोष्ठकान् विरचय्य उपरि कोष्ठे एकाङ्को देयः, द्वितीयपङ्क्तिस्थकोष्ठद्वये एकैकाङ्को देयः, तथा प्रतिपङ्क्ति आद्यन्तकोष्ठयोः एकाङ्कः एव संस्थाप्यः, तृतीयपङ्क्तौ कोष्ठत्रयेषु शून्ये मध्यमकोष्ठे तदुपरिस्थकोष्ठद्वयगतौ एकाङ्कौ एकीकृत्य द्व्यङ्कं संस्थापयेत्, ततः चतुर्थादिपङ्क्तौ पूर्ववत् आद्यन्तकोष्ठयोरेकमङ्कं मध्यस्थकोष्ठेषु च तदीयशिरःकोष्ठद्वयाङ्कं शृङ्खलाबन्धन्यायेन एकीकृत्य संस्थापयेत्, एवं सप्तविंशतिकोष्ठकपङ्क्ति यावत् कुर्य्यात्। एवञ्च एकाक्षरप्रस्तारे कोष्ठद्वयं

द्व्यक्षरे कोष्ठत्रयं त्र्यक्षरे कोष्ठचतुष्टयं चतुरक्षरे कोष्ठपञ्चकं पञ्चाक्षरे कोष्ठषट्कमित्यादिक्रमेण प्रत्येकमेकैकाक्षरवृद्ध्या षड्विंशत्यक्षरपर्यन्तं मेरुः कार्यः। तत्र च द्वितीयपङ्क्तौ एकाक्षरपादाया उक्थाया लगक्रिया। तृतीयपङ्क्तौ द्व्यक्षरपादाया अत्युक्ताया लगक्रिया, अनया रीत्या सप्तविंशतिपङ्क्तौ षड्विंशत्यक्षरपादामुत्कृतिं यावत् लगक्रिया ज्ञातव्या इति। तथा च—द्वितीयपङ्क्तिस्थे एकाक्षरप्रस्तारबोधके कोष्ठद्वये एकैकाङ्कस्य विद्यमानतया एकं सर्वगुरु एकं सर्वलघु वृत्तमुक्थायाम्। उभयकोष्ठाङ्कमेलनेन द्व्यङ्को भवतीति एकाक्षरप्रस्तारः भेदद्वयवान् इत्यर्थो लभ्यते। सर्वत्रैवं रीत्या प्रस्तारः साधनीयः। तृतीयपङ्क्तौ द्व्यक्षरप्रस्तारः साध्यः। तत्र आद्यन्तकोष्ठयोरेकाङ्कस्य विद्यमानत्वेन एकं सर्वगुरु एकञ्च सर्वलघु वृत्तमित्यायातम्। मध्यकोष्ठे च उपरितनकोष्ठद्वयस्थिताङ्कमेलनेन जातायाः द्विसङ्ख्यायाः स्थितत्वात् द्वे एकलघुनी, कोष्ठत्रयाङ्कमेलनेन चतुरङ्को भवतीत्यत्युक्तायां द्व्यक्षरप्रस्तारो भेदचतुष्टयवान् इति। तथा चतुर्थ्यां पङ्क्तौ त्र्यक्षरप्रस्तारः। आद्यन्तकोष्ठयोः पूर्ववत् एकाङ्कविन्यासात् सर्वगुरु एकं सर्वलघु च एकमिति लभ्यते। द्वितीयकोष्ठे च उपरितनप्रथमद्वितीयकोष्ठाङ्कमेकीकृत्य जातं त्र्यङ्कं तथा तृतीयकोष्ठे च उपरितनद्वितीयतृतीयकोष्ठाङ्कमेलनेन जातं त्र्यङ्कञ्च स्थापयेत्। तेन च एकलघूनि त्रीणि द्विलघूनि च त्रीणि इति षट्, सर्वेषामङ्कानां मेलनेन अष्टौ, ततश्च मध्यायामष्टभेदवान् त्र्यक्षरप्रस्तार इति बोधः। तथा पञ्चमपङ्क्तौ पूर्वरीत्या उपरितनप्रथमद्वितीयकोष्ठद्वयाङ्कयोगजातश्चतुरङ्को द्वितीयकोष्ठे. द्वितीयतृतीयकोष्ठाङ्कमेलनजः षडङ्कः तृतीये, तथा तृतीयचतुर्थकोष्ठाङ्कयोगजातचतुरङ्कश्च चतुर्थकोष्ठे स्थाप्यः। आद्यन्तयोः एकाङ्कश्च पूर्ववदेव। एवञ्च सर्वगुरुरेकः एकलघवश्चत्वारः द्विलघवः षट् त्रिलघवः चत्वारः सर्वलघुश्चैकः इति मिलित्वा जाताः षोडश, ततश्च प्रतिष्ठायां षोडशभेदवान् चतुरक्षरः प्रस्तारः। एवं षष्ठादिपङ्क्तावपि अनया रीत्या स्वयं भेदाः समूहनीयाः। मेरुप्रस्तारसिद्ध्यर्थं केनचिदुक्तमत्र अर्प्यते यथा—"आदावेकं लिखेत् कोष्ठं तदधो द्वे च संलिखेत्। तदधस्त्रीणि कोष्ठानि एवं-रूपेण वर्द्धयेत्॥ आद्यन्तकं लिखेत् कोष्ठमेकं (आदावेकं तथा चान्ते लिखेत्) मध्यञ्च पूरयेत्। शीर्षकोष्ठपरिप्राप्तैरङ्कैरङ्केन संयुतैः॥" इति। वाणीभूषणेऽप्युक्तं—"कोष्ठमक्षरसङ्ख्यातमन्त्याद्योरेकचिह्नितम्। शीर्षकोष्ठद्वयाङ्केन शून्यं कोष्ठं प्रपूरयेत्॥" इति। केदारभट्टेन तु लगक्रियाप्रत्ययः भिन्नविधः उक्तः, यथा—"वर्णान् वृत्तभवान् सैकानौत्तराधर्यतः स्थितान्। एकादिक्रमतश्चैतानुपर्युपरि निक्षिपेत्॥ उपान्त्यतो निवर्त्तेत त्यजन्नेकैकमूर्ध्वतः। उपर्याद्यात् गुरोरेवमेकद्व्यादिलगक्रिया॥" इति।

षष्ठप्रत्ययोऽध्वपरिच्छित्तिरित्येके ; सोऽल्पत्वात् पुरुषेच्छानुविधायित्वेनानियतत्वाच्च नोक्तः। एवं प्रत्ययसमासः समाप्तः। (ख)

---

(ख) समादिवृत्तजातानां द्विगुणैकोनसङ्ख्यास्वरूपाध्वयोगस्तु सूत्रकृता न दर्शितः, तच्च हलायुधेन सकारणं निर्दिश्यते, षष्ठप्रत्यय इत्यादि।—अध्वयोगस्याल्पतया पुरुषेच्छानुविधायित्वेन अनियतत्वात् अङ्गुलिपरिमितस्थाननियमत्वेनापि कस्यचित् प्रस्तारस्थापने ततोऽधिकत्वेऽपि किञ्चित् कर्तुमशक्यत्वादित्यर्थः। शिक्षार्थिनामुपकाराय ग्रन्थान्तरात् तत् प्रदर्श्यते, यथा—"सङ्ख्यैव द्विगुणैकोना सद्भिरध्वा प्रकीर्त्तितः। वृत्तस्याङ्गुलिकीं व्याप्तिमधः कुर्य्यात्तथाऽङ्गुलिम् ॥" इति। अयमर्थः,—सङ्ख्या प्रस्तारसङ्ख्या एव द्विगुणा द्विरावृत्ता, एकोना च द्विगुणीकरणानन्तरम् एकाङ्कहीना सती अध्वा वृत्तप्रस्तारभूमिरिति यावत्, प्रकीर्त्तितः। वृत्तस्य पद्यपादस्य व्याप्तिम् आङ्गुलिकीम् अङ्गुलपरिमाणां, तथा तेन प्रकारेण अधः वृत्तस्य अधस्तात् अङ्गुलिम् अङ्गुलप्रमाणं कुर्य्यात्। गुरूणां लघूनां वा लिखितवर्णाक्षराणामन्तरमप्यङ्गुलप्रमाणमेव प्रत्येतव्यम्। तत्तच्छन्दसां प्रस्तारसम्भवानि वृत्तानि कियति भूमिभागे तिष्ठन्ति इति चेदुच्यते—यस्य कस्यचिच्छन्दसो यावती वृत्तसङ्ख्या तावतीमेव सङ्ख्यां द्विगुणीकृत्य तस्मात् एकाङ्कं वियोज्य च तावतीभिरङ्गुलीभिः परिमिते भूमिभागे लिखेदिति। यथा—त्र्यक्षरप्रस्तारे अष्टौ वृत्तानि, तानि द्विगुणितानि षोडश, तत एकाङ्कवियोगे पञ्चदश, ततश्च पञ्चदशाङ्गुलिमिते भूभागे तानि अष्टौ वृत्तानि स्थापयेत्, तेषाञ्च वृत्तानाम् अन्तरा सप्त अङ्गुलानि तिष्ठन्ति। दैर्घ्यन्तु अक्षरसङ्ख्यया वक्तव्यम्; यथा—गायत्रं छन्दसि द्वादशाक्षराणि वृत्तानि, तेषु एकं वृत्तं द्विगुणयित्वा ततः एकाङ्के वियोजिते त्रयोविंशत्यक्षराणि भवन्ति, तावदङ्गुलिमिते भूतले तत्तत् वृत्तं तिष्ठति इति बोद्धव्यम्। एवमन्यत्रापि इति।

इह भगवता पिङ्गलाचार्य्येण मात्राप्रस्तारप्रकारः नोक्तः, प्रकृतोपयोगितया चास्माभिः ग्रन्थान्तरोक्तः सोऽत्र प्रदर्श्यते। तथा च—"गुरोरधस्तादाद्यस्य लघुं न्यस्योर्द्धवत् पुनः। पश्चादूने गुरुं न्यस्येल्लघुं वाऽपेक्षितं क्रमात् ॥ यावत् सर्वलघुस्तावन्मात्राप्रस्तारके बुधः ॥" इति। वर्णप्रस्तारे तु ऊनस्थाने गुरुरेव इति नियमः, इह तु गुरुर्लघुर्वा इति भेदः। तथा च—मात्रावृत्ते षट्कलप्रस्तारे प्रथमपङ्क्तौ यथायोग्यं द्विद्विमात्रास्थाने एकैकगुरुक्रमेण गुरून् लिखेत्, द्वितीयपङ्क्तौ च प्रथमगुरोरधो

पिङ्गलाचार्य्यरचिते छन्दःशास्त्रे हलायुधः ।
मृतसञ्जीवनीं नाम वृत्तिं निर्मितवानिमाम् ॥

इति श्रीभट्टहलायुधकृतायां पिङ्गलच्छन्दोवृत्तौ मृतसञ्जीवनी-
नाम्न्यामष्टमोऽध्यायः समाप्तः ॥ ८ ॥

---

लघुं लिखित्वा शेषमुपरिपङ्क्तिवत् कुर्य्यात् । एवं सति एका मात्रा न्यूना भवति सा च लघोः पूर्वं लघुरूपेण देया । तृतीयपङ्क्तौ द्वितीयपङ्क्तिस्थप्रथमगुरोरधो लघुं दत्त्वा शेषमुपरिवल्लिखेत्, ततश्च तिस्रो मात्राः न्यूना भवन्ति, ताः लघोः पूर्वं गुरुरूपेण, तत्पूर्वञ्च लघुरूपेण देयाः । एवं-क्रमेणाद्यगुरोरधो लघौ दत्ते उपरिवच्छेषे लिखिते च शिष्टा मात्रा एका चेत्तदा लघोः पूर्वं लघुरूपेण देया । द्वे चेदवशिष्टे तदा ततः एव पूर्वं गुरुरूपेण, तिस्रश्चेत् शेषास्तदा लघोः पूर्वमेको गुरुः तत्पूर्वञ्च एको लघुः, पञ्च चेत्तदा पूर्वानुक्रमेण द्वौ गुरू एको लघुश्च, इत्येवं-क्रमेण सर्वलघु-प्रस्तारपर्य्यन्तं लिखेत् । एवं लिखिते षट्कलत्रयोदशप्रस्तारः सिद्धो भवति ।

षट्कलप्रस्तारे विकल्पाः यथा—

| | | | |
|---|---|---|---|
| ◡ ◡ ◡ | १मः | - - - ◡ - | ८मः |
| - - ◡ ◡ | २यः | ◡ ◡ - - | ९मः |
| - ◡ - ◡ | ३यः | - - ◡ - - | १०मः |
| ◡ - - ◡ | ४थः | - ◡ - - - | ११शः |
| - - - - ◡ | ५मः | ◡ - - - - | १२शः |
| - ◡ ◡ - | ६ष्ठः | - - - - - - | १३शः |
| ◡ - ◡ - | ७मः | | |

पञ्चकलप्रस्तारे तु सर्वगुरुभेदाभावात् प्रथमपङ्क्तौ आदिलघुरेव गणविन्यासः कार्य्यः । यथा—(१) -◡◡ (२) ◡-◡ (३) ---◡ (४) ◡◡- (५) --◡-(६)-◡--(७)◡---(८) -----। एवमन्यत्रापि विषमकलप्रस्तारेषु आदिलघुः प्रस्तारः कार्य्य इति । चतुष्कलप्रस्ताराः पञ्च यथा— (१)◡◡ (२)--◡(३)-◡-(४)◡--(५)----। त्रिकल-प्रस्तारा यथा—(१) -◡(२) ◡- (३) ---। द्विकलप्रस्तारौ यथा— (१)◡(२)--। एवञ्च मात्राच्छन्दःसु पञ्चैव गणा ज्ञातव्या इति। इह अन्येरुक्तं मात्राप्रस्तारलक्षणमपि प्रदर्श्यते यथा—"तत्र प्रथमपङ्क्तौ आद्युरुपादस्तु पूर्ववत् । द्वितीयपङ्क्तौ प्रथमादधो देयो लघुर्गुरोः ॥ यथोपरि

म य द्वादश। धीः पञ्चदश। कन्दषोडश। पादः परोष्णिक् प्रस्तारपङ्क्तिः विंशतिः विंशतिः एकविंशतिः। देवतादितः अष्टौ। चतुःशतं षष्ठः विंशतिः विंशतिः। युगपरान्तिका त्रयोदश। वृत्तं गवादौ विंशतिः विंशतिः। यवमतो त्रीणि।

---

तथा शेषं मूलस्थाने लघुं न्यसेत्। तृतीयादिषु पङ्क्तिष्वेवमेव गुरोरधः॥ लघुं न्यस्यावशिष्टन्तु पूर्ववत् परिकीर्त्तितम्। न्यूने मात्राद्वयं देयं तत्स्थानादौ गुरुर्द्वयोः॥ कलयोः स्यात्तथा पूर्वं लघुर्द्वयो भवेत्ततः। चतुर्थपङ्क्तावप्येवं पञ्चम्यान्तु गुरोरधः॥ लघुद्वयं लिखेत् पूर्वं शिष्टन्तूपरिवल्लिखेत्। एवं सर्वत्र विज्ञेयः कलप्रस्तार उत्तमः॥ तेन द्विगुरुपादैश्च पञ्च भेदा भवन्त्यमी। सर्वान्तमध्यादिगुरुश्चतुर्लघुगणाः स्मृताः॥" इति। षट्कलादिप्रस्तारेषु गणानां पृथक् पृथक् नामादिकं तथा प्रस्तारवत् मात्राणां नष्टोद्दिष्टादिकमपि प्राकृतपिङ्गलादौ द्रष्टव्यं, ग्रन्थगौरवभयात् नात्र तत् प्रदर्शितमिति।

प्रसङ्गादार्य्यासु नष्टोद्दिष्टे यथा—"एकद्व्यङ्कतृतीयाङ्कानाद्यमात्रात्रये क्रमात्। ततः पूर्वद्वयांकस्थानन्ते पृष्टाङ्कलोपनम्॥ पूर्वं पूर्वतरेऽस्यापि लोपः सम्भवतो भवेत्। यस्य यस्य भवेल्लोपः तदधो गुरुता भवेत्॥ परमात्रात्रयेऽत्यन्तं मात्रानष्टं वदेत् सुधीः॥" इति। यथा—चतुष्कलप्रस्तारे द्वितीयः कीदृग्भेदः इति प्रश्ने चतस्रः कलाः पृथक् स्थाप्याः, ततः प्रथमकलाया उपरि एकाङ्कः द्वितीयायाश्च द्व्यङ्कः स्थाप्यः, तृतीयकलाया उपरि तु पूर्वस्थापितौ द्व्येकाङ्कावेकीकृत्य जातस्त्र्यङ्कः निवेश्यः, चतुर्थ्याश्च उपरि द्व्यङ्कत्र्यङ्कावेकीकृत्य जातः पञ्चाङ्कः स्थापनीयः। ( १ २ ३ ५ ) पृष्टाङ्कमन्तिमकलोपर्य्यङ्के लोपयेत्। तत्रावशिष्टे पूर्वपूर्वाङ्कं यथासम्भवं लोपयेत्। यस्याङ्कस्य लोपस्तदधस्तनमात्रा परमात्रया सह गुरुत्वमायाति। इह तु प्रकृतद्वितीयभेदप्रश्ने अन्तिमपञ्चमेऽङ्के पृष्टं द्व्यङ्कं लोपयेत्, अवशिष्टे त्र्यङ्के अव्यवहितत्र्यङ्कलोपात् त्र्यधःस्थितपञ्चाधःस्थितकलाभ्यामेको गुरुः, शेषाङ्को नावशिष्यते इति प्रथमं लघुद्वयम्। ततश्च प्रथमं लघुद्वयं ततश्चैको गुरुरिति एतादृशो ( ‿ ‿ ‒ ) द्वितीयो भेदः। यथा वा—षट्कलप्रस्तारे द्वितीये कीदृशो गण इति प्रश्ने लघुरूपाः षट्कलाः स्थापनीयाः, ततः पूर्ववत् एकद्वित्रिपञ्चाष्टत्रयोदशाङ्काः क्रमेण कलानामुपरि देयाः। ( १ २ ३ ५ ८ १३ ) ततः शेषत्रयोदशाङ्के प्रश्नविषयीभूतं

यतिः विंशतिः। वातोर्मी अष्टादश। प्रहर्षिणी विंशतिः। शार्दूलविक्रीडितं पञ्चदश। मत्तानुमा सप्तदश। इत्यष्टादशच्छन्दः समाप्तम्।

---

द्वितीयाङ्कं लोपयेत्, तल्लोपे अवशिष्टाः एकादश भवन्ति। तत्राव्यवहिताष्टलोपे सति षष्ठाधःस्थितत्रयोदशाधःस्थितकलाभ्यामेको गुरुर्भवति। अवशिष्टं त्रयं, तत्र पञ्च-लोपासम्भवात् तृतीयकलोपरिस्थत्र्यङ्कस्य लोपे तृतीयचतुर्थाभ्यामपरो गुरुर्भवति, शेषाङ्को नावशिष्यते. १३—२—११—८=३—३=० इति प्रथमं लघुद्वयमेव। एवञ्च आदौ लघुद्वयं ततो गुरुद्वयं, "द्वितीयो गणः एतादृशः ( - - ◡ ◡ ) भवतीति बोध्यम्। उक्तं वाणीभूषणे यथा—"नष्टे कृत्वा कलाः सर्वाः पूर्वयुग्माङ्कयोजिताः। पृष्टाङ्कहीनशेषाङ्कं येन येनैव पूर्य्यते॥ परां कलामुपादाय तत्र तत्र गुरुर्भवेत्। मात्राया नष्टमेतत्तु फणिराजेन भाषितम्॥" इति। एतेनैतदायातं भवति—यत्कल-प्रस्तारे प्रश्नः ताः सर्वाः कलाः लघुरूपाः कार्य्याः। लघुरूपेण लिखितासु तासु क्रमेण प्रथमायामेकाङ्कं द्वितीयायां द्व्यङ्कं, तृतीयायां द्व्यङ्कैकाङ्कमेलनेन त्र्यङ्कः, चतुर्थ्यां द्व्यङ्कत्र्यङ्कावेकीकृत्य जातः पञ्चाङ्कः, पञ्चम्यां त्र्यङ्कपञ्चाङ्कावेकीकृत्य जातः अष्टाङ्कः, षष्ठ्यां पञ्चाङ्काष्टाङ्कावेकीकृत्य जातः त्रयोदशाङ्कः स्थाप्यः, एव-मुत्तरोत्तरं कार्य्यं, शेषे प्रश्नविषयीभूतोऽङ्कः लोपनीयः; ततश्चावशिष्टे शेषाङ्के अपरे विलोप्याः। यो योऽङ्कः शेषाङ्के लोपयितुं शक्यते स पुनः स्वाधःस्थितकला परकलामादाय गुरुर्जायते इति।

मात्राणामुद्दिष्टं यथा—"उद्दिष्टे नष्टवन्मात्रामात्राणां स्थापनं पुनः। उद्दिष्टकल-प्रस्तारं लिखित्वोपरि विन्यसेत्॥ कलयोराद्ययोरेकद्व्यङ्कावन्यकलासु तु। पूर्वपूर्वद्वयो-र्मिश्रानङ्कानथ गुरूपरि॥ अङ्कं प्रथममात्राया अपरस्यास्तथो गुरोः। अधरोर्ध्वमङ्काना-मेकीकृत्य गुरुद्वयात्॥ अङ्कानपनयेदन्त्ये शिष्टस्तूद्दिष्टमुच्यते॥" इति। चतु-ष्कलप्रस्तारे आदिगुरुः कस्मिन् स्थानेऽस्ति इति प्रश्ने मात्राचतुष्टयं पृथक् स्थापयित्वा तदुपरि क्रमेण एकद्वित्रिपञ्चाङ्कान् विलिखेत् ( १ २ ३ ५ / - - - - ) ततः अन्तिम-कलोपरिस्थे पञ्चमाङ्के प्रथमकलोपरिस्थ एकाङ्कोऽपनेयः, तथा सति चत्वारोऽवशिष्टा भवन्ति इति चतुर्थमादिगुरुस्थानं भवति ( ◡ - - )। एवं सर्वत्र ज्ञेयम्। वर्णोद्दिष्ट-व्याख्यानेऽपि प्रसङ्गतः मात्रोद्दिष्टलक्षणादिकं कथञ्चिदभिहितमिति दिक्।

## मात्रामेरुः।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| १ | | | | | | | |
| १ | १ | | | | | | |
| २ | १ | | | | | | |
| १ | ३ | १ | | | | | |
| ३ | ४ | १ | | | | | |
| १ | ६ | ५ | १ | | | | |
| ४ | १० | ६ | १ | | | | |
| १ | १० | १५ | ७ | १ | | | |
| ५ | २० | २१ | ८ | १ | | | |
| १ | १५ | ३५ | २८ | ९ | १ | | |
| ६ | ३५ | ५६ | ३६ | १० | १ | | |
| १ | २१ | ७० | ८४ | ४५ | ११ | १ | |
| ७ | ५६ | १२६ | १२० | ५५ | १२ | १ | |
| १ | २८ | १२६ | २१० | १६५ | ६६ | १३ | १ |
| ८ | ८४ | २५२ | ३३० | २२० | ७८ | १४ | १ |

तत्र एककलद्विकलत्रिकलादिषु कति सर्वगुरवः कति चैकगुर्वादयः इति जिज्ञासायां तद्बोधार्थमस्यावतारः। तत्प्रकारस्तु—उपर्य्येकं कोष्ठं विलिख्य। तदधः कोष्ठद्वययुतं पङ्क्तिद्वयम्। तदधश्च कोष्ठत्रययुतं पङ्क्तिद्वयम्। ततः कोष्ठ-

चतुष्टययुतं पङ्क्तिद्वयम्। एवं क्रमेण यावदिच्छया एकैकं कोष्ठं वर्द्धयित्वा पङ्क्तिद्वयं लिखेत्। तत्रोपरि पङ्क्तौ एकाङ्कः, तदधःस्थानां द्वितीयपङ्क्तीनामाद्यपङ्क्तिस्थप्रथमकोष्ठेषु च एकैकाङ्को देयः। सर्वस्यामेव पङ्क्तौ शेषकोष्ठेऽपि स एवाङ्कः। अधःपङ्क्तीनामादिकोष्ठेषु च द्व्यादयोऽङ्का ऊर्द्धक्रमेण स्थाप्याः; ततश्च द्वितीयपङ्क्तिप्रथमकोष्ठे एकाङ्कः, तृतीयपङ्क्त्याद्यकोष्ठे द्व्यङ्कः, चतुर्थपङ्क्त्याद्ये पुनरेकाङ्कः, पञ्चम्याद्ये त्र्यङ्कः, षष्ठ्याद्ये पुनः एकाङ्कः, सप्तम्याद्ये चतुरङ्कः, अष्टमपङ्क्त्याद्ये पुनः एकाङ्कः इति प्रक्रियया आद्यकोष्ठेषु अङ्का देयाः। एवमाद्यन्तकोष्ठपूरणे कृते समानकोष्ठद्वयमध्ये उपरिपङ्क्तिमध्यस्थितशून्यकोष्ठेषु पूरणीयकोष्ठोपरिस्थकोष्ठद्वयाद्यकोष्ठाङ्केन तदुपरिस्थितकोष्ठाग्रिमकोष्ठाङ्कमेकीकृत्य योऽङ्कस्तं दद्यात्। द्वितीयपङ्क्तिमध्यस्थकोष्ठे तु पूरणीयकोष्ठोपरिस्थकोष्ठाङ्केन तदुपरिस्थितकोष्ठद्वयमध्ये अन्त्यकोष्ठाङ्कमेकीकृत्य दद्यात्। एवं सर्वत्र यावदिच्छं कोष्ठान् विरचय्य मात्रामेरुः कर्त्तव्यः। तथा चोक्तं—"तत्र प्रथमपङ्क्तौ स्यादङ्कपातस्तु पूर्ववत्। द्वितीयपङ्क्तौ प्रथमादधो लेख्यौ लघुगुरू॥ यथोपरि तथा शेषः मूलस्थाने लघुं न्यसेत्। तृतीयादिषु पङ्क्तिष्वेवमेव गुरोरधः॥ लघुं न्यस्याथ शिष्टन्तु पूर्ववत् परिकीर्त्तितम्। न्यूने मात्राद्वयं देयं तस्मिन्नादौ गुरुर्द्वयोः॥ अन्ययोः स्यात्तथा पूर्वं लघुर्द्वयोर्भवेत्ततः। चतुर्थपङ्क्तावप्येवं पञ्चम्यान्तु गुरोरधः॥ लघुद्वयं लिखेत् पूर्वं शिष्टन्तूपरिवद्भवेत्। एवं सर्वत्र विज्ञेयः कलाप्रस्तार उत्तमः॥ तेन द्विगुरुपादस्य पञ्च भेदा भवन्त्यमी। सर्वान्तमध्यादिगुरुचतुर्लघुगणाः स्मृताः॥" इति। प्राकृतपिङ्गलेऽपि लक्षणमस्य विहितं यथा—"दुइ दुइ कोट्ठा सरि लिहहु पढ़म अंक तसु अंत। तसु आइहि पुणु एक सउ पढ़मे बे वि मिलंत॥ सिरअंके तसु सिरपरअंके उबरल कोट्ठ पुरइ चौअंके। मत्तामेरु अंक संचारि बुज्झहु बुज्झहु जण दुइ चारि॥" इति। अस्य संस्कृतं यथा—"द्वे द्वे कोष्ठे सदृशी लेखनीये प्रथमोऽङ्कस्तस्यान्ते। तस्यादौ पुनरेकेन समं प्रथमं द्वावपि मिलतः॥ शिरोऽङ्कैस्तेषां शिरःपराङ्कैरुर्वरितं कोष्ठं पूरय निःशङ्कम्। मात्रामेरुमङ्कं सञ्चारयित्वा बुध्यध्वं बुध्यध्वं जना द्वौ चत्वारः॥" इति। अत्रेदमनुसन्धेयं—कति समकले लघवः कति च गुरवः, कति विषमकले लघवः कति च गुरवः, कति वा प्रस्तारसङ्ख्या इति प्रश्ने मेरुणा प्रत्युत्तरं देयम्। पूर्वोक्तप्रकारेण कोष्ठपूरणे कृते प्रथमपङ्क्तौ एककलस्य द्वितीयपङ्क्तौ द्विकलस्य तृतीयपङ्क्तौ त्रिकलस्य, चतुर्थ्यां चतुष्कलस्य, पञ्चम्यां पञ्चकलस्य इत्येवं क्रमेण न्यासः। तत्रैककले एक एव सर्वलघुरेकलघुरूपः। द्विकले एकः सर्वगुरुरेकगुरुरूपः एकः सर्वलघुर्द्विलघुरूपः। त्रिकले सर्वगुर्वभावात् द्वौ एकलघुः

एकगुरुः, एकः सर्वलघुः। चतुष्कले सर्वगुर्वात्मक एकः एकगुर्वात्मकं त्रयं सर्वलघुरेकः। पञ्चकले सर्वगुर्वभावात् द्विगुर्वात्मकं त्रयम् एकगुर्वात्मकं चतुष्कं सर्वलघुरेकः। षष्ठ्यां षट्कलेषु एकः सर्वगुरुः, षट् द्विगुरवः, पञ्च एकगुरवः, एकः सर्वलघुरित्येवं ज्ञेयम्। तत्तत्पङ्क्तयङ्कानां मेलनेन तत्तद्भेदसङ्ख्याऽपि परिज्ञेया। यथा—षट्कले एकषट्पञ्चैकाङ्कानां मेलनेन जाताः त्रयोदशसङ्ख्याः, ता एव प्रागुक्तभेदा भवन्ति। एवमन्यत्रापि। अत्र च वामभागे सर्वैकाङ्कस्थले सर्वगुरुः दक्षिणभागे च सर्वैकाङ्कस्थले सर्वलघुरिति बोध्यम्।

अथ प्रस्तारे कृते कुत्र स्थाने सर्वगुरुरस्ति तदपेक्षया एकन्यूनगुरुः कुत्रास्ति ततः एकन्यूनगुरुः कुत्रास्ति इत्येवं प्रश्ने तत्स्थानज्ञानार्थं पताकाप्रस्ताराः कथ्यन्ते। यत्सङ्ख्याक्षरप्रस्तारे प्रश्नस्तदक्षरसङ्ख्याकान् कोष्ठानेकाधिकान् लिखित्वा एकाङ्कादारभ्य उत्तरोत्तरं द्विगुणाः अङ्काः स्थाप्याः। ततः प्रथमाङ्केन द्वाङ्कयोजनं कृत्वा द्वितीयाङ्कादधः तं स्थापयेत। प्रथमाङ्केन तृतीयाङ्कस्य योजनं कृत्वा पूर्वस्थापिताङ्कादधश्च स्थापयेत्। पुनः प्रथमाङ्केन चतुर्थाङ्कस्य मेलनजातमङ्कं तदधः स्थापयेत्। एवमन्तिमकोष्ठाङ्कात् पूर्वकोष्ठाङ्कं यावत् कुर्य्यात्, अन्तिमेन प्रथमाङ्को न योज्यः, तावत्सङ्ख्याकस्य तस्य ह्रस्वस्याभावात्। ततः द्वितीयाङ्केन तृतीयाङ्कयोगजातमङ्कं तृतीयकोष्ठाङ्कादधः, द्वितीयाङ्केन चतुर्थाङ्कयोगजातमङ्कं तदधश्च स्थापयेत। पुनः द्वितीयकोष्ठाङ्कादधःस्थितेनाङ्केन तृतीयकोष्ठाङ्कस्य योगे समुत्पन्नमङ्कं तृतीयकोष्ठाङ्कानामधः स्थापयेत्। ततः तृतीयकोष्ठस्थं चतुरङ्कं चतुर्थकोष्ठस्थेन अष्टमाङ्केन संयोज्य अष्टमाङ्काधः लिखेत्। पुनः चतुरङ्काधःस्थितेन षडङ्केन अष्टमाङ्कं संयोज्य तदधो लिखेत्। ततश्च द्वितीयकोष्ठाधः तृतीयपङ्क्तिस्थाङ्केन द्वितीयपङ्क्तिस्थतृतीयकोष्ठाङ्कस्य योगेन जातम् अङ्कं तदधः स्थापयेत्, एवं-क्रमेण समाप्तिं यावत् अङ्कानां स्थापनं विदध्यात्; एवं क्रियमाणे यत्र प्रस्तारसङ्ख्याधिकसङ्ख्या आपद्यते सा न लेख्या। एकत्र लिखिता चापरत्र न लेखनीया, किन्तु तदग्रिमसङ्ख्यायोगः तदधःसङ्ख्यायोगो वा कार्यः। एवं सर्वत्र। तथा च—प्रथमस्थाने सर्वगुरुः, द्वितीयपङ्क्तिस्थेषु द्वितीयादिस्थानेषु विवक्षितसर्वगुरुमध्ये एकं न्यूनं कृत्वा तावद्गुरुकभेदस्थानानि। एवं तृतीयादिः पङ्क्तिषु एकैकगुरुन्यूनप्रस्तारस्थानानि। यथा—प्रथमः सर्वगुरुः द्वितीयपङ्क्तौ एकलघुस्थानानि तृतीयपङ्क्तौ द्विलघुस्थानानीत्यादि ज्ञातव्यम्। तत्र चतुरक्षर-प्रस्तारे पताका यथा—

| | कोष्ठः | कोष्ठः | कोष्ठः | कोष्ठः | अतिरिक्तकोष्ठः— |
|---|---|---|---|---|---|
| | १ | २ | ३ | ४ | ५। |
| द्विगुणाङ्काः,— | १ | २ | ४ | ८ | १६ |
| | | ३ | ६ | १२ | |
| | | ५ | १० | १४ | |
| | | ९ | ७ | १५ | |
| | | | ११ | | |
| | | | १३ | | |

अत्र प्रथमद्वितीयकोष्ठस्थयोः द्व्येकाङ्कयोः योगेन जातं त्रयं द्व्यङ्कादधः, प्रथम-तृतीयकोष्ठस्थयोः चतुरेकाङ्कयोः योगेन जातं पञ्च त्र्यङ्कादधः, तथा प्रथमचतुर्थ-कोष्ठस्थयोः एकाष्टाङ्कयोः योगे जातं नव पञ्चाधः स्थापयेत्। पुनः द्वितीयकोष्ठस्थेन द्व्यङ्केन सह तृतीयकोष्ठस्थितचतुरङ्कस्य योगेन जातं षडङ्कं द्वितीयकोष्ठस्थ-चतुरङ्कात् अधः, द्व्यङ्केन सह चतुर्थकोष्ठस्थाष्टाङ्कस्य योगात् दश षडङ्काधः स्थापयेत्; षोडशस्य अन्तिमाङ्कत्वात् तेन योगो न कार्य्यः। ततः द्वितीयपङ्क्तिस्थेन त्र्यङ्केन सह चतुर्योगे जातं सप्त दशाङ्काधः विन्यसेत्। "एकत्र लिखितं प्राज्ञः पुनरन्यत्र नो लिखेत्" इति शास्त्रात् पञ्चाङ्केन चतुर्योगो नैव कर्त्तव्यः। ततश्च त्र्यष्टयोगे एकादश सप्ताधः लिखेत्। त्रिषोडशयोगो न भवति, अन्तिमाङ्कत्वात्। पञ्चाष्टयोगे त्रयोदश एकादशाधः स्थापयेत्। पुनश्चतुरष्टयोगे द्वादश अष्टाधः निवेशयेत्। चतुःषोडशयोगो न कार्य्यः। षडष्टयोगे चतुर्दश द्वादशाधः। दशाष्टयोगो न कार्य्यः। सप्ताष्टयोगे पञ्चदश चतुर्दशाधः। तथा च सति प्रथमस्थाने सर्व्वगुरुः; द्वित्रिपञ्चनवस्थानेषु त्रिगुरवः एकलघवो वा; चतुःषड्दशसप्तैकादशत्रयोदशसु स्थानेषु द्विगुरवः द्विलघवो वा। अष्टद्वादशचतुर्दशपञ्चदशस्थानेषु एकगुरवस्त्रिलघवो वा। षोडशस्थाने सर्व्वलघुरिति बोध्यम्। तथा चोक्तम्—"एको द्वावथ चत्वारस्ततो-ऽष्टाविति वर्द्धनम्। पूर्व्वं परेण संयोज्य तदधो लेखयेत् बुधः॥ अन्तिमाङ्कावधिं नैव लङ्घयेदत्र कुत्रचित्। एकत्र लिखितं प्राज्ञः पुनरन्यत्र नो लिखेत्॥" इति।

पञ्चाक्षरपताका यथा—

| कोष्ठाङ्काः,— | १। | २। | ३। | ४। | ५। | ६ अधिककोष्ठः |
|---|---|---|---|---|---|---|
| | १ | २ | ४ | ८ | १६ | ३२ |
| | | ३ | ६ | १२ | २४ | |
| | | ५ | १० | २० | २८ | |

| | | | |
|---|---|---|---|
| ९ | १८ | १४ | ३० |
| १७ | ७ | २२ | ३१ |
| | ११ | २६ | |
| | १९ | १५ | |
| | १३ | २३ | |
| | २१ | २७ | |
| | २५ | २९ | |

षड्जस्वरपताका यथा—

| कोष्ठाङ्कः,—१ । | २ । | ३ । | ४ । | ५ । | ६ । | ७ अतिरिक्तकोष्ठः |
|---|---|---|---|---|---|---|
| १ | २ | ४ | ८ | १६ | ३२ | ६४ |
| | ३ | ६ | १२ | २४ | ४८ | |
| | ५ | १० | २० | ४० | ५६ | |
| | ९ | १८ | ३६ | २८ | ६० | |
| | १७ | ३४ | १४ | ४४ | ६२ | |
| | ३३ | ७ | २२ | ५२ | ६३ | |
| | | ११ | ३८ | ३० | | |
| | | १९ | २६ | ४६ | | |
| | | ३५ | ४२ | ५४ | | |
| | | १३ | ५० | ५८ | | |
| | | २१ | १५ | ३१ | | |
| | | ३७ | २३ | ४७ | | |
| | | २५ | ३९ | ५५ | | |
| | | ४१ | २७ | ५९ | | |
| | | ४९ | ४३ | ६१ | | |
| | | | ५१ | | | |
| | | | २९ | | | |
| | | | ४५ | | | |
| | | | ५३ | | | |
| | | | ५७ | | | |

उद्दिष्टसङ्ख्या: एकद्वित्रिपञ्चाष्टत्रयोदशाद्या: अङ्का: क्रमेण स्थाप्या:, ततो वामावर्त्तेन सर्वान्तिममङ्कं तत्पूर्वाङ्केन लोपयेत। एकेनाङ्केन चरिमाङ्कलोपने एकगुरु:, अन्तिमलोपे द्विगुरु:, त्रिभिरन्तिमाङ्कलोपे त्रिगुरुरित्यादिरूपमायाति। यथा—षट्कलप्रस्तारे एकद्वित्रिपञ्चाष्टत्रयोदशाङ्का: स्थाप्या:, तत: सर्वान्तिमत्रयोदशाङ्कावयवे तत्पूर्ववर्त्तिना अष्टाङ्केन लुप्ते अवशिष्टा: पञ्च, तत्र पञ्चाङ्कस्य तत्पूर्वत्र विद्यमानत्वात् अष्टमाङ्कलोपात् परकलया गुरुभावाच्च पञ्चमाङ्कात पङ्क्तिक्रमो विधेय:। तथा च पञ्चमस्थाने (- - - - ऽ) एवं स्वरूपम् एकगुरुर्वर्त्तते इति ज्ञानं पताकाफलम्। तथा चोक्तं प्राकृतपिङ्गले—"उद्दिट्ठे सिरअंका थप्पह वामावत्ते परलइ लुप्पह। एक्कलोप एक्कगुरु जाण दुइतिण्णिलोपे दुइतिण्णि जाण॥ मत्तपताका पिंगल गाव जो पावइ सो परिहि बुझाव॥" इति। संस्कृतं यथा—"उद्दिष्टसदृशाङ्का: स्थाप्या वामावर्त्तेन परं गृहीत्वा लोपयेत्। एकलोपे एकगुरुमानय द्वित्रिलोपे द्वित्रीन् जानीहि॥ मात्रापताकां पिङ्गलो गायति य: प्राप्नोति स परं बोधयति॥" इति।

अथ वर्णमर्कटिका।

एकाक्षरादिषड्विंशत्यक्षरावधिवर्णप्रस्तारेषु कति वृत्तानि भवन्ति इति प्रश्ने कृते वर्णमर्कटिकया प्रत्युत्तरं देयम्। तस्याश्च साधनप्रकार: प्रदर्श्यते—तत्र षट्पङ्क्तिकमेकाक्षरादिषड्विंशत्यक्षरसङ्ख्यया कोष्ठकं विधाय प्रथमायां वृत्तपङ्क्तौ एकादिकान् षड्विंशतिपर्यन्तानङ्कान् स्थापयेत्। एवञ्च प्रथमा वृत्तपङ्क्ति: सिध्यति। ततो द्वितीयायां प्रभेदपङ्क्तौ पूर्वस्थापिताङ्काध: उत्तरोत्तरद्विगुणान् द्व्यादिकान् अङ्कान् विन्यसेत्। एवं कृते द्वितीया प्रभेदपङ्क्ति: सिध्यति। तत: क्रमप्राप्तामपि तृतीयां मात्रापङ्क्तिमुल्लङ्घ्य तन्मूलभूतां चतुर्थीं वर्णपङ्क्तिं दर्शयति। द्वितीयपङ्क्तौ द्विचतुरष्टादिक्रमेण स्थितानङ्कान् प्रथमपङ्क्तिस्थितै: एकद्वित्रिप्रभृतिभिरङ्कैर्गुणयित्वा क्रमेण चतुर्थ्यां पङ्क्तौ द्व्यष्टचतुर्विंशत्यादिक्रमेण स्थापयेत्। एवं चतुर्थ्यां वर्णपङ्क्तौ लिखितायां पञ्चम्यां षष्ठ्यां च गुरुलघुपङ्क्त्यो: चतुर्थपङ्क्तिस्थितार्द्धाङ्कान् एकचतुर्द्वादशादिकान् स्थापयेत्। एवं गुरुलघुरूपे पञ्चमषष्ठपङ्क्ती सिध्यत:। तत: पञ्चमपङ्क्तिस्थितान् एकचतुर्द्वादशादिकानङ्कान् चतुर्थपङ्क्तिस्थितान् द्व्यष्टचतुर्विंशत्यादिकानङ्कांश्चैकीकृत्य त्रिद्वादशषट्त्रिंशादिरूपान् तृतीयायां मात्रापङ्क्तौ स्थापयेत्। एवं कृते अवशिष्टा तृतीया मात्रापङ्क्ति: सिध्यति। एतेन तावत् एतत् बोद्धव्यं—प्रथमपङ्क्तिप्रथमकोष्ठे एकाङ्कस्य विद्यमानत्वेन एकाक्षरवृत्तमिति। तदध: द्वितीयपङ्क्तिप्रथमकोष्ठे द्व्यङ्कस्य स्थिततया तस्य द्वौ भेदौ इति। तृतीयपङ्क्तौ प्रथमकोष्ठे त्र्यङ्कस्य

स्थितत्वेन तत्र च मात्राः तिस्रः (ऽ -) एकगुरोर्द्विमात्रत्वात् एकलघोश्च एकमात्रत्वादित्यभिप्रायः। तथा चतुर्थ्यां पङ्क्तौ प्रथमकोष्ठे द्व्यङ्कस्थितेः तत्र द्वौ वर्णौ इति लाभः। पञ्चमपङ्क्तौ प्रथमकोष्ठे एकाङ्कस्थितेः तत्र एकलघुः, तथा षष्ठपङ्क्तौ प्रथमकोष्ठे एकाङ्कस्य स्थित्या तत्र एकगुरुरिति सिद्धिः। ततश्च एकाक्षरप्रस्तारवशात् एकाक्षरवृत्तस्य द्वौ भेदौ, १। (ऽ) २। ( -), तेन मात्रा-त्रयम्, एकः गुरुः एकः लघुश्चैवं द्वौ वर्णौ च इति ज्ञातव्यम्। एवं द्वितीयादिकोष्ठेषु द्व्यक्षरादीनां क्रमेण सङ्ख्या-भेद-मात्रा-वर्ण-गुरु-लघुपदैः षट्सु पङ्क्तिषु कोष्ठाङ्कैर्वेदितव्यम्। सुखबोधाय चांशिकं कोष्ठप्रदर्शनमप्यत्र क्रियते। यथा—

| | | | | | | |
|---|---|---|---|---|---|---|
| वृत्तपङ्क्तिः | १ | २ | ३ | ४ | ५ | ६ |
| प्रभेद „ | २ | ४ | ८ | १६ | ३२ | ६४ |
| मात्रा „ | ३ | १२ | ३६ | ९६ | २४० | ५७६ |
| वर्ण „ | २ | ८ | २४ | ६४ | १६० | ३८४ |
| गुरु „ | १ | ४ | १२ | ३२ | ८० | १९२ |
| लघु „ | १ | ४ | १२ | ३२ | ८० | १९२ |

अनया रीत्या षड्विंशत्यक्षरपर्यन्तं कोष्ठः कल्पनीयः। तथा चोक्तं—"पिङ्गला-दिभिराचार्यैर्यदुक्तं वर्णमर्कटीम्। एकाक्षरादिषड्विंशत्यक्षरावधिलक्षिताम्॥ प्राकृतैरतिविस्तीर्णैः प्राकृतैरवहट्ठकैः। वक्ष्ये लक्ष्यसमायुक्तां पञ्चमे प्रत्यये स्थिताम्॥ छप्पंतो पत्थार करिज्जसु अक्खरसंखे कोट्ठ धरिज्जसु। पहिली पंति वण्ण धरिलिज्जसु दोसरि पंति दुण परिदिज्जसु॥ उप्परअंकगुणित करिलेहि चौठी पंति सोइ लिहि देहि। चौठी अद्धा पंचमी पंति सोइ छठमा लिहु णिब्भंति॥ पंचमी चौठो तिण्णहि मिलाउ पिंगल जंपै अंक फलाउ। वित्त पभेण मत्त वण्ण वणइ गुरु लहु जाणिअ एण सपणइ॥ अक्खरमक्कडि जाणहु जोइ जिहिं जाणे मणआणंद होइ। जो बुज्झई सोई परज्झइ मक्कडिजाले हत्थिण वज्झइ॥ लच्छीणाहेण कहे एम मक्कडिआए पअअत्थे। पेक्खइ बहुलकुंड मक्कडिअंगुर अत्थावंडम्॥" इति। संस्कृतं यथा—"षट्पङ्क्त्या प्रस्तारं कुरु अक्षरसङ्ख्यया कोष्ठकं धारय। प्रथमायां पङ्क्तौ वर्णान् धारय गृहाण द्वितीयायां पङ्क्तौ द्विगुणान् परिदेहि॥ उपर्यङ्कैः गुणयित्वा गृहाण चतुर्थ्यां पङ्क्तौ तानेव लिखित्वा देहि। चतुर्थ्यर्धान् पञ्चम्यां पङ्क्तौ तानेव षष्ठ्यां लिख निर्भ्रमम्॥ पञ्चमीं चतुर्थीं तृतीयायां मेलय पिङ्गलो जल्पति अङ्कं

लिख्यति । वृत्तानि प्रभेदान् मात्राश्च वर्णान् गुरून् लघून् जानीहि तेन सन्ततम् ॥ चचरमर्कटीं जानीत लोकाः ! यस्यां ज्ञातायां मनस आनन्दो भवति । यो बुध्यते स एव प्रतिबुध्यते मर्कटीजाले इत्थो बध्यते ॥ लक्ष्मीनाथेन कथिते अत्र मर्कटिकायाः प्रबन्धे । पश्यत यथा—॥ श्रीलक्ष्मीनाथभट्टेन नारायणतनूभुवा । वर्णमर्कटिका प्रोक्ता पञ्चमे प्रत्यये स्थिता ॥” इति ।

शिक्षार्थिनां भूयोज्ञानाय पूर्वप्रदर्शितस्य खण्डमात्रामेरुरिति संज्ञान्तरस्य मात्रामेरोः भिन्नविधा प्रस्तारविन्यासप्रणाली प्रदर्श्यते—

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| | | | | | | | १ | १ |
| | | | | | | १ | १ | २ |
| | | | | | | २ | १ | ३ |
| | | | | | १ | ३ | १ | ५ |
| | | | | | ३ | ४ | १ | ८ |
| | | | | १ | ६ | ५ | १ | १३ |
| | | | | ४ | १० | ६ | १ | २१ |
| | | | १ | १० | १५ | ७ | १ | ३४ |
| | | | ५ | २० | २१ | ८ | १ | ५५ |
| | | १ | १५ | ३५ | २८ | ९ | १ | ८९ |
| | | ६ | ३५ | ५६ | ३६ | १० | १ | १४४ |
| | १ | २१ | ७० | ८४ | ४५ | ११ | १ | २३३ |
| | ७ | ५६ | १२६ | १२० | ५५ | १२ | १ | ३७७ |
| १ | २८ | १२६ | २१० | १६५ | ६६ | १३ | १ | ६१० |
| ८ | ८४ | २५२ | ३३० | २२० | ७८ | १४ | १ | ९८७ |

मात्रावृत्तेषु कत्येकगुरवः कति द्विगुरवः इत्यादि ज्ञानार्थं खण्डमात्रामेरुः कार्यः । तत्प्रकारो यथा—उपरि एकः कोष्ठः लेख्यः, तदधस्तात् दक्षिणे वामे वा अतिक्रान्तैककोष्ठं कोष्ठद्वयवत् पङ्क्तिद्वयं, तस्याधस्तात् तद्वदेव कोष्ठत्रयवत् पङ्क्तिद्वयं, तदधोऽपि तथैव कोष्ठचतुष्टयवत् पङ्क्तिद्वयम् इत्येवंरूपेण यावदिच्छं लिखेत् । एवं कोष्ठेषु लिखितेषु वामभागे अन्त्यकोष्ठेषु एकद्वि-एकत्रि-एक-चतुरादिक्रमेण एकान्तरेण एकोत्तरवृद्ध्या अङ्काः विन्यस्याः । दक्षिणभागे अन्त्यकोष्ठेषु सर्वत्र एकाङ्का लेख्याः । मध्ये कोष्ठे स्वोपरिस्थकोष्ठाङ्केन तदुपरिस्थकोष्ठपुरःस्थितकोष्ठाङ्कं संयोज्य पूर्ववत् विन्यसेत् । यथा—प्रथमपङ्क्तौ एक-

चान्तस्य, द्वितीयपङ्क्तौ त्रिकान्तस्य, तृतीयपङ्क्तौ त्रिकान्तस्य इत्येवंक्रमेण न्यासः कार्यः ; सर्वगुर्वेकगुर्वादिकथनञ्च पूर्ववदेव कर्त्तव्यम् । प्रस्तारसङ्ख्याज्ञानार्थं प्रतिपङ्क्ति तत्तत्पङ्क्तिस्थितानां सर्वाङ्कानामेकीकरणेन जातमङ्कं दक्षिण-भागस्थैकाङ्कात् परतो लिखेत् । तथा च—"आदावेकं न्यसेत् कोष्ठं तदधः पङ्क्तियुग्मके । द्वौ द्वौ च तदधस्त्रींस्त्रीनेवंरूपेण वर्द्धनम् ॥ अन्त्यकोष्ठेषु सर्वेषु प्रथमाङ्कं न्यसेत् सुधीः । आदौ चैकं ततो द्वौ च पुनश्चैकं ततस्त्रयम् ॥ एकान्तरस्य कुड्याङ्कमेवंरूपेण पूरणम् । मध्यकोष्ठं ततः प्राज्ञैः पूरणीयं शिरःस्थितैः ॥ शिरः-स्थितोर्द्धकाद्याङ्कमेकीकृत्य प्रपूरयेत् । एवंक्रमेण विज्ञः स्यान्मात्रामेरुसंचयः ॥" इति ।

## मात्रामर्कटिका ।

अथ प्राकृतपिङ्गले श्रीलक्ष्मीनाथभट्टोक्ता मात्रामर्कटी प्रदर्श्यते—"जा पिंगलेण कइणा ण णिबद्धा अप्प गंथम्मि । तं मत्तामक्कडिअं लच्छीणाहेण विरइअं भणइ ॥ मत्तासंखे कोट्ठ करु पंतिच्छअ चत्तारि । तत्थ दुआदिअअंका धरि पढमहि पंति विचारि ॥ आइ अंक परितज्जि करु मज्झहु पंतिअझारि । पुव्वजुअलसरि अंक धरु बीओ पंति विचारि ॥ पढमपंतिठिअअंकक्कारि बीओ पंति गुणेहि । जो जो अंका जहँ परइ तं तिअ पंति भणेहि ॥ पढमे बीअं अंकं बीए कोट्ठे अ पंचमं अंकम् ; देऊण बाणहिट्ठअं तहिट्ठअं तीअचोत्थए देइ ॥ काऊण एक्कभावं पंचमपंतिट्ठिए अंके । देऊण एक्कमंकं कुणेहि तेणव्व पंचमं पुण्णम् ॥ तज्जिअ पंचममंकं पुव्वम्मि एक्कभावमावण्णे । देऊण एक्कमधिकं छट्ठं कुणेहि परिपुण्णम् ॥ काऊण एक्कभाव पंचमपंतिट्ठआण अंकाण । तज्जिअ पंचदहंकं एक्कं देऊण कुणसु सुण्णकोट्ठम् ॥ एव्वं णिरवहिमत्तापत्थारे अक्करिक्कीणो । होइ त्ति तेण कइणा ण कओ अंकाण वित्थारो ॥ एव्वं पंचमपंतिं पुण्णं काऊण पढमभेकंकम् । देऊण बाणपंतिट्ठिएहिं छट्ठिं कुणेहि अंकेहिं ॥ काऊण एक्कभावं पंचमपंतिट्ठिए अंकम् । पढकोट्ठं सुक्कइवरो चोत्थिं पंतिं च कुणउ परिपुण्णम् ॥ णिण्णो भेआ मत्ता वण्णा लहुआ तहा गुरुआ । एहे छप्पंतिआणा पत्थारा होंति वित्थारा ॥ जत्थ ण हत्थि ण वडभइ वडभाइ चित्तं च सुरसरिच्छम् । तं मत्तामक्कडिअं दड्ढूण च को ण वडभए सुकई ॥ अट्ठोहिट्ठं जह वा मेरुजुअलं जहा पडाआ वा । मक्कडिआ वि तहच्चिअ कोट्ठहलमेत्तकारिणी भणिआ ॥ इअ लच्छिणाहकइणा रइए ढहरे पबंधम्मि । पअअपंचपबंधं पेक्खह छंदस्स सव्वस्सम् ॥" इति । संस्कृतं यथा—"या पिङ्गलेन कविना न निबद्धा आत्मनो ग्रन्थे । तां मात्रामर्कटिकां

लक्ष्मीनाथेन विरचितां भणत॥ मात्रासङ्ख्यया कोष्ठं कुरु पङ्क्तिषट्कं प्रसार्यित्वा। तत्र द्व्यादिकानङ्कान् धारय प्रथमपङ्क्तौ विचारयित्वा॥ आद्याङ्कं परित्यज्य सर्वपङ्क्तिमध्ये। पूर्वयुगलसदृशाङ्कान् धारय द्वितीयपङ्क्तौ विचारयित्वा॥ प्रथमपङ्क्तिस्थिताङ्कैर्द्वितीयपङ्क्तिं गुणय। यो योऽङ्को यत्र पतति तं तत्रैव तृतीयपङ्क्तौ भण॥ प्रथमे द्वितीयमङ्कं द्वितीयकोष्ठे च पञ्चममङ्कम्। दत्त्वा बाणद्विगुणं तद्विगुणं तृतीयचतुर्थयोर्दत्त्व॥ कृत्वा एकभावं पञ्चमपङ्क्तिस्थितानङ्कान्। दत्त्वा एकमङ्कं कुरु तत्रैव पञ्चमं पूर्णम्॥ त्यक्त्वा पञ्चममङ्कं पूर्वस्मिन् एकभावमापन्ने। दत्त्वा एकमधिकं षष्ठं कुरु परिपूर्णम्॥ कृत्वैकभावं पञ्चमपङ्क्तिस्थितानङ्कान्। त्यक्त्वा पञ्चदशाङ्कमेकं द्वित्वा कुरुष्व मुनिकोष्ठम्॥ एवं निरवधिमात्राप्रकारे चङ्कपरम्परा। भवतीति तेन कविना न कृतोऽङ्कानां विस्तारः॥ एवं पञ्चमपङ्क्तिं पूर्णां कृत्वा प्रथममेकाङ्कम। दत्त्वा बाणपङ्क्तिस्थितैः षष्ठीं कुरु षड्भिः॥ कृत्वा एकभावं पञ्चमपङ्क्तिस्थितानङ्कान्। प्रतिकोष्ठं सुकविवरः चतुर्थीं पङ्क्तिञ्च कुरु परिपूर्णाम्॥ वृत्तं भेदो मात्रा वर्णा लघुकास्तथा गुरुकाः। एते षट्पङ्क्तिकृताः प्रकारा भवन्ति विस्ताराः॥ यत्र च छलो चवबध्यते बध्यते चित्तञ्च सूत्रसङ्घस्य। तां मात्रामर्कटिकां दृष्ट्वा च को न बध्यते सुकविः॥ नष्टोद्दिष्टं यथा वा मेरुयुगलं यथा पताका वा। मर्कटिकाऽपि तथैव कुतूहलमात्रकारिणी भणिता॥ इति लक्ष्मीनाथकविना रचिते रुचिरे प्रबन्धेऽस्मिन्। प्रत्ययपञ्चकमस्य पश्यत छन्दसः सर्वस्वम्॥" इति। अथ तत्रैकमात्रादिनिरवधिकमात्राप्रस्तारेषु कतिकतिजातिसम्बन्धिवृत्तादयो भवन्तीति प्रश्ने कृते मात्रामर्कटिकया प्रत्युत्तरं देयमिति तद्रचनप्रकारो लिख्यते। तत्र प्रथमपङ्क्तिसाधनोपायमाह—स्वाभिमतमात्रासङ्ख्यया पङ्क्तिषट्कं यथा स्यात्तथा कोष्ठकं कुरु, ततः प्रथमायां वृत्तपङ्क्तौ यावदिच्छं क्रमेण द्व्यादिकानङ्कान् स्थापय। सर्वासां पङ्क्तीनां मध्ये प्रथमाङ्कं परित्यज। अत्रेदञ्च प्रतिभाति, 'सर्वकोष्ठेषु प्रथमाङ्कत्यागो न सर्वकोष्ठत्यागपरः, किन्तु षष्ठगुरुपङ्क्तिप्रथमकोष्ठत्यागपरः, तत्र गुरोरभावात्। अतस्तु सम्प्रदायात् पञ्चसु कोष्ठेषु प्रथमाङ्कविन्यासः अवश्यं कर्त्तव्य एव, अन्यथा वक्ष्यमाणाङ्कविन्यासभङ्गापत्तेः। एवं कृते प्रथमा वृत्तपङ्क्तिः सिध्यति। अथ द्वितीयां प्रभेदपङ्क्तिं साधयति—एकद्वित्रिपञ्चाष्टादीन् प्रस्तारक्रमन्यायेन क्रमशो धारय; एवञ्च द्वितीयप्रभेदपङ्क्तिः सिध्यति। अथ तृतीयां मात्रापङ्क्तिं साधयति—प्रथमपङ्क्तिस्थिताङ्कैः द्वितीयपङ्क्तिस्थानामङ्कानां गुणने यो योऽङ्कः यत्र पतति तं तं तृतीयपङ्क्तौ धारय, एवं तृतीया मात्रापङ्क्तिः

सिध्यति। अथ क्रमप्राप्तां चतुर्थीं वर्णपङ्क्तिमुल्लङ्घ्य युगपदेव चतुर्थषष्ठपङ्क्त्योः साधनार्थं तन्मूलभूतां पञ्चमीं लघुपङ्क्तिं साधयति, तत्र प्रथमे द्वितीयमङ्कं, षट्स्वपि पङ्क्तिषु प्रथमकोष्ठत्यागात् द्वितीयकोष्ठमेवात्र प्रथमं कोष्ठम्, अतः प्रथममेव द्वितीयमङ्कं, तदपेक्षया द्वितीयकोष्ठे च पञ्चमाङ्कं दत्त्वा ततो बाणद्विगुणं दश तद्द्विगुणं विंशतिश्च इत्येतौ द्वावङ्कौ तृतीयचतुर्थकोष्ठयोः विन्यसनीयौ। ततः पञ्चमपङ्क्तौ स्थितान् द्व्यादीनङ्कानेकीकृत्य तस्मिन् एकमधिकं दत्त्वा ततश्च निष्पन्नेन अष्टविंशता पूर्वापेक्षया पञ्चमं कोष्ठं पूर्णं कुरु। ततः पूर्वस्मिन् द्व्यादिके पञ्चमपङ्क्तिस्थिताङ्के एकीकृते सति ततः पञ्चममङ्कं त्यक्त्वा पुनस्तत्रैकमधिकं दत्त्वा पूर्ववत् जातेन एकसप्तत्या षष्ठं कोष्ठं पूरय। ततः पञ्चमपङ्क्तिस्थितान् द्व्यादीनेकीकृत्य तस्मात् पञ्चदशाङ्कं त्यक्त्वा तेष्वपि एकं परित्यज्य सप्तमकोष्ठं त्रिंशदुत्तरेण शतेन पूर्णं कुरु। अथ पञ्चमपङ्क्तौ द्व्यादिकान् सप्तमकोष्ठावधिस्थितानङ्कानेकीकृत्य तेषु एकचत्वारिंशदङ्कं त्यक्त्वा जातेन पञ्चत्रिंशदधिकशतद्वयेन अष्टमं कोष्ठं पूरय। अथ द्व्यादिकान् अष्टमकोष्ठावधिस्थितान् अङ्कानेकीकृत्य तेषु एकनवत्यङ्कं विहाय निष्पन्नेन विंशत्यधिकचतुःशताङ्केन नवमं कोष्ठं पूरय। ततः द्व्यादिकान् नवमकोष्ठावधिस्थितानङ्कानेकीकृत्य ततः सप्ताशीत्यधिकशताङ्कं वियुज्य अवशिष्टेन चतुश्चत्वारिंशदधिकसप्तशताङ्केन दशमकोष्ठपूरणं कुरु। एवञ्च चतुर्थषष्ठपङ्क्तिगर्भा पञ्चमी लघुपङ्क्तिः सिध्यति। अथ षष्ठगुरुपङ्क्तिसाधनप्रकारो यथा—तत्र गुरुस्थानीयं प्रथमकोष्ठकं विहाय अग्रिमकोष्ठे प्रथममेकाङ्कं दत्त्वा पञ्चमपङ्क्तिस्थितैर्द्व्यादिभिरङ्कैः षष्ठीं पङ्क्तिं पूरय। एवं षष्ठी गुरुपङ्क्तिः सिध्यति। अथ उर्वरितचतुर्थवर्णपङ्क्तिपूरणप्रकारो यथा—पञ्चमषष्ठपङ्क्तिस्थितान् द्व्येकादीनङ्कानेकीकृत्य प्रतिकोष्ठं चतुर्थीं पङ्क्तिं पूरय। अत्र षष्ठपङ्क्तौ आदिकोष्ठे अङ्काभावात् चतुर्थपङ्क्तिप्रथमकोष्ठे एकाङ्कः एव देयः, एवं कृते चतुर्थी वर्णपङ्क्तिः सिध्यतीति। अङ्कविन्यासप्रणाली यथा—

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| वृत्तपङ्क्तिः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
| प्रभेद „ | १ | २ | ३ | ५ | ८ | १३ | २१ | ३४ | ५५ | ८९ | १४४ |
| मात्रा „ | १ | ४ | ९ | २० | ४० | ७८ | १४७ | २७२ | ४९५ | ८९० | १५८४ |
| वर्ण „ | १ | ३ | ७ | १५ | ३० | ५८ | १०९ | २०१ | ३६५ | ६५५ | ११६४ |
| लघु „ | १ | २ | ५ | १० | २० | ३८ | ७१ | १३० | २३५ | ४२० | ७४५ |
| गुरु „ | | १ | २ | ५ | १० | २० | ३८ | ७१ | १३० | २३५ | ४२० |

इति श्रीमज्जीवानन्दविद्यासागरकृतायां पिङ्गलच्छन्दःसूत्रे हलायुधवृत्तौ सुखबोधिन्याम अष्टमोऽध्यायः।

# परिशिष्टम् ।

अथ मात्राप्रस्तारे प्राकृतपिङ्गलाद्युक्तां षट्कलादीनां गणव्यवस्थां अत्र प्रदर्श्यते यथा—

## षण्मात्रष्टः ॥१॥

अस्य त्रयोदश भेदाः, यथा—⏑ ⏑ ⏑ हरः (१) – – ⏑ ⏑ शशी (२) – ⏑ – ⏑ सूर्यः (३) ⏑ – – ⏑ शक्रः (४) – – – – ⏑ शेषः (५) – ⏑ ⏑ – अहिः (६) ⏑ – ⏑ – कमलः (७) – – – ⏑ – धाता (८) ⏑ ⏑ – – कलिः (९) – – ⏑ – – चन्द्रः (१०) – ⏑ – – – ध्रुवः (११) ⏑ – – – – धर्मः (१२) – – – – – – शाली (१३) ।

## पञ्चमात्रष्ठः ॥२॥

अस्याष्टौ भेदाः, – ⏑ ⏑ इन्द्रासनम् (१) ⏑ – ⏑ सूर्यः (२) – – ⏑ चापः (३) ⏑ ⏑ – हीरः (४) – – ⏑ – शेखरः (५) – ⏑ – – कुसुमम् (६) ⏑ – – – अहिगणः (७) – – – – – पापगणः (८) ।

## चतुर्मात्रो डः ॥३॥

अस्य पञ्च भेदाः, ⏑ ⏑ कर्णः (१) – – ⏑ करतलः (२) – ⏑ – पयोधरः (३) ⏑ – – वसुचरणः (४) – – – – विप्रः (५) ।

## त्रिमात्रो ढः ॥४॥

अस्य भेदास्त्रयः, – ⏑ रसवासः (१ ⏑ – पवनः (२) – – – वलयम् (३) ।

## द्विमात्रो णः ॥५॥

अस्य भेदौ द्वौ, यथा—⏑ हारः (१) – – सुप्रियः (२) ।

अथ प्राकृतपिङ्गलाद्युक्ता आर्यादीनां गणच्छन्दसां वैतालीयादीनां मात्राच्छन्दसाञ्च कतिचित् सोदाहरणभेदाः प्रदर्श्यन्ते, यथा—

## आर्याभेदान्तर्गता उद्गीतिर्विगाथा ॥६॥

उदा०—तरणितनूजातीरे चीरेऽपहृतेऽपि धीरेण । हिमगौरे रमणीनामकुटिल-धीरेव मनसि संजाते (?) ॥

## उपगीतिर्गाहुः ॥७॥

## गीतिरुद्गाथा ॥८॥

## यत्र द्वादशाष्टादशमात्रं प्रथमार्द्धं द्वादशविंशतिमात्रं द्वितीयार्द्धं सा गाहिनी ॥९॥

उदा०—स जयति मुरलीवादन (१) केलिकलाभिर्विमोहयन् गोपीः। (२) वृन्दावनमालभूमौ (३) रासरसाञ्चितविबुधार्चितपदमुखः॥ (४)

## विपरीता सिंहिनी ॥१०॥

उदा०—वन्देऽरविन्दनयनं (१) वृन्दारकवृन्दवन्दितपदाम्भोजम्। (२) नन्दानन्दनिदानं (३) नवजलधररुचिरमिन्दिरारमणम्॥ (४)

## द्वादशविंशतिमात्राभिः स्कन्धकार्द्धम् ॥११॥

उत्तरार्द्धमपि तथा। उदा०—राधामुखाब्जतरणिः (१) तरणिः संसारसागरोत्तरणविधौ। (२) स जयति निजभक्तानां (३) कामितदाता दुरन्तशक्तिमहायः॥ (४) अस्या भेदा अष्टाविंशतिसङ्ख्याकाः प्राकृतपैङ्गले द्रष्टव्याः। इति गाथाप्रकरणम्।

## ट-ड-ढाष्ट-ड-ला दोहार्द्धम् ॥१२॥

उत्तरार्द्धमपि तथा। उदा०—गौरीवर (ट) चितितनु (ड) सकल (ढ) मलकरा (ट) जितग (ड) रु (ल)। (१) जय वृषभ (ट) ध्वज पुर (ड) मथन (ढ) महादेव (ट) नि:स (ड) रु (ल)॥ (२) लघुगुरुसन्निवेशविशेषादस्यास्त्रयोविंशतिभेदाः प्राकृतपैङ्गलेऽनुसन्धेयाः।

## रुद्रमात्राभिः षट्पदी रसिका ॥१३॥

उदा०—जय जय हर वृषगमन (१) तरणिदहनविधुनयन (२) नयनदहनजितमदन। (३) निजशरकृतपुरकदन (४) मम हृदयगततपनय (५) अविनयमधिकमपनय॥ (६) अत्रापि लघुद्वयस्यैकगुरुकरणात् अष्टौ भेदाः स्युः।

## एकादशत्रयोदशयतिकचतुर्विंशतिमात्रा चतुश्चरणा चतुष्पदी रोला ॥१४॥

उदा०—अरिगणमभितापयति विकुधलोकाननुपमच्छति (१) धरणीविवरगभुजगनिकरमभितापेनच्छति। (२) सकलदिगीशपुरमभि निजतापेरभियोजयति (३) भूप! कथं प्रतापसव कीर्तिं न शोषयति॥ (४) अस्य भेदास्त्रयोदश।

## यमकितसप्तदशाक्षराष्टादशाक्षरपादाभ्यां गन्धानार्द्धम् ॥१५॥

उत्तरार्द्धमपि तथा। उदा०—गर्जति जलधरः परिहसति शिखिनिवहः (१)

नीपवनीमवधूय वहति दक्षिणगन्धवहः । (२) दूरे दयितः सखि ! किमिह हि करवै (३) प्रज्वालय दहनं झटिति शमममनुकरवै ॥ (४)

## सगैः समडकारैश्चतुष्पदी ॥१६॥ चौपैया ।

उदा०—चेतः ! भज महि-तं कम-लामहि-तं दा-रितदा-कणकं सं (१) हतघे नुक-दा-नवभि-च्छाना-नवमृषि-गनमा-ममई-मम । (२) यमुना-वरनी-रे तर-लममी-रे का-रितगो पीरा-सं (३) भवधा-धाहर-णं रा-धारम-णं क न्दकुसुम-ममहा-सम ॥ (४)

## सम्पूर्णैश्चतुष्पद्यान्या चतुष्पदी ॥१७॥

पूर्वोक्तचतुष्पदैर्यस्या एकः पादः सम्पद्यते तादृशपादैश्चतुष्पदी द्वितीया चतुष्पदीत्यर्थः । उदा०—व्रज गो-कुलपा-लं ला-लितवा लं वा-दितमृदु-रवकं-शं, रोचन-युतभा-लं धृत-वनमा-लं शो-भिततर-लवतं-शं, दितिज-व्रजकी-लं वा-दितता लं क्षत-सुरमुनि-गणशं-सं, रुचिरक-लितमा-लं जित-घनजा-लं भा-सितया-दववं-शम । (२) सरसी-रुहनय-नं जग-तामय-नं क मठतल्प-स्थितदा-रं, धृतगो-पसुवे शं कु-चितके-शं खित-जितनव-घनसा-रं, जितनय-नचको-रं न-न्दकिशो-रं गो-पीमा-नसचो-रं, कृतरा-धाधा-रं स-ञ्जनता-रं दिति-सुतना-शकठो-रं (३) नवकलि-तकद-म्बं जग-दवल-म्बं से-वितयमु नातो-रं, वन्दित-सुरवृ-न्दं जग दान-न्दं गो-पीजन-हृतचो-रं, धृतधर-णीवल-यं कृत-षाविल-यं द-लविनि जितहो-रं, भवमा गरपा-रं भुव-नागा-रं न-न्दसुतं शरदो-रम ॥ (४) प्रथमया सह मेलनादियं चतुष्पदी सम्पूर्णा ।

## समडकारान्ते वलयं ( - - - ) दशाष्टत्रयोदश-
## यतिकमित्थं द्विपदी घत्ता ॥१८॥

उदा०—भवभा-धाहर-णं रा-धारम णं न-न्दकिशो-रं भज हृदय ! । (१) यमुना-याको-रे तर-लसमो-रे कृत-वररा-सं त्वम-नुसर ॥ (२)

## ट-डत्रय-ठ-डद्वयैरेकत्रिंशत्कलः एकादशसप्तत्रयोदशयतिकः
## इत्थं द्विपदी घत्तानन्दः ॥१९॥

उदा०—दितिसुतविर (ट) हगम्ब (ड) नमसुख (ड) भञ्जन (ड) मनुगतज (ठ) नताप (ड) हरणम् । (ड) (१) निखिलमान (ट) सरस्न (ड) नमतिनि (ड) रञ्जन (ड) मस्तु किम (ठ) पि महः (ड) शरणम् ॥ (ड) (२)

## यत्र द्वौ टकारौ सप्त-विप्रान्तमडत्रयमध्यौ रुद्रत्रयोदशयतिकौ
## इत्थं चतुष्पदं काव्यम् ॥२०॥

उदा०—मूर्द्धि विरा (ट) जितच (ड) न्द्र चन्द्र (ड) कलोव (ड) ललितकवर (ट) (१) तिलकदहन (ट) वरनय (ड) न नयन (ड) जितमद (ड) नमनोहर। (ट) चमरनिकर (ट) कृतमन (ड) मनमन (ड) निरवधि (ड) करुणाकर (ट) (२) करधृतमनु (ट) अकला (ड) परिवुध (ड) जनतिमि (ड) रविभाकर॥ (ट)

## डत्रय-ढ-ट-ड-ढैर्वसुपञ्चमात्राकैश्चतुष्पदम् उल्लालम् ॥२१॥

## काव्यपादचतुष्टयोल्लालद्विपदैः षट्पदी ॥२२॥

उदा०—जय जय न (ट) न्दकुमा (ड) र मार (ड) सुन्दर (ड) वरलोचन (ट) (१) लोचनजित (ट) नवक (ड) ल्ल कल्ल (ड) निभमय (ड) भवमोचन (ट) (२) नूतनजल (ट) धरनी (ड) लगोल (ड) भूषित (ड) गतदूषण (ट) (३) दूषणहर (ट) धृतमा (ड) लभाल (ड) भूषित (ड) वरभूषण (ट) (४) दूषय (ड) नयनिह (ड) मम निखि (ड) लमपि (ढ) कुरु दूरे (ट) नन्दकि (ड) शोर (ढ) (५) तव चर (ड) णकमल-युगलम (ड) नुदिन (ढ) मनसैवे (ट) नयनच (ड) कोर॥ (ढ) (६)

## जान्तडचतुष्टयचतुष्पदी पज्झटिका ॥२३॥

उदा०—गाढां (ड) वन्दां (ड) परिजय (ड) ति वारि (ज) (१) निखिलजन (ड) नानां (ड) सुदूरित (ड) भिवारि। (ड) (२) भवमुक (ड) टविरा (ड) जि जटा (ड) विहारि (ज) (३) मज्ज (ड) ज्जनमा (ड) न-मता (ड) पहारि॥ (ज) (४)

## सैव भान्ताऽडिल्ला प्रथमद्वितीययोस्तृतीय-चतुर्थयोश्च यमकिता॥२४॥

उदा०—हरिरुप गत इह सखि मयि वेदय (१) कुञ्जगृह-क्रोदर-गतमपि खेदय। (२) इह यदि सपदिस-विधमुप-याम्यति (३) रसरस-मारुत-मिदमनु-याम्यति॥ (४)

## डचतुष्टयपूर्ववत् यमकितपादाकुलकम् ॥२५॥

उदा०—जलभर-दानद-रितवन-भागः (१) शीतल-मारुत-कृतपर-भागः। (२) चञ्चल-चपला धृतवन-मालः (३) समुपा-गत इह जलधर-कालः॥ (४)

## षोडशचतुर्दशमात्राभिश्चौयालार्द्धम् ॥२६॥

उत्तरार्द्धमपि तथा। उदा०—दिशि दिशि विलसति जलधरगर्जित (१) मथ तां केका राजयते। (२) सा मम चेतः कुरुते तर्जित (३) मपि का कान्ता भावयते॥ (४)

यत्र ढ-डद्वय-जकारैः प्रथमः पादः, लद्वयान्त्यडत्रयेण द्वितीयः, ढ-डत्रयेण तृतीयः, ढ-डद्वयेन चतुर्थः, तृतीयवत्

पञ्चमः, पदपञ्चकान्ते दोहापादचतुष्टयम् इत्थं नवपदी रड्डा ॥२७॥

उदा०—पिकरव (ठ) मनिदम—नुदिवस—ति हिमु (अ) (१) किंशुक—कलिका विकसति (२) वहति (ढ) मलयम—रुदयम—पि मुलघु (३) विकत (ढ) अलिरपि कलयति (४) विकस (ढ) वि मञ्जु—लमञ्ज—रिरपि च। (५) इति मधुरनुवनमनुसरति (६) बहुलोभूय मुकेभि (७) हरिरपि विलसति चरणयुग (८) मनुसर तं हृदयेभि! ॥ (९)

## भजवसुभैश्चतुष्पदी पद्मावती ॥२८॥

उदा०—करयुग—धृतवं—शी रुचि—रवतं—सो मो—वर्द्धन—धारण—शील (१) प्रियगो—पविहा—री भव—सना—री वृ—न्दावन—विरचित—लीलः। (२) धृतवर—वनमा—लो निज—जनपा—लो वर—यमुना—जलकेलि—शाली (३) मम म—ङ्गलदा—यी कृत—भवमा—यी वर—भूषण—भूषित—भाली ॥ (४)

## यत्र दोहाचरणचतुष्टयेन पूर्वार्द्धं काव्यचरणचतुष्टयेनोत्तरार्द्धं दोहाशेषचरणकाव्याद्यचरणैकदेशाभ्यां काव्यद्वितीयतृतीय-पादाद्ययतिभ्याश्च यमकयुक्तं सा कुण्डलिका ॥२९॥

उदा०—चरणं शरणं भवतु तव (१) मुरलीवादनशील! (२) सुरगणवन्दित-चरणयुग! (३) वनभुवि विरचितलील! (४) वनभुवि विरचितलील! (य) दुष्टजन-खण्डनपण्डित! (१) दुर्जनजनहृदिकील! गण्डयुगकुण्डलमण्डित! (२) दुर्जनजन-हृदिकील! भीतभयतापविहरण! (३) मुनिजनमानसहंस! हरतु मम तापं चरणम् ॥ (४)

## ट-डचतुष्टय-ढैरर्क-त्रयोदशयतिकैश्चतुष्पदं गगनाङ्गनम् ॥३०॥

उदा०—मानसमिह (ट) मम कृ—लति को—किलविरु—तमका—र्णं (ढ) (१) कलितभरा (ट) मनसा—यकमत—नुः कल—यति मा—रणम्। (ढ) (२) मधुसमये (ट) कथमपि—संख। को—वं निज—मपि धा—रये (ढ) (३) कृषिरमधुभि (ट) दमन—रा चण—मपि सो—ढुमपा—रये (ढ) ॥ (४)

## ट-डपञ्चकगैर्द्विपदी ॥३१॥

उदा०—मम मानस (ट) मभिलष—ति सखि! कृ—तरास—केलिर—

सुनाय—के । (ग) (१) निजरुचिविजित (ट) नूतन—जलधर—मुरली—नादसु—खदाय—के ॥ (ग) (२)

**दश-दश-सप्तदशयतिक-मुनिवसुमात्राकद्विपदमुल्लणम् ॥३३॥**

उदा०—करविधृतवंशरव-हृतहृदयचित्तभव-गोकुलानन्दकररुचिरराशे । (१)
मम सविधमुपयासि मम वचनमनुयासि वल्लवीरभिसृत्य जनितहासे ॥ (२)

**डनवक-राभ्यां द्विपदी खञ्जा ॥३४॥**

उदा०—निजतनु-रुचिविजित नवघन-जलधर-चिविधृत रुचिरत-रमुकुट-हरिरिह मम हृदि भामताम । (१) मम हृत् यमविर-तमनुभ-वतु तव निजजन-सुखवित-रणरसि-कचरण-सरसिज-दामताम ॥ (२)

**यत्र डषट्क-जाभ्यां डसप्तक-जाभ्याञ्च**
**पूर्वोत्तरार्द्धं सा शिखा ॥३५॥**

उदा०—विकचन-लिनगत-मधुरम धुकरक-लरवम-नुकलय सुकेशि ! । (१)
हरिरिति विनमति चरणयु-गमपि म-थि कुरु हृ-दयमप-वपमति-सुवेशि ! ॥ (२)

**यत्र डनवक-रेफकर्णैः ( ⏑ ⏑ ) पूर्वार्द्धम्**
**आर्य्योत्तरार्द्धञ्च सा माला ॥३६॥**

उदा०—वृन्तह दयकर-युगकृत-वसनव-सनहर-चपरव-जयुवति-कृतविन-तिरभय-मानता-दामा: । (१) तीरे कदम्बशाली वरवनमाली हरि: पायात् ॥ (२)

**कुसुमान्त ( - ⏑ - - ) दोहापूर्वोत्तरार्द्धाभ्यां**
**चुलियाला ॥३७॥**

उदा०—चपसुपविश वनभुवि हरे ! मम पुनरागमनाव (दो) धि पालय । (१)
उपयातामिह मम सखीं तामद्य राधामु (दो) पपालय ॥ (२)

**ट-ड-लैष्ट-ढ-भै: सौरठार्द्धम् ॥३८॥**

उत्तरार्द्धमपि तथा । उदा०—रूपविनि (ट) र्जितमा—र ! सकलयाद (ट) वकुल (ढ) पालक ! । (१) जय जय न (ट) न्दकुमा—र ! गोपीगो (ट) पजन (ढ) खालक ! ॥ (२)

**यत्र विप्र-स-भान्यतर-डलय-गैरेकादशाक्षरै: प्रथम-**
**द्वितीयपादौ स-भान्यतर-डलय-गैर्द्दशाक्षरैश्च**
**तृतीय-चतुर्थौ पादौ सा हाकलि: ॥३९॥**

उदा०—विलसत—यानल—वेगस—लं (१) चरणा—श्रितवर—मुनिज—नम। (२) व्योमत—लामल—कमुग—लं (३) नौमि वि—भूषित—माधत—नम्॥ (४)

ज-जाभ्यां चतुष्पदी मधुभारः॥४०॥

उदा०—उरसि क—लमाल (ज) (१) मकरा—लपाल (ज)। (२) दधिजित—लमाल (ज) (३) जय न—न्दबाल (ज)॥ (४)

डत्रय-ट-डत्रय-गैश्चतुष्पदी दण्डकला॥४१॥

उदा०—भर के—लिनिभृ—दनविनि—हतपूतन (ट) रचितदि—तिजकुल—कमलद—नं (१) बाणा—वलिमा—लितस—कलपालित (ट) पार्थिव—लोकित—कमलद—नम्। (२) ललमा—यामा—नव रण—हतदानव (ट) दुस्तर—भवजल—शमित—पिं (३) सुरसि—न्धुविधा—यकया—दवनायक (ट) मदभह—रं प्रण—मामि ह—रिम्॥ (४)

जात्मैकादशमात्राभिश्चतुष्पद आभीरः॥४२॥

उदा०—व्रजभुवि रचितविहार (१) श्रुतिमतकलितविचार। (२) यदुकुल-कलितनिवास (३) जय भुतलकृतरास॥ (४)

डचतुष्टय-ट-डद्वय-गैः षोडशमात्रायतिकै-
श्चतुष्पदी कामकला॥४३॥

उदा०—कमला-करला-लितपद-कमलं निजजनहृद (ट) यविना-श्रितभ्रम-णं (१) पीतव-सनपरि-भावित ममलं जितकन्दुम (ट) नोदर-विमलग-लम्। (२) शाभित-मलगल-विविकृत-ममलं फणिमणिक (ट) कलम-श्रितवद-नं (३) नौमि ज-लधिमय-मविरुचि-सदनं दानवनिव (ट) हसमर-कलकद-नम्॥ (४)

भज ( - ⏑ - ) डसप्तक-गै रुचिरार्द्धम्॥४४॥

उत्तरार्द्धमपि तथा। उदा०—कस्य त-नुर्मनु-जस्य सि-तासित-सकम-धीविधि-तः पूरि-ता। (१) यस्य कृ-ते कर-भोरु! वि-मोदसि निद्रा-तपनिदि-तेन ल-ता॥ (२)

ज-लद्वय-जैश्चतुष्पदं दीपकम्॥४५॥

उदा०—दीर्घवि-रचि-तहार! (१) पिहया-नन-विहार! (२) जय जय हर! महेश! (३) गौरी-कृत-सुवेश!॥ (४)

स-द्विजाभ्यतर-डैश्चतुर्भिश्चतुष्पदं सिंहावलोकितम्॥४६॥

उदा०—इन्दु-सम्यक-नलिनि-तरणं (१) यमभुवि ननदा-नवकुल-मरणम्। (२) रचयति-तमरा-सनम-क्षुवरं (३) करवति-तमिरो मम हे-वरम् ॥ (४)

## गादि-ट-ठ-ड-ज-गैश्चतुष्पदः प्लवङ्गमः ॥४७॥

उदा०—कुचितप (ट) घनकुन्त (ठ) लकलित—वदान (ज) नं (१) वेणुविरा (ट) वविनोद (ठ) विमोहित—तकान (ज) नम्। (२) मञ्जुलना (ट) यकदान (ठ) वल्लव—मर्पाश्च (ज) तं (३) चिन्तय च (ट) कुंवरोप (ठ) मकुञ्ज—समञ्चि (ज) तम् ॥ (४)

## डाष्टकैश्चतुष्पदी लीलावती ॥४८॥

उदा०—गुञ्जा·कृतभू-षणमखि·लजनह·तरूप·धनधिक-कृतरा·वकलं (१) करयुग-धृतमुर-लिं नव-जलधर-नील वृन्दा वनभुवि चपलम्। (२) व्रजगो·पीमा-नं मा-रदकृत-गानं लीला-वलदे·वयुतं (३) वर न-न्दतनू-जं सुर·वरकृत-पूजं मम हृद-य ! मुनिज-नगुतम ॥ (४)

## ठ-ट-ठत्रय-गैरष्टाविंशतिमात्रकं हरिगीतम् ॥४९॥

उदा०—रचय कद (ठ) लीदलनव (ट) शयनं क (ठ) मलदला (ठ) वलि-मालि (ठ) तं (१) वीजय म (ठ) दुपवनेन (ट) घनाघन (ठ) सुन्दरवि (ठ) रहदालि (ठ) नम्। (२) पङ्कज (ठ) पि घनसार (ट) विराजित (ठ) चन्दनर (ठ) चनलालि (ठ) तं (३) कुरु मम व (ठ) चनमानय (ट) कमलान (ठ) नवनमा (ठ) लिनमालि ! (ठ) नम् ॥ (४)

## गद्वयान्तनियतन्तहरगीतम् ॥५०॥

उदा०—धरसि विल (ठ) सितानुपम (ट) मलिनजल (ठ) मधुकरव (ठ) लयुतमा (ठ) लं (१) मुनिजनय (ठ) मनियमादि (ट) विनाशक (ठ) सकलदन (ठ) जकुलका (ठ) लम। (२) मुरलीर (ठ) वमोहनम (ट) नुमोहित (ठ) निखिल-युव (ठ) तिकृतरा (ठ) सं (३) विनमतु म (ठ) म हृदि किमपि (ट) गोपिका (ठ) मानसक (ठ) लितविला (ठ) सम ॥ (४)

## नव-सप्त-द्वादशयतिकश्चेद्धरिगीता ॥५१॥

उदा०—भुजगपरि (ठ) वारित, हव (ट) भवारित, (ठ) चलनम (ठ) वविराजि (ठ) तं (१) कृतमदन (ठ) गञ्जन-मञ्जु (ट) मभञ्जन, (ठ) सुरमुनिग (ठ) णसभाजि (ठ) तम्। (२) हिमकिरण (ठ) भावित-दश (ड) नभूषित, (ठ) भावकुम (ठ) या सह (ठ)

तं (३) धृतशान्ति (ठ) वासव-मन (ट) कमानस, (ठ) मनुबर सु (ठ) खदमङ्ग ! (ठ) तम् ॥ (४)

## अजाष्टडैर्दश-वसु-वसु-ऋतुयतिकैश्चतुष्पदी त्रिभङ्गी ॥५२॥

उदा०—वरमु-क्ताहा-रं हृदि कलभा-रं विर-चितभा-रं कुच-सुषितं (१) काञ्चय विधुवि-म्बं न कृ-त विल-म्बं हर निकुर-म्बं काम लक्षतम् । (२) अपि मल-यजपव-नं लघु लघु वह-नं तनु-कृतदह-नं मो-हकरं (३) मम चि-त्तमधी-रं रद-जितहो-रं यदु वरवी-रं या-ति परम ॥ (४)

## दशाष्टचतुर्दशयतिकैर्वसुडैश्चतुष्पदी दुर्मिलका ॥५३॥

उदा०—हैय-ङ्गवचौ-रं म-न्दकिशो-रं, त-ण्डुलकण-कचिसम-दशनं (१) घनकु-ञ्चितकै-शं म-ञ्जुलवे-शं विजि-तमनुज-सुरकवि-सदनम् । (२) अपरि-स्फुटगद-नं दधि-युतवद-नं नौ-मि दितिज-वरशक-टहरं (३) मुक्ता-भूषा लक्षम-कृतवा-लकमखि-लमुनिज-नहृदि सु-खकरम् ॥ (४)

## यमकितगादि-टत्रय-राभ्यां ( ⏑ - ⏑ ) प्रथमद्वितीययोस्तृतीय-चतुर्थयोश्चान्त्ययमकितश्चतुष्पदो हीरः ॥५४॥

उदा०—चन्द्रवदन (ट) कुन्दरदन (ट) मन्दहसन (ट) भूषणं (र) (१) भीतिकदन (ट) नीतिसदन (ट) कान्तिमदन (ट) दूषणम् । (र) (२) धीरमतुल (ट) हीरबकुल (ट) चीरहरण (ट) पण्डितं (र) (३) नौमि विमल (ट) धूतकमल (ट) नेत्रयुगल (ट) मण्डितम् (र) ॥ (४)

## सप्तद्विज ( - - - - ) सैर्दश-वसु-वसु-ऋतुयतिकैश्चतुष्पदं जनहरणम् ॥५५॥

उदा०—वरजल-निधिगत-शय निज-पदरुचि-चय सुर-गणहृत-भय गत-कुमते ! (१) बहुदिति-सुतकुल-हर निज-जनसुख-कर सुर-मुनिगण-वर कृत-सुमते ! । (२) घनलक-मलसुव-सन कटि-धृतसुर-सन कुरु मनिभृद्-सन सुख-करणं (३) तव भव-तु पदक-मलमधि-कतरवि-मलसुख-दमुभयु-गलभव-तरणम् ॥ (४)

## लद्वय-डनवक-गैर्दश-वसु-चतुर्दश-वसुयतिकैश्चतुष्पदं मदनगृहम् ॥५६॥

उदा०—कर-वाजितक पालं धृतनर-मालं भाल-ज्वालन-हुतमद-नं कृत-त्रिपु-

कन्द-नं (१) भव-भयभर-हरणं गिरिजा-रमणं सकलज-नस्तुत-शुभचरि-तं गुण-गण-भरि-तम्। (२) कृत-फणिपति-हारं त्रिभुवन-सारं दमन-स्मरम-संतु-ष्टं रम-णीयु-ष्टं (३) गल-राजित-गरलं गङ्गा-विमलं कैला-साचल-धामक-रं प्रण-मामि-ह रम् ॥ (४)

## ठ-डपञ्चक-ग-लैर्दशवस्वेकादशयतिकैश्चतुष्पदं महाराष्ट्रम् ॥५७॥

गर्वावलि (१) (ट) भासुर हतकं-सासुर भुवि कृत-विमलवि-लास (१) मुरलीमा (ट) सुरवर हवभा सुरहर वरतरु-पीनल-रास। (२) दावानल (ट) बालक-गोधन-पालक हिमकर-करनिभ-हास (३) कृपया कुरु (ट) हृष्टं मयि सुख-हृष्टं सुजनहृदि आनतवि-काम ॥ (४)

## भसप्तक-गाभ्यां चतुष्पदी मदिरा ॥५८॥

उदा०—भालवि-राजित-चन्द्रक-लं नय-नानल-दाहित-कामव-रं (१) बाहु-वि-राजित-शेषफ-णीन्द्रफ-णामणि-भासुर कान्तिध-रम्। (२) भूधर-राजसु-तापरि-रम्भित माण्डित-नूपुर-दण्डध-रं (३) नौमि न-रेश्वर-शेषसु-रार्चित-लक्षण-वेषमु-मेश्वह-रम् ॥ (४)

## सैव गान्ता मालती ॥५९॥

उदा०—चन्द्रक-चारुच मत्कृति-चञ्चल-मौलिवि-लुम्पित-चन्द्रक-शोभं (१) वक्षस-कौस्तुभ-भूषण भूषित नन्दसु-तं वनि-ताधर-लोभम्। (२) धेनुक-दानव-दारण-दक्षद यानिधि-दुर्गम-वेदर हस्य (३) नौमि ह रिं दित जावलि मालित-भूमिभ-रापह-रं सुख-भाष्यम् ॥ (४)

## साष्टक-गाभ्यां चतुष्पदी मल्ली ॥६०॥

उदा०—गिरिरा-जसुता-कमनी-यमन-ङ्गविभ-ङ्गकरं गलम-ञ्जलमा-लं (१) परिधू-तगजा-जिनवा-ससमु-ज्ज्वलत-त्त्वकरं विगलद्धी-तकपा-लम्। (२) गरला-नल-भू-षितदी-नदया-लुमद-श्च नटी-हृतहा-नवको-लं (३) प्रणमा-मि विलो-लजटा-तट-गु-म्फितशी-तकला-निधिला-ञ्छितभा-लम् ॥ (४)

## जसप्तक-लगैश्चतुष्पदी मल्लिका ॥६१॥

उदा०—धुनोति मनो म-म कम्पि-तकान-नकम्पि-तकेलि-रवं प-वनः (१) कथा-म-पि नैव करोमि तथापि हथा क-दनं कु-रुते म-दनः। (२) कथानि-धिरेव कथाद-

पि मुख ति बर्हि-कलाप-मलीक-हिमः (३) विधेहि तथा म-तिमीति यथा स-विधे म-यथा ब्र-अभूम-हिमः ॥ (४)

## सैव गान्ता माधवी ॥६२॥

उदा०—विलोल विलोच-नकोण-विलासि-तमोहि-तगोप-वधू-नचित्तः (१) मयूर-कलाप-विकल्पि-तमौलि-रपार-कलानि-धिवाल-चरित्रः। (२) करोति मनो म म विह्व-लमिन्दु निर्मल तमुन्द-रकुन्द-सुदन्तः (३) सखीमि-ति काऽपि जगाद हरे-र-नुराग-वशेन विभावि-तमन्तः ॥ (४)

## डाष्टकचतुष्पदी मागधी ॥६३॥

उदा०—माधव ! विदुदि यं गग-ने तव कलयति पीतव-सनमभि-रामं (१) जलधर-नीलग-गनप-ल्लतिरपि तव तनु रुचिमनु-सरति नि-कामम्। (२) इन्द्रध-नुषम-मपि तव वक्षसि मा-णित-वरवन माला-शोभं (३) कुरु मम वचनं सकलय हृदयं राधा-धरमधु-विरचित-लोभम् ॥ (४) मांदिरादिषष्ठां सवर्येति संज्ञा।

## ठद्वय-डद्वय-लगैश्चतुष्पदं गलितकम् ॥६४॥

उदा०—मल्लिमा (ठ) लतियूथि (ठ) पङ्कज—कुन्दक—लिके (१) कुमुदच (ठ) म्पककेत (ठ) किपरिम—लबलद—लिके। (२) मलयप (ठ) वंतशीत (ठ) लतयि आतप—वनः (३) हरिवियो (ठ) गितमीर (ठ) यं मम कथं द—हनः ॥ (४)

## ठद्वय-डद्वय-ठैश्चतुष्पदं विगलितकम् ॥६५॥

उदा०—भवजलधि (ठ) तारिणि स (ठ) कलता—पहारि—णि गङ्गे (ठ) (१) अघ-दहन (ठ) कारिणि क (ठ) चिधारि—णि हरम—तरङ्गे (ठ)। (२) गिरिनिकर (ठ) दारिणि म (ठ) नोहा—रिणि नर—लभङ्गे (ठ) (३) त्वयिमि वा (ठ) रिणि हंस (ठ) चारिणि—तव विल—सदङ्गे (ठ) ॥ (४)

## डद्वय-ठाभ्यां चतुष्पदं सङ्गलितकम् ॥६६॥

उदा०—धृतिमव—धारय मानसे (१) हरिमपि गततनु—मानसे। (२) सखि तव वचनं मानये (३) ननु बन—मालिन—मानये ॥ (४)

## ठद्वय-लगैः सुन्दरगलितकम् ॥६७॥

उदा०—विगलितचि (ठ) कुरविला (ठ) सिनी (१) नवहिमक (ठ) रनिभहा (ठ) सिनीम्। (२) सुरनरा (ठ) धिकान्ता (ठ) मये (३) तनुभितक (ठ) नकाङ्गा (ठ) मये ॥ (४)

## ठद्वय-ढद्वयाभ्यां भूषणगलितकम् ॥६८॥

उदा०—रविरिव (ठ) गुणिराव (ठ) विभो (ढ) हिताः (ढ) (१) द्रुतपदाः (ठ) क्षतरास (ठ) रसे (ढ) हिताः। (ढ) (२) हरिमदू (ठ) रवने ह (ठ) रिणी (ढ) चया (ढ) (३) सरलुल (ठ) म्मुरनव (ठ) गते (ढ) चयाः॥ (ढ) (४)

## ट-ढचतुष्टय-गैर्मुखगलितकम् ॥६९॥

उदा०—ब्रह्मभवा (ट) दिकन्नु (ढ) तपद (ढ) पङ्क (ढ) जयुग (ढ) लं (१) माश्रितम (ट) ऋहद (ढ) यमत (ढ) दात्र (ढ) षमम (ढ) लम्। (२) दीनकृपा (ट) निधिम (ढ) बजल (ढ) गांग्र (ढ) तार (ढ) कं (३) नौमि हरिं (ट) कमल (ढ) नयन (ढ) मशुभ (ढ) दार (ढ) कम॥ (४)

## ट-गान्तडचतुष्टयाभ्यां विलम्बितगलितकम् ॥७०॥

उदा०—नमामि प (ट) ङ्कजान—मं सक—लदुःख—हरणं (१) भवाम्बुरा (ट) शितार—कं निखि—लवन्द्य—चरणम्। (२) कपालमौ (ट) लकुण्ड—लं उज्ज—वल्गुज—महितं (३) विलासहा (ट) सपेशलं सर—मराम—महितम॥ (४)

## ड-ठद्वय-डद्वय-लगैः समगलितकम् ॥७१॥

उदा०—निखिलसु—रगणविम् (ठ) तपङ्कज (ठ) कोमल—चरणयु—गलं (१) पीतव—सनावलसि (ठ) तशरीर (ठ) मतुल—मकल्म—गलम। (२) नौमि नि—गमपरिग (ठ) दितमपा (ठ) रगुणयु—तमिन्दु—सुखं (३) नन्दत—नूजं नि (ठ) खिलगोप (ठ) बधूज—नदत्त—सुखम॥ (४)

## यत्र ड-ढाभ्यामयुग्मौ ट-ढचतुष्टय-ठ-गैर्युग्मौ पादौ इत्थं चतुष्पदमपरं सङ्गलितकम् ॥७२॥

उदा०—विभूति—सितं (ढ) (१) शिरसि निवसि (ट) तानु (ढ) पमम (ढ) दीभ (ट) वप (ढ) कुणावलसि (ठ) तम्। (२) चक्रिपद—चिरं (ढ) (३) भ्रिमपि विलस (ट) तान्त (ढ) म हृदि (ढ) वेद (ढ) रह (ढ) स्यमतिसुचि (ठ) रम॥ (४)

## अज-डपञ्चक-गाभ्यां चतुष्पदमपरं विलम्बितगलितकम् ॥७३॥

उदा०—राजति वंशी—वतमी—तत् वा—ननदे—शे (१) गच्छति कापो तशि—खय म—थुलके—शे। (२) याहि म—या सा—र्द्धमितो राधा—हितचि—त्ते (३) तत्रावि—धे प्रे—मविलो—ले ते—म च वि—त्ते॥ (४)

## ठ-ड-ठ-ड-ठ-गैश्चतुष्पदं विचित्रिकगलितकम् ॥७४॥

उदा०—चन्द्रकचि (ठ) तमुकुट—मखिलमुनि (ठ) जनहृद—यसुखकार (ठ) यं (१) धृतवेणु (ठ) कलं व—रमनाक्ष (ठ) नव्या—हृतं सार (ठ) याम। (२) वृन्दाव (ठ) नभूमि—षु वल्लव (ठ) नारी—मनोहर (ठ) यं (३) हरिचरं नि (ठ) जचेत—सि चिन्तय (ठ) गोव—र्द्धनोद्धर (ठ) याम ॥ (४)

## ड-ठ-ड-ठ-ड-गैर्ललितागलितकम् ॥७५॥

उदा०—कमला—पतिं कम (ठ) लमुखो—ज्ज्वलमिन्दु (ठ) निभान—नं (१) मधुक—परिपीत (ठ) वासस—मपारगु (ठ) णकान—नम। (२) सनका—दिकमान (ठ) सजनित—निंवासस (ठ) मंगलु—तं (३) प्रणमा—मि हरिं नि (ठ) जभक्त—जनस्य हि (ठ) ते निर—तम ॥ (४)

## यत्र ठ-ड-ठ-ड-कमलैः ( ⏑ - ⏑ - ) प्रथमद्वितीयपादौ
## ठत्रय-ड-सूर्यैश्च ( ⏑ - - ⏑ ) तृतीयचतुर्थौ
## तद्विषमितागलितकम् ॥७६॥

उदा०—वेणुं क (ठ) रे कल—यता सखि! (ठ) गोपकु—मारकेण (१) पीताम्ब (ठ) रावृत—शरीरभृ (ठ) ता भव—तारकेण। (२) प्रेमोद्ध (ठ) तस्मितद (ठ) चा वनज (ठ) भूषण—शोभिना (३) चेतो म (ठ) मापि क्व (ठ) चोद्धृतं (ठ) मानस—लोभिना ॥ (४)

## ट-विषमज-डदशकचतुष्पदं मालागलितकम् ॥७७॥

उदा०—कालियकुल (ट) विभञ्ज (ज) कमसुर—विडम्ब—कदनुज—विलुम्प—कमखिल—जनसु—तमुमच—रितं मु—निनुतं (१) नौमि विमल (ट) तरं स (ज) कलसुख—करं क—लिकलुष—हरं भ—वजलधि—तरिं ह—रिं पा—वने सु—नियतम्। (२) कंसहृदि वि (ट) कटं मु (ज) निगणमि—कटं वि—निहतम—कटं प—रिधृतमु—कुटं ज—गदिर—घनेऽति—चतुरं (३) भक्तजनस (ट) रणं भ (ज) वभयह—रणं व—रसुखक—रणं स—पदवित—रणं ज—गन्ना—थने धृ—तधुरम ॥ (४)

## इदमेव डद्वयहीनञ्चेन्मुग्धमालागलितकम् ॥७८॥

उदा०—वन्दे न (ट) न्दनन्द (ज) ननमन-रतं म-रकततनु-तनुं धृ-तरुचिं मुरारि-मीशं (१) यादितनं (ट) समान (ज) तमुनिजन-मनार-दविरचि-तगान-

भवनी भयीम-नीषम । (२) कारितरा (ट) सङ्गास (ज) परवश-रतं वि-रचितसु-रतं वि ततकु-ङ्कुमेन पीतं (३) तं देवं (ट) प्रमोद (ज) भरमुवि दितं मु-दितसुर-नुतं स-ततमा-त्मजेन गीतम ॥ (४) •

## तदाऽपि उह्यन्यूनश्चेद्दलितकम् ॥ ६८ ॥

उदा०—नन्दनन्द (ट) ममैव (ज) कामयत न किञ्चिदिह जग-ति सार-मपरं (१) पूर्वमिव (ट) कलय (ज) मांखलम-पि चित्र-घटितमिव भाति न परम । (२) सावधान (ट) तथैव (ज) लवमपि मन: प-रमचल-मिदं न विदितं (३) भावयन्तु (ट) दिशामि (ज) धर्मान्निभि-धमात्म-नि परम-पदं प्र-मुदितम ॥ (४)

एवं गलितकान्यान वृत्तान्युक्तानि कानिचित ।
लक्ष्याणि लक्ष्यमालक्ष्य शेषाणि निजबुद्धितः ॥

---



# पिङ्गलच्छन्दःसूत्रस्य सूचीपत्रम् ।

---

## तृतीयोऽध्यायः ४४ १

## अष्टमोऽध्यायः ३६८ १

---

## परिशिष्टम् ।